श्रीआगमोदयसमितिग्रन्थोद्धारे, ग्रन्थाङ्कः ५६.

श्रीमन्मलयगिर्याचार्यकृतविवरणयुतं, श्रुतकेवलिश्रीमद्भद्रबाहुस्वामिसूत्रितनिर्युक्तियुत—

# श्रीआवश्यकसूत्रम्।

## ( पूर्वभागः )

प्रकाशकः-श्रीआगमोदयसमितेः कार्यवाहकः-जीवनचन्द-साकरचन्दः जह्वेरी।

इदं पुस्तकं मोहमय्यां निर्णयसागरमुद्रणालये कोलभाटवीथ्यां २६-२८ तमे गृहे

रामचंद्र येसू शेडगेद्वारा मुद्रयित्वा प्रकाशितम्।

वीरसम्वत् २४५४. विक्रमसंवत् १९८४. सन १९२८.

प्रतयः १२५० ] वेतनं रू. ४-०-० [ Rs. 4-0-0

Śrî Âgamodaya Samiti Series, No. 56.

# Śrî ÂVAŚYAKA SÛTRA

## Part I

WITH

NIRYUKTI (gloss) by ŚRUTAKEVALIN Śrî BHADRABÂHUSVÂMIN

ALONG WITH

The Commentary by Śrî Malayagirisûri.

Copies 1250.] Price Rs. 4-0-0. [A. D. 1928.

अर्हं

श्रीमन्मलयगिर्याचार्यविरचितं

श्रुतकेवलिश्रीमद्भद्रबाहुस्वामिसूत्रितनिर्युक्तियुत-

# श्रीमदावश्यकसूत्रविवरणं



पान्तु वः पार्श्वनाथस्य, पादपद्मनखांशवः। अशेषविघ्नसङ्घाततमोभेदैकहेतवः ॥ १ ॥
जयति जगदेकदीपः, प्रकटितनिःशेषभावसद्भावः। कुमतपतङ्गविनाशी श्रीवीरजिनेश्वरो भगवान् ॥ २॥
नत्वा गुरुपदकमलं प्रभावतस्तस्य मन्दशक्तिरपि। आवश्यकनिर्युक्तिं विवृणोमि यथाऽऽगमं स्पष्टम् ॥ ३ ॥
यद्यपि च विवृतयोऽस्याः सन्ति विचित्रास्तथापि विषमास्ताः। सम्प्रति जनो हि जडधीर्भूयानिति विवृतिसंरम्भः

तत्र प्रेक्षावतां प्रवृत्त्यर्थमादौ प्रयोजनादिकमुपन्यसनीयं, अन्यथा न युक्तोऽयमावश्यकप्रारम्भप्रयासः; निष्प्रयोजनत्वात् कण्टकशाखामर्दनवत्, निरभिधेयत्वात् काकदन्तपरीक्षावत्; असम्बद्धत्वादश दाडिमानि षडपूपा इत्यादिवाक्यवत्

स्वेच्छाविरचितशास्त्रवद्वेत्याशङ्कातः प्रेक्षावन्तो न प्रवर्त्तेरन्, तथा मङ्गलमप्यादौ वक्तव्यं, अन्यथा कर्तॄणां श्रोतॄणां चाविघ्नेनेष्ट-
फलसिद्ध्ययोगात्, उक्तं च—"प्रेक्षावतां प्रवृत्त्यर्थं, फलादित्रितयं स्फुटम्। मङ्गलं चैव शास्त्रादौ, वाच्यमिष्टार्थसिद्धये ॥१॥"
तत्र प्रयोजनं द्विधा—परं अपरं च, पुनरेकैकं द्विधा—कर्तृगतं श्रोतृगतं च, तत्र द्रव्यास्तिकनयमतपर्यालोचनायामागमस्य
नित्यत्वात् कर्त्तुरभाव एव, तथा चोक्तम्—"एषा द्वादशाङ्गी न कदाचिन्नासीन्न कदाचिन्न भवति न कदाचिन्न भविष्यति
ध्रुवा नित्या शाश्वती" इत्यादि, पर्यायास्तिकनयमतपर्यालोचनायां चानित्यत्वादवश्यंभावी तत्सद्भावः, तत्त्वपर्यालोच-
नायां तु सूत्रार्थोभयरूपत्वात् सूत्रापेक्षया त्वनित्यत्वात् कथञ्चित्कर्तृसिद्धिः, तत्र च सूत्रकर्त्तुरनन्तरं प्रयोजनं सत्त्वानुग्रहः,
परम्परं त्वपवर्गप्राप्तिः, उक्तं च—"सर्वज्ञोक्तोपदेशेन, यः सत्त्वानामनुग्रहम्। करोति दुःखतप्तानां, स प्राप्नोत्यचिराच्छिवम् ॥१॥"
[1]तदर्थप्रतिपादकस्य भगवतोऽर्हतः किं प्रयोजनमिति चेत्, उच्यते, न किञ्चित्, कृतकृत्यत्वात्, प्रयोजनमन्तरेणार्थप्रतिपा-
दनप्रयासो न समीचीन इति चेत्, न, तस्य तीर्थकरनामकर्मविपाकोदयप्रभवत्वात्, वक्ष्यति च—"तं च कहं वेइज्जइ?,
अगिलाए धम्मदेसणाए उ' (तच्च कथं वेद्यते?, अग्लान्या धर्मदेशनयैव) इति[1]। श्रोतॄणामनन्तरं प्रयोजनमावश्यकश्रुत-
स्कन्धार्थपरिज्ञानं, परम्परं निःश्रेयसावाप्तिः, कथमिति चेत्, उच्यते,—इह ज्ञानक्रियाभ्यां मोक्षः, सम्यगवबोधपुरस्सरं साव-
द्यानवद्ययोगनिवृत्तिप्रवृत्तिभ्यां सवितुः खरकिरणैर्जलार्द्रशाटिकायाः सलिलकणानामिव कर्म्मपरमाणूनामवयवशोऽपग-
मसम्भवात्, ज्ञानक्रियात्मकं चावश्यकं, उभयस्वभावत्वात्, तयोश्च ज्ञानक्रिययोरवाप्तिर्विवक्षिताऽऽवश्यकश्रुतस्कन्ध-
श्रवणतो जायते, नान्यथा, तत्कारणत्वात् तदवाप्तेः, अत एव भगवतो भद्रबाहुस्वामिनः परमकरुणापरीतचेतस ऐदं-

युगीनसाधूनामुपकाराय आवश्यकस्य व्याख्यानरूपामिमां निर्युक्तिं कृतवन्तः, अन्यथा सम्यक्परिज्ञानाभावतः शिष्याणां मोक्षपथप्रवृत्त्युच्छेदप्रसक्तेः, कारणादेव कार्यसिद्धिभावात्, आह च भाष्यकृत्–"नाणकिरियाहि मोक्खो तम्मयमावस्सयं जओ तेणं। तवक्खाणारंभो कारणओ कज्जसिद्धित्ति ॥१॥" [ज्ञानक्रियाभ्यां मोक्षो यतस्तन्मयमावश्यकं। ततः तद्व्याख्यारम्भः, कारणतः कार्यसिद्धिरिति ॥१॥ ] (भा.) ततः श्रोतॄणामपि परम्परया मुक्तिभावाद् भवति तेषां परं प्रयोजनं निःश्रेयसावाप्तिरिति प्रयोजनवान् आवश्यकप्रारम्भप्रयासः, अभिधेयं सामायिकादि, तेषामेवास्मिन् ग्रन्थे सविस्तरमभिधास्यमानत्वात्, सम्बन्धस्तु द्विधा–उपायोपेयभावलक्षणो गुरुपर्वक्रमलक्षणश्च, तत्राद्यः तर्कानुसारिणः प्रति, तद्यथा–वचनरूपापन्नमावश्यकमुपायः उपेयं सामायिकादिपरिज्ञानं, मुक्तिपदं वा, तस्याप्यतः पारम्पर्येण भावात्, तथाहि–अस्मात् सम्यक्सामायिकाद्यर्थपरिज्ञानं भवति, सति च तस्मिन् सम्यग्दर्शनादिवैमल्यं क्रियाप्रयत्नश्च, ताभ्यां प्रकर्षप्राप्ताभ्यां मुक्तिपदप्राप्तिरिति, गुरुपर्वक्रमलक्षणस्तु सम्बन्धः उपोद्घातनिर्युक्तौ 'उद्देसे निद्देसे य निग्गमे' इत्यादिना ग्रन्थेन स्वयमेव निर्युक्तिकृता प्रपञ्चेन वक्ष्यते। अत्र कश्चिदाह-ननु अधिगतशास्त्रार्थानां स्वयमेव प्रयोजनादिपरिज्ञानं भविष्यतीति निरर्थक एष शास्त्रादौ प्रयोजनाद्युपन्यास इति, न, अनधिगतशास्त्रार्थानां प्रवृत्तिहेतुतया सफलत्वात्, अथ प्रेक्षावतां प्रवृत्तिर्निश्चयपूर्विका भवति, न च प्रयोजनादावुक्तेऽपि अनधिगतशास्त्रार्थानां तन्निश्चयोपपत्तिः, वचनस्य बाह्यार्थं प्रति प्रामाण्याभावात्, न च संशयतः प्रवृत्तिरुपपन्ना, प्रेक्षावत्ताक्षतिप्रसङ्गात्, ततः कथं सार्थकता अधिकृतप्रयोजनाद्युपन्यासस्य ?, तदेतदपरिभावितभाषितं, वचनस्य बाह्यार्थं प्रति प्रामाण्यभावात्, अन्यथा सकलव्यवहारोच्छेदप्रसक्तेः, विजृम्भितं चात्र

प्रयोजन-वाक्यस्य सफलता

प्रपञ्चतो धर्मसङ्ग्रहणिटीकादाविति ततः परिभावनीयं, अथ यदि वचनस्य बाह्यार्थं प्रति प्रामाण्यं तर्हि अत एव सम्यगभिधेयादिपरिज्ञानभावान्निरर्थिका शास्त्रे प्रेक्षावतां प्रवृत्तिः, फलाभावात्, प्रवृत्तौ हि फलमभिधेयादिपरिज्ञानं, तच्चाधिकृतप्रयोजनाद्युपन्यासत एव सिद्धमिति, तदेतद्बालिशविजृम्भितं, अधिकृतेन हि प्रयोजनाद्युपन्यासेन प्रयोजनादीनामधिगतिर्भवति सामान्येन, नाशेषविशेषपरिज्ञानपुरस्सरा, अधिकृतप्रयोजनाद्युपन्यासस्य सामान्येन प्रवृत्तत्वात्, 'सामान्यनिष्ठं हि वचः सामान्यं प्रतिपादयति, विशेषनिष्ठं विशेषम्' अतो वचनप्रामाण्यादधिकृतप्रयोजनाद्युपन्यासवाक्यतः सामान्येन प्रयोजनादिकेऽधिगते कथं नु नाम अस्माकं सविशेषं सामायिकादिपरिज्ञानं स्यादिति विशेषपरिज्ञानाय भवति प्रेक्षावतां शास्त्रे प्रवृत्तिः, अन्यच्च–यदि वचनस्याप्रामाण्यमभ्युपगम्यते तथापि न काचिद्विवक्षितार्थक्षतिः, संशयतोऽपि प्रवृत्तिभावात्, तथाहि–अनेनाधिकृतप्रयोजनाद्युपन्यासेन तद्विषयसंशय उपजन्यते, संशयश्च द्विधा–अर्थसंशयोऽनर्थसंशयश्च, तत्रार्थसंशयो यथा–यदि वृष्ट्यादिसामग्री ततः सम्भवति शस्यनिष्पत्तिः, अनर्थसंशयो यथा–(यदि) विषमिदं यो भक्षयति स म्रियते, तत्रानर्थसंशयात् न कस्यचित्सचेतसः प्रवृत्तिः, अनर्थतः संशयस्यापि बिभ्यत्त्वात्, अर्थसंशयस्तु प्रेक्षावतोऽपि प्रवृत्त्यङ्गं, अनर्थकशङ्काया अभावात् फलस्य च केषाञ्चिद्दर्शनात्, न चायमधिकृतप्रयोजनाद्युपन्यासजनितः संशयोऽनर्थसंशय इति भवति प्रेक्षावतां प्रवृत्तिरिति न किञ्चिदनुपपन्नम् ॥ सम्प्रति मङ्गलमुच्यते, यतः–श्रेयांसि बहुविघ्नानि भवन्ति, उक्तं च–"श्रेयांसि बहुविघ्नानि, भवन्ति महतामपि। अश्रेयसि प्रवृत्तानां, क्वापि यान्ति विनायकाः॥१॥" अयमपि च आवश्यकानुयोगो निर्युक्तिरूपः परमपदप्राप्तिबीजभूतत्वात् श्रेयोभूतः ततो मा भूत्तत्र विघ्न इति तदारम्भे विघ्न-

विनायकोपशान्तये मङ्गलमुपन्यस्यते, तच्च शास्त्रस्यादौ मध्येऽवसाने च भवति, न युक्तो मङ्गलत्रयोपन्यासः, आदिमङ्गलेनैवाभीष्टार्थस्य सिद्धत्वादिति चेत्, तदसम्यक्, आदिमङ्गलमात्रादभीष्टार्थसिद्ध्ययोगात्, तथाहि–आदिमङ्गलं विवक्षितशास्त्रस्याविघ्नेन पारं गच्छेयुरित्येवमर्थं, मध्यमङ्गलमवगृहीतशास्त्रार्थस्थिरीकरणार्थं, अन्तमङ्गलं शिष्यप्रशिष्यपरम्परया शास्त्रस्याव्यवच्छेदार्थम्, उक्तं च–"तं मंगलमाईए मज्झे पज्जंतए य सत्थस्स। पढमं सत्थत्थाऽविग्घपारगमणाय निद्दिट्ठं ॥ १ ॥ (भा. १३) तस्सेव य थेज्जत्थं मज्झिमयं अंतिमंपि तस्सेव। अव्वोच्छित्तिनिमित्तं सिस्सपसिस्साइवंसस्स ॥ २ ॥ (भा. १४) अत्र 'सिस्सपसिस्साइवंसस्से"ति प्राकृतत्वात्तृतीयार्थे षष्ठी, ततोऽयमर्थः–तस्यैव शास्त्रार्थस्य शिष्यप्रशिष्यादिवंशेनाव्यवच्छित्तिर्भूयादित्येवमर्थमन्तमङ्गलमिति, तत्रादिमंगलम् 'आभिणिबोहियनाणं सुयनाणं चेवे'त्यादि, ज्ञानपञ्चकस्य परमङ्गलत्वात्, मध्यमङ्गलं 'वंदण चिइ किइकम्म'मित्यादि, वन्दनस्य विनयरूपत्वात्तस्य चाभ्यन्तरतपोभेदत्वात् तपोभेदस्य च मङ्गलत्वात्, पर्यन्तमङ्गलं 'पच्चक्खाण'मित्यादि, प्रत्याख्यानस्याद्यतपोभेदत्वेन मङ्गलत्वात्। स्यादेतद्–इदं मङ्गलत्रयं शास्त्राद्भिन्नमभिन्नं वा?, किञ्चातः?; उभयथाऽपि दोषः, तथाहि–यदि भिन्नं ततः शास्त्रस्यामङ्गलत्वप्रसङ्गो, मङ्गलाद्भिन्नत्वात्, तदन्यवस्त्वन्तरवत्, यच्च स्वरूपेणामङ्गलं तदन्यमङ्गलोपन्यासेनापि मङ्गलीकर्त्तुमशक्यं, स्वभावस्य च्यावयितुमशक्यत्वात्, न खलु काचः स्वरूपेणावैडूर्यमणिः सन् केनापि वैडूर्यमणीक्रियते, ततो निरर्थको मङ्गलोपन्यासो, मङ्गलत्वकार्याकरणात्, अथ मङ्गलीकर्त्तुमशक्यस्यापि मङ्गलमुपादीयते तथा लोकप्रवृत्तेः तर्ह्यनवस्थाप्रसङ्गः, तथाहि–यथा प्रागमङ्गलस्य सतः शास्त्र-

पोद्घाते

॥ २ ॥

मंगलत्रय-
स्यावश्य-
कता

स्य मङ्गलमुच्यते एवं मङ्गलान्तरमपि वक्तव्यम्, आद्यमङ्गलाभिधानेऽपि तस्य तथैवामङ्गलत्वात्, एवं मङ्गलान्तराभिधानेऽप्य-
न्यन्मङ्गलान्तरमभिधातव्यं, न्यायस्य समानत्वात्, तत्राप्यन्यदित्यनवस्था, अथाभिन्नमिति पक्षः तर्हि शास्त्रमेव मङ्गल-
मित्यन्यमङ्गलोपादानमनर्थकं, अमङ्गले हि मङ्गलमुपादीयते, यस्तु स्वत एव मङ्गलं तत्र किं मङ्गलविधानेन ?, नहि शुक्लं
शुक्लीक्रियते, नापि स्निग्धं स्नेह्यते, अथ मङ्गलभूतस्याप्यन्यन्मङ्गलमुपादीयते तर्हि तेनापि मङ्गलीभूतस्यान्यन्मङ्गलमुपा-
दातव्यं, मङ्गलरूपत्वाविशेषात्, तत्राप्यन्यदित्यनवस्था, अथ मा भूत् प्रस्तुतार्थक्षितिरित्यनवस्था नेष्यते तर्हि शास्त्र-
स्यामङ्गलत्वप्रसङ्गः, कथमिति चेत्, उच्यते, इह यथा शास्त्रं स्वतो मङ्गलमपि अन्यमङ्गलनिरपेक्षममङ्गलं, अन्यथा
अन्यमङ्गलोपादाननैरर्थक्यप्रसक्तेः, यदि हि अन्यमङ्गलनिरपेक्षमपि तन्मङ्गलं भवेत् तर्हि नान्यमङ्गलमपेक्षेत, स्वतः समर्थ-
स्यान्यव्यपेक्षाया अयोगात्, अन्यमङ्गलव्यपेक्षा चेत् नूनममङ्गलता, तस्य स्वरूपत एव मङ्गलस्याप्यन्यमङ्गलशून्यस्यामङ्गलते-
ति, अनवस्थाऽनिष्टौ मङ्गलममङ्गलं, तद्योगाच्छास्त्रमप्यमङ्गलमित्यमङ्गलता शास्त्रस्येति, अत्रोच्यते, इहाद्यः पक्षस्तावन्ना-
भ्युपगम्यते, ततोऽनभ्युपगमतिरस्कृतत्वादेव न नः क्षितिमावहति, यदिवा सोऽप्यभ्युपगम्यते, न च प्रागुक्तदो-
षावकाशः, यतो द्विविधानि जगति वस्तूनि–भाव्यानि अभाव्यानि च, तत्र काचादीन्यभाव्यानीति न तानि ॥ २ ॥
वैडूर्यरूपतया कर्त्तुं शक्यन्ते, शास्त्राणि तु भाव्यानि, ततः स्वरूपेणामङ्गलान्यपि तानि मङ्गलरूपतया परिणम्यन्ते,
मङ्गलस्य स्वपरतद्रूपताऽऽपादने समर्थत्वात्, लवणप्रदीपादिवत्, यथा हि प्रदीपः स्वपरप्रकाशनसमर्थत्वात् स्वं परं च
प्रकाशयति, यथा वा लवणं स्वपरलवणिमस्वभावापादने समर्थतया स्वं परं च लवणयति, एवं मङ्गलमपि स्वपर-

मङ्गलकरणसमर्थत्वात् स्वं परं च मङ्गलयतीति न कश्चिद्दोषः, द्वितीयपक्षेऽपि न मङ्गलोपादाननैरर्थक्यं, शिष्यमतिमङ्गलपरिग्रहाय शास्त्रस्यैव मङ्गलत्वानुवादात्, तथाहि—कथं नु नाम विनेयो मङ्गलमिदं शास्त्रमित्येवं गृह्णीयादिति मङ्गलोपन्यासेन मङ्गलमिदं शास्त्रमिति प्रबोध्यते, न चैवमनवस्था, प्रथममङ्गलोपन्यासे च शिष्यमतिमङ्गलपरिग्रहस्य कृतत्वात् अन्यमङ्गलाकाङ्क्षाया निवृत्तेः, न च शास्त्रस्यामङ्गलत्वप्रसक्तिः, अन्यमङ्गलनिरपेक्षस्य तस्य स्वतो मङ्गलत्वात्, मङ्गलं ह्यन्यदुपादीयते न शास्त्रस्य मङ्गलत्वकरणाय, तस्य स्वत एव मङ्गलत्वात्, किन्तु ?, शिष्यमतिमङ्गलपरिग्रहाय, ततः कथमन्यमङ्गलोपादानेऽनवस्थानिष्टौ शास्त्रस्यामङ्गलत्वमिति, ननु यदि शास्त्रं स्वतो मङ्गलं तर्हि यद्यपि मङ्गलमिदं शास्त्रमित्येवं न गृह्णाति विनेयस्तथापि तत्स्वकार्यप्रसाधनसमर्थमेव, तस्य तथास्वभावत्वादिति कथमन्यमङ्गलोपादानं न निरर्थकमिति ?, तदेतदसम्यक्, अभिप्रायापरिज्ञानात्, इह विचित्रा भावानां शक्तयः, किञ्चित्तथास्वरूपेण गृह्यमाणं स्वकार्यप्रसाधनसमर्थं यथा सुवर्णं, सुवर्णं हि सुवर्णरूपतया परिगृह्यमाणं स्वफलप्रदानसमर्थं न लोष्टादिरूपतयेति, किञ्चित्तथास्वरूपेणागृह्यमाणमपि यथा किञ्चिदनिष्टमन्तःसमुत्थव्याध्यादिकं, तद्धि तथास्वरूपेणाविदितमपि स्वफलं दुःखमुत्पादयति, मङ्गलमपि मङ्गलबुद्ध्या परिगृह्यमाणं मङ्गलफलसाधनायालं नान्यथा साधुवत्, तथाहि—साधुः सम्यग्दर्शनज्ञानचारित्रपरिणामपरिणतो भावितात्मा क्षान्तिनिधानं 'समणं संजयं दंत' मिति वचनात् मङ्गलभूतोऽपि मङ्गलबुद्ध्यैव परिगृह्यमाणः सन् प्रशस्तचेतोवृत्तेर्भव्यस्य मङ्गलकार्यप्रसाधको भवति, यदि तु तथा न गृह्यते तर्हि तस्य कालुष्योपहतचेतसः सत्त्वस्य न भवतीति, एवं शास्त्रमपि स्वतो मङ्गलमपि सत्

मङ्गलबुद्ध्या परिगृहीतं मङ्गलफलसाधकं, नान्यथा, उक्तं च-"इह मङ्गलमपि मंगलबुद्धीए मंगलं जहा साहू' (भा० २१) इति, ननु यदि मङ्गलमपि मङ्गलबुद्ध्या परिगृह्यमाणं मङ्गलं नेतरथा तर्हि भवन्मतेन मनःप्रमाणं, यद् यथा मनः सङ्कल्पयते तत्तथोपजायते नेतरदिति, एवं तर्हि अमङ्गलमपि मङ्गलबुद्ध्या परिगृहीतं मङ्गलकार्यकृत् प्राप्नोति, न्यायस्य समानत्वात्, न चैतद् दृष्टमिष्टं वेति, यत्किञ्चिदेतद्, वस्तुतत्त्वापरिज्ञानात्, मङ्गलं हि स्वरूपेण मङ्गलं ततस्तन्मङ्गलबुद्ध्या परिगृह्यमाणं मङ्गलफलसाधनायालं, स्वतो मङ्गलस्य स्वबुद्धिसहितस्य परिपूर्णसामग्रीकतया स्वकार्याभिनिर्वर्त्तनसमर्थत्वात्, काञ्चनवत्, काञ्चनं हि स्वतः काञ्चनं सत् काञ्चनबुद्ध्या परिगृह्यमाणं भवति काञ्चनफलकृत्, नान्यथेति, प्रतीतमेतत्, यत्त्वमङ्गलं तत्स्वरूपतो मङ्गलं न भवति, ततः कथं मङ्गलबुद्ध्याऽपि तत्परिगृह्यमाणं मङ्गलकार्यकृत्, नहि लेष्ट्वादि काञ्चनबुद्ध्या परिगृहीतं काञ्चनफलमुपजनयतीति। ननु यदि शिष्यमतिमङ्गलपरिग्रहाय मङ्गलोपन्यासस्तत आदिमङ्गलमेवास्तु, शिष्यमतिमङ्गलपरिग्रहस्य तेनैव कृतत्वात्, किं मङ्गलत्रयोपन्यासेन?, न, विहितोत्तरत्वात्, आदिमङ्गलेन ह्यादौ मङ्गलमतिपरिग्रहः क्रियते, न मध्यमङ्गलमतिपरिग्रहो नाप्यवसानमङ्गलमतिपरिग्रहः, ततस्तत्रापि विवक्षितफलसाधनाय शिष्याणां मङ्गलमतिपरिग्रहो भूयादिति मङ्गलत्रयोपन्यासः, यद्येवं मङ्गलत्रयापान्तरालद्वयममङ्गलमापद्यते, तत्र मङ्गलमतिपरिग्रहाभावात्, नैष दोषः, सम्पूर्णस्यैव शास्त्रस्य त्रिधाविभक्तत्वेनापान्तरालद्वयासम्भवात् मोदकवत्, यथा हि मोदके त्रिधाविभक्ते नापान्तरालद्वयसम्भवस्तथाऽधिकृतशास्त्रेऽपि, तत आदिखण्डमादिमङ्गलेन मङ्गलबुद्ध्या परिगृहीतं मध्यं मध्यमङ्गलेनावसानमवसानमङ्गलेन, स्वतो मङ्गलं च तदिति स्वस्वफलसाधनाय

प्रभवति; अथ शास्त्रस्य कथं स्वतो मङ्गलता ?, उच्यते, निर्जरार्थत्वात्, तथा चात्र प्रयोगः—अधिकृतं शास्त्रं सकलमपि मङ्गलं निर्जरार्थत्वात् तपोवत्, अथ कथमस्य निर्जरार्थतेति चेत्, उच्यते, ज्ञानरूपत्वात्, ज्ञानस्य च कर्म्मनिर्जरणहेतुत्वात्, उक्तं च—"जं अन्नाणी कम्मं खवेइ बहुयाहि वासकोडीहिं। तन्नाणी तिहिं गुत्तो खवेइ ऊसासमेत्तेणं ॥ १ ॥" [ यदज्ञानी कर्म क्षपयति बहुकाभिर्वर्षकोटीभिः। तत् ज्ञानी त्रिभिर्गुप्तः क्षपयत्युच्छ्वासमात्रेण ॥ १ ॥ ] तस्मात् स्थितमेतत्—शास्त्रस्यादौ मध्येऽवसाने च मङ्गलमुपादेयमिति ।

अथ मङ्गलमिति कः शब्दार्थः?, उच्यते, 'अगु वगु मगु' इत्यादि दण्डकधातुः, 'उदितः' इति नम्, मङ्ग्यते अधिगम्यते प्राप्यते इतियावत् हितमनेनेति मङ्गलं "मृदिकन्दिकुण्डिपटिपाटिमङ्गिशकिमंडिकेवृयमिचञ्चिदेवृशलिकलिकमपलिगुध्वञ्चिचपिवहिदिहिकुहितृसृपिशितुसिकुस्यनिद्रमेरल' इत्यलप्रत्ययः, अथवा मङ्ग्यते—प्राप्यते स्वर्गोऽपवर्गो वाऽनेनेति मङ्गः—'पुन्नाम्नी'ति करणे घप्रत्ययः, मङ्गो नाम धर्म्मः, तथाऽत्र पूर्ववैयाकरणप्रसिद्धेः, तं लाति—आदत्ते इति मङ्गलं, 'आतोऽनुपसर्गा, दह्वावामः' इति डप्रत्ययः, मङ्गो नाम धर्मः धर्म्मोपादानहेतुरिति भावः, उक्तं च—'मंगिज्जएऽधिगम्मइ जेण हियं तेण मंगलं होइ। अहवा मंगो धम्मो तं लाइ तयं समादत्ते ॥१॥" (भा०) अपरे पुनरेवं व्युत्पत्तिमाचक्षते—मडु भूषायां, मण्ड्यते—शास्त्रमलङ्क्रियतेऽनेनेति मङ्गलं पूर्ववदलप्रत्ययः, अथवा 'मन् ज्ञाने' मन्यते—ज्ञायते निश्चीयते विघ्नाभावोऽनेनेति मङ्गलं, यदिवा 'मदै हर्षे' माद्यन्ति—विघ्नाभावेन हृष्यन्ति शिष्या अनेन 'मह पूजायां' वा मह्यते—पूज्यते शास्त्रमनेनेति मङ्गलं, सर्वत्र "विरलोरलकपिंजलयुगलभगलकुन्तलोत्पलकोमलपिङ्गलकाहलादय" इत्यलप्रत्ययो निपातनाच्च विवक्षितरूपनिष्पत्तिः, नैरुक्ताः पुनरेवं—

मां गालयति–अपनयति संसारादिति मङ्गलं, यदिवा मलं–पापं गालयति–स्फेटयतीति मङ्गलं, मा भूत् गलो–विघ्नोऽस्मादिति वा मङ्गलं, सर्वत्र पृषोदरादित्वादिष्टरूपनिष्पत्तिः । तच्च नामादिभेदाच्चतुर्द्धा, तद्यथा–नाममङ्गलं स्थापनामङ्गलं द्रव्यमङ्गलं भावमङ्गलं च, तत्र यस्य कस्यचिज्जीवस्य अजीवस्य वा मङ्गलशब्दार्थरहितस्य मङ्गलमिति नाम क्रियते तन्नाममङ्गलं, यत एवं तल्लक्षणम्–"यद्वस्तुनोऽभिधानं स्थितमन्यार्थे तदर्थनिरपेक्षम् । पर्यायानभिधेयं च नाम यादृच्छिकं च तथा ॥१॥" अस्यायमर्थः–'यद्वस्तुनो' जीवाजीवादेर्नाम, यथा गोपालदारकस्येन्द्र इति, 'स्थितमन्यार्थे' इति तस्माद्गोपालदारकादन्यश्चासावर्थश्च अन्यार्थः तस्मिन् स्थितं, परमार्थतस्त्रिदशाधिपे अवस्थानात्, 'तदर्थनिरपेक्ष' मिति तस्य-इन्द्रादिनाम्नोऽर्थस्तदर्थः–परमैश्वर्यादिरूपस्तस्य निरपेक्षं तदर्थनिरपेक्षं, तथाहि–इन्द्र इति किमुक्तं भवति ?–'इदु परमैश्वर्ये' इन्दनादिन्द्रः परमैश्वर्ययुक्त इत्यर्थः,एवंभूतेन चार्थेन युक्तमिदं नाम परमार्थतस्त्रिदशाधिपे एव वर्त्तते,तस्य तात्त्विकपरमैश्वर्ययुक्तत्वात्, गोपालके तु तदर्थशून्यमिति, तथा'पर्यायानभिधेय' मिति, इह नाम नामवतोरभेदोपचारात् इन्द्र इति गोपालदारकवस्त्वेव गृह्यते तत्पर्यायैः–शक्रपुरन्दरपाकशासनशतमखप्रभृतिभिरनभिधेयं पर्यायानभिधेयं, न हि गोपालदारकवस्त्विन्द्रशब्दवाच्यमपि तात्त्विकेन्द्रवत् शक्रपुरन्दरादिशब्दैरभिधेयमिति, प्रतीतमेतत्, एवंभूतं नाम, प्रकारान्तरेण नाम्नः स्वरूपमाह–'यादृच्छिकं च तथे'ति, यदृच्छया निर्वृत्तं यादृच्छिकं, किमुक्तं भवति ?–न केवलमनन्तरोक्तलक्षणं नाम, किन्तु अन्यत्रावर्त्तमानमपि यद् एवमेव यदृच्छया गोपालदारकादेर्नाम क्रियते यथा डित्थो डवित्थ इति तदपि नाम, इदं चोभयरूपमपि प्रायेण यावद्द्रव्यभावि, मेरुद्वीपसमुद्रादिकं हि नाम प्रभूतं यावद्द्रव्यभावि दृश्यते, किञ्चित्त्वन्यथाऽपि,

देवदत्तादिनामवाच्यानां विद्यमानानामपि अपरापरनामपरावर्त्तस्य लोके दर्शनात्, यदपि च सिद्धान्तेऽभिहितं 'नाम आवकहियं'ति तत् प्रतिनियतां जनपदादिसंज्ञामधिकृत्य, यथोत्तराः कुरव इत्यादि, नाम च तन्मङ्गलं च नाममङ्गलं, यदा तु वस्तु वाच्यं विवक्ष्यते तदैवं व्युत्पत्तिः—नाम्ना मङ्गलं नाममङ्गलं, यद्वा नामनामवतोरभेदोपचारात् नाम च तत् मङ्गलं च नाममङ्गलं, तच्च नामरूपं मङ्गलं त्रिधा, तद्यथा—जीवविषयमजीवविषयमुभयविषयं च, तत्र जीवविषयं यथा सिन्धुविषये अग्नेर्मङ्गलमिति नाम, अजीवविषयं यथा लाटदेशे दवरकवलनकस्य मङ्गलमिति नाम, उभयविषयं यथा वंदनमालाया मङ्गलमिति नाम, अत्र हि दवरकादीन्यचेतनानि पत्रादीनि तु सचेतनानीति जीवाजीवरूपता वन्दनमालायाः। तथा सद्भावमाश्रित्य लेप्यकर्मादिष्वसद्भावं चाश्रित्याक्षवराटादिषु या स्वस्तिकादीनां स्थापना सा स्थापनामङ्गलं, स्थापना चासौ मङ्गलं च तत् स्थापनामङ्गलमिति व्युत्पत्तेः, स्थापनालक्षणं चेदं—'यत्तु तदर्थवियुक्तं तदभिप्रायेण यच्च तत्करणि। लेप्यादि कर्म्म तत्स्थापनेति क्रियतेऽल्पकालं च ॥ १ ॥" अस्यायमर्थः—तत्स्थापनेत्यभिधीयते, यत्किमित्याह— 'यत्तु' यत्पुनः, तुशब्दो नामलक्षणात् स्थापनालक्षणस्य भेदमाह, 'तुः स्याद्भेदेऽवधारणे' इति वचनात्, 'तदर्थवियुक्त'मिति स चासावर्थश्च तदर्थः—सद्भूतेन्द्रलक्षणः तेन वियुक्तं—शून्यं तदर्थवियुक्तं, अथ च 'तदभिप्रायेणे'ति तस्य—सद्भूतेन्द्रस्याभिप्रायो—बुद्धिरध्यवसायस्तदभिप्रायस्तेन तद्बुद्ध्येत्यर्थः, कृतमित्यादि गम्यते, कथंभूतमित्याह—यच्च 'तत्करणि' तस्यैव—सद्भूतेन्द्रस्यैव करणिः—आकृतिराकारो यस्य तत् तत्करणि—सद्भूतेन्द्रसमानाकारं लेप्यादिकर्मेति भावार्थः, चशब्दात्तदाकृतिशून्यं वाऽक्षनिक्षेपादि तत्स्थापना, तच्चाल्पकालं—इत्वरं, चशब्दाद्यावद्द्रव्यभावि च, उक्तं

स्थापनाद्रव्यलक्षणं

चानुयोगद्वारे-“नाम आवकहियं ठवणा इत्तरिया वा होज्जा आवकहिआ वा” भाष्यकारोऽप्याह-“जं पुण तयत्थसुन्नं तय-
भिप्पाएण तारिसागारं। कीरइ व निरागारं इत्तरमियरं व साऽठवणा ॥१॥” (भा. २५)। सम्प्रति द्रव्यमङ्गलभिधातव्यं, तत्र
द्रव्यमिति-द्रवति गच्छति तांस्तान् पर्यायानिति द्रव्यं, ‘कृद्बहुल’मिति वचनात् कर्त्तरि यः, द्रव्यं च तन्मङ्गलं च द्रव्यम-
ङ्गलं, तल्लक्षणमिदम्-“भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके। तद् द्रव्यं तत्त्वज्ञैः सचेतनाचेतनं कथितम् ॥१॥”
अस्यायमर्थः-भूतस्य-अतीतस्य भाविनो वा-एष्यतः भावस्य-पर्यायस्य कारणं-निमित्तं यदस्मिन् लोके तत् तत्त्वज्ञैः-
सर्वज्ञैः तीर्थकृद्भिरितियावत् द्रव्यं कथितं, द्रवति-गच्छति तांस्तान् पर्यायान् अग्रेतनान् प्राचीनांश्च मुञ्चतीति
द्रव्यमिति व्युत्पत्त्यर्थानुगमात्, तच्च द्विधा-सचेतनमचेतनं च, तत्र सचेतनं अनुपयुक्तपुरुषाख्यं, अचेतनं ज्ञशरीरादीति,
उक्तं द्रव्यलक्षणम्, अधुना प्रकृतमुपयुज्यते, द्रव्यमङ्गलं द्विधा-आगमतो नोआगमतश्च, तत्र आ-समन्तात् गम्यते
वस्तुतत्त्वमनेनेत्यागमः-श्रुतज्ञानं आगममधिकृत्यागमतः, ‘स्थानियपः कर्माधारे’ इति कर्मणि पञ्चमी, यथा प्रासादमारुह्य
प्रेक्षते इत्यर्थे प्रासादात् प्रेक्षते इत्यत्र, आगमापेक्षयेति भावार्थः, आगमस्याभावः आगमस्य एकदेशो वा आगमेन
सह मिश्रणं वा नोआगमः, नोशब्दस्य त्रिष्वप्यर्थेषु वर्त्तमानत्वात्, नोआगममधिकृत्य नोआगमतः, तत्र आगमतो
मङ्गलशब्दार्थज्ञाता तत्र चानुपयुक्तः, स हि मङ्गलशब्दार्थवासितान्तःकरणतया तज्ज्ञानलब्धिसहितो नोपयुक्त इति
‘अनुपयोगो द्रव्य’मिति वचनात् द्रव्यम्, आह च भाष्यकृत्-“आगमओऽणुवउत्तो मंगलसद्दाणुवासिओ वत्ता। तन्ना-
णलद्धिसहिओऽवि नोवउत्तोत्ति तो दव्वं ॥ १ ॥” (भा. २९) नन्वागमो मङ्गलशब्दार्थपरिज्ञानमागमः श्रुतज्ञानमिति पूर्वमभि-

मङ्गलकरणसमर्थत्वात् स्वं परं च मङ्गलयतीति न कश्चिद्दोषः, द्वितीयपक्षेऽपि न मङ्गलोपादाननैरर्थक्यं, शिष्य-
मतिमङ्गलपरिग्रहाय शास्त्रस्यैव मङ्गलत्वानुवादात्, तथाहि—कथं नु नाम विनेयो मङ्गलमिदं शास्त्रमित्येवं
गृह्णीयादिति मङ्गलोपन्यासेन मङ्गलमिदं शास्त्रमिति प्रबोध्यते, न चैवमनवस्था, प्रथममङ्गलोपन्यासे च शिष्य-
मतिमङ्गलपरिग्रहस्य कृतत्वात् अन्यमङ्गलाकाङ्क्षाया निवृत्तेः, न च शास्त्रस्यामङ्गलत्वप्रसक्तिः, अन्यमङ्गलनिरपेक्षस्य
तस्य स्वतो मङ्गलत्वात्, मङ्गलं ह्यन्यदुपादीयते न शास्त्रस्य मङ्गलत्वकरणाय, तस्य स्वत एव मङ्गलत्वात्, किन्तु !,
शिष्यमतिमङ्गलपरिग्रहाय, ततः कथमन्यमङ्गलोपादानेऽनवस्थानिष्टौ शास्त्रस्यामङ्गलत्वमिति, ननु यदि शास्त्रं स्वतो
मङ्गलं तर्हि यद्यपि मङ्गलमिदं शास्त्रमित्येवं न गृह्णाति विनेयस्तथापि तत्स्वकार्यप्रसाधनसमर्थमेव, तस्य तथास्वभाव-
त्वादिति कथमन्यमङ्गलोपादानं न निरर्थकमिति?, तदेतदसम्यक्, अभिप्रायापरिज्ञानात्, इह विचित्रा भावानां
शक्तयः, किञ्चित्तथास्वरूपेण गृह्यमाणं स्वकार्यप्रसाधनसमर्थं यथा सुवर्णं, सुवर्णं हि सुवर्णरूपतया परिगृह्यमाणं
स्वफलप्रदानसमर्थं न लोष्टादिरूपतयेति, किञ्चित्तथास्वरूपेणागृह्यमाणमपि यथा किञ्चिदनिष्टमन्तःसमुत्थव्याध्यादिकं,
तद्धि तथास्वरूपेणाविदितमपि स्वफलं दुःखमुत्पादयति, मङ्गलमपि मङ्गलबुद्ध्या परिगृह्यमाणं मङ्गलफलसाधनायालं
नान्यथा साधुवत्, तथाहि—साधुः सम्यग्दर्शनज्ञानचारित्रपरिणामपरिणतो भावितात्मा क्षान्तिनिधानं 'समणं संजयं
दंत' मिति वचनात् मङ्गलभूतोऽपि मङ्गलबुद्ध्यैव परिगृह्यमाणः सन् प्रशस्तचेतोवृत्तेर्भव्यस्य मङ्गलकार्यप्रसाधको भवति,
यदि तु तथा न गृह्यते तर्हि तस्य कालुष्योपहतचेतसः सत्त्वस्य न भवतीति, एवं शास्त्रमपि स्वतो मङ्गलमपि सत्

स्तेषामेव दोहवाहादिक्रियासूपयुज्यमानत्वात्, न सामान्यं तद्विपर्ययात्, न च तत् सदिति प्रत्येतुं शक्नुमः अनुपलम्भात्, नहि गवादीनिव विशेषान् शृङ्गग्राहिकया तेभ्यो व्यतिरिक्तं गोत्वादिसामान्यं पश्यामो, न चापश्यन्त आत्मानं विप्रलभेमहि, ततः कथं तदभ्युपगच्छामः ?, उपलंभव्यवहाराभावात्, उक्तं च–'न विसेसत्थंतरभूयं अत्थि सामन्नमाह ववहारो । उवलंभववहाराभावाओ खरविसाणं व ॥ १ ॥" ( भा० ३५ ) एवं चास्यापि मतेन नैगमनयस्येव एकोऽनुपयुक्त एकं द्रव्यमङ्गलं, भूयांसोऽनुपयुक्ता भूयांसि द्रव्यमङ्गलानि, ननु नैगमोऽपि विशेषानिच्छति व्यवहारोऽपि ततः कोऽनयोः प्रतिविशेषः ?, उक्तमेतत् नैगमः सामान्यमिच्छति विशेषांश्च व्यवहारस्तु विशेषानेवेति, सिद्धसेनीयाः पुनः षडेव नयानभ्युपगतवन्तः, नैगमस्य सङ्ग्रहव्यवहारयोरन्तर्भावविवक्षणात्, तथाहि–यदा नैगमः सामान्यप्रतिपत्तिपरस्तदा स सङ्ग्रहेऽन्तर्भवति सामान्याभ्युपगमपरत्वात् विशेषाभ्युपगमनिष्ठस्तु व्यवहारे, आह च सिद्धसेनीयमतमुपसंजिघृक्षुर्भाष्यकृत्–"जो सामन्नग्गाही स नेगमो संगहं गओ अहवा । इयरो ववहारमिओ जो तेण समाणनिद्देसो ॥ १ ॥" ( भा० ३९ ) ततः सिद्धसेनीयाभिप्रायेण षड्भिरेव नयैरागमतो द्रव्यमङ्गलविचारः कर्त्तव्यः न सप्तभिरिति, ऋजुसूत्रस्त्वभिधत्ते–यदतीतं यच्चानागतं यच्च सदपि परकीयं तदवस्तु, अतीतस्य विनष्टत्वात् अनागतस्य त्वलब्धात्मलाभत्वात् परकीयस्य चार्थक्रियाकारित्वाभावात्, देवदत्तधनं हि यज्ञदत्तस्य परमार्थतोऽसत् तत्कार्याकरणादिति, प्रतिप्राणि प्रसिद्धमेतत्, किन्तु यत् सत् स्वकीयं तदेवैकं वस्तु, ततोऽस्य मतेनैकमेव द्रव्यमङ्गलं न भूयांसीति, उक्तं च–"उज्जुसुयस्स सयं संपयं च जं मंगलं तयं एक्कं । नातीतमणुप्पन्नं मंगलमिट्ठं परक्कं वा ॥ १ ॥ ( भा० ४० ) ये तु शब्दसमभिरूढैवं-

भूता नयाः ते अत्यन्तविशुद्धत्वादागमतो द्रव्यमङ्गलमित्येव नानुमन्यन्ते, तथा च ते आहुः—आगमतो हि द्रव्यमङ्गलमिदमुच्यते मङ्गलशब्दार्थज्ञाता तत्र चानुपयुक्त इति, तदेतत्परस्परव्याहतं, यदि मङ्गलशब्दार्थज्ञाता तर्हि कथमनुपयुक्तः ?, अनुपयुक्तश्चेत् कथं मङ्गलशब्दार्थज्ञाता, ज्ञानस्योपयोगात्मकत्वात् तदभावे तस्याप्यभावात्, न खलु जीवश्चेतनारहित इति शक्यं प्रतिपत्तुं सचेतसेति, उक्तं च—"जाणं नाणुवउत्तोऽणुवउत्तो वा न जाणई जम्हा। जाणंतोऽणुवउत्तोत्ति बिंति सद्दादओऽवत्थुं ॥१॥" (भा० ४२) इत्थं चागमतो द्रव्यमङ्गलस्य नयैर्विचारः सूत्रेऽपि साक्षात् संवादी, तथा चानुयोगद्वारेष्वागमतो द्रव्यावश्यकमधिकृत्य सूत्रं—"नेगमस्स णं एगो अणुवउत्तो आगमतो एगं दव्वावस्सयं दुन्नि अणुवउत्ता दोन्नि दव्वावस्सयाइं तिन्नि अणुवउत्ता आगमओ तिण्णि दव्वावस्सयाइं, एवं जावइया अणुवउत्ता आगमतो तावइयाइं नेगमस्स दव्वावस्सयाइं, एवमेव ववहारस्सवि, संगहस्स णं एगो वा अणेगो वा अणुवउत्तो वा अणुवउत्ता वा दव्वावस्सयं वा दव्वावस्सयाइं वा से एगं दव्वावस्सयं, उज्जुसुयस्स आगमतो एगं दव्वावस्सयं, पुहुत्तं नेच्छइ, तिण्हं सद्दनयाणं जाणए अणुवउत्ते अवत्थू, कम्हा ?, जइ जाणए अणुवउत्ते न भवइ" इति। उक्तमागमतो द्रव्यमङ्गलमधुना नोआगमतोऽभिधीयते, तच्च त्रिधा, तद्यथा—ज्ञशरीरद्रव्यमङ्गलं, भव्यशरीरद्रव्यमङ्गलं, ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्यमङ्गलं च, तत्र यन्मङ्गलपदार्थज्ञस्यापगतजीवितस्य शरीरं सिद्धिशिलातलादिगतं तद्भूतभावनया घृतमस्मिन् कुम्भे प्रक्षिप्तमासीदित्येष घृतकुम्भ इत्यादिवदतीतनयानुवृत्त्या ज्ञशरीरद्रव्यमङ्गलं, यस्तु बालको नेदानीं मङ्गलशब्दार्थमवबुध्यते अथचावश्यमायत्यां तेनैव शरीरसमुच्छ्रयेण भोत्स्यते स भाविभावनिबन्धनत्वाद् घृतमस्मिन् कुम्भे प्रक्षेप्स्यते इत्येष घृतकुम्भ इत्यादिवद् भविष्यन्नयानुस-

नोआगमद्रव्यमङ्गलम्

रणेन भव्यशरीरद्रव्यमङ्गलं; उभयमपि च नोआगमतो द्रव्यमङ्गलं सर्वथा आगमरहितत्वात्, अत एव सर्वनिषेधवाची नोशब्दोऽत्र प्रतिपत्तव्यः, ज्ञशरीरभव्यशरीरव्यतिरिक्तं तु द्रव्यमङ्गलं जिनप्रणीतप्रत्युपेक्षणादिक्रियां कुर्वन् अनुपयुक्तः साध्वादिः, क्रिया हि प्रत्युपेक्षणादिका हस्तपादादिव्यापारविशेषरूपा, ततोऽसावागमो न भवति, आगमस्य ज्ञानत्वात्, शरीरादिचेष्टायास्तु तद्विपरीतत्वात्, तामपि यद्युपयुक्तः करोति ततोऽसौ भावमङ्गलं भवति, अनुपयुक्तस्य सा द्रव्यं 'अनुपयोगो द्रव्य'मिति वचनात्, ततः क्रियायाः द्रव्यत्वादनागमत्वाच्च तां कुर्वन् साध्वादिरभेदोपचारात् नोआगमतो ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यमङ्गलं, अत्रापि सर्वनिषेधवाची नोशब्दः, उक्तं च–"जाणयभव्वसरीराइरित्तमिह दव्वमंगलं होइ। जा मङ्गल्ला किरिआ तं कुणमाणो अणुवउत्तो ॥ १ ॥' (भा० ४६) अथवा यत् भूतचरणकरणपरिणामं तन्नोआगमतो ज्ञशरीरद्रव्यमङ्गलवत् भूतभावमङ्गलत्वात् ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यमङ्गलं, यदपि बालकशरीरं चरणकरणक्रियापरिणामयोग्यं तदपि प्रागुक्तभव्यशरीरद्रव्यमङ्गलवत् भाविभावमङ्गलत्वात् ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यमङ्गलं; प्रागुक्ते हि नोआगमतो ज्ञशरीरभव्यशरीरे द्रव्यमङ्गले भूतभाविज्ञानपरिणामापेक्षे, चरणकरणक्रियापरिणामस्तु ज्ञानपरिणामाद्भिन्न इति ज्ञशरीरभव्यशरीरव्यतिरिक्तता, यदिवा स्वभावत एव शोभनवर्णादिगुणं सुवर्णादि तत् ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यमङ्गलं, आह च भाष्यकृत्– "जं भूयभावमङ्गलपरिणामं तस्स वा जयं जोग्गं। जं वा सहावसोहणवण्णाइगुणं सुवण्णाइं ॥ १ ॥ तंपि य हु भावमङ्गलकारणओ मङ्गलंति निद्दिट्ठं। नोआगमओ दव्वं आगमरहिओत्ति जं भणियं ॥ २ ॥ (भा० ४७ ४८) अत्र जं भूयभावमङ्गलंति यत् भूतचरणकरणक्रियापरिणामं

॥ ८ ॥

'तस्स वा जयं जोग्ग'मिति तस्य वा-चरणकरणक्रियापरिणामस्य यद्योग्यं बालकादिशरीरं, शेषं सुगमम्। उक्तं द्रव्यमङ्गलं, अधुना भावमङ्गलमभिधातव्यं, भावस्य च लक्षणमिदं-'भावो विवक्षितक्रियानुभूतियुक्तो हि वै समाख्यातः। सर्वज्ञैरिन्द्रादिवदिहेन्दनादिक्रियानुभवात् ॥ १ ॥" अस्यायमर्थः-भवनं भावः, विवक्षितरूपेण परिणमनमित्यर्थः, यदिवा भवतीति भावः, 'सहादिदुनीभूग्रहो णो वे'ति कर्त्तरि णप्रत्ययः, विवक्षितरूपेण परिणत इत्यर्थः, सर्वज्ञैः समाख्यातः, कोऽसावित्याह-'विवक्षितक्रियानुभूतियुक्तः' वक्तुर्या विवक्षिता इन्दनज्वलनजीवनादिका क्रिया तस्या अनुभूतिः-अनुभवनं तया युक्तो विवक्षितक्रियानुभूतियुक्तः, क इवेत्याह-इन्दनादिक्रियानुभवात्, अत्रादिशब्दात् ज्वलनजीवनादिक्रियापरिग्रहः, इन्द्रादिवत्-शक्रादिवत्, आदिशब्दाज्ज्वलनजीवादिपरिग्रहः, इन्दनादिक्रियानुभवयुक्तेन्द्रादिवदिति भावः, अत्र भावतो मङ्गलं भावमङ्गलं यदिवा भावश्चासौ मङ्गलं च भावमङ्गलं, तच्च द्विधा-आगमतो नोआगमतश्च, तत्रागमतो मङ्गलपदार्थस्य ज्ञाता तत्र चोपयुक्तः, 'उपयोगो भावनिक्षेप' इति वचनात्, ननु मङ्गलपदार्थज्ञानोपयोगमात्रेण कथं पुरुषो भावमङ्गलं भवति ?, न ह्यग्निज्ञानोपयुक्तो माणवकोऽग्निर्दहनपचनप्रकाशनाद्यर्थक्रियासाधकत्वाभावात्, तदेतदसम्यक्, अभिप्रायापरिज्ञानात्, संवित् ज्ञानमवगमो भावोऽभिप्राय इत्यनर्थान्तरं, 'अर्थाभिधानप्रत्ययाश्च तुल्यनामधेयाः सर्वप्रवादिनामविसंवादेन स्थिताः' तथाहि-बाह्यः पृथुबुध्नोदराकारोऽर्थोऽपि घट इति व्यपदिश्यते, तद्वाचकमभिधानं घट इति, तज्ज्ञानरूपः प्रत्ययोऽपि घट इति, तथा च लोके वक्तारः-किमिदं पुरो दृश्यते ?, घटः, किमसौ वक्ति ?, घटं, किमस्य चेतसि स्फुरति ?, घटः, एवं च सति यदग्निरिति ज्ञानं तदव्यतिरेकात् माणवकोऽप्यग्निः ज्ञानज्ञानिनोः कथंचिदव्यतिरेकात्,

अन्यथा तज्ज्ञाने सत्यप्यसौ नोपलभेत, अतन्मयत्वात्, प्रदीपहस्तान्धवत् पुरुषान्तरवद्वा, बन्धाद्यभावप्रसङ्गश्च, ज्ञानाज्ञानसुखदुःखपरिणामशून्यत्वात्, आकाशवत्, न खल्वाकाशं ज्ञानाज्ञानसुखदुःखपरिणामरहितं बन्धमोक्षाभ्यां युज्यते, तस्मात्कथञ्चिदव्यतिरेको ज्ञानज्ञानिनोः, न च निराकारं ज्ञानं, अनाकारत्वे पदार्थान्तरवत् विवक्षितस्यापि पदार्थस्य परिच्छेदाप्रसक्तेः, तदाकारशून्यत्वाविशेषात्, ततो ज्ञानस्याग्न्याकारत्वात्तदव्यतिरिक्त आत्माऽप्यग्न्याकार इत्यग्निर्माणवकः, न चैवं दहनपचनप्रकाशनाद्यर्थक्रियाप्रसक्तिः, सर्वस्याग्नेर्दहनाद्यर्थक्रियाप्रसाधकत्वायोगात् भस्मच्छन्नाग्निना व्यभिचारादिति, नोआगमतो भावमङ्गलं 'सुविशुद्धः क्षायिकादिको भावः', नोशब्दोऽत्र सर्वनिषेधवाची, उक्तं च—मङ्गलसुयउवउत्तो आगमओ भावमङ्गलं होइ। नोआगमओ भावो सुविसुद्धो खाइयाईओ ॥ १ ॥" (भा० ४९) अथवा—नोआगमतो भावमङ्गलमागमवर्जं ज्ञानचतुष्टयं सर्वनिषेधवचनत्वान्नोशब्दस्य, यदिवा यः सम्यग्दर्शनज्ञानचारित्रपरिणामः स न आगम एव केवलो नाप्यनागमः किन्त्वागमसम्मिश्र इति नोआगमतो भावमङ्गलं, नोशब्दोऽत्र मिश्रवचनः, आह च—"(अहवा) सम्मद्दंसणनाणचरित्तोवयोगपरिणामो। नोआगमओ भावो नोसद्दो मीसभावंमि ॥ १ ॥" (भा० ५०) यदिवा यो भगवदर्हन्नमस्काराद्युपयोगः स खल्वागमैकदेशो, विवक्षिताध्ययनाद्यपेक्षया तस्यैकदेशत्वात्, ततो नोशब्दस्य देशवाचित्वात् नोआगमतः स भावमङ्गलं। ननु नामस्थापनाद्रव्येषु मङ्गलाभिधानं विवक्षितभावशून्यत्वात् द्रव्यत्वं च समानमतः क एषां प्रतिविशेषः?, उच्यते, इह यथा स्थापनेन्द्रे लोचनसहस्रकुण्डलकिरीटकरकुलिशधारणशचीसन्निधानसिंहासनाध्यासनादिजनितातिशयः खल्विन्द्राकारो लक्ष्यते, कर्त्तुश्च सद्भूतेन्द्राभिप्रायो भवति यथाऽयं मया स्वर्गाधि-

पतिः साक्षादालिखित इत्यादि, द्रष्टुश्च तदाकारदर्शनात् प्रत्ययो यथाऽयमिन्द्रो वर्त्तत इति, प्रणतिकृतश्च फलार्थिनः स्तोतुं प्रवर्त्तते, फलं च किञ्चिदभीष्टं देवतानियोगात् प्राप्नुवन्ति, न तथा नामेन्द्रे नापि द्रव्येन्द्रे, ततो नामद्रव्याभ्यामित्थं स्थापनाया विशेषः, उक्तं च–"आगारोऽभिप्पाओ बुद्धी किरिया फलं च पाएणं। जह दीसइ ठवणिंदे न तहा नामे न दविंदे ॥ १ ॥" ( भा० ५२ ) यथा स द्रव्येन्द्रो भावेन्द्रकारणतां प्रतिपद्यते प्रतिपन्नवान् वा भावेन्द्रतां उपयोगापेक्षायामपि तदुपयोगतामासादयिष्यति अवाप्तवान् वा न तथा नामेन्द्रो नापि स्थापनेन्द्र इति नामस्थापनाभ्यां द्रव्यस्य विशेषः; स्थापनाद्रव्यलक्षणव्यतिरिक्तस्वरूपं तु नामेति द्रव्यस्थापनाभ्यां नाम्नो विभिन्नता, अपरस्त्वाह–भावमङ्गलमेवैकं भावानामेवार्थक्रियाकारित्वात् ये तु नामादयस्ते सङ्कल्पमात्रसम्पादितसत्ताका इति किं तेषामुपन्यासेन ?, तदेतदसम्यक्, नामादीनामपि भाववत्, तात्त्विकत्वात् तेषामपि भाववदविशेषेण शब्दतः प्रतीतेः, तथाहि—अविशिष्टे इन्द्रवस्तुन्युच्चरिते नामादिचतुष्टयमविशेषेण प्रतीतिमासादयति, किमनेन नामेन्द्रो विवक्षितः आहोश्वित् स्थापनेन्द्रो द्रव्येन्द्रो भावेन्द्रो वा इति ?, ततो यथा घट इत्युक्ते कोऽनेन घटो विवक्षितो रक्तः कृष्णः शुक्लः नीलो वेति शब्दतः प्रतीयमानाः सर्वेऽपि तात्त्विकास्तथैते नामादयोऽपीति, तथा च एतदेव साक्षेपपरिहारं भाष्यकृदाह–"इह भावोच्चिय वत्थुं तदत्थसुन्नेहिं किं नु सेसेहिं ?। नामादओऽवि भावा जं तेऽविहु वत्थुपज्जाया ॥१॥" ( भा० ५५ ) अत्र 'वत्थुपज्जाया' इति इन्द्रादिरूपस्य सामान्यवस्तुनो विशेषाः, इतश्च नामस्थापनाद्रव्याणि तात्त्विकानि भावमङ्गलाङ्गत्वात्, तदङ्गता च तत्परिणामकारणत्वात्; तथाहि–मङ्गलाभिधानं सिद्धाद्यभिधानं चोपश्रुत्य भगवदर्हत्प्रतिमां वा दृष्ट्वा भूतयतिभावं भव्य-

नामादीनां विशिष्टता पर्यायता च

यतिभावं वा शरीरं चोपलभ्योपजायते प्रायः कस्याप्यासन्नमुक्तिगामिनः सम्यग्दर्शनादिरूपभावमङ्गलपरिणामः, उक्तं च–"अहवा नामंठवणादव्वाइं भावमङ्गलंगाइं । पाएण भावमङ्गलपरिणामनिमित्तभावाओ ॥ १ ॥ जह मङ्गलाभिहाणं सिद्धं विजयं जिणिंदनामं च । सोऊण पेच्छिऊण य जिणपडिमालक्खणाइं च ॥ २ ॥ परिनिव्वुयमुणिदेहं भवं जइजण सुवण्णमलाइ । दट्ठूण भावमङ्गलपरिणामो होइ पाएण ॥ २ ॥" ( भा० ५६–५७–५८ ) अन्यच्च–यद् वस्तुनोऽभिधानं तद् अभिधेयधर्ममन्तरेण नोपजायते, अभिधानाभिधेययोर्वाच्यवाचकसम्बन्धेन परस्परमविनाभावित्वात्, अभिधेयधर्मोऽपि च नामादिविचारप्रक्रमे नामाभिधीयते, अभिधेये अभिधानोपचारात्, यश्च प्रतिनियत आकारो घटादिवस्तुनः सा स्थापना, या च तत्तद्रूपतया परिणमनशक्तिः सा द्रव्यं कारणत्वात्, यश्च साक्षात् पुरः परिस्फुरन् प्रतिभासते पर्यायः स भावः, उक्तं च–"अहवा वत्थुऽभिहाणं नामं ठवणा य जो तदागारो । कारणया से दव्वं कज्जावन्नं तयं भावो ॥ १ ॥" (भा० ६०) ॥ ततो यद्वस्तु तन्नामादिचतुष्टयात्मकं तदन्तरेण वस्तुत्वायोगादिति तात्त्विकानि नामादीनि ।

एवं च तात्त्विकनामादिचतुष्टयात्मके सर्वस्मिन्नपि वस्तुनि व्यवस्थिते ये एकैकांशावलम्बिनो नामादिनयाः, तद्यथा–नामनय आह–वस्तुधर्मो नाम तत्प्रत्ययहेतुत्वात्, यद् यस्य प्रत्ययहेतुस्तत्तद्धर्मो यथा घटस्य स्वरूपादयः, वस्तुनः प्रत्ययहेतुश्च नाम ततो निःसन्दिग्धाविपरीतप्रतीतिसमुद्भवात्, तस्माद्वस्तुधर्मो नाम, यदि पुनर्वस्तुधर्मो नाम न स्यात् ततस्तद्वस्तु वस्त्वेव न स्यात्, निरभिधेयत्वात् षष्ठभूतवत्, अन्यच्च–वस्तुधर्मत्वाभावे घट इति नाम्न्युच्चरिते घट इति प्रतीतिर्निःसन्दिग्धा न स्यात् प्रतिबन्धाभावात्, किन्तु केषांचित्संशयो यथा किमयमाह ?, केषांचित्कदाचिद्विपर्ययो यथाऽनेन पटः प्रोक्त इति, अन्येषां

॥ १० ॥

(अ) प्रतिबन्धं पर्यालोचयतः तद्दर्शनेनानध्यवसायः; यदिवा यदृच्छया भवेत् प्रतिपत्तिः, आह च-"संसयविवज्जया वाऽण- ज्झवसाओऽहवा जहिच्छाए। होज्जत्थे पडिवत्ती न वत्थुधम्मो जओ नामं ॥१॥ (भा० ६२) न चैतत् दृश्यते, तस्मात् वस्तुधर्मो नाम, तदेव चैकं तात्त्विकं, तद्वशादेव सकलव्यवहारप्रवृत्तेर्न स्थापनादय इत्येवमुक्ते स्थापनानय आह-आकार एव वस्तु, तत्रैव बुद्ध्यभिधानप्रवृत्तिक्रियोपलम्भात्, तथाहि-प्रत्यक्षत आकारवदेव वस्तु परिगृह्यते, तदेव च शब्देनाप्य- भिधीयते, तत्रैव च पुरुषस्य प्रवृत्तिः, अर्थक्रियामपि च तदेव करोतीत्याकार एव तात्त्विको न नामादयः, तथा च प्रयोगः-यदाकाररहितं न तद्वस्तु, यथा गगनेन्दीवरं, आकाररहितं च पराभिमतं नामादि, उक्तं च-"न पराणुमयं वत्थुं आगाराभावओ खपुप्फं व। उवलंभव्ववहाराऽऽभावाओ नाणगारं च ॥ १ ॥" (भा० ६५) अत्र पूर्वार्द्धं सुगमं, उत्तरार्द्धस्य व्याख्यानमिदं-न अनाकारं वस्तु उपलम्भाभावात् व्यवहाराभावाच्च। एवं स्थापनानयेनोक्ते द्रव्यनय आह- तात्त्विकोत्पादव्ययरहितं यन्निर्विकारमाविर्भावतिरोभावमात्रपरिणामात्मकं द्रव्यं तदेवैकं तात्त्विकं, तस्यैव प्रत्यक्षादिना प्रमाणेनोपलभ्यमानत्वात्, यत्तु तदतिरिच्य स्थापनानयेन प्रोच्यते तदसद्, द्रव्यातिरेकेणान्यस्याकारस्योपलम्भाभावात्, उक्तं च-"दव्वपरिणाममेत्तं मोत्तूणागारदरिसणं किं तं?। उप्पायवयरहियं दव्वं चिय निव्वियारं तं ॥ १ ॥ आविब्भावतिरो- भावमेत्तपरिणामकारणमचिंतं । निच्चं बहुरूवंपिव नडोव्व वेसंतरावन्नो ॥ २ ॥" (भा० ६६-६७) इति, इतश्च द्रव्यं तात्त्विकं कारणत्वात् मृत्पिण्डपयःप्रभृतिवत्, यच्चाकारणं न तद् वस्तु, यथा गगनकुसुमं, अकारणं च पराभिमतमाका- रादीति। एवं द्रव्यनयेनाभिहिते भावनयः प्राह-भाव एव पारमार्थिको न द्रव्यं, तस्यानुपलम्भात्, न हि मृत्पिण्ड-

शिवकस्थासकोशकुशूलादिभावेभ्यो व्यतिरिक्तमन्वयिनमर्थं पश्यामः, न चापश्यन्तः प्रतिपत्तुं शक्नुमः, मा प्रापदत्यन्तासतोऽपि षष्ठभूतादेरभ्युपगमप्रसङ्गः, अथ द्रव्यमन्तरेण कथमिव भावानामुत्पत्तिरुपपद्यते ? तस्मादवश्यं द्रव्यमभ्युपगन्तव्यं, तदसम्यक्, प्रतीत्योत्पादवादस्य सम्यग्व्यवस्थितत्वात्, तथाहि—पूर्वं भावं कारणत्वेन प्रतीत्योत्तरो भावः समुत्पद्यते, पूर्वं च कारणं कार्योत्पत्तिसमये स्वत एव विनिवर्त्तते, तस्य क्षणमात्रावस्थायित्वात्, उत्तरोऽपि च भावस्तदुत्तरभावं प्रति कारणभावमनुभूय द्वितीयक्षणे न भवति, सर्वभावानां क्षणमात्रावस्थानात्, 'क्षणिकाः सर्वसंस्कारा' इति वचनात्, एवमेकैकांशावलम्बिनो नामादितया मिथ्यादृशः एकांशाभ्युपपमपरतया सम्पूर्णवस्तुसंस्पर्शित्वायोगात्, वस्तुनोऽनेकधर्मत्वात्, भगवदर्हन्मतं तु सर्वनयसमूहात्मकमतोऽनेकांशावलम्बि, किन्त्वेकांशविचारप्रक्रमेऽपीतरांशसापेक्षत्वात् सम्पूर्णवस्तुग्राहीति प्रमाणं, तथाहि—नामापि च वस्तुधर्मस्तस्य तत्प्रत्ययहेतुत्वात्, आकारोऽपि तात्त्विकस्तस्य प्रत्यक्षादिना प्रमाणेनाविसंवादितयोपलम्भात्, द्रव्यमपि च प्रमाणं, तदभावे भावानामत्यन्तासतां खरविषाणस्येवोत्पादायोगात्, भावा अपि च तात्त्विका द्रव्यस्य विचित्रशक्तिकतया तथा तथापरिणमनभावात्, तथा चाहुः स्तुतिषु गुरवः—“अन्योऽन्यपक्षप्रतिपक्षभावाद्, यथा परे मत्सरिणः प्रवादाः । नयानशेषानविशेषमिच्छन्, न पक्षपाती समयस्तथा ते ॥ १ ॥” आद्यस्तुतिकारोऽप्यवोचत्—“नयास्तव स्यात्पदलाञ्छना इमे, रसोपविद्धा इव लोहधातवः । भवन्त्यभिप्रेतफला यतस्ततो, भवन्तमार्याः प्रणता हितैषिणः ॥ १ ॥” ततो नामादयोऽपि भाववत् तात्त्विका इति तेषामप्युपन्यासः ॥

अथ सर्वज्ञशासने सकलनयमूलभूतौ द्वावेव नयौ, तद्यथा—द्रव्यास्तिकनयः पर्यायास्तिकनयश्च, तथा चाहुः श्रीमल्लवा-

॥ ११ ॥

दिनः—"सङ्गहविसेससङ्गहविसेसपत्थारमूलवागरणी । दवट्ठिओ य पज्जवनओ य सेसा वियप्पा सिं ॥१॥" [संग्रहविशेषाणां संग्रहविशेषप्रस्तारमूलव्याकरणिनौ । द्रव्यार्थिकश्च पर्यायार्थिकश्च शेषा विकल्पा अनयोः ॥१॥ ] तत्र नामादिचतुष्टयमध्ये कस्य किं सम्मतमिति निरुच्यतां ?, उच्यते, नामस्थापनाद्रव्याणि द्रव्यास्तिकनयस्य भावः पर्यायास्तिकनयस्य, कथमिति चेत्, उच्यते, इह सिद्धसेनीयास्तावदेवमाहुः—'सामान्यग्राही नैगमः सङ्ग्रहेऽन्तर्भूतो विशेषग्राही व्यवहारे' इति षडेव तत्त्वतो नयाः, तत्र सङ्ग्रहो व्यवहारश्च द्रव्यास्तिकनयौ द्रव्याभ्युपगमपरत्वाद्, अतस्तस्य नामादित्रितयमभिमतं, एतावांस्तु विशेषः—सामान्याभ्युपगमपरत्वात् यानि कानिचिन्नाममङ्गलानि तानि सर्वाणि एकं नाममङ्गलं सर्वाणि स्थापनामङ्गलान्येकं स्थापनामङ्गलं सर्वाणि द्रव्यमङ्गलान्येकं द्रव्यमङ्गलं, व्यवहारस्तु विशेषग्राहीति नाममङ्गलानि प्रत्येकं भिन्नानीच्छति, एवं स्थापनामङ्गलानि द्रव्यमङ्गलानि चेति, ऋजुसूत्रशब्दसमभिरूढैवंभूतास्तु पर्यायाभ्युपगमपरत्वात् पर्यायास्तिकनयः, ततस्तस्य भावः सम्मतः, उक्तं च—"नामाइतियं दव्वट्ठियस्स भावो उ पज्जवनयस्स । संगहववहारा पढमगस्स सेसा उ इयरस्स ॥ १ ॥" ( भा० ७५ ) सूत्राभिप्रायेण तु ऋजुसूत्रोऽप्यविशुद्धो द्रव्यास्तिकनयस्तस्यापि द्रव्याभ्युपगमात्, तथा चानुयोगद्वारसूत्रम्—"उज्जुसुयस्स एगो अणुवउत्तो आगमतो एगं दव्वावस्सयं, पुहुत्तं नेच्छइ' इति, तदेवमुक्तं प्रासङ्गिकं, अधुना प्रकृतमुच्यते—तत्र नोआगमतो भावमङ्गलमनेकप्रकारमुक्तं, अथवा नोआगमतो भावमङ्गलं नन्दी, अथ नन्दीति कः शब्दार्थः ?, उच्यते, 'टुनदु समृद्धौ' वित्यस्य धातोः 'उदित' इति नमि विहिते नन्दनं नन्दिः,—प्रमादो हर्ष इत्यनर्थान्तरं, नन्दिहेतुत्वात् ज्ञानपञ्चकादिकमपि नन्दिः, अथवा नन्दन्ति प्राणिनोऽनेनास्मिन् वेति नन्दिः, 'पदिपटि-

कीर्त्यादिभ्य' इति इप्रत्ययः, असावपि मङ्गलवच्चतुर्भेदः, तद्यथा–नामनन्दिः स्थापनानन्दिः द्रव्यनन्दिः भावनन्दिश्च, तत्र यस्य जीवस्याजीवस्य वा नन्दिशब्दान्वर्थरहितस्य नन्दिरिति नाम क्रियते स नाम्ना नन्दिर्नामनन्दिः यद्वा नामनामवतोरभेदोपचारान्नाम चासौ नन्दिश्च नामनन्दिः, नन्दिरिति नाम वा नामनन्दिः, तथा सद्भावमाश्रित्य लेप्यकर्मादिष्वसद्भावं चाश्रित्याक्षवराटकादिषु भावनन्दिमतः साध्वादेः स्थापना सा स्थापनानन्दिः, अथवा द्वादशविधतूर्यरूपद्रव्यनन्दिस्थापना स्थापनानन्दिः, द्रव्यनन्दिर्द्विधा–आगमतो नोआगमतश्च, तत्र आगमतो नन्दिपदार्थस्य ज्ञाता तत्र चानुपयुक्तः, 'अनुपयोगो द्रव्य'मिति वचनात्, नोआगमतस्तु त्रिधा, तद्यथा–ज्ञशरीरद्रव्यनन्दिः भव्यशरीरद्रव्यनन्दिर्ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्यनन्दिश्च, तत्र यन्नन्दिपदार्थज्ञस्यापगतजीवितस्य शरीरं सिद्धिशिलातलादिगतं तद्भूतभावनया ज्ञशरीरद्रव्यनन्दिः, यस्तु बालको नेदानीं नन्दिशब्दार्थमवबुध्यते अथ चावश्यमायत्यां तेनैव शरीरसमुच्छ्रयेण भोत्स्यते स भाविभावनिबन्धनत्वात् भव्यशरीरद्रव्यनन्दिः, ज्ञशरीरभव्यशरीरव्यतिरिक्ता तु द्रव्यनन्दी द्वादशप्रकारस्तूर्यसङ्घातः, स चायं–"भम्भामकुन्दमद्दलकडम्बझल्लरिहुडुक्ककंसाला। काहलि तलिमा वंसो संखो पणवो य बारसमो ॥ १ ॥" ( बृ. भा० ) भावनन्दिर्द्विधा–आगमतो नोआगमतश्च, तत्रागमतो नन्दिपदार्थस्य ज्ञाता तत्र चोपयुक्तः, नोआगमतः पञ्चप्रकारं ज्ञानं, तच्चेदम्–

नन्देः शब्दार्थः

आभिणिबोहियनाणं सुयनाणं चेव ओहिनाणं च। तह मणपज्जवनाणं केवलनाणं च पंचमयं ॥ १ ॥ ॥ १२ ॥

आ–अर्थाभिमुखो नियतः–प्रतिनियतस्वरूपो बोधः–बोधविशेषोऽभिनिबोधोऽभिनिबोध एवाभिनिबोधिकं, अभिनिबोध-

शब्दस्य विनयादिपाठाभ्युपगमात् 'विनयादिभ्य' इत्यनेन स्वार्थे इकण्, 'अतिवर्त्तन्ते स्वार्थे प्रत्ययकाः प्रकृतिलिङ्गवच-नानी'ति वचनादत्र नपुंसकता, यथा विनय एव वैनयिकमित्यत्र, अथवा अभिनिबुध्यते अनेनास्मादस्मिन्वेति अभिनि-बोधः—तदावरणकर्मक्षयोपशमस्तेन निर्वृत्तमाभिनिबोधिकं, आभिनिबोधिकं च तत् ज्ञानं च आभिनिबोधिकज्ञानं—इन्द्रि-यमनोनिमित्तो योग्यदेशावस्थितवस्तुविषयः स्फुटप्रतिभासो बोधविशेष इत्यर्थः, तथा श्रवणं श्रुतं—वाच्यवाचकभावपु-रस्सरीकारेण शब्दसंसृष्टार्थग्रहणहेतुरुपलब्धिविशेषः, एवमाकारं वस्तु जलधारणाद्यर्थक्रियासमर्थं घटशब्दवाच्यमित्या-दिरूपतया प्रधानीकृतत्रिकालसाधारणसमानपरिणामः शब्दार्थपर्यालोचनानुसारी इन्द्रियमनोनिमित्तोऽवगमविशेष इत्यर्थः, श्रुतं च तत् ज्ञानं च श्रुतज्ञानं, अथवा श्रूयतेऽनेन अस्मात् अस्मिन् वेति श्रुतं—तदावरणकर्मक्षयोपशमः, 'कृद्बहुल'मिति वचनात् करणादावपि क्तप्रत्ययः, तज्जनितं ज्ञानमपि श्रुतं, कार्ये कारणोपचारात्, शृणोतीति वा श्रुतं—आत्मा तदनन्य-त्वात् ज्ञानमपि श्रुतं, श्रुतं च तत् ज्ञानं चेति समासः, चशब्दस्त्वनयोः स्वामिकालकारणविषयपरोक्षत्वसाधर्म्यात्तुल्यकक्ष-तोद्भावनार्थः, तथाहि—य एव मतिज्ञानस्य स्वामी स एव श्रुतज्ञानस्यापि, 'जत्थ मइनाणं तत्थ सुयनाणं जत्थ सुयनाणं तत्थ मइनाण'मिति वचनात्, ततः स्वामिसाधर्म्यं, तथा यावानेव मतिज्ञानस्य स्थितिकालस्तावानेव श्रुतज्ञानस्यापि, तत्र प्रवाहापेक्षया अतीतानागतवर्त्तमानरूपः सर्व एव कालः अप्रतिपतितैकजीवापेक्षया तु षट्षष्टिसागरोपमाणि समधिकानि, उक्तं च—"दो वारे विजयाइसु गयस्स तिन्निऽच्चुए अहव ताइं। अइरेगं नरभवियं नाणाजीवाण सवद्धा ॥१॥" (भा०२७६२) इति कालसाधर्म्यं, यथा च इन्द्रियानिन्द्रियनिमित्तं मतिज्ञानं तथा श्रुतज्ञानमपीति कारणसाधर्म्यं, तथा यथा मति-

ज्ञानमादेशतः सर्वद्रव्यादिविषयं तथा श्रुतज्ञानमपीति विषयसाधर्म्यं, यथा च मतिज्ञानं परोक्षं तथा श्रुतज्ञानमपीति परोक्षतासाधर्म्यं, एवंकारस्त्ववधारणार्थः, स च परोक्षत्वमनयोरवधारयति, आभिनिबोधिकश्रुतज्ञाने एव परोक्षे न शेषं ज्ञानमिति, अथ परोक्षमिति कः शब्दार्थः?, उच्यते 'अशूङ् व्याप्तौ' अश्नुते–ज्ञानात्मना सर्वानर्थान् व्याप्नोतीत्यक्षः, यदिवा 'अश् भोजने' अश्नाति–सर्वानर्थान् यथायोगं भुङ्क्ते पालयति वेत्यक्षो–जीवः, उभयत्रापि 'मावावद्यमिकमिहनिकष्यशी'त्यादिना उणादिकसप्रत्ययः, अक्षस्य–आत्मनो द्रव्येन्द्रियाणि द्रव्यमनश्च पुद्गलमयत्वात् पराणि वर्त्तन्ते, पृथग्वर्त्तन्त इति भावः, तेभ्यो यदक्षस्य ज्ञानमुदयते तत्परोक्षं, 'पृषोदरादय' इति रूपनिष्पत्तिः, अथवा परैः–इन्द्रियादिभिः सह उक्षा–सम्बन्धो विषयविषयिभावलक्षणो यस्मिन् ज्ञाने न तु साक्षादात्मना तत्परोक्षं, धूमादग्निज्ञानवत्, अथ कथमेतयोराभिनिबोधिकश्रुतयोः परोक्षता?, उच्यते, पराश्रयत्वात्, तथाहि–पुद्गलमयत्वात् द्रव्येन्द्रियमनांस्यात्मनः पृथग्भूतानि ततस्तदाश्रयेणोपजायमानं ज्ञानमात्मनो न साक्षात् किन्तु परम्परयेति परोक्षता, उक्तं च "अक्खस्स पोग्गलमया जं दव्वेंदियमणा परा होंति। तेहिंतो जं नाणं परोक्खमिह तमणुमाणं व ॥ १ ॥" (भा० ९०) अत्र वैशेषिकादयः प्राहुः–नन्वक्षाणीन्द्रियाण्युच्यन्ते, 'खमक्षमिन्द्रियं प्रोक्तम्, हृषीकं करणं स्मृत'मिति वचनात्, ततोऽक्षाणां–इन्द्रियाणां या साक्षादुपलब्धिः सा प्रत्यक्षं, अक्षं–इन्द्रियं प्रति वर्त्तत इति प्रत्यक्षमिति व्युत्पत्तेः, तथा च सति सकललोकप्रसिद्धं साक्षादिन्द्रियाश्रितं घटादिज्ञानं प्रत्यक्षमिति सिद्धं, तदेतदयुक्तं, इन्द्रियाणामुपलब्धृत्वासम्भवात्, तदसम्भवश्चाचेतनत्वात्, तथा चात्र प्रयोगः– यदचेतनं तन्नोपलब्धा, यथा घटः, अचेतनानि च द्रव्येन्द्रि-

मतिश्रुतयोःपरोक्षता

याणि, न चायमसिद्धो हेतुः, यतो नाम द्रव्येन्द्रियाणि निर्वृत्त्युपकरणरूपाणि 'निर्वृत्त्युपकरणे द्रव्येन्द्रियं' (त० अ० २ सू० १७) इति वचनात्, निर्वृत्त्युपकरणे च पुद्गलमये, पुद्गलमयं च सर्वमचेतनं, पुद्गलानां काठिन्यानवबोधरूपतया चैतन्यं प्रति धर्मित्वायोगात्, धर्म्मानुरूपो हि सर्वत्रापि धर्म्मी यथा काठिन्यं प्रति पृथिवी, यदि पुनरनुरूपत्वाभावेऽपि धर्म्मधर्म्मिभावो भवेत् ततः काठिन्यजलयोरपि स भवेत्, न च भवति, तस्मादचेतनाः पुद्गलाः, उक्तं च–"बोहसहावममुत्तं विसयपरिच्छेयगं च चेयण्णं । विवरीयसहावाणि य भूयाणि जगप्पसिद्धाणि ॥ १ ॥ ता धम्मधम्मिभावो कहमेएसिं तहऽब्भुवगमे य । अणुरूवत्ताभावे काठिन्नजलाण किन्न भवे ? ॥ २ ॥ (धर्मसंग्रहणी) इति, नापि सन्दिग्धानैकान्तिकता हेतोः शङ्कनीया, अचेतनस्योपलम्भकत्वशक्त्ययोगाद्, उपलम्भकत्वं हि चेतनाया धर्मः, ततः स कथं तदभावे भवितुमर्हति ?, आह–प्रत्यक्षबाधितेयं प्रतिज्ञा, साक्षादिन्द्रियाणामुपलम्भकत्वेन प्रतीतेः, तथाहि–चक्षू रूपं गृह्णदुपलभ्यते कर्णौ शब्दं नासिका गन्धमित्यादि, तदेतन्महामोहावष्टब्धान्तःकरणताविलसितं, तथाहि–आत्मा शरीरेन्द्रियैः सहान्योऽन्यानुवेधेन व्यवस्थितः, ततोऽयमात्मा अमूनि चेन्द्रियाणि इति विवेक्तुमशक्नुवन्तो बालिशजन्तवः तत्रापि युष्मादृशां कुशास्त्रसम्पर्कतः कुवासनासङ्गमः, ततः साक्षादुपलम्भिकानीन्द्रियाणि इति प्रतिपन्नाः, परमार्थतः पुनरुपलब्धा तत्रात्मैव, कथमेतदवसीयते इति चेत्, उच्यते, तद्विगमेऽपि तदुपलब्धार्थानुस्मरणात्, तथाहि–कोऽपि पूर्वं चक्षुषा विवक्षितमर्थं गृहीतवान् ततः कालान्तरे दैवविनियोगतश्चक्षुषोऽपगमेऽपि स तमर्थमनुस्मरति, तत्र यदि चक्षुरेव द्रष्टृ स्यात् ततश्चक्षुषोऽभावे तदुपलब्धार्थानुसरणं न भवेत्, न ह्यात्मनाऽसौ अर्थोऽनुभूतः किन्तु चक्षुषा, चक्षुष एव साक्षात् द्रष्टृत्वेनोपगमात्, न

आत्मनो द्रष्टृता

॥ १४ ॥

स्मरणमा-
चान्येनानुभूतेऽर्थेऽन्यस्य स्मरणं, मा प्रापदतिप्रसङ्गः, अपिच-मा भूच्चक्षुषोऽपगमस्तथापि यदि चक्षुरेव द्रष्टृ ततः स्मरणमा-
त्मनो न भवेत्, अन्येनानुभूतेऽर्थेऽन्यस्य स्मरणायोगाद्, भवति च स्मरणमात्मनः, चक्षुषः स्मर्तृत्वेनाप्रतीतेः अनभ्युप-
गमाच्च, तस्मादात्मैवोपलब्धा नेन्द्रियमिति, तथा चात्र प्रयोगः-यो येषूपरतेष्वपि तदुपलब्धानर्थान् स्मरति स तत्रो-
पलब्धा, यथा गवाक्षोपलब्धानामर्थानामनुस्मर्त्ता देवदत्तः, अनुस्मरति च द्रव्येन्द्रियोपलब्धानर्थान् द्रव्येन्द्रियापगमे-
ऽप्यात्मा, इह स्मरणमनुभवपूर्वकतया व्याप्तं, व्याप्यव्यापकभावश्चानयोः प्रमाणतः प्रतिपन्नः, तथाहि—योऽर्थोऽनुभूतः
स स्मर्यते न शेषः तथा स्वसंवेदनप्रत्यक्षेण प्रतीतेः, विपक्षे चातिप्रसङ्गो बाधकं प्रमाणं, अननुभूतेऽपि विषये यदि स्मरणं
भवेत्ततोऽननुभूतत्वाविशेषात् खरविषाणादेरपि स्मरणं भवेदित्यतिप्रसङ्गः, तथा द्रव्येन्द्रियापगमेऽपि तदुपलब्धार्था-
नुस्मरणादात्मोपलब्धेति स्थितम्, उक्तं च-"केसिंचि इंदियाइं अक्खाइं तदुवलद्धि पच्चक्खं। तन्नो ताइं जमचेयणाइं
जाणंति न घडो व ॥१॥ उवलद्धा तत्थाया तव्विगमे तदुवलद्धसरणातो। गेहगवक्खोवरमेऽवि तदुवलद्धाणुसरिया वा ॥२॥"
(भा० ९१-९२) अत्र वाशब्द उपमार्थः, अपरे पुनराहुः-न वयमिन्द्रियाणामुपलब्धृत्वं प्रतिजानीमहे, किं त्वेतदेव ब्रूमो-
यदिन्द्रियद्वारेण प्रवर्त्तते ज्ञानमात्मनि तत्प्रत्यक्षं, न चेन्द्रियव्यापारव्यवहितत्वादात्मा साक्षान्नोपलब्धेति वक्तव्यं, इन्द्रि-
याणामुपलब्धिं प्रति करणतया व्यवधायकत्वायोगात्, न खलु देवदत्तो हस्तेन भुञ्जानो हस्तव्यापारव्यवहितत्वात्
साक्षान्न भोक्तेति व्यपदेष्टुं शक्यं, तदेतदसमीचीनं, सम्यक् वस्तुतत्त्वापरिज्ञानात्, इह हि यदाऽऽत्मा चक्षुरादिकमपेक्ष्य
बाह्यमर्थं स्पष्टं यथाऽव-
बाह्यमर्थमवबुध्यते तदाऽवश्यं चक्षुरादेः साद्गुण्याद्यपेक्षते, तथाहि-यदा सद्गुणं चक्षुः तदा बाह्यमर्थं स्पष्टं यथाऽव-

॥ १४ ॥

स्थितं चोपलभते, यदा तु तिमिराशुभ्रमणनौयानपित्तसङ्क्षोभदेशदवीयस्त्वाद्यापादितविभ्रमं तदा विपरीतं संशयितं वा, ततोऽवश्यमात्मा अर्थोपलब्धौ पराधीनः, तथा च सति यथा राजा निजराजदौवारिकेणोपदर्शितं परराष्ट्रराजकीयं पुरुषं पश्यन्नपि समीचीनमसमीचीनं वा निजराजदौवारिकवचनत एव प्रत्येति न साक्षात् तद्वदात्माऽपि चक्षुरादिनोपदर्शितं बाह्यमर्थं चक्षुरादिप्रत्ययत एव समीचीनमसमीचीनं वा वेत्ति न साक्षात्, तथाहि—चक्षुरादिना दर्शितेऽपि बाह्येऽर्थे यदि संशयमधिरूढो भवति तर्हि चक्षुरादिसाद्गुण्यमेव प्रतीत्य निश्चयं विदधाति, यथा न मे चक्षुस्तिमिरोपप्लुतं नौयानाशुभ्रमणाद्यापादितविभ्रमं वा ततोऽयमर्थः समीचीन इति, ततो यथा राज्ञो नायं मम राजदौवारिकोऽसत्यालापी कदाचनाप्यस्य व्यभिचारानुपलम्भादिति निजदौवारिकस्य साद्गुण्यमवगम्य परराष्ट्रराजकीयपुरुषसमीचीनतावधारणं परमार्थतः परोक्षं, तद्वदात्मनोऽपि चक्षुरादिसाद्गुण्यावधारणतो वस्तुयाथात्म्यावधारणं परमार्थतः परोक्षं, नन्विदमिन्द्रियसाद्गुण्यावधारणतो वस्तुयाथात्म्यावधारणमनभ्यासदशामुपगतस्य, अभ्यासदशामापन्नस्त्वभ्यासप्रकर्षसामर्थ्यादिन्द्रियसाद्गुण्यमनपेक्ष्यैव साक्षादवबुध्यते, ततस्तस्येन्द्रियाश्रितं ज्ञानं कथं प्रत्यक्षं न भवति?, तदसम्यक्, अभ्यासदशामापन्नस्यापि साक्षादनवबोधात्, तस्यापीन्द्रियद्वारेणावबोधप्रवृत्तेरवश्यमिन्द्रियसाद्गुण्यापेक्षणात्, केवलमभ्यासप्रकर्षवशात् तदिन्द्रियसाद्गुण्यं झटित्येवावधारयति पूर्वावधृतं वा झटित्येव विनिश्चिनोति, ततः कालसौक्ष्म्यात्तन्नोपलभ्यते, इत्थं चैतदङ्गीकर्त्तव्यं, यतोऽवश्यमवायज्ञानमवग्रहेहापूर्वं, ईहा च विचारणात्मिका, विचारश्चेन्द्रियसाद्गुण्यसद्भूतवस्तुधर्माश्रितः, अन्यथैकतरविचाराभावेऽवायज्ञानसम्यग्ज्ञानत्वायोगात्, न खल्विन्द्रिये वस्तुनि च सम्यग-

विचारिते अवायज्ञानं समीचीनं भवति, ततोऽभ्यासदशापन्नेऽपीन्द्रियसाद्गुण्यावधारणमवसेयं, यदपि चोक्तम्—'न खलु देवदत्तो हस्तेन भुञ्जानो हस्तव्यापारव्यवहितत्वात् साक्षान्न भोक्तेति व्यपदेष्टुं शक्य'मिति, तदप्ययुक्तम्, दृष्टान्तदार्ष्टान्तिकयोर्वैषम्याद्, भोक्ता हि भुजिक्रियानुभवभागी भण्यते, भुजिक्रियानुभवश्च देवदत्तस्य न हस्तेन व्यवधीयते, किन्तु साक्षात्, हस्तो हि कवलप्रक्षेप एव व्याप्रियते, न परिच्छेदक्रियायामिन्द्रियमिवाहारक्रियानुभवेऽपि येन व्यवधानं भवेत्, ततो देवदत्तः साक्षाद्भोक्तेति व्यवह्रियते, इह तु वस्तूनामुपलब्धिरुक्तनीत्या चक्षुरादीन्द्रियसाद्गुण्यावगमानुसारेणोपजायते ततो व्यवधानात् न साक्षादुपलम्भक आत्मेति। नन्विदं सर्वमुत्सूत्रप्ररूपणं, नन्द्यध्ययनसूत्रे हि इन्द्रियाश्रितं ज्ञानं प्रत्यक्षमुक्तं, तथा च तद्ग्रन्थः—"पच्चक्खं दुविहं पन्नत्तं, तंजहा—इंदियपच्चक्खं नोइंदियपच्चक्खं चे"ति, सत्यमेतत्, किन्त्विदं लोकव्यवहारमपेक्ष्योक्तं न परमार्थतः, तथाहि—यदिन्द्रियाश्रितमपरव्यवधानरहितं ज्ञानमुदयते तल्लोके प्रत्यक्षमिति व्यवस्थितं, अपरधूमादिलिङ्गनिरपेक्षतया साक्षादिन्द्रियमधिकृत्य प्रवर्त्तनात्, यत्पुनरिन्द्रियव्यापारेऽप्यपरं धूमादिकमपेक्ष्याग्न्यादिविषयं ज्ञानमुदयते तल्लोके परोक्षं, तत्र साक्षादिन्द्रियव्यापारासम्भवाद्, यत्पुनरात्मन इन्द्रियमप्यनपेक्ष्य साक्षादुपजायते तत्परमार्थतः प्रत्यक्षं, तच्चावध्यादिकं त्रिप्रकारं, ततः संव्यवहारमधिकृत्येन्द्रियाश्रितं ज्ञानं प्रत्यक्षमुक्तं न परमार्थतः, अथ कथमेतदवसीयते—संव्यवहारमधिकृत्येन्द्रियाश्रितं ज्ञानं प्रत्यक्षमुक्तं न परमार्थतः ?, उच्यते, तत्रैवोत्तरसूत्रार्थपर्यालोचनात्, तथाहि—प्रत्यक्षभेदाभिधानानन्तरं तत्र सूत्रं—"परोक्खं दुविहं पन्नत्तं, तंजहा—आभिणिबोहियनाणं सुयनाण'मित्यादि, तत्र आभिनिबोधिकमवग्रहादिरूपमवग्रहादयश्च श्रोत्रेन्द्रियाद्याश्रितास्तत्र वर्णिताः, तद्यदि

श्रोत्रादीन्द्रियाश्रितं ज्ञानं परमार्थतः प्रत्यक्षं तत्कथमवग्रहादयः परोक्षत्वेनाग्रेऽभिहिताः?, तस्मादुत्तरत्रेन्द्रियाश्रितज्ञानस्य परोक्षत्वेनाभिधानादवसीयते प्रागिन्द्रियाश्रितं ज्ञानं संव्यवहारतः प्रत्यक्षमुक्तं, न परमार्थतः, आह च भाष्यकृत्— "एगन्तेण परोक्खं लिंगियमोहाइयं च पच्चक्खं । इंदियमणोभवं जं तं संववहारपच्चक्खं ॥ १ ॥" ( भा० ९५ ) इति । तथा अवशब्दोऽधःशब्दार्थः अव—अधोऽधो विस्तृतं वस्तु धीयते—परिच्छिद्यतेऽनेनेत्यवधिः, अथवा अवधिः—मर्यादा रूपिष्वेव द्रव्येषु परिच्छेदकतया प्रवृत्तिरूपा तदुपलक्षितं ज्ञानमप्यवधिः, यद्वा अवधानं—आत्मनोऽर्थसाक्षात्करणव्यापारोऽवधिः, अवधिश्चासौ ज्ञानं च अवधिज्ञानं, चशब्दः खल्वनन्तरोक्तज्ञानद्वयेन सहास्य स्थित्यादिभिः साधर्म्यप्रदर्शनार्थः, तथाहि—यावानेव मतिश्रुतयोरनन्तरमुक्तः प्रवाहापेक्षया अप्रतिपतितैकसरत्राधारापेक्षया वा स्थितिकालस्तावानेवावधिज्ञानस्यापीति स्थितिसाधर्म्यं, तथा यथैव मतिश्रुते मिथ्यादर्शनोदयतो विपर्ययरूपतामासादयतस्तथाऽवधिज्ञानमपि, तथाहि—मिथ्यादृष्टेस्तान्येव मतिश्रुतावधिज्ञानानि मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानानि भवन्ति, उक्तं च—'आद्यत्रयमज्ञानमपि भवति मिथ्यात्वसंयुक्त''मिति (प्रश.) विपर्ययसाधर्म्यं, तथा य एव मतिश्रुतज्ञानयोः स्वामी स एवावधिज्ञानस्यापि, तथाहि—विभङ्गज्ञानिनस्त्रिदशादेः सम्यग्दर्शनावाप्तौ युगपदेव मतिश्रुतावधिज्ञानानां लाभसम्भव इति लाभसाधर्म्यं । तथा परि—सर्वतो भावे, अवनमवः, 'तुदादिभ्यो नक्कौ' इत्यधिकारे 'अकितो वे'त्यनेन औणादिकोऽकारप्रत्ययः, अवनं गमनं वेदनमिति पर्यायाः, परि अवः पर्यवः, मनसि मनसो वा पर्यवो मनःपर्यवः—सर्वतो मनोद्रव्यपरिच्छेद इत्यर्थः, अथवा मनःपर्यय इति पाठः, तत्र पर्ययणं पर्ययः भावेऽल्प्रत्ययः, मनसि मनसो वा पर्ययो मनःपर्ययः—सर्वतस्तत्परिच्छेद

अन्येषां प्रत्यक्षता

इति, स चासौ ज्ञानं च मनःपर्यवज्ञानं मनःपर्ययज्ञानं वा, अपरे–'मणपज्जयनाण'मिति पाठेऽपि मनःपर्यायज्ञानमिति शब्दसंस्कारमाचक्षते, तत्रैवं व्युत्पत्तिः–मनांसि–मनोद्रव्याणि पर्यैति–सर्वात्मना परिच्छिनत्ति मनःपर्यायं, 'कर्मणोऽणि' त्यण्, मनःपर्यायं च तज्ज्ञानं च मनःपर्यायज्ञानं, यदिवा मनसः पर्यायाः मनःपर्यायाः, पर्याया भेदा धर्मा बाह्यवस्त्वालोचनप्रकारा इत्यर्थः, तेषु तेषां वा सम्बन्धि ज्ञानं मनःपर्यायज्ञानं, इदं चार्द्धतृतीयद्वीपसमुद्रान्तर्वर्त्तिसंज्ञिमनोगतद्रव्यालम्बनमेव। तथाशब्दोऽवधिज्ञानेन सहास्य छद्मस्थत्वादिभिः सारूप्यप्रदर्शनार्थः, तथाहि–यथाऽवधिज्ञानं छद्मस्थस्य भवति तथा मनःपर्यवज्ञानमपीति छद्मस्थसाधर्म्यं, यथा वाऽवधिज्ञानं रूपिद्रव्यविषयं तथा मनःपर्यवज्ञानमपि, तस्य मनःपुद्गलालम्बनत्वादिति विषयसाधर्म्यं, तथा यथाऽवधिज्ञानं क्षायोपशमिकभावे वर्त्तते तथा मनःपर्यायज्ञानमपीति भावसाधर्म्यं, यथा चावधिज्ञानं प्रत्यक्षं तथा मनःपर्यायमपि, तथाहि–अक्षो भण्यते जीवः एतच्च प्रागेवोपपादितं, अक्षं–जीवं प्रति साक्षाद्वर्त्तते यत् ज्ञानं तत्प्रत्यक्षं–इन्द्रियमनोनिरपेक्षमात्मनः साक्षात्प्रवृत्तिमत्प्रत्यक्षमित्यर्थः, तच्चावध्यादि त्रिभेदं उक्तं च–“अक्खो भन्नइ जीवो वावणभोयणगुणन्नितो जेणं। तं पइ वट्टइ नाणं जं पच्चक्खं तयं तिविहं ॥१॥” (भा. ८९ अक्खो अत्थ.) इति प्रत्यक्षसाधर्म्यं। तथा केवलमेकमसहायं मत्यादिज्ञाननिरपेक्षत्वात्, मत्यादिज्ञाननिरपेक्षता च केवलज्ञानप्रादुर्भावे मत्यादीनामसम्भवात्, ननु कथमसम्भवो यावता मतिज्ञानादीनि स्वस्वावरणक्षयोपशमेऽपि प्रादुःष्यन्ति ततो निर्मूलस्वस्वावरणविलये तानि सुतरां भविष्यन्ति चारित्रपरिणामवत्, उक्तं च–“आवरणदेसविगमे जाइं विज्जंति मइसुयाईणि। आवरणसव्वविगमे कह ताइँ न होंति जीवस्स? ॥ १ ॥” उच्यते–इह यथा जात्यस्य मरकतादिमणेर्मलोपदिग्धस्य यावन्नाद्यापि

संमूलमलापगमस्तावद्यथा यथा देशतो मलविलयः तथा २ देशतोऽभिव्यक्तिरुपजायते, सा च क्वचित् कदाचित्कथञ्चि-द्भवतीत्यनेकप्रकारा, तथाऽऽत्मनोऽपि सकलकालकलाकलापावलम्बिनिखिलपदार्थपरिच्छेदकरणैकदक्षपारमार्थिकस्वरूप-स्याप्यावरणमलपटतिरोहितस्वरूपस्य यावन्नाद्यापि निखिलकर्म्ममलापगमस्तावद् यथा यथा देशतः कर्ममलोच्छेदस्तथा तथा देशतस्तस्य विज्ञप्तिरुज्जृम्भते, सा क्वचित् कदाचित्कथञ्चिदित्यनेकप्रकारा, उक्तं च—"मलविद्धमणेर्व्यक्तिर्यथाऽनेकप्रकारतः। कर्मविद्धात्मविज्ञप्तिस्तथाऽनेकप्रकारतः ॥१॥" सा चानेकप्रकारता मतिश्रुतादिभेदेनावसेया, ततो यथा मरकतादि-मणेरशेषमलापगमसम्भवे समस्तास्पष्टदेशशक्तिव्यवच्छेदेन परिस्फुटरूपैकाभिव्यक्तिरुपजायते तद्वदात्मनोऽपि ज्ञानदर्शन-चारित्रप्रभावतो निःशेषावरणप्रहाणादशेषदेशज्ञानव्यवच्छेदेनैकरूपाऽतिपरिस्फुटा सर्ववस्तुपर्यायसाक्षात्कारिणी विज्ञप्ति-रुल्लसति, तथा चोक्तम्—"यथा जात्यस्य रत्नस्य, निःशेषमलहानितः। स्फुटैकरूपाभिव्यक्तिर्विज्ञप्तिस्तद्वदात्मनः ॥ १ ॥" ततो मत्यादिनिरपेक्षं केवलज्ञानं, अथवा शुद्धं केवलं तदावरणमलकलङ्कस्यानवयवशोऽपगमात्, सकलं वा केवलं प्रथ-मत एवाशेषतदावरणविगमतः सम्पूर्णोत्पत्तेः, असाधारणं वा केवलमनन्यसदृशत्वात्, अनन्तं वा केवलं ज्ञेयानन्त-त्वात्, केवलं च तत् ज्ञानं च केवलज्ञानं, यथावस्थिताशेषभूतभवद्भाविभावस्वभावावभासिज्ञानमिति भावः, चशब्दो मनःपर्यायज्ञानेन सहास्याप्रमत्तयतिभावादिना साधर्म्यप्रदर्शनार्थः, तथाहि—यथा मनःपर्यवज्ञानमप्रमत्तयतेरेवोद-यते तथा केवलज्ञानमपीत्यप्रमत्तयतिसाधर्म्यं, तथा यथा मनःपर्यायज्ञानं न विपर्ययमासादयति तथा केवलज्ञानमपीति विपर्ययाभावसाधर्म्यं, 'पञ्चमक'मिति पञ्चममेव पञ्चमकं प्राकृतत्वात् स्वार्थे कप्रत्ययः, पञ्चमता चास्य सूत्रक्रमप्रामाण्यानु-

ऽपोद्घाते

॥ १७ ॥

केवले शेषाभावः आवरणभेदे हेतुश्च

सरणात्, सूत्रं चेदं–'नाणं पंचविहं पन्नत्तं, तंजहा–आभिणिवोहियनाणं सुयनाणं ओहिनाणं मणपज्जवनाणं केवलनाणं'-
मिति, ननु सकलमपीदं ज्ञानं ज्ञप्त्येकस्वभावं, ततो ज्ञप्त्येकस्वभावत्वाविशेषे किंकृत एष आभिनिवोधिकादिको भेदः?,
ज्ञेयभेदकृत इति चेत्, तथाहि–वार्त्तमानिकं वस्त्वाभिनिवोधिकज्ञानस्य विषयः त्रिकालसाधारणसमानपरिणामो
ध्वनिर्गोचरः श्रुतज्ञानस्य रूपिद्रव्याण्यवधिज्ञानस्य मनोद्रव्याणि मनःपर्यायज्ञानस्य समस्तपर्यायान्वितं सर्वं वस्तु
केवलज्ञानस्य, तदेतदसमीचीनं, एवं सति केवलज्ञानस्य भेदबाहुल्यप्रसक्तेः, तथाहि–ज्ञेयभेदात् ज्ञानस्य भेदः,
यानि च ज्ञेयानि प्रत्येकमाभिनिवोधिकादिज्ञानानामिष्यन्ते तानि सर्वाण्यपि केवलज्ञानेऽपि विद्यन्ते, अन्यथा केवल-
ज्ञानेन तेषामग्रहणप्रसङ्गात्, अविषयत्वात्, तथा च सति केवलिनोऽप्यसर्वज्ञत्वप्रसङ्गः, आभिनिवोधिकादिज्ञानचतु-
ष्टयविषयजातस्य तेनाग्रहणात्, न चैतदिष्टमिति, अथोच्येत–प्रतिपत्तिप्रकारभेदत अभिनिवोधिकादिभेदः, तथाहि—
न यादृशी प्रतिपत्तिराभिनिवोधिकज्ञानस्य तादृशी श्रुतज्ञानस्य किन्तु अन्यादृशी, एवमवध्यादिज्ञानानामपि प्रतिप-
त्तव्यं, ततो भवत्येव प्रतिपत्तिभेदतो ज्ञानभेदः, तदप्ययुक्तं, एवं सत्येकस्मिन्नपि ज्ञानेऽनेकभेदप्रसक्तेः, तथाहि–तत्तद्देश-
कालस्वरूपभेदेन विविच्यमानमेकैकं ज्ञानं प्रतिपत्तिप्रकारानन्त्यं प्रतिपद्यते, तन्नैषोऽपि पक्षः श्रेयान्, स्यादेतद्–अस्त्या- ॥ १७ ॥
वारकं कर्म तत्त्वनेकप्रकारं ततस्तद्भेदात्तदावार्यं ज्ञानमप्यनेकतां प्रतिपद्यते, ज्ञानावारकं च कर्म्म पञ्चधा, प्रज्ञापनादौ
तथाभिधानात्, ततो ज्ञानमपि पञ्चधा प्ररूप्यते, तदेतदतीवायुक्तिसङ्गतं, यतः आवार्यापेक्षं ह्यावारकमत आवार्यभेदा-
देव तद्भेदः, नतु तद्भेदादावार्यभेदः, आवार्यं च ज्ञप्तिरूपापेक्षया सकलमप्येकं, ततः कथमावारकस्य पञ्चरूपता येन

तद्भेदात् ज्ञानस्यापि पञ्चधा भेद उद्गीर्येत, अथ स्वभावत एवाभिनिबोधिकादिको ज्ञानस्य भेदो, न च स्वभावः पर्यनुयोगमर्हति, न खलु किमिह दहनो दहति नाकाशमिति कोऽपि पर्यनुयोगमाचरति, अहो महती महीयसो भवतः शेमुषी, ननु यदि स्वभावत एवाभिनिबोधिकादिको ज्ञानस्य भेदस्तर्हि भगवतः सर्वज्ञत्वहानिप्रसङ्गः, तथाहि–ज्ञानमात्मनो धर्मस्तस्य चाभिनिबोधिकादिको भेदः स्वभावत एव व्यवस्थितस्ततः क्षीणावरणस्यापि तद्भावप्रसङ्गः, सति च तद्भावेऽस्मादृशस्येव भगवतोऽप्यसर्वज्ञत्वमापन्नं, आभिनिबोधिकादिभिर्ज्ञानैर्वस्तुपरिच्छेदात्, केवलज्ञानभावतः समस्तवस्तुपरिच्छेदान्नासर्वज्ञत्वमिति चेत्, ननु यदा केवलज्ञानोपयोगसम्भवस्तदा भवतु सर्वज्ञत्वं, यदा त्वाभिनिबोधिकादिज्ञानोपयोगस्तदा देशतः परिच्छेदादस्मादृशस्येव बलादसर्वज्ञत्वमापद्यते, न च वाच्यं तस्य तदुपयोग एव न भवति, आत्मस्वभावत्वेन तस्यापि क्रमेणोपयोगस्य निवारयितुमशक्यत्वात्, केवलज्ञानानन्तरं केवलदर्शनोपयोगवत्, ततः केवलज्ञानोपयोगकाले सर्वज्ञत्वं शेषज्ञानोपयोगकाले चासर्वज्ञत्वमेव, तच्च विरुद्धमिति, आह च–"नत्तेगसहावत्ते आभिनिबोधाइ किंकओ भेओ ?। नेयविसेसाओ चे न सव्वविसयं जतो चरिमं ॥ १ ॥ अह पडिवत्तिविसेसा नेगंमि अणेगभेयभावातो। आवरणविभेयओऽविहु सभावभेयं विणा न भवे ॥ २ ॥ तम्मि य सइ सव्वेसिं खीणावरणस्स पावई भावो। तद्धम्मत्ताओच्चिय जुत्तिविरोहो स चाणिट्ठो ॥ ३ ॥ अरहावि असव्वण्णू आभिणिबोहाइभावतो नियमा। केवलभावाओ चे सव्वण्णू नणु विरुद्धमिणं ॥ ४ ॥" (धर्मसंग्रहणी) तस्मादिदमेव युक्तियुक्तं पश्यामो यदुत अवग्रहज्ञानादारभ्य यावदुत्कर्षप्राप्तं परमावधिज्ञानं तावत् सकलमप्येकं, तच्चासकलसंज्ञितमशेषवस्तुविषयत्वाभावात्, अपरं च केवलिनः, तच्च

सकलसंज्ञितमिति द्वावेवभेदौ, उक्तं च—"तम्हा अवग्गहाओ आरब्भ इहेगमेव नाणंति । जुत्तं छउमत्थस्सासंगलं इयरं च केवलिणो ॥ १ ॥" (ध०) अत्र प्रतिविधीयते—यत्तावदुक्तं 'सकलमपीदं ज्ञानं ज्ञप्त्येकस्वभावं, ततो ज्ञप्त्येकस्वभावत्वाविशेषे किंकृत एष आभिनिवोधिकादिभेद इति' तत्र ज्ञप्त्येकस्वभावता किं सामान्यतो भवताऽभ्युपगम्यते विशेषतो वा ?, तत्र न तावदाद्यः पक्षः क्षितिमाधत्ते, सिद्धसाध्यतया तस्य वाधकत्वायोगात्, वोधरूपतारूपसामान्यापेक्षयाऽपि सकलमपि ज्ञानमस्माभिरेकमभ्युपगम्यते एव, ततः का नो हानिरिति । अथ द्वितीयः पक्षस्तदयुक्तमसिद्धत्वात्, नहि नाम विशेषतोऽपि ज्ञानमेकमेवोपलभ्यते, प्रतिप्राणि स्वसंवेदनप्रत्यक्षेण उत्कर्षापकर्षकृतभेददर्शनात्, अथ यद्युत्कर्षापकर्षकृतमात्रभेददर्शनात् ज्ञानभेदस्तर्हि तावुत्कर्षापकर्षौ प्रतिप्राणि देशकालाद्यपेक्षया सहस्रशो विद्येते ततः कथं पञ्चरूपता ?, नैष दोषः, परिस्थूरनिमित्तभेदतः पञ्चधात्वस्य प्रतिपादनात्, तथाहि—सकलघातिक्षयो निमित्तं केवलज्ञानस्य मनःपर्यायज्ञानस्य त्वामर्षौषध्यादिलब्ध्युपेतस्य प्रमादलेशेनाप्यकलङ्कितो विशिष्टो विशिष्टाध्यवसायानुगतोऽप्रमादः, 'तं संजयस्स सव्वप्पमायरहियस्स विविहरिद्धिमतो' इति वचनात्, अवधिज्ञानस्य पुनस्तथाविधोऽनिन्द्रियरूपिद्रव्यसाक्षादवगमनिवन्धनं क्षयोपशमविशेषः, मतिश्रुतज्ञानयोस्तु लक्षणभेदादिकं, तच्चाग्रे वक्ष्यामः, उक्तं च—"नत्तेगसहावत्तं ओहेण विसेसतो पुण असिद्धं । एगंततस्सहावत्तणे उ कह हाणिवुड्ढीओ ? ॥ १ ॥ जं अविचलियसहावे नत्ते एगंततस्सहावत्तं । न य तं तहोवलद्धं उक्करिसावगरिसविसेसा ॥ २ ॥ तम्हा परिथूरातो निमित्तभेयाउ समयसिद्धातो । उववत्तिसंगतोच्चिअ आभिणिवोहाइतो भेओ ॥ ३ ॥ घाइक्खतो निमित्तं केवलनाणस्स वण्णिओ समए । मणपज्जवनाणस्स उ तहाविहो अप्पमा-

दोत्ति ॥४॥ ओहिनाणस्स तहा अणिंदिएसुंपि जो खतोवसमो । मइसुयनाणाणं पुण लक्खणभेयाइतो भेओ ॥५॥" (ध.सं. ८३६-४०) यदप्युक्तम्-'ज्ञेयभेदकृत इत्यादि' तदनभ्युपगमतिरस्कृतत्वात् दूरापास्तप्रसरं, न हि वयं ज्ञेयभेदमात्रतो ज्ञानभेदमिच्छामः, एकेनाप्यवग्रहादिना बहु२विधवस्तुग्रहणोपलम्भात्, यदपि च प्रत्यपादि-'प्रतिपत्तिप्रकारभेदकृत' इत्यादि, तदपि न नो बाधामाधातुमलं, यतस्ते प्रतिपत्तिप्रकारा देशकालभेदेन आनन्त्यमपि प्रतिपद्यमाना न परिस्थूरनिमित्तभेदेन व्यवस्थापिताभिनिबोधिकादीन् जातिभेदानतिक्रामति, ततः कथमेकस्मिन् अनेकभेदभावप्रसङ्गः?, उक्तं च-"न य पडिवत्तिविसेसा एगंमि अणेगभेयभावोऽवि । जं ते तहाविसिट्ठे न जातिभेदे विलंघंति ॥१॥" (ध.सं.८४२) यदप्यवादीत्-'आवार्यापेक्षं ह्यावारकमित्यादि' तदपि न नो बाधायै, यतः-परिस्थूरनिमित्तभेदमधिकृत्य व्यवस्थापितो ज्ञानस्य भेदः ततस्तदपेक्षमावारकमपि तथा भिद्यमानं न परवचनीयतामास्कन्दति, एवमुत्तेजितो भूयः सावष्टम्भं परः प्रश्नयति-ननु परिस्थूरनिमित्तभेदव्यवस्थापिता अप्यमी आभिनिबोधिकादयो भेदा ज्ञानस्यात्मभूता उतानात्मभूताः?, किञ्चातः?, उभयथाऽपि दोषः, तथाहि-यद्यात्मभूतास्ततः क्षीणावरणेऽपि तद्भावप्रसङ्गः, तथा चासर्वज्ञत्वं प्रागुक्तनीत्या तस्यापन्नं, अथ अनात्मभूतास्तर्हि न ते पारमार्थिकाः, ततः कथमावार्यापेक्षो वास्तव आवारकभेदः?, तदपि न मनोरमं, सम्यक् वस्तुतत्त्वापरिज्ञानात्, इह हि सकलघनपटलविनिर्मुक्तशारददिनमणिरिव समन्ततः समस्तवस्तुस्तोमप्रकाशनैकस्वभावो जीवः, तस्य च तथाभूतः स्वभावः केवलज्ञानमिति व्यपदिश्यते, स च यद्यपि सर्वघातिना केवलज्ञानावरणेनाव्रियते तथापि तस्यानन्ततमो भागो नित्योद्घाटित एव, "अक्खरस्स अणंतो भागो निच्चुग्घाडितो, जइ पुण सोऽवि आवरेज्जा तेणं जीवो

आवरण-भेदे हेतुः

अजीवत्तणं पावेज्जा, सुट्ठुवि मेहसमुदए होइ पहा चंदसूराणं" (नन्दी) इति वचनात्, ततस्तस्य केवलज्ञानावरणावृतस्य घन-पटलाच्छादितस्येव सूर्यस्य यो मन्दः प्रकाशः सोऽपान्तरालावस्थितमतिज्ञानाद्यावरणक्षयोपशमसम्पादितं नानात्वं भजते, यथा घनपटलावृतसूर्यमन्दप्रकाशोऽपान्तरालावस्थितकटकुड्याद्यावरणविवरप्रदेशभेदतः, स च नानात्वं तत्तत्क्षयोपश-मानुरूपं तथा तथा प्रतिपद्यमानः स्वस्वक्षयोपशमानुसारेणाभिधानभेदमश्नुते, यथा मतिज्ञानावरणक्षयोपशमजनितो मति-ज्ञानं श्रुतज्ञानावरणक्षयोपशमजनितः श्रुतज्ञानमित्यादि, तत आत्मस्वभावभूता ज्ञानस्याभिनिबोधिकादयो भेदाः, ते च प्रतिवचनोपदर्शितपरिस्थूरनिमित्तभेदतः पंचसङ्ख्याः, ततस्तदपेक्षमावारकमपि पञ्चधोपवर्णितमिति न कश्चिद्दोषः; न चैवमात्मस्वभावत्वे क्षीणावरणस्यापि तद्भावप्रसङ्गः, यत एते मतिज्ञानावरणादिक्षयोपशमरूपोपाधिसम्पादितसत्ताकाः; यथा सूर्यस्य घनपटलावृतस्य मन्दप्रकाशभेदाः कटकुड्याद्यावरणविवरभेदोपाधिसम्पादिताः, ततः कथं ते निःशेषावर-णक्षयात् तथारूपक्षयोपशमाभावे भवितुमर्हन्ति ?, न खलु सकलघनपटलकटकुड्याद्यावरणापगमे सूर्यस्य ते तथारूपा मन्दप्रकाशभेदा भवन्ति, उक्तं च-"कडविवरागयकिरणा मेहंतरियस्स जह दिणेसस्स । ते कडमेहावगमे न होंति जह तह इमाइंपि ॥१॥" ततो यथा जन्मादयो भावा जीवस्यात्मभूता अपि कर्मोपाधिसम्पादितसत्ताकत्वात्तदभावे न भवन्ति तद्वदाभिनिबोधिकादयोऽपि भेदा ज्ञानस्यात्मभूता अपि मतिज्ञानावरणादिकर्मक्षयोपशमसापेक्षत्वात् तदभावे केवलिनो न भवन्ति, ततो नासर्वज्ञत्वदोषप्रभावः; उक्तं च-"जमिह छउमत्थधम्मा जम्माईया न होंति सिद्धाणं । इय केवलीण-माभिणिबोहाभावंमि को दोसो ? ॥१॥" (ध.८४५) इति ॥ अपरस्त्वाह-प्रपन्ना वयमुक्तयुक्तितो ज्ञानस्य पञ्चभेदत्वं परममीषां

किं तदिति चेत्, उच्यते, इह
भेदानामित्थमुपन्यासे किञ्चिदस्ति प्रयोजनमुत यथाकथञ्चिदेष प्रवृत्तः?, अस्तीति ब्रूमः; किं तदिति चेत्, उच्यते, इह
मतिश्रुते तावदेकत्र वक्तव्ये, परस्परमनयोः स्वामिकालकारणविषयपरोक्षत्वसाधर्म्यात्, तच्च प्रागेव भावितं, अव-
ध्यादिज्ञानेभ्यश्च प्राक्, तद्भाव एवावध्यादिज्ञानसद्भावात्, उक्तं च-"जं सामिकालकारणविसयपरोक्खत्तणेहिं तुल्लाइं।
तब्भावे सेसाणि य तेणाईए मइसुयाइं ॥ १ ॥"(वि.८५) तत्रापि पूर्वं मतिज्ञानं पश्चात् श्रुतज्ञानं, मतिपूर्वकत्वात् श्रुत-
ज्ञानस्य, तथाहि-सर्वत्रापि पूर्वमवग्रहादिरूपं मतिज्ञानमुदयते पश्चात् श्रुतज्ञानं, आह च नन्द्यध्ययनचूर्णिकृत्-"तेसुवि
य मइपुव्वयं सुयंति किच्चा पुव्वं मइनाणं कयं, तस्स पिट्ठतो सुयं"ति, नन्वेते मतिश्रुते सम्यक्त्वोत्पादकाले युगपदुत्पत्ति-
मासादयतः, अन्यथा मतिज्ञानभावेऽपि श्रुताज्ञानप्रसङ्गः, स चानिष्टः, तथा [पि] मिथ्यात्वप्रतिपत्तौ युगपदेवाज्ञानरूप-
तया परिणमेते, ततः कथं मतिपूर्वं श्रुतमिति, उक्तं च-"णाणाणण्णाणाणि य समकालाइं जतो मइसुयाइं। तो न सुयं
मइपुव्वं मइनाणे वा सुअऽन्नाणं॥१॥"(वि.१०६) नैष दोषो, यतः सम्यक्त्वोत्पादकाले समकालं मतिश्रुते लब्धिमात्रमेवाङ्गीकृत्य
प्रोच्येते न तूपयोगं, उपयोगस्य तथाजीवस्वाभाव्यतः क्रमेणैव सम्भवात्, मतिपूर्वं च श्रुतमुच्यते उपयोगापेक्षया, न
खलु मत्युपयोगेनासञ्जित्य श्रुतग्रन्थानुसारि विज्ञानमासादयति जन्तुस्ततो न कश्चिद्दोषः, आह च-"इह लद्धिमइसुयाइं
समकालाइं न तूवयोगो सिं। मइपुव्वं सुयमिह पुण सुयोवओगो मइप्पभवो ॥१॥"(वि.१०७) अथ मतिश्रुतयोः किंकृतो भेदः?,
उच्यते, लक्षणभेदादिकृतः, उक्तं च-"लक्खणभेया हेतुफलभावतो भेयइंदियविभागा। वागक्खरमूगेतरभेया भेओ मइ-
सुयाणं ॥१॥" (वि. १०८) तत्र लक्षणभेदाद् भेदो भाव्यते-अभिमुखं-योग्यदेशावस्थितं नियतमर्थमिन्द्रियमनोद्वारेणात्मा

येन परिणामविशेषेणावबुध्यते स परिणामविशेषो ज्ञानापरपर्यायः आभिनिबोधिकं, तथा शृणोति–वाच्यवाचकभाव-पुरस्सरं श्रवणविषयेण शब्देन सह संसृष्टमर्थं परिच्छिनत्ति येन परिणामविशेषेणात्मा स परिणामविशेषः श्रुतं, अयं च लक्षणभेदो नन्द्यध्ययने साक्षादभिहितः, तथा च तत्सूत्रम्—“जत्थ आभिणिबोहियनाणं तत्थ सुयनाणं जत्थ सुअनाणं तत्थ आभिणिबोहियनाणं, दोऽवि एयाइं, अन्नुन्नमणुगयाइं तहवि पुण एत्थ आयरिया णाणत्तं पण्णवेंति, अभिणिबुज्झइत्ति आभिणिबोहियं, सुणेईइ सुय”मिति। ननु यद्येवंलक्षणं श्रुतं तर्हि य एव श्रोत्रेन्द्रियलब्धिमान् तथा भाषालब्धिमान् वा तस्यैव श्रुतमुपपद्यते, न शेषस्यैकेन्द्रियस्य, तथाहि–यः श्रोत्रेन्द्रियलब्धिमान् भवति स विवक्षितं शब्दं श्रुत्वा तेन शब्देन वाच्यमर्थं प्रतिपत्तुमीष्टे, न शेषः, शेषस्य तथारूपशक्त्यभावात्, योऽपि च भाषालब्धिमान् भवति द्वीन्द्रियादिरपि सोऽपि प्रायः स्वचेतसि किमपि विकल्प्य तदभिमानतः शब्दमुद्गिरति, नान्यथा, ततस्तस्यापि श्रुतं सम्भाव्यते, यस्त्वेकेन्द्रियः स न श्रोत्रेन्द्रियलब्धिमान् नापि भाषालब्धिमान्, ततः कथं तस्य श्रुतमुपपद्यते?, अथ च प्रवचने तस्यापि श्रुतमुपवर्ण्यते, ततः कथं प्रागुक्तं श्रुतलक्षणं सम्यगिति?, नैष दोषः, इह तावदेकेन्द्रियाणामाहारादिसंज्ञा विद्यन्ते, तथा सूत्रेऽनेकशोऽभिधानात्, संज्ञा चाभिलाप उच्यते, यदुक्तमस्यैवावश्यकस्य मूलटीकायां–“आहारसंज्ञा–आहाराभिलाषः क्षुद्वेदनीयप्रभवः खल्वात्मपरिणामविशेष” इति, अभिलापश्च ममैवंरूपं वस्तु पुष्टिकारि तद्यदीदमवाप्यते ततः समीचीनं भवतीत्येवंशब्दार्थोल्लेखानुविद्धः स्वपुष्टिनिमित्तप्रतिनियतवस्तुप्राप्त्यध्यवसायः, स च श्रुतमेव, तस्य शब्दार्थपर्यालोचनात्मकत्वात्, शब्दार्थपर्यालोचनात्मकता च ममैवंरूपं वस्तु पुष्टिकारि तद्यदीदमवाप्यते, इत्येव-

मादीनां शब्दानामन्तर्जल्पाकाररूपाणां विवक्षितार्थवाचकतया प्रवर्त्तमानत्वात्, उक्तं च–"इंदियमणोनिमित्तं जं विन्नाणं सुयाणुसारेणं। निययत्थोत्तिसमत्थं तं भावसुयं मई सेसं॥१॥"(वि.१००)अत्र 'सुयाणुसारेणं'ति शब्दार्थपर्यालोचनानुसारेण। शब्दार्थपर्यालोचनं च नाम वाच्यवाचकभावपुरस्सरीकारेण शब्दसंसृष्टस्यार्थस्य प्रतिपत्तिः, केवलं एकेन्द्रियाणामव्यक्तमेव, किञ्च–नाप्यनिर्वचनीयं तथारूपक्षयोपशमभावतो वाच्यवाचकभावपुरःसरीकारेण शब्दसंसृष्टार्थग्रहणमवसेयं, अन्यथा आहारादिसंज्ञानुपपत्तेः,यदप्युच्यते यद्येवंलक्षणं श्रुतं तर्हि य एव श्रोत्रेन्द्रियलब्धिमान् भाषालब्धिमान् वा तस्यैव श्रुतमुपपद्यत इत्यादि, तदप्यसमीक्षिताभिधानं, सम्यक् प्रवचनार्थापरिज्ञानात्, तथाहि–बकुलादीनां स्पर्शनेन्द्रियातिरिक्तद्रव्येन्द्रियलब्धिविकलत्वेऽपि किमपि सूक्ष्मं भावेन्द्रियपञ्चकविज्ञानमभ्युपगम्यते, 'पंचेंदियोव्व बउलो' इत्यादिभाष्यकारवचनप्रामाण्यात्, तथा भाषाश्रोत्रेन्द्रियलब्धिविकलत्वेऽपि तेषां किमपि सूक्ष्मं श्रुतं भविष्यति, अन्यथा आहारादिसंज्ञानुपपत्तेः, आह च भाष्यकृत्–"जह सुहुमं भावेंदियनाणं दव्विंदियावरोहेवि। तह दव्वसुयाभावे भावसुयं पत्थिवाईणं॥१॥"(वि.१०२) ततः समीचीनं प्रागुक्तं श्रुतलक्षणमिति,भवति लक्षणभेदाद्भेदः। तथा हेतुफलभेदात्, तथाहि–मतिः कारणं, मत्या प्राप्यमाणत्वात्, श्रुतं तु कार्यं, न खलु मतिपाटवमन्तरेण श्रुतविभवमुत्तरोत्तरमासादयति जन्तुस्तथाऽदर्शनात्, यश्च यदुत्कर्षापकर्षवशादुत्कर्षापकर्षभाक् तत्तस्य कारणं, यथा घटस्य मृत्पिण्डः, मत्युत्कर्षापकर्षवशाच्च श्रुतस्योत्कर्षापकर्षौ ततः कारणं मतिः श्रुतस्य,इतश्च कारणं–मत्या श्रुतस्य पाल्यमानत्वात्, पालनं नाम अवस्थितिकरणं, कथं अवस्थितिकरणं मत्या श्रुतज्ञानस्येति चेत्, उच्यते, इह दलं श्रुतस्य मतिर्यथा घटस्य मृत्, तथाहि–श्रुतेष्वपि बहुषु (ग्रन्थेषु) यद्विषयं स्मरणमीहापोहादि अधिकतरं स ग्रन्थः स्फुटं

प्रतिभाति न शेषः, एतच्च प्रतिप्राणि स्वसंवेदनप्रमाणसिद्धं, ततो यथोत्पन्नोऽपि घटो मृदभावे न भवति तथास्वभावायां
च मृदि स्थितायामवतिष्ठत इति सा तस्य कारणं, एवं श्रुतस्यापि मतिः कारणं, मतेरुत्पद्यमानत्वात्, मतौ वाऽवस्थितायां
तस्याप्यवस्थानात् । तथा च भेदाद्भेदः, तथाहि–चतुर्द्धाव्यञ्जनावग्रहपोढाऽर्थावग्रहेहापायधारणाभेदादष्टाविंशतिविधमाभि-
निबोधिकं ज्ञानं, अङ्गप्रविष्टानङ्गप्रविष्टादिभिन्नं च श्रुतज्ञानमिति, तथा इन्द्रियविभागाद्भेदः, तत्प्रतिपादिका चेयं पूर्वान्त-
र्गता गाथा–"सोइंदियोवलद्धी होइ सुयं सेसयं तु मइनाणं । मोत्तूणं दव्वसुयं अक्खरलंभो य सेसेसु ॥ १ ॥" अस्या
व्याख्या–श्रोत्रेन्द्रियेणोपलब्धिः श्रोत्रेन्द्रियोपलब्धिर्भवति श्रुतं, 'सर्वं वाक्यं सावधारणमिष्टित'श्चावधारणप्रवृत्ति'रित्येवमि-
हावधारणं प्रतिपत्तव्यं–श्रुतं श्रोत्रेन्द्रियोपलब्धिरेव, नतु श्रोत्रेन्द्रियोपलब्धिः श्रुतमेव, कस्मादिति चेत्, उच्यते, इह या श्रोत्रे-
न्द्रियोपलब्धिरपि श्रुतग्रन्थानुसारिणी सैव श्रुतमुच्यते, या पुनरवग्रहेहापायरूपा सा मतिः, ततो यदि श्रोत्रेन्द्रियो-
पलब्धिः श्रुतमेवेत्युच्येत तर्हि मतेरपि श्रुतत्वमापद्येत, तच्चायुक्तं, अतः श्रोत्रेन्द्रियोपलब्धिरेव श्रुतमित्यवधारणीयं, आह
च भाष्यकृत्–"सोइंदिओवलद्धी चेव सुयं न उ तई सुयं चेव । सोइंदियउवलद्धीवि काई जम्हा मईनाणं ॥१॥ (वि. १२२)
तथा 'सेसयं तु मइनाणं" इति, शेषं यच्चक्षुरादीन्द्रियोपलब्धिरूपं विज्ञानं तन्मतिज्ञानं भवतीति सम्बध्यते, तुशब्दोऽ-
नुक्तसमुच्चयार्थः, आस्तां शेषं विज्ञानं श्रोत्रेन्द्रियोपलब्धिरपि काचिद् अवग्रहेहापायरूपा मतिज्ञानमिति समुच्चिनोतीति
भावः, उक्तं च–"तु समुच्चयवयणातो काई सोइंदिओवलद्धीवि । मइ एवं सइ सोउग्गहादओ होंति मइभेया ॥१॥" (वि.
१२३) तदेवं सर्वस्याः शेषेन्द्रियोपलब्धेरुत्सर्गेण मतित्वे प्राप्ते अपवादमाह–'मोत्तूणं दव्वसुयं' मुक्त्वा द्रव्यश्रुतं–पुस्तकपत्र-

कादिन्यस्ताक्षररूपां द्रव्यश्रुतविषयां शब्दार्थपर्यालोचनात्मिकां शेषेन्द्रियोपलब्धिं, तस्याः श्रुतज्ञानरूपत्वात्, यश्च द्रव्यश्रुतव्यतिरेकेणान्योऽपि शेषेन्द्रियेष्वक्षरलाभः शब्दार्थपर्यालोचनात्मकः सोऽपि श्रुतं, न तु केवलोऽक्षरलाभः, केवलो ह्यक्षरलाभो मतावपि ईहादिरूपायां भवति, न च सा श्रुतज्ञानं, अत्राह—ननु यदि शेषेन्द्रियेष्वक्षरलाभः श्रुतं तर्हि यदवधारणमुक्तं 'श्रोत्रेन्द्रियेणोपलब्धिरेव श्रुत' मिति तद्विघटते, शेषेन्द्रियोपलब्धेरपि सम्प्रति श्रुतत्वेन प्रतिपन्नत्वात्, नैष दोषः, यतः शेषेन्द्रियाक्षरलाभः स इह गृह्यते यः शब्दार्थपर्यालोचनात्मकः, शब्दार्थपर्यालोचनानुसारी चाक्षरलाभः श्रोत्रेन्द्रियोपलब्धिरूप इति न कश्चिद्दोष इति । तथा वल्कसमं मतिज्ञानं, कारणत्वात्, शुम्बसमं श्रुतज्ञानं, तत्कार्यत्वात्, ततो यथा वल्कशुम्बयोर्भेदः तथा मतिश्रुतयोरपि । इतश्च भेदो—मतिज्ञानमनक्षरं साक्षरं च, तथाहि—अवग्रहज्ञानमनक्षरं तस्यानिर्देश्यसामान्यमात्रप्रतिभासात्मकतया निर्विकल्पत्वात्, ईहादिज्ञानं तु साक्षरं, तस्य परामर्शादिरूपतयाऽवश्यं वर्णारूषितत्वात् श्रुतज्ञानं पुनः साक्षरमेव, अक्षरमन्तरेण शब्दार्थपर्यालोचनाऽयोगात् । इतश्च मतिश्रुतयोर्भेदो—मूककल्पं मतिज्ञानं, स्वमात्रप्रत्यायनफलत्वात्, अमूककल्पं श्रुतज्ञानं, स्वपरप्रत्यायकत्वादिति ॥ मतिश्रुतानन्तरं च कालविपर्ययादिसाधर्म्यादवधिज्ञानस्योपन्यासः, तदनन्तरं च छद्मस्थविषयभावादिसाधर्म्यान्मनःपर्यवज्ञानस्योपन्यासः, तदनन्तरं च भावमुनिस्वाम्यादिसाधर्म्यात् सर्वोत्तमत्वाच्च केवलज्ञानस्य, उक्तं च—"मइपुव्वं जेण सुयं तेणादीए मई विसिट्ठो वा । मइभेदो चेव सुअं तो मइसमणंतरं भणियं ॥१॥ कालविवज्जयसामित्तलाभसाहम्मतोऽवही तत्तो । माणसमित्तो छउमत्थविसयभावाइसाहम्मा ॥२॥ अंते केवलमुत्तममुणिसामित्तावसाणलाभातो" इति (वि.८६–८७॥) सम्प्रति 'यथोद्देशं निर्देश'

इति न्यायात् ज्ञानपञ्चकादावुद्दिष्टस्याभिनिबोधिकज्ञानस्य स्वरूपमभिधीयते, तच्चाभिनिबोधिकज्ञानं द्विधा—श्रुतनिश्रितमश्रुतनिश्रितं च, तत्र शास्त्रपरिकर्मितमतेरुत्पादकाले शास्त्रार्थपर्यालोचनमनपेक्ष्यैव यदुपजायते तत् श्रुतनिश्रितम्-अवग्रहादि, यत्पुनः सर्वथा शास्त्रसंस्पर्शरहितस्य तथाविधक्षयोपशमभावत एवमेव यथावस्थितवस्तुसंस्पर्शि मतिज्ञानमुपजायते तदश्रुतनिश्रितम्—औत्पत्तिक्यादि, आह भाष्यकृत्—"पुव्वं सुयपरिकम्मियमइस्स जं संपयं सुयातीतं । तन्निस्सियमियरं पुण अणिस्सियं मइचउक्कं तं ॥१॥"(वि.१६९) नन्वौत्पत्तिक्यादिकमप्यवग्रहादिरूपमेव ततः कोऽनयोः प्रतिविशेषः?, उच्यते, तदप्यवग्रहादिरूपमेव, केवलं शास्त्रानुसारमन्तरेणोपजायत इति भेदेनोपन्यस्तं, ननु 'तिवग्गसुत्तत्थगहियपेयाला' इति वचनात् तत्रापि किञ्चित् श्रुतोपकारादेव जायते, तत्कथमश्रुतनिश्रितमिति?, सत्यमेतत्, वैनयिकीं विहाय अश्रुतनिश्रितं प्रतिपत्तव्यं, यस्तु वैनयिक्या अश्रुतनिश्रितेषु नन्द्यध्ययने निर्युक्तौ वा पाठः स बुद्धिसाम्यादिति कृतं प्रसङ्गेन ॥ तत्र श्रुतनिश्रिताभिनिबोधिकज्ञानस्वरूपप्रदर्शनार्थमाह—

"उग्गहो ईह अवातो य धारणा एव होंति चत्तारि । आभिणिबोहियनाणस्स भेयवत्थू समासेणं ॥ २ ॥"

अवग्रहणमवग्रहः, अनिर्देश्यसामान्यमात्ररूपार्थग्रहणमित्यर्थः, यदाह नन्द्यध्ययनचूर्णिकृत्—"सामन्नस्स रूवादिविसेसणरहियस्स अनिद्देसस्स अवग्गहणमवग्गह" इति, तथा ईहनमीहा—सद्भूतार्थपर्यालोचनरूपा चेष्टा 'ईहि चेष्टाया'मिति वचनात्, किमुक्तं भवति?—अवग्रहादुत्तरकालमपायात् पूर्वं सद्भूतार्थविशेषोपादानाभिमुखोऽसद्भूतार्थविशेषपरित्यागाभिमुखः प्रायोऽत्र मधुरत्वादयः शङ्खादिशब्दधर्म्मा दृश्यन्ते न खरकर्कशनिष्ठुरतादयः शार्ङ्गादिशब्दधर्म्मा इत्येवंरूपो मतिविशेष ईहा,

आह च भाष्यकृत्–"भूयाभूयविसेसादाणच्चायाभिमुहमीहा।' (वि.१८४) अन्ये तु संशयमात्रमीहामुपवर्णयन्ति, तदसम्यक्, संशयो ह्यज्ञानं, मतिज्ञानांशश्च ईहा, तत्कथमेषा संशयमात्रं भवितुमर्हति ? उक्तं च–"ईहा संसयमेत्तं केई न तयं तओ जमन्नाणं। मईनाणंसो चेहा कहमन्नाणं तई जुत्तं?॥१॥"(वि.१८२) तथा तस्यैव अवगृहीतस्य ईहितस्य चार्थस्य निर्णयरूपोऽध्यवसायोऽवायः, शाङ्ख एवायं शार्ङ्ग एवायमित्यादिरूपोऽवधारणात्मकः प्रत्ययोऽवाय इति भावः, चशब्दः पृथक्२अवग्रहादिस्वरूपस्वातन्त्र्यप्रदर्शनार्थः, अवग्रहादीनामीहादयः पर्याया न भवन्तीति तदर्थख्यापनार्थ इत्यर्थः, तस्यैवार्थस्य निर्णीतस्य धरणं धारणा, सा च त्रिधा–अविच्युतिर्वासना स्मृतिश्च, तत्र तदुपयोगादविच्यवनमविच्युतिः, सा चान्तर्मुहूर्त्तप्रमाणा, ततस्तया आहितो यः संस्कारः स वासना, सा च सङ्ख्येयमसङ्ख्येयं वा कालं यावद् भवति, सङ्ख्येयवर्षायुषां सङ्ख्येयं कालमसङ्ख्येयवर्षायुषामसङ्ख्येयं कालमिति भावार्थः, ततः कालान्तरे कुतश्चित्तादृशार्थदर्शनादिकात् कारणात् संस्कारस्य प्रबोधे यद् ज्ञानमुदयते तदेवेदं यन्मया प्रागुपलब्धमित्यादिरूपा सा स्मृतिः, उक्तं च–"तदनन्तरं तदत्थाविच्चवणं जो उ वासणाजोगो। कालन्तरेण जो पुणरणुसरणं धारणा सा उ॥१॥"(वि.२९१) एताश्चाविच्युतिवासनास्मृतयो धरणलक्षणसामान्यान्वर्थयोगाद्धारणाशब्दवाच्याः, एवंशब्दः क्रमप्रदर्शनार्थः, आर्षत्वाच्च मकारलोपः, एवं–अनेनैव क्रमेण, तथाहि–नानवगृहीतमीह्यते न चानीहितमवगम्यते न चानवगतं धार्यत इति, चत्वारि आभिनिबोधिकज्ञानस्य भिद्यन्त इति भेदाः विकल्पा अंशा इत्यनर्थान्तरं त एव वस्तूनि भेदवस्तूनि, वास्तवा भेदा इति भावः, समासेन–सङ्क्षेपेण, नतु विस्तरतः, विस्तरतोऽष्टाविंशत्यादिभेदभावात्, अथवा काक्वा नीयते–एवं भवन्ति चत्वार्याभिनिबोधिकज्ञानस्य भेदवस्तूनि?, समासेन, न तु विस्तरत इति।

साम्प्रतमनन्तरोपन्यस्तानामवग्रहादीनां स्वरूपं प्रतिपिपादयिषुरिदमाह—

"अत्थाणं उग्गहणं अवग्गहं तह विआलणं इहं । ववसायं च अवायं धरणं पुण धारणं बेंति ॥ ३ ॥"

अर्थ्यन्ते गम्यंते परिच्छिद्यन्ते इतियावत् अर्थाः "कमिप्रगार्त्तिभ्यस्थ" इत्यौणादिकः थप्रत्ययः, ते च रूपादयः, तेषामर्थानां प्रथमं ग्रहणमवग्रहणमवग्रहं ब्रुवते इति योगः, स च द्विधा—व्यञ्जनावग्रहोऽर्थावग्रहश्च, तत्र व्यञ्जनावग्रहपूर्वकोऽर्थावग्रह इति प्रथमं व्यञ्जनावग्रहः प्रतिपाद्यते, अथ व्यञ्जनावग्रह इति कः शब्दार्थः ?, उच्यते, व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं, तच्चोपकरणेन्द्रियस्य शब्दादिपरिणतद्रव्याणां च यः परस्परं सम्बन्धः, संपृक्तिरित्यर्थः, सम्बन्धे हि सति सोऽर्थः श्रोत्रादीन्द्रियेण व्यक्तुं शक्यते नान्यथा, ततः सम्बन्धो व्यञ्जनं, तथा चाह भाष्यकृत्—"वंजिज्जइ जेणऽत्थो घडोव्व दीवेण वंजणं तं च । उवगरणिंदियसद्दाइपरिणयद्दव्वसंबंधो ॥१॥" (वि.१९४) व्यञ्जनेन—सम्बन्धेनावग्रहणं—सम्बध्यमानस्य शब्दादि-रूपस्यार्थस्याव्यक्तरूपः परिच्छेदो व्यञ्जनावग्रहः, अथवा व्यज्यन्ते इति व्यञ्जनानि, 'कृद्बहुल'मिति वचनात् कर्मण्यनट्, व्यञ्जनानां—शब्दादिरूपतया परिणतानां द्रव्याणामुपकरणेन्द्रियसम्प्राप्तानामवग्रहः—अव्यक्तरूपः परिच्छेदो व्यञ्जनावग्रहः, अथवा व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं—उपकरणेन्द्रियं तेन स्वसम्बद्धस्यार्थस्य शब्दादेरवग्रहणं—अव्यक्तरूपः परिच्छेदो व्यञ्जनावग्रहः, स चान्तर्मुहूर्त्तप्रमाणः, आह—ननु व्यञ्जनावग्रहवेलायां न किमपि संवेदनं संवेदयामहे, तत्क-थमसौ ज्ञानरूपो गीयते ?, उच्यते, अव्यक्तत्वान्न संवेद्यते ततो न कश्चिद्दोषः, अस्तित्वे किं प्रमाणमिति चेत्, उच्यते, अनुमानं, तथाहि—यदि प्रथमसमयेऽपि शब्दादिपरिणतद्रव्याणामुपकरणेन्द्रियस्य च परस्परसम्पृक्तौ काचिदपि

ज्ञानमात्रा न भवेत् ततो द्वितीयेऽपि समये न भवेत्, विशेषाभावात्, एवं यावच्चरमसमयेऽपि, अथ चरमसमये ज्ञानमर्थावग्रहरूपं जायमानमुपलभ्यते ततः प्रागपि कापि कियती मात्रा प्रतिपत्तव्या, अथ मन्येथा मा भूत् प्रथमसमयादिषु शब्दादिपरिणतद्रव्याभिसम्बन्धेऽपि काचिदपि ज्ञानमात्रा शब्दादिपरिणतद्रव्याणां तत्र स्तोकत्वात् चरमसमये तु भविष्यति शब्दादिपरिणतद्रव्यसमूहस्य भूयसो भावात्, तदप्ययुक्तं, यतो यदि प्रथमसमयादिषु शब्दादिद्रव्याणां स्तोकत्वात् सम्पृक्तौ नाव्यक्ताऽपि काचिदपि ज्ञानमात्रोपजायते ततः प्रभूतसमुदायसम्पर्केऽपि न भवेत्, न खलु सिकताकणादिषु प्रत्येकमसति तैललेशे समुदाये तैलमुद्भवदुपलभ्यते, अस्ति च चरमसमये प्रभूतशब्दादिसम्पर्के ज्ञानं, ततः प्राक्तनेष्वपि समयेषु स्तोकस्तोकतरैरपि शब्दादिपरिणतद्रव्यैः सम्बन्धे काचिदव्यक्ता ज्ञानमात्राऽभ्युपगन्तव्या, अन्यथा चरमसमयेऽपि न स्यात्, उक्तं च—"जं सव्वहा न वीसुं सव्वेसुवि तं न रेणु तेल्लं व। पत्तेयमणिच्छंतो कहमिच्छसि समुदये नाणं? ॥ १ ॥" (वि. २०१) ततः स्थितमेतत्—व्यञ्जनावग्रहो ज्ञानरूपः, केवलं च तत् ज्ञानमव्यक्तमवसातव्यं, स च चतुर्विधस्तद्यथा—श्रोत्रेन्द्रियव्यञ्जनावग्रहः घ्राणेन्द्रियव्यञ्जनावग्रहः जिह्वेन्द्रियव्यञ्जनावग्रहः स्पर्शनेन्द्रियव्यञ्जनावग्रहश्च, ननु सत्सु पञ्चस्विन्द्रियेषु षष्ठे च मनसि कस्मादयं चतुर्विधः?, उच्यते, इह व्यञ्जनमुपकरणेन्द्रियस्य शब्दादिपरिणतद्रव्याणां परस्परं सम्बन्ध उच्यते, सम्बन्धश्च चतुर्णामेव श्रोत्रेन्द्रियादीनां, न नयनमनसोः, तयोरप्राप्यकारित्वात्, कथमप्राप्यकारितेति चेत्, उच्यते, विषयकृतानुग्रहोपघाताभावात्, यदि पुनः प्राप्तमर्थं चक्षुर्मनो वा गृह्णीयात् तर्हि यथा स्पर्शनेन्द्रियं स्रक्चन्दनादिकमङ्गारादिकं वा प्राप्तमर्थं परिच्छि-

**चक्षुषोऽप्राप्यकारिता**

न्दत्तत्कृतानुग्रहोपघातभाग् भवति, तथा चक्षुर्मनसी अपि भवेतां, न च भवतस्तस्मादप्राप्यकारिणी ते इति, ननु दृश्येते चक्षुषोऽनुग्रहोपघातौ, तथाहि–जरठकरप्रसरमभिसर्प्पयन्तमंशुमालिनं चिरं विलोकमानस्य भवति चक्षुषो विघातः, शशाङ्ककरनिकरं तरङ्गमालोपशोभितं जलं शाड्वलतरुमण्डलं वाऽवलोकमानस्यानुग्रहः, तदेतज्जाड्यविलसितं, यतो न वयं ब्रूमः सर्वथा चक्षुषोऽनुग्रहोपघातौ न भवतः, किन्तु विषयमप्राप्तं चक्षुर्गृह्णातीत्येवाभिदध्महे, विषयकृतानुग्रहोपघातासम्भवेऽपि तत्परिच्छेदभावात्, प्राप्तेन तूपघातकेनोपघातो भविष्यत्यनुग्राहकेण चानुग्रहः, तत्रांशुमालिनो रश्मयः सर्वत्रापि प्रसरमुपाददते, नात्र विसंवादः, ततस्ते चक्षुः सम्प्राप्ताः सन्तः स्पर्शनेन्द्रियमिव चक्षुरप्युपघ्नन्ति, शीतांशुरश्मयस्तु स्वभावत एव शीतलत्वादनुग्राहकाः ततस्ते चक्षुरनुगृह्णन्ति, तरङ्गमालासङ्कुलजलावलोकेन च जलकणसम्पृक्तसमीरणावयवसंस्पर्शतोऽनुग्रहः, शाड्वलतरुमण्डलावलोकनेऽपि शाड्वलतरुच्छायासम्पर्कशीतीभूतसमीरसंस्पर्शात्, शेषकालं तु जलाद्यवलोकनेऽनुग्रहाभिमान उपघाताभावादवसेयः, भवति चोपघाताभावेऽनुग्रहाभिमानो, यथाऽतिसूक्ष्माक्षरनिरीक्षणाद्विनिवृत्त्य यथासुखं नीलीरक्तवस्त्राद्यवलोकने, इत्थं चैतदङ्गीकर्त्तव्यम्, अन्यथा सम्पर्के यथा सूर्येणोपघातो भवति तथा हुतवहजलशूलाद्यालोकने दाहक्लेदपाटनादयोऽपि कस्मान्न भवन्ति ?, अपिच–यदि चक्षुः प्राप्यकारि तर्हि स्वदेशगतं रजोमलाञ्जनादि किं न पश्यति ?, तस्मादप्राप्यकार्येव चक्षुः, ननु यदि चक्षुरप्राप्यकारि तर्हि कस्मादविशेषेण सर्वानप्यर्थान् न गृह्णाति, यदि हि प्राप्तं परिच्छिन्द्यात् तर्हि यदेवानावृतमदूरदेशं वा तदेव गृह्णीयात् नावृतं दूरदेशस्थं वा, तत्र नयनरश्मीनां गमनासम्भवात् सम्पर्काभावात्, ततो युज्येत चक्षुषो ग्रहणाग्रहणे नान्यथा, तथा चोक्तम्–"प्राप्यकारि चक्षुः उपल-

॥ २४ ॥

गमनाभा- - -

ब्ध्यनुपलब्ध्योरनावरणेतरापेक्षणात् दूरेतरापेक्षणाच्च, यदि हि चक्षुरप्राप्यकारि भवेत् तदा आवरणभावादनुपलब्धि-रन्यथोपलब्धिरिति न स्यात्, न हि तदावरणमुपघातकरणसमर्थं, प्राप्यकारित्वे तु मूर्त्तद्रव्यप्रतिघातादुपपत्तिमान् तथा व्याघातः, अतिदूरे च गमनाभावादिति, प्रयोगश्चात्र—न चक्षुषो विषयपरिमाणमप्राप्यकारित्वात्, मनोवत्, तदेतदयु-क्ततरं, दृष्टान्तस्य साध्यविकलत्वात्, न खलु मनोऽप्यशेषान् विषयान् गृह्णाति, तस्यापि सूक्ष्मेष्वागमगम्यादिष्वर्थेषु मोहदर्श-नात्, ततो यथा मनोऽप्राप्यकार्यपि स्वावरणक्षयोपशमसापेक्षत्वान्नियतविषयं तथा चक्षुरपि स्वावरणक्षयोपशमसापे-क्षत्वात् योग्यदेशावस्थितनियतविषयमिति न व्यवहितानामुपलम्भप्रसङ्गो नापि दूरदेशस्थितानामिति, अपिच—दृष्टमप्रा-प्यकारित्वेऽपि तथास्वभावविशेषात् योग्यदेशापेक्षणं, यथा अयस्कान्तस्य, न खल्वयस्कान्तोऽयसोऽप्राप्यकर्षणे प्रवर्त्तमानः सर्वस्याप्ययसो जगद्वर्त्तिन आकर्षको भवति, किन्तु प्रतिनियतस्यैव, अथ मन्येथा अयस्कान्तोऽपि प्राप्यकारी, अय-स्कान्तच्छायाणुभिः समाकृष्यमाणवस्तुनः सम्बन्धभावात्, केवलं ते छायाणवः सूक्ष्मत्वान्नोपलभ्यन्ते, तदेतदुन्मत्त-प्रलपितं, तद्ग्राहकप्रमाणाभावात्, न हि तत्र छायाणुसम्भवग्राहकं प्रमाणमस्ति, न चाप्रमाणकं प्रतिपत्तुं शक्नुमः, अथास्ति तद्ग्राहकं प्रमाणमनुमानं, इह यदाकर्षणं तत्संसर्गपूर्वकं यथाऽयोगोलकस्य संदंशेन, आकर्षणं चायसोऽयस्कान्तेन, तत्र साक्षादयस्कान्तेन संसर्गः प्रत्यक्षबाधित इत्यर्थात् छायाणुभिः सह द्रष्टव्य इति, तदेतद्बालिशजल्पितं, हेतोरनैकान्ति-कत्वात्, मन्त्रेण व्यभिचारात्, तथाहि—मन्त्रः स्मर्यमाणोऽपि विवक्षितं वस्त्वाकर्षति, नच तत्र कोऽपि संसर्ग इति ॥ अन्यस्त्वाह—अस्ति चक्षुषः प्राप्यकारित्वेऽव्यवहितार्थानुपलब्धिरनुमानं, तदप्ययुक्तं, अत्रापि हेतोरनेकान्तिकत्वात्, काचा-

नायना रश्मयो निर्गत्य तमर्थं गृह्णन्ति, नायनाश्च रश्मयस्तैजसत्वाच्छ
स्फटिकैर्व्यवहितस्याप्युपलब्धेः, अथेदमाचक्षीथाः—नायना रश्मयो निर्गत्य तमर्थं गृह्णन्ति, नायनाश्च रश्मयस्तैजसत्वाच्छ
स्फटिकैर्व्यवहितस्याप्युपलब्धेः, अथेदमाचक्षीथाः—नायना रश्मयो महाज्वालादौ प्रतिस्खलनोपलब्धेः, तस्मादप्राप्यकारित्वं
तेजोद्रव्यैः प्रतिस्खल्यन्ते, ततो न कश्चिद्दोषः, तदपि न मनोरमं, महाज्वालादौ प्रतिस्खलनोपलब्धेः, अन्यथा तोयादिचिन्तायामनु-
चक्षुषः । एवं मनसोऽप्यप्राप्यकारित्वं भावनीयं, तत्रापि विषयकृतानुग्रहोपघाताभावात्, शरीरोपचयदर्शनात्, तथाहि—हर्ष-
ग्रहोऽग्निशस्त्रादिचिन्तायां चोपघातो भवेत्, ननु दृश्यतेऽप्यनुग्रहो हर्षादिभिः शरीरदौर्बल्यदर्शनात्, तथाहि—अतिशो-
प्रकर्षवशान्मनसोऽतिपुष्टता, तद्वशाच्च शरीरोपचयः, उपघातोऽपि च दृश्यते, तदेतदतीवासंबद्धं, यत इह मन-
ककरणतो मनसो विघातसम्भवस्तद्वशाच्च शरीरस्य दौर्बल्यं, चिन्तावशाच्च हृद्रोग इति, न चेह विषयकृतावनुग्रहोपघातौ त्वया
सोऽप्यप्राप्यकारित्वं साध्यमानं वर्त्तते, विषयकृतानुग्रहोपघाताभावादिति हेतोः, शरीरस्यानुग्रहोपघातौ करिष्यति, यथेष्टानिष्टरूप आहारः,
मनसो दर्श्येते तत्कथं व्यभिचारः?, मनस्तु स्वयं पुद्गलमयत्वात् अनिष्टरूपस्तूपघातं, तथा मनोऽप्यनिष्टपुद्गलोपचितमति-
तथाहि—इष्टरूप आहारः परिभुज्यमानः शरीरस्य पोषमाधत्ते च हर्षादिकारणं पुष्टिं, "इट्ठाणिट्ठाहारब्भवहारे होंति
शोकादिनिबन्धनं शरीरस्य हानिमादधाति, इष्टपुद्गलोपचितं को दोसो?, ॥१॥" (वि०२२१) तस्मान्मनोऽपि विषयकृतानुग्रहो-
पुट्ठिहाणीतो । जह तह मणसो ताओ पोग्गलगणतोत्ति चरमसमयोपात्तशब्दाद्यर्थावग्रहणलक्षणोऽर्थावग्रहः,
पघाताभावादप्राप्यकारीति चतुर्धा व्यञ्जनावग्रहः । तथा व्यञ्जनावग्रह विचारणं—पर्यालोचनमर्थानामित्यनुवर्त्तते,
सामान्यमात्रानिर्देश्यग्रहणमेकसामयिकमर्थावग्रह इति भावः, 'तथे'त्यानन्तर्ये सद्भूतार्थविशेषोपादानाभिमुखोऽसद्भू-
ईहनमीहा, तां ब्रुवते इति योगः, किमुक्तं भवति ?—अवग्रहादुत्तीर्णोऽपायात्पूर्वः

तार्थविशेषपरित्यागाकाङ्क्षी मतिविशेष इति, विशिष्टोऽवसायो व्यवसायः निर्णयो निश्चयोऽवगम इत्यनर्थान्तरं तं, व्यवसायम् अर्थानामिति वर्त्तते अवायं ब्रुवत इति संसर्गः, एतदुक्तं भवति–शाङ्ख एवायं शार्ङ्ग एवायमित्याद्यवधारणात्मकः प्रत्ययोऽवाय इति, चशब्द एवकारार्थः, स चावधारणे, व्यवसायमेवावायं ब्रुवत इति, धृतिर्धारणम् अर्थानामिति वर्त्तते, परिच्छिन्नस्य वस्तुनोऽविच्युतिवासनास्मृतिरूपं धरणं पुनर्धारणां ब्रुवते, पुनःशब्दोऽप्येवकारार्थः, स चावधारणे, ब्रुवते इत्यनेन शास्त्रपारतन्त्र्यमाह, इत्थं तीर्थकरगणधरा ब्रुवते इति, अर्थावग्रहेहापायधारणाः पञ्चस्विन्द्रियेषु षष्ठे च मनसि भावात् प्रत्येकं षड्भेदात्मकाश्चतुर्द्धा व्यञ्जनावग्रह इति सर्वसङ्कलनयाऽष्टाविंशतिभेदभिन्नमाभिनिबोधिकं ज्ञानमवगन्तव्यं, नवरमीहा सदृशधर्मोपेतवस्तुविषयेति नयनादिनिबन्धनेहाविषया यथाक्रमं स्थाणुपुरुषादिकुष्ठोत्पलादिसम्भूतकारवेल्लमांसादिसर्पोत्पलनालादयः प्रतिपत्तव्याः, उक्तं च–"थाणुपुरिसादिकुट्ठुप्पलादिसंभियकरेल्लमंसाइं। सप्पुपलनालाइय समाणरूवाइ विसयाइं॥१॥" (वि०२९३)अन्ये पुनरेवं पठन्ति–"अत्थाणं उग्गहणंमि उग्गहो तह वियालणे ईहा। ववसायंमि अवाओ धरणं पुण धारणं बेंति ॥१॥"तत्रार्थानामवग्रहणे सति अवग्रहो नाम प्रथमो मतिभेदो भवतीत्येवं ब्रुवते, एवमीहादिष्वपि योज्यं, भावार्थस्तु पूर्ववत्, अथवा प्राकृतत्वाद्भवति विभक्तीनां व्यत्ययो, यदाह पाणिनिः स्वप्राकृतलक्षणे–"व्यत्ययोऽप्यासा" मिति, ततो यथा आचाराङ्गे "अगणिं च खलु पुट्ठा वेगे संघायमावज्जंती"त्यत्र सूत्रे अग्निना च स्पृष्टा, अथवा स्पृष्टशब्दः पतितवाची, अग्नौ च पतिता एके–शलभादयः सङ्घातमापद्यन्ते–अन्योऽन्यगात्रसङ्कोचमासादयन्ति, तस्मादग्निसमारम्भोऽनेकसत्त्वव्यापत्तिहेतुत्वान्न कार्य इति द्वितीया तृतीयार्थे सप्तम्यर्थे च व्याख्याता, तथाऽत्रापि सप्तमी प्रथमार्थे द्रष्टव्या, ततोऽयमर्थः–अर्थानामवग्र-

हणमवग्रहो नाम प्रथमो मतिभेद इत्येवं ब्रुवते तीर्थकरगणधराः, एवमीहादिष्वपि भावनीयं ॥ साम्प्रतमभिहितस्वरूपा-
णामवग्रहादीनां कालप्रमाणमभिधित्सुराह—

उग्गह एकं समयं ईहावाया मुहुत्तमंतं तु । कालमसंखं संखं च धारणा होइ नायव्वा ॥ ४ ॥

अवग्रहो—व्याख्यानात् नैश्चयिकोऽर्थावग्रहः, किमित्याह—एकं समयं, अत्र "कालाध्वनोर्व्याप्ता"विति द्वितीया, एक-
समयं यावदित्यर्थः, तत्र परमनिकृष्टः कालविशेषः समयः, स च प्रवचनप्रतिपादितोत्पलपत्रशतव्यतिभेदोदाहरणात्
पट्टशाटिकापाटनदृष्टान्ताच्चावसेयः, सांव्यवहारिकार्थावग्रहव्यञ्जनावग्रहौ पृथक्पृथगन्तर्मुहूर्त्तकालप्रमाणौ, 'ईहावाया मुहु-
त्तमंतं तु' इति ईहा च अवायश्च ईहावायौ, प्राकृतत्वाद्बहुवचनं, उक्तं च—"बहुवयणेण दुवयणं छट्ठीविभत्तीएँ भन्नइ चउत्थी ।
जह हत्था तह पाया नमोऽत्थु देवाहिदेवाणं ॥ १ ॥" तौ ईहावायौ मुहूर्त्तान्तः—भिन्नमुहूर्त्तं ज्ञातव्यौ, अन्तर्मध्यकरणे,
तुशब्द एवकारार्थः, स चावधारणे, एतदुक्तं भवति—मुहूर्त्तान्तः—भिन्नं मुहूर्त्तं ज्ञातव्यौ, अन्तर्मुहूर्त्तमेवेत्यर्थः, क्वचित् मुहुत्त-
मद्धं त्विति पाठः, तत्र मुहूर्त्तशब्देन घटिकाद्वयपरिमाणः कालोऽभिधीयते, तस्यार्धं मुहूर्त्तार्धं, तुशब्दो विशेषणार्थः, स चैत-
द्विशिनष्टि—व्यवहारापेक्षयाऽर्द्धमित्युक्तं तत्त्वतस्त्वन्तर्मुहूर्त्तमवसेयं, तथा कलनं कालः तं कालं न विद्यते सङ्ख्या—
इयन्तः पक्षमासर्त्त्वयनसंवत्सरादय इत्येवंभूता यस्यासावसङ्ख्यः, पल्योपमादिलक्षण इत्यर्थः, तं कालमसङ्ख्येयं, तथा सङ्ख्यायते
इति सङ्ख्या, इयन्तः पक्षमासर्त्वयनादयः इत्येवं सङ्ख्याप्रमितेः, सङ्ख्यं, चशब्दादन्तर्मुहूर्त्तं च, धारणा—अभिहितलक्षणा
भवति ज्ञातव्या, अयमत्र भावार्थः—अवायोत्तरकालमविच्युतिरूपा अन्तर्मुहूर्त्तं भवति, एवं स्मृतिरूपापि, वासना तु

तदावरणकर्मक्षयोपशमाख्या संस्कारापरपर्याया, अत एव स्मृतिधारणायां बीजभूता सङ्ख्येयवर्षायुषां सत्त्वानां सङ्ख्येयं असङ्ख्येयवर्षायुषां च पल्योपमादिजीविनामसङ्ख्येयमिति, उक्तं च—"त (अ) त्थोग्गहो जहण्णो समओ सेसोग्गहादयो वीसुं। अंतोमुहुत्तमेगं तु वासणा धारणं मोत्तुं ॥ १ ॥" (वि०३३४) तदेवमवग्रहादीनां कालमानमभिधाय सम्प्रति श्रोत्रेन्द्रियादीनां प्राप्ताप्राप्तविषयतां प्रतिपिपादयिषुराह—

पुट्ठं सुणेइ सद्दं रूवं पुण पासई अपुट्ठं तु। गंधं रसं च फासं च बद्धपुट्ठं वियागरे ॥ ५ ॥

ननु व्यञ्जनावग्रहप्ररूपणाद्वारेणैव तथा श्रोत्रेन्द्रियादीनां प्राप्ताप्राप्तविषयता प्राक् प्रतिपादिता ततः किमर्थमेष पुनः प्रयास इति ?, उच्यते, तत्र प्रक्रान्तगाथा व्याख्यानद्वारेण प्रतिपादिता, सम्प्रति तु सूत्रतः प्रतिपाद्यत इत्यदोषः, श्रोत्रेन्द्रियं कर्तृ शब्दं कर्मतापन्नं शृणोति—गृह्णाति परिच्छिनत्तीति भावः, स्पृष्टं तनौ रेणुवत् आलिङ्गितमात्रं, किमुक्तं भवति ?—शब्दद्रव्याणि सकललोकव्यापीनि सूक्ष्माणि, अत एव द्रव्येन्द्रियस्यान्तरपि मनाक् प्रविशन्ति, तदन्यद्रव्यवासनस्वभावानि च, श्रोत्रेन्द्रियं शेषेन्द्रियगणापेक्षया प्रायः पटुतरं, ततः स्पृष्टमात्रमेव शब्दद्रव्यसमूहं गृह्णाति, एतेन यदाहुः सुगतमतानुसारिणः—श्रोत्रमप्यप्राप्तकारि, तथा च तद्ग्रन्थः "चक्षुःश्रोत्रमनोऽप्राप्यकारी"ति, ते प्रतिक्षिप्ता द्रष्टव्याः, तथाहि—अप्राप्यकारि तत् प्रतिपत्तुं शक्यते यस्य विषयकृतानुग्रहोपघाताभावो, यथा चक्षुर्मनसी, श्रोत्रस्य च शब्दकृत उपघातो दृश्यते, सद्योजातबालकस्य समीपे महाप्रयत्नताडितझल्लरीझात्कारश्रवणतो यद्वा विद्युत्प्रपाते, तत्प्रत्यासन्नदेशवर्त्तिनां निर्घोषश्रवणतो बधिरीभावदर्शनात्, शब्दपरमाणवो हि उत्पत्तिदेशादारभ्य जलतरङ्गन्यायेन प्रस-

शब्दादीनां स्पृष्टास्पृष्टतादि

रमभिगृह्णानाः श्रोत्रेन्द्रियमागच्छन्ति, ततः सम्भवत्युपघातः, ननु यदि श्रोत्रेन्द्रियं प्राप्तमेव शब्दं गृह्णाति नाप्राप्तं तर्हि
उपोद्घाते यथा गन्धादौ गृह्यमाणे न तत्र दूरासन्नादितया भेदप्रतीतिरेवं शब्देऽपि न स्यात्, प्राप्तो हि विषयः परिच्छिद्यमानः
॥ २७ ॥ सर्वोऽपि सन्निहित एव तत्कथं तत्र दूरासन्नादिभेदप्रतीतिर्भवितुमर्हति, अथ च प्रतीयते शब्दो दूरासन्नादितया, तथा
च लोके वक्तारः—श्रूयते कस्यापि दूरे शब्द इति, अन्यच्च यदि प्राप्तः शब्दो गृह्यते श्रोत्रेन्द्रियेण तर्हि चाण्डालोक्तोऽपि
शब्दः श्रोत्रेन्द्रियसंस्पृष्टो गृह्यते इति श्रोत्रस्य चाण्डालस्पर्शदोषः, तन्न श्रेयसी श्रोत्रेन्द्रियस्य प्राप्तकारिता, तदेतन्महा-
मोहमलीमसमानसभाषितं, यतो यद्यपि शब्दः प्राप्तो गृह्यते श्रोत्रेन्द्रियेण तथापि यत उत्थितः शब्दस्तस्य दूरासन्नत्वे
शब्देऽपि स्वभाववैचित्र्यसम्भवात् दूरासन्नादिभेदप्रतीतिरुल्लसिष्यति, तथाहि—दूरादागतः शब्दः क्षीणशक्तिकत्वात् खिन्न
इव लक्ष्यते, अस्पष्टरूपो वा, ततो लोके व्यवहारो दूरे शब्दः श्रूयते इति, अस्य वाक्यस्यायं भावार्थः—दूरादागतः श्रूयते
इति, स्यादेतद्—एवमतिप्रसङ्गः प्राप्नोति, तथाहि—एतदपि वक्तुं शक्यते, दूरे रूपमुपलभ्यते, किमुक्तं भवति?—दूरादागतं रूप-
मुपलभ्यत इति, ततश्चक्षुरपि प्राप्यकारीति प्राप्नोति, न चैतदिष्यते तस्मान्न तत्समीचीनमिति, तदयुक्तं, यत इह चक्षुषो ॥ २७ ॥
रूपकृतावुपग्रहोपघातौ नोपलभ्येते, श्रोत्रेन्द्रियस्य तु शब्दकृत उपघात उपलम्भगोचरोऽस्ति, यथोक्तं प्राक्, ततो नाति-
प्रसङ्गापादनं युक्तिमत्, अन्यच्च प्रत्यासन्नोऽपि जनः पवनस्य प्रतिकूलमवतिष्ठमानः शब्दं न शृणोति, पवनवर्त्मनि
पुनरवतिष्ठमानो दूरदेशस्थितोऽपि शृणोति, तथा च लोके वक्तारो—न वयं प्रत्यासन्ना अपि त्वदीयं शब्दं शृणुमः, पवनस्य
प्रतिकूलमवस्थानात्, यदि पुनरप्राप्तमेव शब्दं रूपमिव जनाः प्रमिणीयुस्तर्हि पवनस्य प्रतिकूलमप्यवतिष्ठमाना रूपमिव

शब्दं यथावस्थितं परिच्छिन्द्युः, नच परिच्छिन्दन्ति, तस्मात्प्राप्ता एव शब्दपरमाणवः श्रोत्रेन्द्रियेण परिगृह्यन्ते इत्यवश्यमभ्युपगन्तव्यम्, इतश्चाभ्युपगन्तव्यमन्यथा क्रमग्रहणानुपपत्तेः, तथाहि–यद्यप्राप्ता एव शब्दा गृह्यन्ते तर्हि तेषां योग्यदेशावस्थितानां समीपस्थैर्दूरस्थैश्च ग्रहणमेककालं भवेत्, यथा चक्षुषा योग्यदेशावस्थानां घटपटादीनां, अथ च क्रमेण ग्रहणमनुभूयते, पूर्वं समीपस्थैः पश्चाद्दूरस्थैरिति, यदपि चोक्तं 'चाण्डालस्पर्शदोष' इति, तदपि चेतनाविकलपुरुषभाषितमिवासमीचीनं, स्पर्शास्पर्शव्यवस्था हि लोके काल्पनिकी न पारमार्थिकी, तथाहि–यामेव भुवमग्रे चाण्डालः स्पृशन् याति तामेव पृष्ठतः श्रोत्रियोऽपि, तथा यामेव नावमारोहति चाण्डालस्तामेवारोहति श्रोत्रियोऽपि, तथा स एव मारुतः चाण्डालं स्पृष्ट्वा श्रोत्रियमपि स्पृशति, न च तत्र लोके स्पर्शदोषव्यवस्था, तथा शब्दपुद्गलसंस्पर्शेऽपि न भवतीति न कश्चिद्दोषः, अन्यच्च–यदा केतकीदलनिचयं शतपत्रादिपुष्पनिचयं वा शिरसि निवध्य वपुषि वा मृगमदचन्दनाद्यवलेपनमारचय्य विपणिवीथीमागत्य चण्डालोऽवतिष्ठते तदा तद्गतकेतकीदलादिगन्धपुद्गलाः श्रोत्रियादिनासिकास्वपि प्रविशन्ति, ततस्तत्रापि चाण्डालस्पर्शदोषः प्राप्नोतीति तद्दोषभयान्नासिकेन्द्रियमप्यप्राप्यकारि प्रतिपत्तव्यं, न चैतद्भवतोऽप्यागमे प्रतिपाद्यते, ततो बालिशजल्पितमिति कृतं प्रसङ्गेन। केचित्पुनः श्रोत्रेन्द्रियस्य प्राप्यकारितामप्यभ्युपगच्छन्तः शब्दस्याम्बरगुणत्वं प्रतिपन्नाः, तदश्लीलं, आकाशगुणतायां शब्दस्यामूर्त्तत्वप्रसक्तेः, यो हि यद्गुणः स तत्समानधर्मा, यथा ज्ञानमात्मनः, तथाहि–अमूर्त्त आत्मा ततस्तद्गुणो ज्ञानमप्यमूर्त्तमेव, एवं शब्दोऽपि यद्याकाशगुणः तर्हि आकाशस्यामूर्त्तत्वात् शब्दस्यापि तद्गुणत्वेनामूर्त्तता भवेत्, न चासौ युक्तिसङ्गता, तल्लक्षणायोगात्, मूर्त्तिविरहो ह्यमूर्त्तता, न च शब्दानां मूर्त्तिविरहः स्पर्शवत्त्वात्, तथाहि–

स्पर्शवन्तः शब्दाः, तत्सम्पर्के उपघातदर्शनाल्लोष्ठवत्, न चायमसिद्धो हेतुः, यतो दृश्यते सद्योजातबालकानां कर्णदेशाभ्यर्णगाढास्फालितझल्लरीझात्कारश्रवणतः श्रवणस्फोटो, न चेत्थमुपघातकृत्त्वमस्पर्शवत्त्वे सम्भवति, यथा हि विहायसः, ततो विपक्षे गमनासम्भवान्नानैकान्तिकोऽपि, अतश्च स्पर्शवन्तः शब्दाः, तैरभिघाते गिरिगह्वरभित्त्यादिषु शब्दोत्थानात् लोष्ठवत्, अयमपि हेतुरुभयोरपि सिद्धः, तथाहि—श्रूयते तीव्रप्रयत्नोच्चारितशब्दाभिघाते गिरिगह्वरादिषु प्रतिशब्दाः प्रतिदिक्, ततः स्पर्शवत्त्वान्मूर्त्त एव शब्दः, 'रूपस्पर्शादिसन्निवेशो मूर्त्ति'रिति वचनात्, ततः कथमिवाकाशगुणत्वं शब्दानामुपपत्तिमत्, अपिच—तदाकाशमेकमनेकं वा ?, यद्येकं तर्हि योजनलक्षादपि श्रूयेत, आकाशस्यैकत्वेन शब्दस्य तद्गुणतया दूरासन्नादिभेदाभावात्, अथानेकम्, एवं सति वदनदेश एव स विद्यत इति कथं भिन्नदेशवर्त्तिभिः श्रूयते ?, वदनदेशाकाशगुणतया तस्य श्रोतृगतश्रोत्रेन्द्रियाकाशसम्बन्धाभावात्, अथ च श्रोत्रेन्द्रियाकाशसम्बद्धतया तत्श्रवणमभ्युपगम्यते, तन्न श्रेयानाकाशगुणत्वाभ्युपगमः, नन्वाकाशगुणत्वमन्तरेण शब्दस्यावस्थानमेव नोपपद्यते, अवश्यं हि पदार्थेन स्थितिमता भवितव्यं, तत्र रूपस्पर्शरसगन्धानां पृथिव्यादिमहाभूतचतुष्टयमाश्रयः, शब्दस्य त्वाकाशमिति, तदयुक्तं, एवं सति पृथिव्यादीनामप्याकाशाश्रितत्वेनाकाशगुणत्वप्रसक्तेः, अथ नाश्रयणमात्रं तद्गुणत्वनिबन्धनं, किन्तु समवायः, स चास्ति शब्दस्याकाशे न तु पृथिव्यादीनामिति, ननु कोऽयं समवायो नाम ?, एकलोलीभावेनावस्थानं यथा पृथिव्यादिरूपाद्योरिति चेत्, न तर्हि शब्दस्याकाशगुणत्वम्, आकाशेन सहास्यैकलोलीभावेनाप्रतिपत्तेः, अथाकाशे उपलभ्यमानत्वात् तद्गुणता शब्दस्य तर्हि तूलकादेरप्याकाशे उपलभ्यमानत्वात् तद्गुणता प्राप्नोति, अथ तूलकादेः परमार्थतः पृथिव्यादिस्थानमाकाशे

तूपलम्भो वायुना सञ्चार्यमाणत्वात्, यद्येवं तर्हि शब्दस्य परमार्थतः स्थानं श्रोत्रादि यत्पुनराकाशेऽवस्थानं तद्वायुना सञ्चार्यमाणत्वात्, तथाहि–यतो२ वायुः सञ्चरति ततस्ततः शब्दोऽपि गच्छति, वातप्रतिकूलं शब्दस्याश्रवणात्, उक्तं च प्रज्ञाकरगुप्तेन–"यथा वा प्रेर्यते तूलमाकाशे मातरिश्वना। तथा शब्दोऽपि किं वायोः, प्रतीपं कोऽपि ? शब्दवित् ! ॥ १ ॥" तन्नाकाशगुणः शब्दः, किन्तु पुद्गलमय इति। तथा रूप्यत इति रूपं तत्पुनः पश्यति–गृह्णाति उपलभते इतियावत्, अस्पृष्टं–अनालिङ्गितं, गन्धादिवन्न सम्बद्धमित्यर्थः, तुशब्द एवकारार्थः, स चावधारणे, रूपं पुनः पश्यति अस्पृष्टमेव, चक्षुषोऽप्राप्यकारित्वात्, एतच्च प्रागेव भावितं, पुनःशब्दो विशेषणार्थः, स चैतद् विशिनष्टि–अस्पृष्टमपि योग्यदेशावस्थितं न पुनरयोग्यदेशावस्थितममरलोकादि, गन्ध्यते–आघ्रायते इति गन्धः तं 'रस आस्वादने' रस्यतेऽनेनेति रसस्तं च स्पृश्यत इति स्पर्शः तं च, चशब्दौ पूरणार्थौ, 'बद्धस्पृष्ट'मिति बद्धं–आश्लिष्टं तोयवदात्मप्रदेशैरात्मीकृतमित्यर्थः स्पृष्टं पूर्ववत् प्राकृतशैल्या चेत्थमुपन्यासः 'बद्धपुट्ठं'ति, परमार्थतस्तु स्पृष्टं च तत् बद्धं च स्पृष्टबद्धमिति द्रष्टव्यं, आह–यद्बद्धं गन्धादि तत्स्पृष्टं भवत्येव अस्पृष्टस्य सम्बन्धायोगात्, ततः स्पृष्टशब्दोच्चारणं गतार्थत्वात् अनर्थकमिति, नैष दोषः, शास्त्रारम्भस्य सर्वश्रोतृसाधारणत्वात्, त्रिविधा हि श्रोतारः–केचिदुद्घटितज्ञाः केचिन्मध्यबुद्धयः तथाऽन्ये प्रपञ्चितज्ञाः, तत्र प्रपञ्चितज्ञानामनुग्रहाय गम्यमानस्याप्यभिधानमदोषायेति, प्रकृतभावार्थस्त्वयं–गन्धादिद्रव्याणि स्वल्पानि स्थूलानि तदन्यावासकानि च, घ्राणादीनि चेन्द्रियाणि श्रोत्रेन्द्रियापेक्षया अपटूनि, ततो घ्राणेन्द्रियादिगणो गन्धादि आलिङ्गितानन्तरमात्मप्रदेशैरात्मीकृतं गृह्णाति, नान्यथेत्येवं 'व्यागृणीयात्' प्रतिपादयेत्, प्रज्ञापकः स्वशिष्येभ्यः, एतदेव व्याख्यानं भाष्यकारो-

॥ २९ ॥

ऽप्याह–"पुट्ठं रेणुं व तणुंमि बद्धमप्पीकयं पएसेहिं। छिक्काइं चिय गिण्हइ सद्ददवाइं जं ताइं॥१॥तह (बहु) सुहुमभावुगाइं जं पडुयरयं च सोयविन्नाणं। गंधादी दवाइं विवरीयाइं जतो ताइं॥ २ ॥ फरिसाणंतरमत्तप्पएसमीसीकयाइं घिप्पंति। पडुयरविण्णाणाइं जं च न घाणाइकरणाइं ॥३॥" (वि.३३७-९) नन्विदमुक्तं–योग्यदेशावस्थितमेव रूपं पश्यति नायोग्यदेशावस्थितं, तत्र कियान् चक्षुषो विषयः कियतो वा देशादागतं श्रोत्रादि गृह्णाति?, उच्यते, श्रोत्रं तावत् शब्दं जघन्यतोऽङ्गुलासङ्ख्येयभागमात्राद्देशादुत्कर्षतस्तु द्वादशभ्यो योजनेभ्यः, चक्षुरिन्द्रियमपि जघन्यतोऽङ्गुलसङ्ख्येयभागमात्रावस्थितं पश्यति, उत्कर्षतस्तु सातिरेकयोजनशतसहस्रव्यवस्थितं, घ्राणरसनस्पर्शनानि तु जघन्येनाङ्गुलासङ्ख्येयभागमात्रात् देशादागतं गन्धादि गृह्णन्ति, उत्कर्षतस्तु नवभ्यो योजनेभ्यः। नन्वङ्गुलं त्रिधा भवति, तद्यथा–आत्माङ्गुलमुच्छ्रयाङ्गुलं प्रमाणाङ्गुलं च, तत्र 'जे णं जया मणूसा तेसिं जं होइ माणरूवं तु। तं भणियमिहायङ्गुलमणिअयमाणं पुण इमं तु ॥ १ ॥' इत्येवंरूपं आत्माङ्गुलं, "परमाणू तसरेणू रहरेणू अग्गयं च वालस्स। लिक्खा जूया य जवो अट्ठगुणविवड्ढिया कमसो ॥१॥" इत्यादिरूपमुच्छ्रयाङ्गुलं "उस्सेहङ्गुलमेगं हवइ पमाणङ्गुलं सहस्सगुणं। तं चेव दुगुणियं खलु वीरस्सायंगुलं भणियं ॥१॥" इत्येवंलक्षणं प्रमाणाङ्गुलं, तत्र आत्माङ्गुलेन प्रमीयते तत्तत्काले वापीकूपादिकं वस्तु, उच्छ्रयाङ्गुलेन नरतिर्यग्देवनैरयिकशरीराणि, प्रमाणाङ्गुलेन नगपृथिवीविमानानि, उक्तं च–"आयङ्गुलेण वत्थुं उस्सेहपमाणतो मिणसु देहं। नगपुढविविमाणाइं मिणसु पमाणङ्गुलेणं तु ॥१॥" तत्रेदमिन्द्रियविषयपरिमाणं किमात्माङ्गुलेन प्रतिपत्तव्यमाहोश्वित् उच्छ्रयाङ्गुलेन?, उच्यते, आत्माङ्गुलेन, तथा चाह चक्षुरिन्द्रियविषयपरिमाणचिन्तायां भाष्यकृत्–"अप्पत्तकारि नयणं मणो य नयणस्स विसयपरिमाणं। आयङ्गुलेण

लक्खं अइरित्तं जोयणाणं तु ॥१॥” (वि.३४०) ननु देहप्रमाणं समुच्छ्रयाङ्गुलेन, देहाश्रितानि च इन्द्रियाणि; ततस्तेषां विषयपरिमाणमप्युच्छ्रयाङ्गुलेन वक्तुमुचितं, कथमुच्यते आत्माङ्गुलेन ?, नैष दोषः, यद्यपि हि नाम देहाश्रितानि इन्द्रियाणि तथापि तेषां विषयपरिमाणमात्माङ्गुलेन, देहादन्यत्वाद् विषयपरिमाणस्य, तथा चामुमेवार्थमाक्षेपपुरस्सरं भाष्यकृदाह—“नणु भणियमुस्सयङ्गुलपमाणओ जीवदेहमाणाइं। देहपमाणं तं चिय न उ इंदियविसयपरिमाणं ॥१॥”(वि०३४१) अत्र ‘देहप्पमाणं तं चिय’ इति यत् तत् उच्छ्रूयाङ्गुलमेयत्वेनोक्तं तद्देहप्रमाणमात्रमेव, नत्विन्द्रियविषयपरिमाणं, तस्यात्माङ्गुलप्रमेयत्वात्, अथ यदि विषयपरिमाणमिन्द्रियाणामुच्छ्रूयाङ्गुलेन स्यात् ततः को दोष आपद्येत ?, उच्यते, पञ्चधनुःशतादिमनुष्याणां विषयव्यवहारव्यवच्छेदः, तथाहि—यद्भरतस्यात्माङ्गुलं तत्किल प्रमाणाङ्गुलं, तच्च प्रमाणाङ्गुलमुच्छ्रूयाङ्गुलसहस्रेण भवति, “उस्सेहङ्गुलमेगं हवइ पमाणङ्गुलं सहस्सगुण”मितिवचनात्, ततो भरतसगरादिचक्रवर्त्तिनां या अयोध्यादयो नगर्यो ये च स्कन्धावारा आत्माङ्गुलेन द्वादशयोजनायामतया सिद्धान्ते प्रसिद्धास्ते उच्छ्रूयाङ्गुलप्रमित्या अनेकानि योजनसहस्राणि स्युः, तथा च सति तत्रायुधशालादिषु ताडितभेर्यादिशब्दश्रवणं न सर्वेषामापद्येत, “बारसहिं जोयणेहिं सोयं अइगिण्हए सद्द”मिति वचनात्, अथ च समस्तनगरव्यापी समस्तस्कन्धावारव्यापी च विजयढक्कादिशब्द आगमे प्रतिपाद्यते, तत एवमागमे प्रसिद्धः पञ्चधनुःशतादिमनुष्याणां विषयव्यवहारो व्यवच्छेदं मा प्रापदित्यात्माङ्गुलेनेन्द्रियविषयपरिमाणमवसातव्यं, नोच्छ्रूयाङ्गुलेन, तथा चाह भाष्यकृत्—“जं तेण पंचधणुसयनरादिविसयववहारोच्छेओ। पावइ सहस्सगुणियं जेण पमाणङ्गुलं तत्तो ॥१॥” (वि.३४२) अत्र तस्मादात्माङ्गुलेनैवेन्द्रियाणां विषयपरिमाणं नोत्सेधाङ्गुलेनेति उपसंहारवाक्यं (यत्) तत् स्वतः परिभावनीयं, यदप्युक्तं प्राक् ‘देहा-

उपोद्घाते ॥ ३० ॥

विषयमान अङ्गुलविचारः ॥ ३० ॥

श्रितानीन्द्रियाणि इति तेषां विषयपरिमाणमुच्छ्रयाङ्गुलेने'ति, तदप्ययुक्तं, इन्द्रियाणामपि केषाञ्चित् पृथुत्वस्य आत्माङ्गुलेन मीयमानत्वाभ्युपगमात्, अन्यथा त्रिगव्यूतादिमनुष्याणां रसाद्यभ्यवहारव्यवच्छेदप्रसक्तेः, तथाहि—त्रिगव्यूतादीनां मनुष्याणां षड्गव्यूतादीनां च हस्त्यादीनां स्वस्वशरीरानुसारितया अतिविशालानि मुखानि जिह्वाश्च, ततो यद्युच्छ्रयाङ्गुलेन तेषां क्षुरप्राकारतयोक्तस्याभ्यन्तरनिवृत्त्यात्मकस्य जिह्वेन्द्रियस्याङ्गुलपृथक्त्वलक्षणो विस्तारः परिगृह्यते तदा अल्पतया न तत् सर्वां जिह्वां व्याप्नुयात्, सर्वथा व्यापित्वाभावे च योऽसौ बाहुल्येन सर्वात्मनाऽपि जिह्वया रसवेदनलक्षणः प्रतिप्राणि प्रसिद्धो व्यवहारः स व्यवच्छेदं यायात्, एवं घ्राणादिविषयेऽपि यथायोगं गन्धादिव्यवहारोच्छेदो भावनीयः, तस्मादात्माङ्गुलेन जिह्वादीनां पृथुत्वमवसातव्यं, नोच्छ्रयाङ्गुलेन, आह च भाष्यकृत्—इंदियमाणेवि तयं भयणिज्जं जं तिगाउयाईणं। जिब्भिंदियाइमाणं संववहारे विरुज्झेज्जा ॥ १ ॥" ( वि० ३४३ ) अस्या अक्षरगमनिका—तत्—उच्छ्रयाङ्गुलमिन्द्रियमानेऽपि, आस्तामिन्द्रियविषयपरिमाणचिन्तायामित्यपिशब्दार्थः, भजनीयं—विकल्पनीयं, क्वापि गृह्यते क्वापि न गृह्यते इत्यर्थः, किमुक्तं भवति?— स्पर्शनेन्द्रियपृथुत्वपरिमाणचिन्तायां ग्राह्यमन्येन्द्रियपृथुत्वपरिमाणचिन्तायां तु न ग्राह्यं, तेषामात्माङ्गुलेन परिमाणकरणादिति, कथमेतदवसेयमिति चेत्, तत आह—यद्—यस्मात्सर्वेषामपीन्द्रियाणामुच्छ्रयाङ्गुलेन परिमाणकरणात् त्रिगव्यूतादीनाम्, आदिशब्दात् द्विगव्यूतादिपरिग्रहः, जिह्वेन्द्रियादिमानं सूत्रोक्तं संव्यवहारे विरुध्येत, यथा च विरुध्येत तथानन्तरमेव भावितं, तस्मात्सर्वमिन्द्रियविषयपरिमाणमात्माङ्गुलेनैवेति स्थितम्। ननु भवत्वात्माङ्गुलेन विषयपरिमाणं तथाप्युक्तस्वरूपं चक्षुरिन्द्रियविषयपरिमाणं न घटते, अधिकस्यापि तद्विषयपरिमाणस्यागमान्तरे प्रतिपादनात्, तथाहि—

पुष्करवरार्द्धे मानुषोत्तरपर्वतसमीपे मनुष्याः कर्कसङ्क्रान्तौ प्रमाणाङ्गुलनिष्पन्नैः सातिरेकैरेकविंशतियोजनलक्षैर्व्यवस्थित-मादित्यमवलोकमानाः प्रतिपाद्यन्ते शास्त्रान्तरे, तथा च तद्ग्रन्थः—"इगवीसं खलु लक्खा चउतीसं चेव तह सहस्साइं। तह पंचसया भणिया सत्तत्तीसा य अइरित्ता ॥ १ ॥ इइ नयणविसयमाणं पुक्खरदीवड्ढवासिमणुयाणं । पुव्वेण य अवरेण य पिहं पिहं होइ मणुयाणं ॥२॥" ततः कथमुक्तस्वरूपं नयनविषयपरिमाणमात्माङ्गुलेनापि घटते ?, (न) प्रमाणाङ्गुलेनापि व्यभिचारात्, उक्तं च—"लक्खेहि एक्कवीसाएँ साइरेगेहिं पुक्खरद्धंमि । उदए पेच्छंति नरा सूरं उक्कोसए दिवसे ॥१॥ नयणिंदियस्स तम्हा विसयपमाणं जहा सुए भणियं । आउस्सेहपमाणंगुलाण एक्केणवि न जुत्तं ॥२॥" (३४५-६वि.) सत्य-मेतत्, केवलमिदं विषयपरिमाणं प्रकाश्यविषयं द्रष्टव्यं, न तु प्रकाशकविषयं; ततः प्रकाशकेऽधिकतरमपि विषयपरिमाणं न विरुध्यत इति न कश्चिद्दोषः; कथमेतदवसीयत इति चेत्, उच्यते, पूर्वसूरिकृतव्याख्यानात्, सकलमपि हि कालिकश्रुतं पूर्वसूरिकृतव्याख्यानानुसारेणैव व्याख्यानयन्ति महाधियः, न यथाक्षरसन्निवेशमात्रं, पूर्वगतसूत्रार्थसङ्ग्रहपरतया कालि-कश्रुतस्य क्वचित्सङ्क्षिप्तस्यार्थस्य महता विस्तरेण क्वचिद्विस्तरवतोऽप्यतिसङ्क्षेपेणाभिधाने अर्वाक्तनैः स्वमति (त्या) यथाव-स्थितार्थतया ज्ञातुमशक्यत्वात्, अत एवोक्तमिदमन्यत्र—"जं जह भणियं सुत्ते तहेव जइ तं वियालणा नत्थि। किं कालि-याणुयोगो दिट्ठो दिट्ठिप्पहाणेहिं ? ॥१॥" तस्मात्पूर्वसूरिकृतव्याख्यानान्नाधिकृतग्रन्थविरोधः, आह च भाष्यकृत्—"सुत्ता-भिप्पायोऽयं पयासणिज्जे तयं न उ पयासे । वक्खाणाउ विसेसो नहि संदेहादलक्खणया ॥१॥" (३४७वि.) अथोक्तप्रमाणं विषयमुलङ्घ्य कस्मात् श्रोत्रादि शब्दादिकं न गृह्णाति ?, उच्यते, सामर्थ्याभावात्, उत्कर्षतोऽपि हि श्रोत्रादीना-

मेतावत्येव शक्तिर्यद् द्वादशादिभ्य एव योजनेभ्य आगतान् शब्दादीन् गृह्णन्ति, न परतः, चक्षुरपि सातिरेकयोजनलक्षान्त-
र्व्यवस्थितं, न परतोऽपीति, तथा द्वादशभ्यो नवभ्यश्च योजनेभ्यः परतः समागतानां शब्दादिद्रव्याणां तथाविधप-
रिणामाभावाच्च, परतो हि समागताः शब्दादिपुद्गलास्तथास्वाभाव्यान्मन्दपरिणामास्तथोपजायन्ते येन स्वविषयं श्रोत्रा-
दिविज्ञानं नोत्पादयितुमीशाः, आह च भाष्यकृत्—"बारसहिंतो सोत्तं सेसाणि उ नवहिं जोयणेहिंतो। गेण्हंति पत्तमत्थं
एत्तो परतो न गेण्हंति ॥१॥ दव्वाण मंदपरिणामयाए परतो न इंदियबलं"ति, (३४८॥वि.) मनसस्तु न क्षेत्रतो विषयपरिमाणं,
पुद्गलमात्रनिबन्धनाभावात्, इह यत्पुद्गलमात्रनिबन्धनियतं न भवति न तस्य विषयपरिमाणं, यथा केवलज्ञानस्य,
न भवति च पुद्गलमात्रनिबन्धनियतं मन इति, विषयपरिमाणं हि पुद्गलमात्रनिबन्धनियततया व्याप्तं, तथाहि—यस्य
विषयपरिमाणमस्ति तत्पुद्गलमात्रनिबन्धनियतं दृष्टं, यथाऽवधिज्ञानं मनःपर्यायज्ञानं वा, तत एवं व्याप्यव्यापकभावप्र-
तिबन्धनिश्चये व्यापकाभावे व्याप्याभाव इति व्यापकानुपलब्धिरियं, आह च भाष्यकृत्—"अवरमसंखेज्जङ्गुलभा-
गातो नयणवज्जाणं ॥ संखेज्जइभागातो नयणस्स मणस्स न विसयपरिमाणं। पोग्गलमित्तनिबंधाभावातो केवलस्सेव ॥१॥"
(३४९–३५० वि.) इह 'स्पृष्टं शृणोति शब्द'मित्युक्तं, तत्र किं शब्दप्रयोगोत्सृष्टान्येव केवलानि शब्दद्रव्याणि शृणोति
उतान्यान्येव तद्वासितानि आहोश्विन्मिश्राणीति चोदकाभिप्रायमाशङ्क्य न तावत्केवलानि, तेषां वासकत्वात्, तद्योग्यद्रव्यस-
माकुलत्वाच्च सकललोकस्य, किन्तु मिश्राणि तद्वासितानि वा, न केवलानि गृह्णातीत्यमुमर्थमभिधित्सुराह—

भासासमसेढीतो सद्दं जं सुणइ मीसयं सुणइ। वीसेढी पुण सद्दं सुणेइ नियमा पराघाए ॥ ६ ॥

इन्द्रिय-
विषयमानं
शब्दश्रवणे
दिग्विदि-
शोर्भेदः
गा. ६

भाष्यते इति भाषा–वक्त्रा शब्दतयोत्सृज्यमाना द्रव्यसंहतिस्तस्याः समश्रेणयो भाषासमश्रेणयः, समग्रहणं विश्रेणिव्यवच्छेदार्थं, श्रेणयो नाम क्षेत्रप्रदेशपङ्क्तयोऽभिधीयन्ते, ताश्च सर्वस्यैव भाषमाणस्य षट्सु दिक्षु विद्यन्ते यासूत्सृष्टा सती भाषा प्रथमसमय एव लोकान्तमनुधावति, उक्तं च—"सेढी पएसपंती वदतो सवस्स छद्दिसं ताओ। जासु विमुक्का धावइ भासा पढमंमि समयंमि॥१॥ (३५२वि.)" ता इतो–गतः प्राप्तो भाषासमश्रेणीतः भाषासमश्रेणीव्यवस्थित इत्यर्थः 'शब्दं' भाषात्वेन परिणतं पुद्गलराशिं 'यं' पुरुषाश्वादिसम्बन्धिनं 'श्रृणोति' परिच्छेद्यतया गृह्णाति यत्तदोर्नित्याभिसम्बन्धात् तं मिश्रकं श्रृणोति, किमुक्तं भवति ?–भाषकव्युत्सृष्टशब्दद्रव्याणि तद्वासितापान्तरालस्थद्रव्याणि चेत्येव मिश्रं शब्दद्रव्यराशिं शृणोति, न तु वासकमेव वास्यमेव वा केवलमिति, 'वीसेढी पुण' इत्यादि, मञ्चाः क्रोशन्तीत्यादिवत् आधेये आधारोपचारात् विश्रेणिव्यवस्थितः श्रोताऽपि विश्रेणिरुच्यते, विश्रेणिः पुनः श्रोता शब्दं, पुनः शब्दग्रहणं पराघातवासितद्रव्याणामपि तथाविधशब्दपरिणामख्यापनार्थं, श्रृणोति, 'नियमात्' नियमेन 'पराघाते' वासनायां सत्यां, एतदुक्तं भवति–यानि भाषकोत्सृष्टाणि द्रव्याणि झल्लर्यादिशब्दद्रव्याणि वा तैः पराघाते–वासनाविशेषजनिते सति यानि समुत्पन्नशब्दपरिणामानि द्रव्याणि तान्येव विश्रेणिस्थः श्रृणोति, नतु भाषकाद्युत्सृष्टानि, तेषामनुश्रेणिगामित्वेन विदिग्गमनासम्भवात्, न च कुड्यादिप्रतिघातस्तेषां विदिग्गतिनिमित्तं सम्भवति, लेष्ट्वादिबादरद्रव्याणामेव तत्सम्भवात्, तेषां च सूक्ष्मत्वात्, उक्तं च—"भासासमसेढी(ढिठि)ओ तब्भासामीसियं सुणइ सद्दं। तद्दवभावियाइं अन्नाइं सुणेइ विदिसित्थो ॥ १ ॥ (३५३वि.)" केन पुनर्योगेनैषां वाग्द्रव्याणां ग्रहणमुत्सर्गो वा ? कथं वेत्येतदाशङ्क्य गुरुराह—

गिण्हइ य काइएणं निसिरइ तह वाइएण जोगेणं । एगंतरं च गिण्हइ निसिरइ एगंतरं चेव ॥ ७ ॥

कायेन निर्वृत्तः कायिकः तेन कायिकेन योगेन, योगो व्यापारः क्रियेत्यनर्थान्तरं, सर्व एव हि वक्ता कायक्रियया शब्दद्रव्याणि गृह्णाति, चशब्दस्त्वेवकारार्थः, स चावधारणे, तस्य च व्यवहितः सम्बन्धः, गृह्णाति कायिकेनैव, निसृजति उत्सृजति मुञ्चतीतियावत्, 'तथे'त्यानन्तर्यार्थः ग्रहणानन्तरमित्यर्थः, उच्यत इति वाक् वाचा निर्वृत्तो वाचिकस्तेन वाचिकेन योगेन, कथं गृह्णाति? निसृजतीति वा ?, किमनुसमयमुतान्यथेत्याशङ्कासम्भवे सति शिष्यानुग्रहार्थमाह—एकान्तरमेव गृह्णाति निसृजत्येकान्तरं चैव, यथा ग्रामादन्यो ग्रामो ग्रामान्तरं पुरुषादनन्तरः पुरुषः पुरुषान्तरं, एवमेकैकस्मात्समयादेकैक एवानन्तरसमय एकान्तरं, उक्तं च—"जह गामातो गामो गामंतरमे(वमे)ग एगाओ । एगंतरंति भन्नइ समयाओऽणंतरो समओ ॥ १" ॥ (३५५ वि०) ततोऽयमर्थः—प्रतिसमयं गृह्णाति प्रतिसमयं मुञ्चतीति गाथासङ्क्षेपार्थः ॥ अत्र कश्चिदाह—ननु कायिकेन योगेन गृह्णातीत्येतद् युक्तं, तस्यात्मव्यापाररूपत्वात्, निसृजति तु कथं वाचिकेन योगेन ?, को वाऽयं वाग्योगः ?, किं वागेव व्यापारात्मिका आहोश्चित्तद्विसर्गहेतुः कायसंरम्भः?, तत्र यदि पूर्वो विकल्पोऽसावनुपपन्नः, वाचो योगत्वायोगात्, न खलु वाक्केवला जीवव्यापारस्तस्याः पुद्गलमात्रपरिणामरूपत्वात् रसादिवत्, तथा च प्रयोगः—यः पुद्गलमात्रपरिणामरूपः स जीवव्यापाररूपो योगो न भवति, यथा रसगन्धादयः, पुद्गलमात्रपरिणामरूपा च वागिति, योगो ह्यात्मनः शरीरवतो व्यापारः, स कथं पुद्गलमात्रपरिणामरूपो भवितुमर्हति ?, अन्यच्च—न तया वाचा किञ्चिदन्यत् निसृज्यते, किन्तु सैव, ततो वाचो योगत्वे 'निसरइ तह वाइएणंती'त्येतदनुपपन्नं, अथ द्वितीयः पक्षस्तर्हि स कायव्यापार एवेति

कायिकेनैव निसृजतीत्यापन्नं अनिष्टं चैतदिति, तदसम्यक्, अभिप्रायापरिज्ञानात्, इह तनुयोगविशेष एव वाग्योगो मनोयोगश्चेति व्यवह्रियते, सर्वथा कायव्यापारशून्यस्य सिद्धस्येव तयोरसम्भवात्, तथाहि—आत्मनः शरीरव्यापारे सति येन व्यापारविशेषेण शब्दद्रव्योपादानं करोति स कायिको योगः, येन तु कायसंरम्भेण तान्येव मुञ्चति स वाचिकः, येन तु मनोद्रव्याणि मनस्त्वेन व्यापारयति स मानसः, ततः काययोग एव संव्यवहारार्थं त्रिधा विभक्त इत्यदोषः, एतदेवाक्षेपपुरस्सरं भाष्यकृदाह—"गेण्हेज्ज काइएणं किह निसिरइ वाइएण जोगेण? । को वाऽयं वायोगो? किं वाया? कायसंरंभो ॥१॥ वाया न जीवजोगो पोग्गलपरिणामतो रसादिव । न य ताए निसिरिज्जइ सच्चिय निसिरिज्जए जम्हा ॥२॥ अह सो तणुसंरंभो निसिरइ तो काइएण वत्तव्वं । तणुजोगविसेसच्चिय मणवइजोगत्ति जमदोसो ॥३॥(३५६-७-८वि.) अथवा कायव्यापारेणाहृतो यो वाग्द्रव्यसमूहः तदुपष्टम्भेन य उपजायते वाग्निसर्गहेतुर्जीवव्यापारः स वाचिको योगः, तथा कायव्यापारेणैवाहृतो योऽसौ मनोद्रव्यसमूहः तदुपष्टम्भेनोपजायमानो मनोद्रव्याणां चिन्तनहेतुर्व्यापार-विशेषः स मनोयोगः, आह च—"अहवा तणुजोगाहियवइदव्वसमूहजीववावारो । सो वइजोगो भण्णइ वाया निसिरिज्जई तेणं॥१॥ तह तणुवावाराहियमणदव्वसमूहजीववावारो । सो मणजोगो भण्णइ मन्नइ नेयं जतो तेणं ॥२॥ (३६३-४-वि.)ततः साधूक्तं—'वाचिकेन योगेन निसृजती'ति । तथा 'एकान्तरं गृह्णात्येकान्तरं च निसृजती'त्यत्र केचित् प्रथमसमये गृह्णाति द्वितीये तु प्रथमसमयगृहीतानि मुञ्चति तृतीये समये पुनः गृह्णाति चतुर्थे समये तृतीयसमयगृहीतानि मुञ्चतीत्येवमेकैकं व्यव-हितमेकान्तरमिति व्याख्यानयन्ति, तेषां विच्छिन्नरत्नावलीकल्पो ध्वनिरापद्यते, अन्तरान्तरग्रहणसमयेषु सर्वेष्वप्यश्रव

ग्रहणनिसर्गयोः सान्तरनिरन्तरविचारः

णात्, तथा श्रुतविरोधश्च, तथाहि प्रज्ञापनायां भाषापदे सूत्रमिदं—"अणुसमयमविरहियं निरंतरं गेण्हइ' इति,
अत्र च प्रतिसमयग्रहणप्रतिपादनेन प्रतिसमयनिसर्गप्रतिपादनमपि द्रष्टव्यं, गृहीतस्य द्वितीयसमयेऽवश्यं निसर्गात्, एका-
न्तरग्रहणमोक्षाभ्युपगमे चाधिकृतसूत्रविरोधः, अथ सूत्र एव साक्षादुक्तं—"संतरं निसिरइ नो निरंतरं, एगेण समएणं
गेण्हइ एगेणं समएणं निसिरइ" इत्यादि, ततः कथमधिकृतसूत्रविरोधः?, तदेतदयुक्तम्, सूत्रार्थसम्यक्परिज्ञानाभावात्,
इह निसर्गोऽपि ग्रहणापेक्ष इति सान्तरोऽभिहितः, तथाहि—यथाऽऽद्यसमयादारभ्य प्रतिसमयं ग्रहणं नैवं निसर्गः
प्रथमसमये तस्याभावादिति ग्रहणापेक्षयाऽसौ सान्तरस्तत उक्तं 'संतरं निसिरइ नो निरंतर'मिति, अथ ग्रहणमप्येवं
निसर्गापेक्षया सान्तरमापद्यते, न चैतत्सूत्रे सान्तरमभिहितं, तस्माद्यत्किञ्चिदेतद् व्याख्यानमिति, तदयुक्तम्, ग्रहणं हि
स्वतन्त्रं, प्रथमसमये निसर्गमन्तरेणापि तस्य भावात्, ततो नैवादस्तदपेक्षया सान्तरं, निसर्गस्तु ग्रहणपरतन्त्रं अगृहीतस्य
निसर्गायोगादिति पूर्वपूर्वग्रहणसमयापेक्षया सान्तरव्यपदेशः, यद्येवं तत एतत्सूत्रं कथं नीयते—एकेन समयेन गृह्णाति एकेन
निसृजतीति ?, उच्यते, सान्तरं निसृजति नो निरन्तरमित्युक्तं, एतच्चावसीयते—यत् एकेन समयेन गृह्णाति एकेन समयेन
निसृजति, किमुक्तं भवति ?—यानि यानि यस्मिन् यस्मिन् समये गृहीतानि शब्दद्रव्याणि तानि तानि तत्तद्ग्रहणसमयान-
न्तरसमये सर्वाणि निसृजति, ततो ग्रहणापेक्षया सान्तरो नो निरन्तर इति, अथवा एकेन—आद्येन समयेन गृह्णाति 'सर्वं
वाक्यं सावधारणमिष्टितश्चावधारणविधि'रिति न्यायाद् गृह्णात्येव, न तु निसृजति, द्वितीयसमयादारभ्य निसर्गस्य प्रवृत्तेः,
प्रथमसमये पूर्वगृहीतद्रव्यासम्भवात्, तथा एकेन—पर्यन्तवर्त्तिना समयेन निसृजति—निसृजत्येव, न तु गृह्णाति, भाष-

णादुपरमात्, अपान्तरालवर्त्तिषु समयेषु ग्रहणनिसर्गौ, स्थापना—

| | | | | | |
|---|---|---|---|---|---|
| ग्र | ग्र | ग्र | ग्र | ग्र | ० |
| ० | नि | नि | नि | नि | नि |

ननु ग्रहणनिसर्गप्रयत्नावात्मनः परस्परविरोधिनौ ततः कथमेकस्मिन् समये तौ युज्येते ?, नैष दोषः, एकस्मिन् समये कर्मादाननिसर्गक्रियावत् उत्पादव्ययक्रियावत् अङ्गुल्याकाशसंयोगविभागक्रियावच्च ग्रहणनिसर्गक्रियाद्वयस्यापि सद्भावोपपत्तेः, एकस्मिन् समये यथा जीवस्वाभाव्यात् द्वावुपयोगौ न भवतो 'जुगवं दो नत्थि उवओगा' इति वचनात्, क्रियास्तु बह्व्योऽपि घटन्त एव, कायवाङ्मनःक्रियाणामेकस्मिन्नपि समये युगपत्प्रवृत्तिदर्शनात्, आह च भाष्यकृत्—
"गहणनिसग्गपयत्ता परोप्परविरोहिणो कहंसमए?। समए दो उवओगा न होज्ज किरियाण को दोसो ? ॥१॥"(३४३वि.)
यदुक्तं 'गृह्णाति कायिकेन चे'त्यादि, तत्र कायिको योगः पञ्चप्रकारः—औदारिकवैक्रियाहारकतैजसकार्मणभेदात्, तत् किं पञ्चप्रकारेणापि कायिकेन गृह्णाति आहोश्विदन्यथेत्याशङ्कासम्भवे तदपनोदार्थमिदमाह—

तिविहंमि सरीरंमी जीवपएसा हवंति जीवस्स । जेहि उ गेण्हइ गहणं तो भासइ भासतो भासं ॥ ८ ॥

'त्रिविधे' त्रिप्रकारे शीर्यत इति शरीरं 'कृशॄपूकॄमंजिकुटिपटिकंडिशोडिहिंसिभ्य ईर्' इति ईरः प्रत्ययः, तस्मिन् औदारिकवैक्रियाहारकाणामन्यतरस्मिन्नित्यर्थः, जीवति—प्राणान् धारयतीति जीवस्तस्य प्रदेशा जीवप्रदेशा भवन्ति, एतावत्युच्यमाने भिक्षोः पात्रमित्यादौ षष्ठ्या भेदेऽपि दर्शनान्मा भूद् भिन्नप्रदेशतया शिष्याणामप्रदेशात्मसम्प्रत्यय इत्यत आह—जीवस्य, जीवप्रदेशा जीवस्य भवन्ति—जीवस्यात्मभूता भवन्ति, अनेन निष्प्रदेशजीववादनिराकरणमाह, सति निष्प्रदेशत्वे करणचरणोरुग्रीवाद्यवयवसंसर्गाभावप्रसक्तेः भेदाभेदविकल्पाभ्याभयोगात्, तथाहि—करादिसम्बद्ध-

जीवदेशस्योत्तमाङ्गादिसम्बद्धात्मदेशेभ्यो भेदोऽभेदो वा ?, यदि भेदस्तर्हि नियमात् जीवस्य सप्रदेशता, भिन्नाकाशदेशवर्त्तिकरचरणाद्यवयवसम्बद्धप्रदेशभावात्, अथाभेदस्तर्हि सर्वेषामपि करचरणाद्यवयवानामेकत्वप्रसङ्गः, एकस्मादप्रदेशात् जीवादभिन्नत्वात्, तथाविधैकविवक्षितावयवस्वरूपवत्, उक्तं च—"करचरणाइसु जोगो (गा) न य अपदेसे उ (सोत्ति) होइ विण्णेओ। अपएसंमि य पावइ करचरणाईणमेगत्तं ॥१॥ जो चेव उ करदेसे स एव जं होइ चरणदेसेवि। तो एगत्तं भेदे सपएसो नियमतो होइ ॥२॥"(३६५-६धर्म०) यैर्जीवप्रदेशैः किं करोतीत्यत आह—यैस्तु गृह्णाति, तुशब्दो विशेषणार्थः, किं विशिनष्टि ?–न सर्वदैव गृह्णाति, किन्तु तत्परिणामे सतीति, किं पुनर्गृह्णातीत्यत आह—'ग्रहणं' गृह्यत इति ग्रहणम्, 'कृद् बहुल'मिति वचनात् कर्म्मण्यनट्, शब्दद्रव्यसमूहमित्यर्थः, ततो गृहीत्वा 'भाषते' वक्ति, भाषत इति भाषकः, भाषणक्रियाविशिष्ट इत्यर्थः, अनेन निष्क्रियात्मवादव्यवच्छेदमाह, सति तस्मिन्निष्क्रियत्वेनाप्रच्युतानुत्पन्नस्थिरैकरूपत्वाद्भाषणाभावप्रसक्तेः, किं भाषत इत्याह–भाष्यते इति भाषा तां भाषां, ननु ततो भाषते भाषकः इत्यनेनैव गतार्थत्वात् भाषाग्रहणमतिरिच्यते, तदसम्यक्, अभिप्रायापरिज्ञानात्, भाषाग्रहणं हि भाष्यमाणैव भाषा, न पूर्वं नापि पश्चादित्यस्यार्थस्य ख्यापनार्थमतो नातिरिक्तमित्यदोषः ॥ अथ कतमत् त्रिविधं शरीरं यद्गतैर्जीवप्रदेशैर्वाग्द्रव्याणि गृहीत्वा भाषको भाषत इत्यत आह—

त्रिविधशरीरेण ग्रहणं वाचः सत्यादिभेदाः गा. ८-९

ओरालियवेउव्वियआहारतो गेण्हइ मुयइ भासं। सच्चं सच्चामोसं मोसं च असच्चमोसं च ॥ ९ ॥

इह औदारिकशब्देन शरीरतद्वतोरभेदोपचारात् मत्वर्थीयलोपात् (वा) औदारिकशरीरवान् जीव एव गृह्यते, एवं वैक्रि-

वान् वैक्रियः आहारकवान् आहारकः, असौ औदारिकादिर्गृह्णाति—आदत्ते शब्दप्रायोग्यानि द्रव्याणीति गम्यते, गृहीत्वा भाषात्वेन परिणमय्य मुञ्चति—निसृजति भाष्यत इति भाषा तां—शब्दपरिणतद्रव्यसंहतिं, किंविशिष्टामित्याह—'सत्यां' इह सन्तो—मुनयस्तेषामेव मुक्तिमार्गप्रवृत्ततया तात्त्विकशिष्टत्वात् तेभ्यो हिता—निरवद्यानुष्ठानरूपतया मुक्तिमार्गानुकूलत्वादुपकारिणी सत्या, इह यत् यस्मै हितं तत्तत्र साध्विति साधुत्वविवक्षायां 'तत्र साधा'विति यः प्रत्ययः, अथवा सन्तो—मूलोत्तरगुणास्तेषामेव मुक्तिमार्गतया अतिप्रशस्यत्वात् तेभ्यो हिता तदाराधनात् पूर्ववत्साधुत्वविवक्षायां यः प्रत्ययः, यदिवा सन्तो—जीवादयः पदार्थास्तेभ्यो हिता यथावस्थिततत्स्वरूपप्रत्यायकत्वात् सत्या, अत्रापि पूर्ववत् यः प्रत्ययः, यथा अस्ति जीवः सदसद्रूपो देहमात्रव्यापीत्यादिरूपा, तद्विपरीताऽसत्या, यथा नास्ति जीवः एकान्तसद्रूपो वेत्यादिरूपा, तथा सत्यामृषा धवखदिरपलाशादिमिश्रेषु बहुष्वशोकवृक्षेष्वशोकवनमेवेदमित्यादिरूपा, अत्र हि कतिपयाशोकवृक्षाणां सद्भावात्सत्यता अन्येषामपि धवादीनां सद्भावान्मृषता, व्यवहारनयमतापेक्षयेदमुच्यते, परमार्थतः पुनरियमसत्येति, यथाऽभिहितार्थायोगात्, तथा या न सत्या नापि मृषा सा असत्यामृषा, इह विप्रतिपत्तौ सत्यां वस्तुप्रतितिष्ठाशया सर्वज्ञमतानुसारेण या भाषा प्रोच्यते यथा अस्ति जीवः सदसद्रूप इत्यादि सा किल सत्या परिभाविता, आराधकत्वात्, यया पुनर्विप्रतिपत्तौ सत्यां सर्वज्ञमतोत्तीर्णमुच्यते यथा नास्ति जीव एकान्तनित्यो वेति साऽसत्या, विराधनीत्वात्, या पुनर्वस्तुप्रतितिष्ठासामन्तरेण स्वरूपमात्रप्रतिपादनपरा यथा हे देवदत्त ! घटमानय गां देहि मह्यमित्यादिरूपा सा असत्यामृषा, इयं हि स्वरूपमात्रप्रतिपादनफलत्वात् न यथोक्तलक्षणा सत्या नापि मृषा, ततः असत्या चासावमृषा च असत्यामृषेति, आसां

च स्वरूपमुदाहरणयुक्तं प्रज्ञापनासूत्रादवसातव्यं ॥ नन्वौदारिकादिर्गृह्णाति मुञ्चति च भाषामित्युक्तं, ततः सा मुक्ता सती उत्कर्षतः कियत् क्षेत्रं व्याप्नोति ?, उच्यते, समस्तमेव लोकं, यद्येवं तर्हि—

"कइहिं समएहिं लोगो भासाए निरंतरं तु होइ फुडो। लोगस्स य कइभागे कइ भागो होइ भासाए ॥१०॥"

कतिभिः समयैर्लोक्यत इति लोकः, चतुर्दशरज्ज्वात्मकः क्षेत्रलोकः परिगृह्यते, भाषया निरन्तरमेव भवति स्पृष्टो-व्याप्तः पूर्ण इत्यनर्थान्तरं, लोकस्य च कतिभागे कतिभागो भवति भाषायाः ? ॥ अत्रोच्यते—

"चउहिं समएहिं लोगो भासाए निरंतरं तु होइ फुडो। लोगस्स य चरिमंते चरिमंतो होइ भासाए ॥ ११ ॥"

चतुर्भिः समयैर्लोको भाषया निरन्तरमेव भवति स्पृष्टो—व्याप्तः, किं सर्वयैव भाषया उत विशिष्टया ?, उच्यते, विशिष्टया, तथाहि—इह कश्चिद्वक्ता मन्दप्रयत्नो भवति कश्चिन्महाप्रयत्नः, तत्र यो मन्दप्रयत्नो वक्ता स यथारूपाणि शब्दद्रव्याणि गृहीतवान् तथारूपाण्येवाभिन्नानि निसृजति, तानि च तथा निसृष्टानि असङ्ख्येयखण्डशो भिद्यते, भिद्यमानानि च उपजातमन्दशब्दपरिणामानि सङ्ख्येयानि योजनानि गत्वा शब्दपरिणामं विजहति [ १७५० ], यस्तु महाप्रयत्नो वक्ता, स खल्वादानप्रयत्नेनापि भित्त्वैव गृह्णाति, गृहीत्वा च निसर्गप्रयत्नेन भूयो भित्त्वा निसृजति, तानि च तथा निसृष्टानि सूक्ष्मत्वादतिप्रभूतत्वाच्च तदन्यद्रव्यवासनोत्पादपाटवरहितान्यसङ्ख्येयखण्डशो मन्दप्रयत्ननिसृष्टत्वात् परिस्थूराणि, अत एव तदन्यद्रव्यवासनोत्पादपाटवरहितान्य शब्दपरिणाममपि तेषामत्युत्कटमुत्पादयति, उत्पाद्य च तदन्यानि बहूनि द्रव्याणि वासयन्ति तदन्यद्रव्य-वासकतया षट्स्वपि दिक्षु अनन्तगुणवृद्ध्या परिवर्द्धमानानि लोकान्तमाप्नुवन्ति, शेषं तु तत्पराघातवासितानि द्रव्याणि

कोई मंदपयत्तो निसिरइ सयलाइं सव्वदव्वाइं । अन्नो तिव्वपयत्तो निसिरइ सो
लोकमापूरयन्ति, आह च भाष्यकृत्—"कोई मंदपयत्तो निसिरइ सयलाइं सव्वदव्वाइं । अन्नो तिव्वपयत्तो निसिरइ सो ... जोयणे गंतुं ॥२॥ भिन्नाइं
भिंदिउं ताइं ॥१॥ गंतुमसंखेज्जाओ अवगाहणवग्गणा अभिन्नाइं । भिज्जंति धंसमिंति य संखेज्जे जोयणे गंतुं ॥२॥ भिन्नाइं
सुहुमयाए अणंतगुणवड्डियाइं लोगंतं । पावेंति पूरयंति(य) भासाएँ निरंतरं लोगं ॥३॥ (३८०-१-२)" अत्र 'असंखेज्जाओ
अवगाहणवग्गणाओ' इति अवगाहना नाम एकैकस्य भाषाद्रव्यस्कन्धस्याधारभूता असङ्ख्येयप्रदेशात्मकक्षेत्रविभागरूपास्तासां
वर्गणा अवगाहनावर्गणाः असङ्ख्येया—असङ्ख्येययोजनप्रमिताः, अत एव प्रागुक्तं असङ्ख्येयानि योजनानि गत्वेति, शेषं सुगमं;
चतुःसमयग्रहणे त्रिपञ्चसमयग्रहणमपि प्रतिपत्तव्यं, तुलादीनां मध्यग्रहणे आद्यन्तग्रहणवत्, विचित्रा वा सूत्रगतिः, उक्तं च—
"चउसमयमज्झगहणे तिपंचगहणं तुलाइमज्झस्स । जह गहणे पज्जंतग्गहणं चित्ता व सुत्तगई ॥१॥" (३८७वि.) अत्र कथं
त्रिभिः समयैर्लोको भाषया निरन्तरमापूरितो भवति?, उच्यते, इह यदा लोकमध्यस्थो वक्ता भवति तदा तेन निसृष्टानि
भाषापरिणतानि द्रव्याणि प्रथमसमय एव षट्सु दिक्षु लोकान्तमनुधावंति, जीवसूक्ष्मपुद्गलानामनुश्रेणिगमनात्, द्विती-
यसमये तु त एव षट् दण्डाः चतुर्दिक्षु एकैकशोऽनुश्रेण्या वासितद्रव्यैः प्रसरन्तः षट् मन्थानो भवंति, तृतीयसमये तु
पृथक् पृथक् तदन्तरालपूरणात् पूर्णो भवति लोकः, एवं त्रिभिः समयैर्भाषया लोकः स्पृष्टो भवति, यदा तु स्वयंभूरम-
णपरतटवर्त्तिनि लोकान्ते अलोकस्यात्यन्तनिकटीभूय भाषको वक्ति त्रसनाड्या वा बहिश्चतसृणां दिशामन्यतमस्यां दिशि
तदा चतुर्भिः समयैरापूर्यते, कथं ?, उच्यते, इह यदा त्रसनाड्या बहिर्व्यवस्थितो वक्ति तदा एकेन समयेनान्तर्नाडौ
शब्दद्रव्याण्यनुप्रविशन्ति, शेषसमयभावना च पूर्ववत्, यदापि लोकान्ते स्वयम्भूरमणपरतटवर्त्तिनि चतसृणां दिशाम-

न्यतमस्यां दिशि व्यवस्थितो भाषकः तदा वामदक्षिणपृष्ठोर्द्ध्वाधोदिशामलोकेन स्खलितत्वात् भाषाद्रव्याणां प्रथमसमये लोकमध्ये प्रवेशः, शेषास्तु त्रयः समयास्तथैव, यदा तु त्रसनाड्या बहिर्विदिग्व्यवस्थितो भाषको वक्ति तदा पुद्गलानामनुश्रेणिगमनात् समयद्वयेन शब्दद्रव्याणामन्तर्नाडीप्रवेशस्तद्यथा–प्रथमसमये विदिशो दिशिगमनं द्वितीये त्वन्तर्नाडीप्रवेशः, शेषं समयत्रयं पूर्ववदित्येवं पञ्चभिः समयैः सकललोकापूरणं, उक्तं च–“पढमसमए च्चिय जतो मुक्काइं जंति छद्दिसिं ताइं । बीयसमयंमि तेच्चिय छद्दंडा हुंति छम्मंथा ॥ मंथंतरेहि तइए समए पुण्णेहिं पूरिओ लोगो । चउहिं समएहिं पूरइ, लोकंते भासमाणस्स ॥२॥ दिसिवट्ठियस्स पढमो तिगमे ते चेव सेसया तिन्नि । विदिसिट्ठियस्स समया पंचाइगमंमि जं दोन्नि ॥३॥(३८४-५-६वि.)” अत्रातिगमः–प्रवेशः, शेषं प्रतीतं। अन्ये जैनसमुद्घातगत्या सकललोकापूरणमभिमन्यन्ते, तद्यथा–प्रथमसमये ऊर्द्ध्वाधोमात्रगमनात् दण्डो द्वितीयसमये कपाटः तृतीयसमये मन्थाश्चतुर्थसमयेऽपान्तरालापूरणमिति, उक्तं च–“जइणसमुग्घायगइए केई भासंति चउहिं समएहिं । पूरइ सयलो लोगो अण्णे पुण तीहिं समएहिं ॥१॥” इति, तदेतदयुक्तम्, तेषां ह्याद्यसमये भाषाद्रव्याणामूर्द्ध्वाधोगमनात् शेषदिक्षु तेषामभावस्तदभावाच्च पराघातवासितद्रव्याणामप्यसम्भवान्मिश्रशब्दश्रवणासम्भवः, अथ च–'भासासमसेढीतो सद्दं जं सुणइ मीसयं सुणइ ।' इत्यनेनाविशेषेण दिक्षु मिश्रशब्दश्रवणमुक्तमिति सूत्रविरोधः, अथ 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणते'तिवचनादूर्द्ध्वाधोदिग्द्वयवर्त्तिदण्ड एव मिश्रशब्दश्रवणमुक्तं द्रष्टव्यं, न शेषदिक्ष्विति,नन्वेवमपि त्रिभिः समयैर्लोकापूरणमापद्यते, न चतुःसमयसम्भवः, कथमिति चेत्, उच्यते, स खलु दण्ड ऊर्द्ध्वाधो गच्छन् अविशेषेण चतसृष्वपि दिक्षु शब्दप्रायोग्यद्रव्याणि

त्रिसमयादिना भाषया लोकव्याप्तिः

॥ २६ ॥

पराहन्ति पराघाताच्च शब्दपरिणामं भजन्ते, ततो द्वितीयसमये तानि प्रसरमधिरोहन्ति मन्थानं साधयन्ति, तृतीयसमये
तु तदन्तरालापूरणात् सकललोकमापूरयन्ति, उक्तं च—"न समुग्घायगईएँ मीसयसवणं मयं च दंडंमि। जइ तोवि
तीहिं पूरइ समएहिं जओ पराघातो ॥१॥ (३९२ वि०)" अथ जैनसमुद्घात इव चतुर्भिरेव समयैर्भाषयाऽपि लोकापूरणं
भविष्यति, ततः को दोषः?, तदसमीचीनं, सम्यक्सिद्धान्तापरिज्ञानात्, जैनसमुद्घाते हि जीवप्रदेशा एव स्वरूपेण लोकमा-
पूरयन्ति, न पुनस्तत्र कस्यापि पराघातोऽस्ति, ततो न तत्र द्वितीयसमये मन्थाः, किन्तु कपाट एव केवलः, अन्यच्च—केवली
भवोपग्राहिकर्मणामुपघाताय केवलिसमुद्घातमारभते, स च केवलचक्षुषा परिभाव्यमान इत्थमेव क्रियमाणस्तेषां भवो-
पग्राहिकर्म्मणामुपघाताय प्रभवति, नान्यथा, यदिवा दण्डकपाटादिक्रमेणैव जीवप्रदेशैः सकललोकपूरणं भवति, नान्यथा,
तथास्वाभाव्यादिति केवलिसमुद्घातस्य चतुःसमयता, भाषापुद्गलानां त्वनुश्रेणिगमनं पराघातेन द्रव्यान्तरवासक-
तास्वभावश्च सकललोकव्याप्तौ हेतुः, ततः प्रथमसमय एव ऊर्ध्वाधो दण्डे कृते द्वितीयसमये चतसृष्वपि दिक्षु अनुश्रेणिगमनात्
पराघातेन तदन्यद्रव्यवासकत्वाच्च ते मन्थानं साधयन्ति, तृतीये तु समये त्वन्तरालापूरणतः समस्तलोकव्याप्तिरिति
त्रिसमयतैवात्रापद्यते, न चतुःसमयतेति, अथ योऽसावचित्तमहास्कन्धः प्रज्ञापनादिषु वर्ण्यते स जीवप्रदेशापूरणात्मको
न भवत्यचित्तमहास्कन्धत्वात्, किन्तु पुद्गलमयः, ततो यथाऽसौ पुद्गलमयोऽपि नियमाच्चतुःसामयिक एव, एवं भाष-
याऽप्यापूरणं लोकस्य चतुःसामयिकमेव भविष्यति, न त्रिसामयिकमिति को दोषः?, तदयुक्तम्, अचित्तमहास्कन्धो
सू. ७ हि विश्रसापरिणामेन भवति, विश्रसापरिणामश्च यद्यपि विचित्रस्तथापि स केवलचक्षुषा सर्वदेव तथास्वाभाव्यादित्थमे-

चोपजायमान उपलब्ध इत्यग्नेरुष्णत्वमिव न पर्यनुयोगमर्हति, अन्यच्च-नासौ पराघातेनान्यद्रव्याणामात्मपरिणाममुत्पादयति, किन्तु स्वपुद्गलैरेव लोकमापूरयति, ततोऽसौ चतुःसमय एव, यदि पुनस्तत्रापि पराघातो भवेत्तर्हि सोऽपि भाषया लोकापूरणमिव त्रिसामयिको भवेत्, न चतुःसामयिक इति, आह च भाष्यकृत्-"खंधोऽवि वीससाए न पराघाओ उ तेण चउसमयो। अह होज्ज पराघातो हविज्ज तो सोऽवि तिसमइओ ॥१॥(३९४वि०)" अन्ये त्वभिदधति-प्रथमसमये तावदूर्ध्वदिशि दण्डं करोति, द्वितीयसमये तत्र मन्थानमधो दिशि पुनर्दण्डं, तृतीयसमये ऊर्ध्वदिश्यन्तरालापूरणमधोदिशि तु मन्थानं, चतुर्थसमये तु तत्राप्यन्तरालापूरणात् समस्तमपि लोकं भाषाद्रव्यैरापूरयति इति, तदपि नागमक्षमं, क्वचिदप्यागम एवमश्रवणात्, नापि युक्तिमत्, काऽत्र खलु युक्तिर्यदनुश्रेणिगमनस्वभावानां पुद्गलानामेकयैव ऊर्ध्वदिशा गमनं नाधोदिशा नापि शेषाभिः पूर्वादिदिग्भिरिति यत्किञ्चिदेतत्, उक्तं च-"एगदिसमादिसमये दंडं काऊण चउहिं पूरेइ। अण्णे भणंति तंपि य नागमजुत्तिक्खमं होइ ॥१॥(३९५वि०)" यदुक्तम्-'लोकस्य च कतिभागे कतिभागो भवति भाषाया' इति, तत्रोत्तरमाह-लोकस्य च क्षेत्रगणितमपेक्ष्य चरमान्ते असङ्ख्येयभागो भवति भाषाया समस्तलोकव्यापिन्याः, इयमत्र भावना-त्रिसमयव्याप्तौ चतुःसमयव्याप्तौ पञ्चसमयव्याप्तौ वा नियमेन प्रथमद्वितीयसमयोर्लोकासङ्ख्येयभागे भाषाया असङ्ख्येयो भागो भवति, तथाहि-त्रिसमयव्याप्तौ प्रथमसमये दण्डषट्कं भवति, द्वितीयसमये तु षट् मन्थानः, ते च दण्डादयो यद्यपि दैर्घ्येण लोकान्तस्पर्शिनस्तथापि वक्तृमुखविनिर्गतत्वात् तत्प्रमाणानुसारतो बाहल्येन चतुरङ्गुलादिमाना भवन्ति, चतुरादीनि चाङ्गुलानि लोकाकाशासङ्ख्येयभागवर्त्तीन्येवेति त्रिसमयव्याप्तौ प्रथमद्वितीयसमययोर्लोकासङ्ख्येयभागे

भाषायाः असङ्ख्येयभागः, चतुःसमयव्याप्तावपि प्रथमसमये लोकमध्यमात्रप्रवेशो द्वितीयसमये तु दण्डसमुद्भवः, पञ्चस-
मयव्याप्तौ तु प्रथमसमये भाषाद्रव्याणां विदिशो दिशि गमनं द्वितीयसमये लोकमध्यमात्रप्रवेश इत्युभयत्रापि प्रथम-
समये द्वितीयसमये च लोकासङ्ख्येयभागे भाषाया असङ्ख्येयो भागः, त्रिसमयव्याप्तौ तृतीये समये भाषायाः समस्तलोकव्याप्तिः,
चतुःसमयव्याप्तौ तृतीयसमये लोकस्य सङ्ख्येये भाषायाः सङ्ख्येयो भागः, कथमिति चेत्, उच्यते, स्वयम्भूरमणपश्चिमप-
रतटवर्तिनि लोकान्ते त्रसनाड्या वहिर्वा पश्चिमदिशि स्थित्वा ब्रुवतो भाषकस्य प्रथमसमये चतुरङ्गुलादिवाहल्यो रज्जु-
दीर्घो दण्डः तिरश्चीनं गत्वा स्वयंभूरमणपूर्वपरतटवर्त्तिनि लोकान्ते लगति, ततो द्वितीयसमये तस्माद्दण्डादूर्ध्वाधश्चतुर्दश-
रज्जूच्छ्रितः पूर्वापरतिरश्चीनतया रज्जुविस्तृतः पराघातवासितद्रव्याणां दण्डो निर्गच्छति, लोकमध्ये तु पराघातवासि-
तद्रव्याणामेव चतुरङ्गुलादिवाहल्यं रज्जुविस्तीर्णं दण्डद्वयं विनिर्गत्य स्वयम्भूरमणदक्षिणोत्तरवर्त्तिलोकान्तयोर्लगति, एवं
च सति चतुरङ्गुलादिवाहल्यं सर्वतो रज्जुविस्तीर्णं लोकमध्ये वृत्तं छत्वरं सिद्धं भवति, तृतीयसमये तूर्ध्वाधोव्यवस्थित-
दण्डाच्चतुर्दिक्प्रसृतः पराघातवासितद्रव्यसमूहो मन्थानं साधयति, लोकमध्यव्यवस्थितसर्वतोरज्जुविस्तीर्णछत्वरादूर्ध्वाधः
प्रसृतः पुनः स एव त्रसनाडीं समस्तामपि पूरयति, एवं च सति सर्वापि त्रसनाडी ऊर्ध्वाधोव्यवस्थितदण्डमथिभावेन
तदधिकं च लोकस्य पूरितं भवति, एतावच्च क्षेत्रं लोकस्य सङ्ख्याततमो भागः, तथा च सति चतुःसामयिक्या व्याप्तेः
तृतीयसमये लोकस्य सङ्ख्येयतमे भागे भाषाया अपि समस्तलोकव्यापिन्याः सङ्ख्याततमो भागः, पञ्चसामयिक्यास्तु
व्याप्तेः तृतीयसमये लोकासङ्ख्येयतमे भागे भाषाया असङ्ख्येयतमो भागः, तस्यां तस्य दण्डसमयत्वात्, तत्र चोक्तप्रकारे-

णासङ्ख्येयभागवर्त्तित्वस्य भावादिति, चतुर्थे समये चतुःसामयिक्यां व्याप्तौ मध्यान्तरालपूरणात् समस्तलोकव्याप्तिः, पञ्चसामयिक्यां तु व्याप्तौ चतुर्थसमये लोकस्य सङ्ख्येयभागे भाषायाः सङ्ख्येयो भागः, तस्यां तस्य मथिसमयत्वात्, तस्य च सङ्ख्येयभागवर्त्तित्वस्य प्रागेव भावितत्वात्, पञ्चमसमये तु पञ्चसामयिक्यां व्याप्तौ मध्यान्तरालपूरणात् समस्तलोकव्याप्तिः, एतच्च महाप्रयत्नवक्तृनिसृष्टद्रव्यापेक्षया द्रष्टव्यं, मन्दप्रयत्नवक्तृनिसृष्टानि तु लोकासङ्ख्येयभाग एव वर्त्तन्ते, दण्डादिक्रमेण तेषां लोकापूरणासम्भवात्, त्रिसमयव्याप्तौ चतुःसमयव्याप्तौ पञ्चसमयव्याप्तौ च त्र्यादिषु समयेष्वापूरिते लोके लोकस्य चरमान्ते भाषाया अपि चरमान्तो भवति, किमुक्तं भवति?—लोके निष्ठां गते भाषाऽपि निष्ठां यातीति, उक्तं च—"आपूरियंमि लोगे दोण्हवि लोगस्स तह य भासाए। चरमंते चरमंतो चरमसमयंमि सव्वत्थ ॥१॥ (३९१ वि०)" अस्याक्षरगमनिका— 'सर्वत्र' त्रिसामयिक्यां चतुःसामयिक्यां पञ्चसामयिक्यां च व्याप्तौ चरमे समये—त्र्यादिरूपे आपूरिते लोके द्वयोरपि, एतदेव व्याचष्टे—लोकस्य तथा भाषायाश्चरमान्ते चरमान्तो भवति, तत उक्तम्—"लोगस्स य चरमंते, चरमंतो होइ" भासाए इति, इह 'तत्त्वभेदपर्यायैर्व्याख्या', तत्र तत्त्वतो भेदतश्च मतिज्ञानस्वरूपमुक्तम्, इदानीं नानादेशजविनेयगणसुखप्रतिपत्तये तत्पर्यायशब्दानभिधित्सुराह—

"ईहा अपोह वीमंसा, मग्गणा य गवेसणा। सण्णा सई मई पण्णा, सव्वं आभिणिबोहियं ॥ १२ ॥"

'ईह चेष्टायां' ईहनमीहा—सतामर्थानामन्वयिनां व्यतिरेकिणां च पर्यालोचना, तथा अपोहनं अपोहो निश्चय इत्यर्थः, विमर्शनं विमर्शः, अपायात् पूर्वं ईहाया उत्तरः प्रायः शिरःकण्डूयनादयः पुरुषधर्म्मा अत्र घटन्ते इति सम्प्रत्ययः,

लोकभाषाभागव्याप्तिः मतेरेकार्थाः गा. १२

तथा अन्वयधर्मान्वेषणं मार्गणा, व्यतिरेकधर्मालोचनं गवेषणा, तथा संज्ञानं संज्ञा—व्यञ्जनार्थावग्रहोत्तरकालो मतिविशेषः, स्मरणं स्मृतिः—पूर्वानुभूतार्थालम्बनप्रत्ययः, मननं मतिः—कथञ्चिदर्थपरिच्छित्तावपि सूक्ष्मधर्मपर्यालोचनरूपा बुद्धिः, तथा प्रज्ञानं प्रज्ञा—विशिष्टक्षयोपशमजन्या प्रभूतवस्तुगतयथावस्थितधर्मालोचनरूपा मतिः, सर्वमिदमाभिनिबोधिकं, मतिज्ञानमित्यर्थः, एवं किञ्चिद्भेदाद्भेदः प्रदर्शितः, परमार्थतस्तु सर्व एवैते मतिवाचकाः पर्यायशब्दाः। तदेवं तत्त्वभेदपर्यायैर्मतिज्ञानस्वरूपं व्याख्याय सम्प्रति नवभिरनुयोगद्वारैः पुनस्तद्रूपनिरूपणार्थमाह—

"संतपयपरूवणया दव्वपमाणं च खित्तफुसणा य। कालो अ अंतर भागो भावे अप्पाबहुं चेव ॥ १३ ॥

गइ इंदिए य काए जोए वेए कसायलेसासु। सम्मत्तनाणदंसण संजय उवयोग आहारे ॥ १४ ॥

भासग-परित्त-पज्जत्त-सुहुम सन्नी य होइ भवचरिमे। आभिणिबोहियनाणं मग्गिज्जइ एसु ठाणेसु ॥ १५ ॥

सच्च तत्पदं च सत्पदं तस्य प्ररूपणं—गत्यादिद्वारेषु विचारणं सत्पदप्ररूपणं सत्पदप्ररूपणस्य भावः—सत्पदप्ररूपणशब्दस्य प्रवृत्तिनिमित्तं सत्पदप्ररूपणता, तदेव सत्पदप्ररूपणमिति भावः, किमुक्तं भवति?— मतिज्ञानमिति यत्सत्पदं तस्य गत्यादिभिर्द्वारैः प्ररूपणमिति, अथवा सद्विषयं पदं सत्पदं—तदेव मतिज्ञानमितिरूपं पदं, मतिज्ञानस्य सत्त्वात् प्रक्रान्तत्वाच्च, शेषं पूर्ववत्, नन्वसत्पदस्यापि किं प्ररूपणा क्रियते येनेदमुच्यते—'सत्पदप्ररूपणे'ति?, उच्यते, क्रियते खलु खरविषाणादेरप्यसत्पदस्य प्ररूपणा, ततः सद्ग्रहणमिति, अथवा सन्ति च तानि पदानि च—स्थानानि सत्पदानि गत्यादीनि तैः प्ररूपणं मतेः सत्पदप्ररूपणं, शेषं पूर्ववत्, द्रव्यप्रमाणं जीवप्रमाणमिति वक्तव्यं, किमुक्तं भवति?—एकस्मिन् समये

मतिज्ञानं कियन्तः प्रतिपद्यन्ते ? इति, सर्वे वा कियन्तः ? इति, चशब्दः समुच्चये, तथा क्षेत्रं वक्तव्यं, कियति क्षेत्रे मतिज्ञानं सम्भवति ?, तथा स्पर्शना च वक्तव्या, यथा कियत् क्षेत्रं मतिज्ञानिनः स्पृशन्ति, अथ क्षेत्रस्य स्पर्शनायाश्च कः प्रतिविशेषः ?, उच्यते, यत्रावगाहस्तत् क्षेत्रं, स्पर्शना तु तद्बाह्यतोऽपि भवति, तथा परमाणुमधिकृत्योक्तम्—"एगपएसोगाहो सत्तपएसा य से फुसणा (४३२ वि०)।" च शब्दः पूर्ववत्, कालः—स्थितिलक्षणो मतिज्ञानस्य वाच्यः, चशब्दः पूर्ववत्, अन्तरं च—एकदा प्रतिपद्य वियुक्तः कियता कालेन पुनरपि तत् प्रतिपद्यते इत्येवंरूपं तस्य वक्तव्यं, तथा मतिज्ञानिनः शेपज्ञानिनां कतिभागे वर्त्तन्ते इत्येवं भागो वक्तव्यः, तथा कस्मिन् भावे मतिज्ञानिनो वर्त्तन्ते इत्येवं भावो भणनीयः, तथा अल्पबहुत्वं वक्तव्यं, अथ भागद्वारादेवायमर्थोऽवगतस्ततः किमनेन द्वारेण ?, न, अभिप्रायापरिज्ञानात्, इह मतिज्ञानिनामेव पूर्वप्रतिपन्नप्रतिपद्यमानकानां परस्परमल्पबहुत्वं वक्तव्यं, भागस्तु शेपज्ञानापेक्षया इति, एप गाथासमुदायार्थः। सम्प्रति प्रागुपन्यस्तगाथाद्वयेनाभिनिवोधिकज्ञानस्य सत्पदप्ररूपणताद्वारावयवार्थः प्रतिपाद्यते—आभिनिवोधिकज्ञानं किमस्ति नास्तीति ?, अस्ति, यद्यस्ति क्व तत् ?, तत्र गतिमङ्गीकृत्यालोच्यते, सा गतिश्चतुर्विधा, तद्यथा—नरकगतिस्तिर्यग्गतिः मनुष्यगतिर्देवगतिश्च, तत्र चतुष्प्रकारायामपि गतौ आभिनिवोधिकज्ञानस्य पूर्वप्रतिपन्ना नियमतो विद्यन्ते, प्रतिपद्यमानास्तु विवक्षितकाले भाज्याः—कदाचिद् भवन्ति कदाचिन्नेति, तत्र (ते) प्रतिपद्यमाना अभिधीयन्ते ये तत्प्रथमतया आभिनिवोधिकं प्रतिपद्यन्ते, ते प्रथमसमयवर्त्तिनः प्रतिपद्यमानाः, शेपेषु समयेषु तु पूर्वप्रतिपन्नाः, तथा 'इंदिए' त्ति इन्द्रियाण्यङ्गीकृत्य मृग्यते, तत्र पञ्चेन्द्रियाः पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानास्तु भाज्याः, द्वित्रिचतुरिन्द्रि-

यास्तु करणापर्याप्तावस्थायां पूर्वभवायातं सास्वादनसम्यक्त्वमङ्गीकृत्य पूर्वप्रतिपन्नाः सम्भवन्ति; नतु प्रतिपद्यमानकाः,
एकेन्द्रियास्तूभयविकलाः, 'उभयाभावो एगिंदिएसु संमत्तलद्धीए' इतिवचनात् । तथा 'काए'इति कायानधिकृत्य विचा-
र्यते, पृथिव्यप्तेजोवायुवनस्पतित्रसकायभेदात् कायाः षट्, तत्र त्रसकाये पूर्वप्रतिपन्ना नियमतो विद्यन्ते, प्रतिपद्यमानास्तु
भाज्याः, शेषकायेषु तु पृथिव्यादिषु पञ्चसु उभयाभावः, एतच्च सिद्धान्ताभिप्रायेण, कार्मग्रन्थिकाभिप्रायेण लब्धि-
पर्याप्तबादरपृथिव्यब्वनस्पतिकरणापर्याप्तेषु पूर्वप्रतिपन्नाः सम्भवन्ति, सास्वादनसम्यक्त्वस्य तदभिप्रायेण तेषु भावात्,
इतरे तु सर्वथा नैव, तेजोवायवस्तूभयविकला एव । तथा 'जोए'इति योगानधिकृत्य विचार्यते—योगास्त्रयः, तद्यथा—मनो-
योगो वाग्योगः काययोगश्च, तत्र त्रिषु योगेषु समुदितेषु पञ्चेन्द्रियवद्वक्तव्यं, मनोरहितवाग्योगिषु विकलेन्द्रियवत्,
केवलकाययोगिष्वेकेन्द्रियवत् । तथा 'वेए'इति वेदानधिकृत्य विचारणा, वेदाश्च त्रयः, तद्यथा—स्त्रीवेदः पुरुषवेदो नपुं-
सकवेदश्च, तत्र त्रिष्वपि वेदेषु विवक्षितकाले पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानकास्तु भाज्याः, कषायाः क्रोध-
मानमायालोभाख्याः प्रत्येकमनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनभेदभिन्नाः, तत्राद्येष्वनन्तानुबन्धिषु क्रोधा-
दिषु सास्वादनसम्यक्त्वमङ्गीकृत्य पूर्वप्रतिपन्नो लभ्यते, न प्रतिपद्यमानकः, शेषेषु तु द्वादशकषायेषु पूर्वप्रतिपन्ना नियमतः
सन्ति प्रतिपद्यमानकास्तु भाज्याः, तथा 'लेसासु'इति लेश्यासु चिन्त्यते, तत्र श्लेषयन्त्यात्मानमष्टविधेन कर्मणेति लेश्याः,
कायाद्यन्यतमयोगवतः कृष्णादिद्रव्यसम्बन्धादात्मनः कृष्णादिपरिणामाः, तत्रोपरितनीषु तिसृषु लेश्यासु पूर्वप्रतिपन्ना
नियमतः सन्ति, प्रतिपद्यमानकास्तु भाज्याः, आद्यासु कृष्णादिकासु तिसृषु पूर्वप्रतिपन्नाः सम्भवन्ति न त्वितरे, सम्य-

क्त्वद्वारे निश्चयव्यवहारनयाभ्यां विचारः, तत्र व्यवहारनयो मन्यते–मिथ्यादृष्टिरज्ञानी च सम्यक्त्वज्ञानयोः प्रतिपद्यमानको भवति, न तु सम्यक्त्वज्ञानसहितः, निश्चयनयस्तु ब्रूते–सम्यग्दृष्टिर्ज्ञानी च सम्यक्त्वज्ञाने प्रतिपद्यते, न तु मिथ्यादृष्टिरज्ञानी च, आह च भाष्यकृत्—"सम्मत्तनाणरहियस्स नाणमुप्पज्जइत्ति ववहारो। नेच्छइयनओ भासइ उप्पज्जइ तेहिं सहियस्स ॥ १ ॥ (४१४ वि०)" तत्र व्यवहारः परपक्षदूषणाय स्वपक्षसाधनाय च प्रत्यवतिष्ठते–यदि नाम सम्यग्दृष्टिर्ज्ञानी च सम्यक्त्वज्ञाने प्रतिपद्यते इत्यभ्युपगमस्ततस्तत्सम्यक्त्वं ज्ञानं च जातमसावुत्पादयति, न च जातं भूयो जायते, जातत्वादेव, निष्पन्नघटवत्, प्रयोगश्चात्र–यद्विद्यमानं तत्केनचिदपि कर्त्तुं न शक्यं, यथा पूर्वनिष्पन्नो घटः, विद्यमाने च सम्यग्दृष्टेः सम्यक्त्वज्ञाने इति, विपक्षे बाधकं प्रमाणमनवस्थाप्रसङ्गः क्रियावैफल्यं च, तथाहि—यदि कृतमपि क्रियते तर्हि कृतत्वाविशेषात् भूयो भूयः करणप्रसङ्गः, पूर्वनिष्पन्नत्वेन क्रियायाः फलाभावान्नैष्फल्यमिति, अन्यच्च–प्रत्यक्षबाधा, तथाहि—सर्वमपि कार्यं घटादि पूर्वमभूतं भवत् दृश्यते, नतु भूतं, अथ क्रियाकालनिष्ठाकालयोरभेदादेवमुच्यते सम्यग्दृष्टिर्ज्ञानी च सम्यक्त्वं ज्ञानं च प्रतिपद्यते इति, तदप्ययुक्तं, क्रियाकालनिष्ठाकालयोरभेदस्याभावात्, प्रत्यक्षत एव घटादिक्रियाकालस्य दीर्घतयोपलभ्यमानत्वात्, न खल्वारम्भ एव शिवकाद्यद्धायां वा घटादिकार्यं पश्यामः, किन्तु विवक्षितक्रियाकालपर्यन्ते, एवमत्रापि न श्रवणाद्यारम्भ एव ज्ञानं, किन्तु तदन्त इति मिथ्यादृष्टिरज्ञानी च सम्यक्त्वज्ञानयोः प्रतिपत्ता; न सम्यग्दृष्टिर्ज्ञानी चेति, उक्तं च—"ववहारमयं जायं न जायए भावतो कयघडोव। अहवा कयंपि किज्जइ किज्जउ निच्चं न य समत्ती ॥१॥ किरियावेफल्लंचिय पुव्वमभूयं च दीसए होंतं। दीसइ दीहो य जतो किरियाकालो घडादीणं ॥२॥

नारंभेच्चिय दीसइ न सिवादद्धाइ दीसइ तदंते। इय न सवणाइकाले नाणं जुत्तं तदंतंमि ॥ २ ॥ (४१५-६-७ वि०) एवमुक्ते निश्चयनय आह—नाजातं खलु जायते किञ्चिदपि, अभावत्वात्, खपुष्पवद्, विपक्षे बाधकं प्रमाणं खरविषाणादेरप्युत्पत्तिप्रसङ्गोऽजातत्वाविशेषाद्, आह च भाष्यकृत्—"निच्छइओ नाजायं जायऽभावत्ततो खपुप्फं व। अह व अजायं जायइ जायउ तो खरविसाणंपि ॥१॥ (४१८ वि०)" योऽपि कृतत्वाविशेषात् सदाकरणप्रसङ्ग इति दोष आपादितः स इतरत्रापि समानः, तथाहि—यद्यसत् क्रियते तर्हि नित्यमेव क्रियतामसत्त्वाविशेषात्, न च वाच्यं कार्योत्पत्तौ विरमणभावात् सदाकरणाप्रसङ्ग इति, कार्यस्यैवोत्पत्त्ययोगात्, खरविषाणस्येवात्यन्तासत उत्पादयितुमशक्यत्वात्, तथा च सति क्रियाया अपि वैफल्यं, क्रियाफलस्य कार्योत्पादस्यासम्भवात्, यदप्युक्तं 'सर्वमपि कार्यं घटादि पूर्वमभूतं भवत् दृश्यते, ननु भूतमपि,' तदप्यसम्यक्, अभूतं हि यदि भवत् दृश्यते तर्हि खरविषाणमपि किं नोपलभ्यते ?, प्रागसत्त्वाविशेषात्, यदप्यवादीत् 'क्रियाकालनिष्ठाकालयोरभेदस्याभावादि'ति, तदप्यश्लीलं, क्रियाकालनिष्ठाकालयोरभेदस्य व्यवस्थितत्वात्, अन्यथा कार्यकाले न क्रियाभाव इति क्रियाया अभावाविशेषात् पूर्ववत् कार्यानुत्पत्तिप्रसङ्गः, एवं च यदुच्यते 'प्रत्यक्षत एव घटादिक्रियाकालस्य दीर्घतयोपलभ्यमानत्वा'दिति तद् बालिशजल्पितं, प्रतिसमयं ह्यन्यत् अन्यत् कार्यमुपजायते, तथाहि—शिवकोऽन्यत्कार्यमन्यतमत् स्थासोऽन्यत् कुशूल इत्यादि, ततो यदि परस्परविलक्षणानां प्रतिसमयान्यान्योत्पद्यमानकार्याणां दीर्घः क्रियाकालो दृश्यते ततो घटस्य किमायातं ?, नहि शेषकार्यक्रियाकालो घटकार्यक्रियाकालः, उक्तं च—"पइसमउप्पण्णाणं परोप्परविलक्खणाण सुबहूणं। दीहो किरियाकालो जइ दीसइ किं च (थ) कुंभस्स ? ॥१॥(४२०वि०)" यद-

प्यवोचत–'न खल्वारम्भ एव शिविकाद्यच्छायां वा घटादिकार्यं पश्याम' इति, तदपि स्थूलमतितासूचकं, प्रथमसमये हि न घटादिकार्यमारब्धं, किन्तु चक्रमस्तकमृत्पिण्डारोपणादि, तच्च तस्मिन् समये दृश्यते, यत् नारब्धं घटादि तत्कथं दृश्यते ?, न खल्वन्यारम्भेऽन्यत् दृश्यते, यथा घटः पटारम्भे, शिवकादयोऽपि न घट इति तदच्छायामपि तस्य दर्शनाभावः, आह च—"अन्नारंभे अन्नं किह दीसउ जह घडो पडारंभे ?। सिवगादयो न घडओ किह दीसउ सो तदच्छाए ? ॥१॥ (४२१ वि०)" यच्चैतदुक्तम्–'किन्तु विवक्षितक्रियाकालपर्यन्ते' इति, तत्समीचीनमेव, विवक्षितकार्यनिमित्तभूतकार्यकोटिक्रियाकालपर्यन्त एव तस्यारब्धत्वात्, यस्तु लोको व्यवहरति–एतावान् घटस्य करणे कालो लग्न इति स घटार्थितया घटनिमित्तप्रतिसमयोत्पन्नकार्यक्रियाकालं घटे लगयति, न च विवेचयति स्थूलमतित्वात्, एवं भवानपि स्थूलमतितया लोकव्यवहारपतितः सन् न किमपि विचारयति, आह च—"पइसमयकज्जकोडीनिरविक्खो घडगयाभिलासोऽसि। पइसमयकज्जकालं थूलमइ ! घडंमि लाएसि ॥२॥ (४२३ वि०)" एवमत्रापि श्रवणादीनि प्रतिसमयभावीनि परस्परविलक्षणानि कार्याणि, ततो न तत्काले सम्यक्त्वोत्पादो ज्ञानोत्पादो वाऽन्यारम्भेऽन्यस्योत्पादाभावात्, यस्मिंस्तु समये सम्यक्त्वोत्पादारम्भो ज्ञानारम्भो वा तस्मिन् समये तदुत्पद्यत एवेति। सम्यक्त्वद्वारे व्यवहारनयमतेन सम्यग्दृष्टिराभिनिबोधिकज्ञानस्य पूर्वप्रतिपन्न एव, नतु प्रतिपद्यमानकः, सम्यक्त्वज्ञानयोर्युगपल्लाभात्, तत्काले च क्रियाया अभावात्, तदभावे च प्रतिपद्यमानकत्वायोगादिति, निश्चयनयमतेन तु सम्यग्दृष्टिराभिनिबोधिकस्य पूर्वप्रतिपन्नः प्रतिपद्यमानकश्च लभ्यते, क्रियायाः कार्यनिष्ठायाश्च युगपद्भावाद्, एतच्च प्रागेव समर्थितमिति, ज्ञानद्वारे मतिश्रुतावधिमनःपर्यायकेवलभेदात् पञ्चधा ज्ञानं,

मतिश्रुतावधिमनःपर्यायज्ञानिनः आभिनिबोधिकस्य
तत्रापि व्यवहारनिश्चयनयाभ्यां विचारः, तत्र व्यवहारनयमतेन मतिश्रुतावधिमनःपर्यायज्ञानिनः आभिनिबोधिकस्य केवली न तु
पूर्वप्रतिपन्ना एव, नतु प्रतिपद्यमानकाः, न ह्येतन्मतेन ज्ञानी सन् मतिज्ञानं प्रतिपद्यते किन्त्वज्ञानी इति, केवली न तु
पूर्वप्रतिपन्नो नापि प्रतिपद्यमानकः; तस्य क्षायोपशमिकज्ञानातीतत्वात्, तथा मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानवन्तस्तु कदाचि-
द्विवक्षितकाले प्रतिपद्यमानका भवन्ति, न तु पूर्वप्रतिपन्नाः, निश्चयनयमतेन तु मतिश्रुतावधिज्ञानिनः पूर्वप्रतिपन्ना
नियमतः सन्ति, प्रतिपद्यमानका अपि सम्भवन्ति, सम्यग्दर्शनलाभसमय एव मत्यादिलाभस्य सम्भवात्, क्रियाकाल-
निष्ठाकालयोश्चाभेदात्, मनःपर्यायज्ञानिनस्तु पूर्वप्रतिपन्ना एव, न प्रतिपद्यमानकाः, पूर्वं सम्यक्त्वलाभकाले प्रतिपन्न-
मतिज्ञानस्यैव पश्चात् यत्यवस्थायां मनःपर्यायज्ञानसद्भावात्, केवलिनां तूभयाभावः; मत्यादिज्ञानव्यवच्छेदेन केवलज्ञान-
भावात्, मत्याद्यज्ञानवन्तस्तु न पूर्वप्रतिपन्ना, नापि प्रतिपद्यमानकाः, प्रतिपत्तिक्रियाकाले मत्याद्यज्ञानाभावात्, क्रिया-
कालनिष्ठाकालयोरभेदात्, अज्ञानभावे च प्रतिपत्तिक्रियाया अभावात्, दर्शनद्वारे चक्षुरचक्षुरवधिकेवलभेदात् दर्शनं
चतुर्द्धा, तत्राद्यदर्शनत्रये लब्धिमङ्गीकृत्य पूर्वप्रतिपन्ना नियमतः प्राप्यन्ते, प्रतिपद्यमानकास्तु भजनीयाः, तदुपयोगं
त्वाश्रित्य पूर्वप्रतिपन्ना एव, न तु प्रतिपद्यमानकाः, मतिज्ञानस्य लब्धित्वात्, लब्ध्युत्पत्तेश्च दर्शनोपयोगे निषिद्धत्वात्,
'सव्वाओ लद्धीओ सागारोवओगोवउत्तस्स उववज्जंति' इति वचनात्, केवलदर्शनिनां तूभयाभावः, देशदर्शनव्यवच्छेदेन
केवलज्ञानदर्शनभावात्, संयतद्वारे संयत आभिनिबोधिकस्य पूर्वप्रतिपन्नो नियमाल्लभ्यते, प्रतिपद्यमानको भजनया, ननु
सम्यक्त्वलाभावस्थायामेव मतिज्ञानस्य प्रतिपन्नत्वात् संयतः कथं प्रतिपद्यमानकोऽवाप्यते ?, सत्यमेतत्, केवलं योऽतिवि-

शुद्धत्वात् सम्यक्त्वं चारित्रं च युगपत्प्रतिपद्यते स तस्यामवस्थायां प्रतिपद्यमानस्य संयमस्याप्रतिपन्नत्वात् संयतः आभिनिबोधिकज्ञानस्य प्रतिपद्यमानको भवति, उक्तं चास्यैव मूलावश्यकचूर्णौ–'नत्थि चरित्तं सम्मत्तविहूणं दंसणं तु भणियज्जं' भजनामेवाह–'सम्मत्तचरित्ताइं जुगवं पुव्वं च सम्मत्तं,' उपयोगद्वारे उपयोगो द्विधा–साकारोऽनाकारश्च, तत्र पञ्च ज्ञानानि त्रीण्यज्ञानानि साकारः, चत्वारि दर्शनानि अनाकारः, तत्र साकारोपयोगे पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानकास्तु विवक्षितकाले भाज्याः, अनाकारोपयोगे तु पूर्वप्रतिपन्ना एव, नतु प्रतिपद्यमानकाः, अनाकारोपयोगे लब्ध्युत्पत्तेरभावात्, आहारद्वारे आहारकाः पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानास्तु विकल्पनीयाः, विवक्षितकाले अनाहारका अपान्तरालगतौ पूर्वप्रतिपन्नाः सम्भवन्ति, प्रतिपद्यमानकास्तु न भवन्त्येव, अधुना भाषकद्वारम्–तत्र भाषालब्धिसम्पन्ना भाषकाः, ते भाषमाणा अभाषमाणा वा पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानकास्तु विवक्षितकाले भजनीयाः, भाषालब्धिशून्याश्चोभयविकलाः, ते ह्येकेन्द्रिया एव, तेषां चोभयाभावः प्राग्वत्। परीत्तद्वारे परीत्ताः–प्रत्येकशरीरिणः परीत्तीकृतसंसारा वा, परीत्तीकृतसंसारा नाम स्तोकावशेषसंसाराः, एते उभयेऽपि पूर्वप्रतिपन्नाः नियमतो लभ्यन्ते, प्रतिपद्यमानकास्तु भजनीयाः, अपरीत्तास्तु साधारणशरीरिणोऽपार्द्धपुद्गलपरावर्त्तादप्युपरि संसारा वा, ते मिथ्यादृष्टित्वादुभयेऽप्युभयविकलाः। पर्याप्तकद्वारे षड्भिराहारादिभिः पर्याप्तिभिर्ये पर्याप्ताः ते पूर्वप्रतिपन्ना नियमतो विद्यन्ते, विवक्षितकाले प्रतिपद्यमानकास्तु भजनीयाः, अपर्याप्तकास्तु षट्पर्याप्त्यपेक्षया पूर्वप्रतिपन्नाः सम्भवन्ति, न त्वितरे। सूक्ष्मद्वारे सूक्ष्माः खलूभयविकलाः, बादरास्तु पूर्वप्रतिपन्ना नियमतः सन्ति, इतरे तु विवक्षितकाले भाज्याः, अधुना संज्ञिद्वारं–तत्रेह

ते च पूर्वप्रतिपन्ना नियमतो लभ्यन्ते, इतरे तु भजनीयाः विवक्षिते काले, अस-
संज्ञिनो दीर्घकालिकोपदेशेन परिगृह्यन्ते, ते च पूर्वप्रतिपन्ना नियमतो लभ्यन्ते, इतरे तु भजनीयाः संज्ञिवत्, अभवसिद्धिकास्तूभयशून्याः।
ज्ञिनस्तु प्रतिपन्नाः सम्भवन्ति नत्वितरे इति । भव इति द्वारं, तत्र भवसिद्धिकाः संज्ञिवत्, अभवसिद्धिकास्तूभयशून्याः। प्रतिपद्यमानकास्तु
चरमद्वारे चरमो भवो भविष्यति येषां ते अभेदोपचाराच्चरमाः, ते च पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानकास्तु
विवक्षितकाले भाज्याः, अचरमास्तूभयविकलाः, आभिनिबोधिकज्ञानमेतेषु गत्यादिमार्गणास्थानेषु मार्ग्यते, तच्च मार्गित-
मुक्तप्रकारेणेति ॥ साम्प्रतमाभिनिबोधिकजीवद्रव्यप्रमाणमुच्यते–तत्र प्रतिपत्तिमङ्गीकृत्य विवक्षितकाले कदाचिद्भवन्ति
कदाचिन्नेति, यदि भवन्ति तर्हि जघन्यत एको द्वौ त्रयो वा उत्कर्षतस्तु क्षेत्रपल्योपमासङ्ख्येयभागप्रदेशराशिप्रमाणाः,
पूर्वप्रतिपन्नास्तु जघन्यतः क्षेत्रपल्योपमासङ्ख्येयभागप्रदेशराशिप्रमाणाः उत्कर्षतस्तु तेभ्यो विशेषाधिकाः, उक्तं च–
"खेत्तपलिओवमासंखभाग उक्कोसतो पवज्जेज्जा। पुव्वपवन्ना दोसुवि पलियासंखेज्जइमभागा ॥१॥" (त्रि०४२९) अत्र 'दोसु-
वि'त्ति द्वयोरपि पदयोर्जघन्यपदे उत्कृष्टपदे च, नवरं जघन्यपदादुत्कृष्टपदं विशेषाधिकं द्रष्टव्यं, अन्यथोत्कृष्टपदत्वायोगात् ॥
इदानीं क्षेत्रद्वारम्–तत्र नानाजीवानङ्गीकृत्य सर्वेऽप्याभिनिबोधिकज्ञानिन एकत्र पिण्डिता लोकासङ्ख्येयभागमेव व्याप्नु-
वन्ति, आह च मूलटीकाकृत्–"सर्वे एवाभिनिबोधिकज्ञानिनो लोकस्यासङ्ख्येयभागे वर्त्तते" इति, एकजीवस्त्विलिकागत्या
गच्छन्नूर्ध्वमनुत्तरसुरेषु सप्तसु चतुर्दशभागेषु रज्जुप्रमाणेषु वर्त्तते, तेभ्यो वाऽऽगच्छन्, अधस्तु षष्ठीं पृथिवीं गच्छन् ततो
वा प्रत्यागच्छन् पञ्चसु चतुर्दशभागेषु, नातः परमधः क्षेत्रमस्ति, यस्मात् सम्यग्दृष्टेरधः सप्तमनरकगमनं प्रतिषिद्धं, षष्ठी-
मपि पृथिवीं यावत्सैद्धांतिकमतेन विराधितसम्यक्त्वो गृहीतेनापि क्षायोपशमिकेन सम्यक्त्वेन कश्चिदुत्पद्यते, तत उक्त-

मधः पञ्चसु चतुर्दशभागेष्विति, आह च भाष्यकृत्—"खेत्तं हवेज्ज चउदस भागा सत्तोवरिं अहे पंच। इलियागईएँ विग्गहगयस्स गमणेऽहवाऽऽगमणे ॥१॥ (वि०४३०)" कार्मग्रन्थिकाभिप्रायेण तु वैमानिकदेवेभ्योऽन्यत्र तिर्यङ्‌ मनुष्यो वा वान्तेनैव क्षायोपशमिकेनोत्पद्यते, न गृहीतेन, सप्तमनरकपृथिव्यां पुनरुभयमतेनापि वान्तेनैव, आह—अधःसप्तमनरकपृथिव्यामपि सम्यग्दर्शनलाभस्य प्रतिपादितत्वात् तत आगच्छतः पञ्च चतुर्दशभागा अधिका अपि क्षेत्रस्य लभ्यन्ते, ततः कथमुक्तं पञ्चसु चतुर्दशसु भागेष्विति?, तदप्ययुक्तं, सप्तमनरकपृथिव्याः सम्यग्दृष्टेरागमनस्याप्यभावात्, कथं?, यस्मात् तत उद्वृत्तास्तिर्यक्ष्वेवागच्छन्ति, देवनारकाश्च सम्यग्दृष्टयो मनुष्येष्विति, उक्तं च—"आगमणंपि निसिद्धं चरमाओ जंति जं तिरिक्खेसुं। सुरनारगा य सम्मद्दिट्ठी जं एंति मणुएसुं ॥१॥"(वि०४३१) अधुना स्पर्शनाद्वारम्—तत्र क्षेत्रस्पर्शनयोरयं विशेषः—यत्रावगाहस्तत् क्षेत्रं, स्पर्शना तु ततोऽतिरिक्ता, यथेह परमाणोरेकप्रदेशं क्षेत्रं सप्तप्रदेशा च स्पर्शना, उक्तं च—"अवगाहणाइरित्तंपि फुसई बाहिं जहाणुणोऽभिहियं। एगपएसं खेत्तं सत्तपएसा य से फुसणा ॥१॥"(वि०४३२) एतच्च प्रागप्यभिहितं ॥ कालद्वारे उपयोगमधिकृत्य एकस्य अनेकेषां च जघन्यत उत्कर्षतश्चान्तर्मुहूर्त्तमात्र एव कालः, लब्धिमङ्गीकृत्य जघन्येनैकस्यान्तर्मुहूर्त्तं उत्कर्षतः षट्षष्टिसागरोपमाणि अधिकानि, कथमिति चेत्, उच्यते, इह कश्चित्साधुर्मत्यादिज्ञानान्वितो देशोनां पूर्वकोटीं यावत् प्रव्रज्यां परिपाल्य विजयवैजयन्तजयन्तापराजितविमानानामन्यतमस्मिन् विमाने उत्कृष्टं त्रयस्त्रिंशत्सागरोपमपरिमाणं देवायुरनुभूय पुनरप्रतिपतितमत्यादिज्ञान एव मनुजेषूत्पन्नो देशोनां पूर्वकोटीं प्रव्रज्यां विधाय तदेव विजयादिषूत्कृष्टमायुः संप्राप्य पुनरपि अप्रतिपतितमत्यादिज्ञान एव मनुष्येषु पूर्वकोटीं जीवित्वा सिद्ध्यति,

मतौ द्रव्यप्रमाणक्षेत्रस्पर्शनाः

एवं विजयादिषु वारद्वयं गतस्य, अथवा अच्युतदेवलोके द्वाविंशतिसागरोपमस्थितिकेषु देवेषु त्रीन् वारान् गतस्य तानि षट्षष्टिसागरोपमाणि अधिकानि भावनीयानि, अधिकं चेह नरभवसम्बन्धि पूर्वकोटित्रयं पूर्वकोटिचतुष्टयं वा द्रष्टव्यं, नानाजीवापेक्षया तु सर्वकालं, न खलु असौ कालोऽस्ति यत्राभिनिबोधिकलब्धिमतशून्यो भवति लोक इति, उक्तं च–“लद्धीवि जहन्नेणं एगस्सेवं परा इमा होइ । अह सागरोवमाइं छासट्ठी साइरेगाइं ॥ १ ॥ दो वारे विजयाइसु गयस्स तिन्निऽच्चुए अहव ताइं । अइरेगं नरभवियं नाणाजीवाण सवद्धा॥२॥” ( वि० ४३५–४३६ ) साम्प्रतमन्तरद्वारम्–तत्रैकजीवमधिकृत्याभिनिबोधिकज्ञानस्यान्तरं जघन्येनान्तर्मुहूर्त्तं, कथमिति चेत्, उच्यते, इह यदा कश्चिज्जीवः सम्यक्त्वसहितं मतिज्ञानमवाप्य प्रतिपत्य चान्तर्मुहूर्त्तं मिथ्यात्वे स्थित्वा पुनरपि तदावरणकर्म्मक्षयोपशमात् सम्यक्त्वसहितं तदवाप्नोति तदा जघन्यमन्तरमन्तर्मुहूर्त्तं मतिज्ञानस्य, उत्कर्षतस्त्वपार्द्धपुद्गलपरावर्त्तः, स चाशातनाप्रचुरस्यावसातव्यः, उक्तं च–“तित्थयरपवयणसुयं आयरियं गणहरं महड्ढियं । आसायंतो बहुसो अणंतसंसारिओ भणिओ॥१॥(वि०४३७)” नानाजीवानपेक्ष्यान्तराभावः, आभिनिबोधिकज्ञानिभिर्लोकस्य सर्वदैवाशून्यत्वात्, उक्तं च–“एगस्स जहन्नेणं अंतरमंतोमुहुत्तमुक्कोसं । पोग्गलपरियट्टद्धं देसूणं दोसबहुलस्स ॥१॥ (वि०४३८) जमसुन्नं तेहिं तत्तो नाणाजीवाणमंतरं नत्थि ।” भाग इति द्वारं, तत्र मतिज्ञानिनः शेषज्ञानिनामज्ञानिनां चानन्ततमे भागे वर्त्तते, शेषज्ञानिनो हि सिद्धकेवलिसहिता अज्ञानिनस्तु वनस्पतिसहिताः अनन्ताः, आभिनिबोधिकज्ञानिनस्तु सर्वलोकेऽप्यसङ्ख्याता एवेति, आह च–“मइनाणं सेसाणं जीवाणमणंतभागंमि”(       ) ॥इति अथ भावद्वारं, तत्र मतिज्ञानिनः क्षायोपशमिके भावे वर्त्तन्ते, मत्यादिचतुष्टयस्य क्षायोपशमिकत्वात् ॥ सम्प्रत्यल्पबहुत्व-

मतौ कालान्तरभागभावाः

द्वारम्–तच्च आभिनिबोधिकज्ञानिनामेव पूर्वप्रतिपन्नप्रतिपद्यमानानां परस्परं द्रष्टव्यं, शेषज्ञान्यपेक्षया अल्पबहुत्वस्य भागद्वार एवान्तर्गतत्वात्, तत्र सद्भावे सति सर्वस्तोकाः प्रतिपद्यमानकाः तेभ्यः पूर्वप्रतिपन्ना जघन्यपदिनोऽसङ्ख्यातगुणाः तेभ्योऽप्युत्कृष्टपदिनः पूर्वप्रतिपन्ना विशेषाधिका इति ॥ सम्प्रति यथाव्यावर्णितमतिभेदसङ्ख्याप्रदर्शनद्वारेणोपसंहरन्नाह–

॥ ४४ ॥ आभिणिबोहियनाणे अट्ठावीसं हवंति पयडीओ ।

आभिनिबोधिकज्ञानेऽष्टाविंशतिर्भवन्ति प्रकृतयः, प्रकृतयो भेदाः इत्यनर्थान्तरं, कथमष्टाविंशतिः प्रकृतयो भवन्तीति चेत्, उच्यते, इह चतुर्द्धा व्यञ्जनावग्रहः, तस्य नयनमनोवर्जेन्द्रियसम्भवात्, अर्थावग्रहः षोढा, सर्वेन्द्रियमनस्सु तस्य सम्भवात्, एवं षोढा ईहा षोढा अपायः षोढा धारणा, सर्वसङ्कलनयाऽष्टाविंशतिर्भेदा, ननु प्रागेवावग्रहादिनिरूपणायां 'अत्थाणं ओग्गहण' मित्यादावेताः प्रकृतयः प्रदर्शिता एव किमर्थं पुनः प्रदर्श्यन्ते, नैष दोषः, तत्र हि सूत्रे न सङ्ख्यानियम उक्तः, इह तु सङ्ख्यानियमेन प्रतिपादनमित्यपौनरुक्त्यं ॥ इदं च मतिज्ञानं चतुर्विधम्, तद्यथा–द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र च द्रव्यतः सामान्यादेशेन मतिज्ञानी सर्वद्रव्याणि धर्मास्तिकायादीनि जानाति न विशेषादेशेन, ॥ ४४ ॥ किमुक्तं भवति?–सामान्यप्रकारेण असङ्ख्येयप्रदेशात्मको लोकव्यापी अमूर्त्तः प्राणिनां पुद्गलानां च गतिपरिणामपरिणतानां गत्युपष्टम्भहेतुर्धर्मास्तिकायः असङ्ख्येयप्रदेशात्मक एव लोकव्यापी अमूर्त्तः प्राणिपुद्गलानां स्थितिपरिणामपरिणतानां स्थित्युपष्टम्भहेतुरधर्मास्तिकायः अनन्तप्रदेशात्मको लोकालोकव्यापी अमूर्त्तोऽवकाशदानहेतुराकाशास्तिकाय इत्यादिरूपेण षडपि द्रव्याण्यवबुद्ध्यते न तु सर्वविशेषैः, सर्वपर्यायाणां केवलिगम्यत्वात्, उक्तं च–“तं पुण

चउविहं नेयभेदतो तेण जं तदुवउत्तो । आएसेणं सवं दवाइ चउविहं मुणइ ॥ १ ॥ आएसोत्ति पगारो ओघादेसेण सबदवाइं । धम्मत्थियाइयाइं जाणइ न उ सवभेदेणं ॥ २ ॥" ( वि०४०२-४०३ ) एवं सामान्यादेशेन मतिज्ञानी क्षेत्रतो लोकालोकं जानाति कालतः सर्वकालं, इह यद्यपि क्षेत्रकालौ सामान्येन द्रव्यान्तर्गतौ तथापि निवासमात्रपर्यायमधिकृत्य क्षेत्रं वर्त्तनादिरूपतामधिकृत्य कालो भेदेन रूढ इति पृथगुपादानम्, भावत औदयिकादीन् पञ्च भावान्, उक्तं च- "खेत्तं लोगालोगं, कालं सबद्धमहव तिविहंपि । पंचोदइयाईए भावे जं नेयमेवइयं ॥ १ ॥" (वि०४०४) तदेवमुक्तं मतिज्ञानम्, साम्प्रतमवसरप्राप्तं श्रुतज्ञानमतस्तत्प्रतिपिपादयिषुरिदमाह—

सुयणाणे पयडीओ वित्थरतो आवि वोच्छामि ॥ १६ ॥

श्रुतज्ञानं- पूर्वंव्युत्पादितशब्दं तस्मिन् प्रकृतयो- भेदास्ताः 'विस्तरतः' प्रपञ्चेन चशब्दात् सङ्क्षेपतश्च, अपिशब्दः सम्भावने स चैतत् सम्भावयति-तदनन्तरं-अवधिप्रकृतीश्च वक्ष्ये-अभिधास्ये । सम्प्रति ता एव श्रुतप्रकृतीर्दर्शयति—

पत्तेयमक्खराइं अक्खरसंजोग जत्तिया लोए । एवइया सुयनाणे पयडीओ होंति नायवा ॥ १७ ॥

एकमेकं प्रति प्रत्येकमक्षराणि-अकारादीनि अनेकानेकभेदानि, तद्यथा-अकारः सानुनासिको निरनुनासिकश्च, पुनरेकैकस्त्रिधा-उदात्तोऽनुदात्तः स्वरितश्चेति षोढा अकारः, एवमाकारः प्लुतश्चत्येष्टादशावर्णभेदाः, एवमिवर्णादिष्वपि यथा-सम्भवं भेदजातमभिधानीयं, तथा अक्षराणां संयोगा अक्षरसंयोगा द्व्यादयो यावन्तो लोके यथा घटः पट इत्यादि व्याघ्रः स्त्री इत्यादि, एते चानन्ताः, ननु सङ्ख्येयानि अकारादीन्यक्षराणि ततस्तेषां संयोगा अपि सङ्ख्येया एव घटन्ते कथमनन्ता इति?,

उच्यते, इह पुद्गलास्तिकायादिकमभिधेयं, पुद्गलास्तिकायादिकं च परस्परविलक्षणमनन्तं च, तद्यथा—परमाणुर्द्विप्रदेशिकस्त्रिप्रदेशिको यावदनन्ताणुक इत्यादि, अभिधेयभेदे चाभिधानस्यापि भेदः, अभिधानभेदस्याभिधेयभेदहेतुकत्वात्, एकत्रापि चाभिधेयेऽभिधेयधर्मभेदतोऽनेकाभिधानप्रवृत्तिर्यथा परमाणुर्निरंशो निरवयवो निष्प्रदेशो निर्भेदः, तथा द्व्यणुको द्व्यंशो द्विप्रदेशो द्विभेदो द्व्यवयव इत्यादि, न चैते ध्वनयः सर्वथैकाभिधेयवाचकाः सर्वशब्दानां भिन्नप्रवृत्तिनिमित्तत्वात्, एवं सर्वद्रव्येषु सर्वपर्यायेषु च यथायोगं भावनीयं, ततो भवन्त्यनन्ता अक्षरसंयोगाः, 'एतावत्यः' इयत्परिमाणाः प्रकृतयः श्रुतज्ञाने भवन्ति ज्ञातव्याः ॥ सम्प्रति सामान्यरूपतयोपदर्शितानामनन्तानां श्रुतज्ञानप्रकृतीनां यथावद्भेदेन प्रतिपादनसामर्थ्यमात्मनः खलु अपश्यन्नाह—[ ग्रं० २००० ]

"कत्तो मे वण्णेउं सत्ती सुयनाणसव्वपयडीओ । चोद्दसविहनिक्खेवं सुयनाणे आवि वोच्छामि ॥ १८ ॥"

कुतो मे—मम वर्णयितुं—प्रतिपादयितुं शक्तिः—सामर्थ्यं ?, नैवेत्यर्थः, काः ?—'श्रुतज्ञानसर्वप्रकृतीः' प्रकृतयो—भेदाः सर्वाश्च ताः प्रकृतयश्च सर्वप्रकृतयः श्रुतज्ञानस्य सर्वप्रकृतयः श्रुतज्ञानसर्वप्रकृतयस्ताः, कथं न शक्तिरिति चेत्, उच्यते, इह ये ग्रन्थानुसारिणो मतिविशेषास्तेऽपि श्रुतमिति प्रतिपादिताः, उक्तं च—'तेविय मईविसेसा सुयनाणब्भंतरे जाण ।' (          ) तांश्चोत्कृष्टश्रुतधरोऽप्यभिलाप्यानपि न सर्वान् भाषितुं समर्थः, तेषामनन्तत्वादायुषः परिमितत्वाद्वाचः क्रमवर्त्तित्वाच्च, आह च भाष्यकृत्—"जावंतो वयणपहा सुआणुसारेण केइ लब्भंति । ते सव्वे सुअनाणं भेआणंता मइविसेसा ॥ १॥ ( वि० २२६५ ) उक्कोसयसुअनाणी विजाणमाणोवि तेऽभिलप्पेऽवि । न तरइ सव्वे वोत्तुं न पहुप्पइ जेण कालो से ॥ २ ॥ ( वि०१४२३ )" ततोऽ

शक्तिस्तस्माच्चतुर्दशविधनिक्षेपं, निक्षेपणं निक्षेपो—नामादिन्यासः चतुर्दशविधश्चासौ निक्षेपश्च चतुर्दशविधनिक्षेपः तं, 'श्रुतज्ञाने' श्रुतज्ञानविषयं, चशब्दात् श्रुताज्ञानविषयमपिशब्दादुभयविषयं च, तत् श्रुतज्ञाने—सम्यक्श्रुते श्रुताज्ञाने—असंज्ञिमिथ्याश्रुते उभयश्रुते—दर्शनविशेषपरिग्रहादक्षरानक्षरादिरूपे वक्ष्ये—अभिधास्ये, उक्तं च—"नाणंमि सुए चोद्दसविहं चसद्देण तहय अन्नाणे । अविसद्देणुभयंमिवि किंचि जहासंभवं वोच्छं ॥ १ ॥" (वि०४५३) सम्प्रति चतुर्दशविधश्रुतनिक्षेपस्वरूपोपदर्शनार्थमाह—

"अक्खर सण्णी सम्मं साईयं खलु सपज्जवसियं च । गमियं अंगपविट्ठं सत्तवि एए सपडिवक्खा ॥ १९ ॥"

अक्षरादीनि सप्त द्वाराणि अनक्षरादिप्रतिपक्षसहितानि चतुर्दश भवन्ति, सर्वत्र च 'सूचनात् सूत्र'मितिकृत्वा श्रुतशब्दो द्रष्टव्यः, अक्षरश्रुतमनक्षरश्रुतमित्यादि, तत्र अक्षरमिति 'क्षर सञ्चलने' न क्षरतीत्यक्षरं, तच्च ज्ञानं—चेतना, न खल्विदमनुपयोगेऽपि प्रच्यवते ततोऽक्षरमिति भावः, इत्थंभूतभावाक्षरकारणत्वादकारादिकमप्यक्षरमभिधीयते, कारणे कार्योपचारात्, अथवा अर्थान् क्षरति न च क्षयमुपयातीत्यक्षरं, तच्च समासतस्त्रिविधं, तद्यथा—संज्ञाक्षरं व्यञ्जनाक्षरं लब्ध्यक्षरं चेति, तत्र संज्ञाक्षरमक्षराकारविशेषः, यथा घटिकासंस्थानो धकारः, कुरुटिसंस्थानश्चकार इत्यादि, तच्च ब्राह्म्यादिलिपीविधानादनेकविधं, तथा व्यञ्जनाक्षरं—व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं, व्यञ्जनं च तदक्षरं च व्यञ्जनाक्षरं, तच्चेह सर्वमेव भाष्यमाणमकारादि हकारान्तं, अर्थाभिव्यञ्जकत्वात्, तथा योऽक्षरोपलम्भस्तल्लब्ध्यक्षरं, तच्च इन्द्रियमनोनिमित्तं श्रुतग्रन्थानुसारि ज्ञानं तदावरणक्षयोपशमो वा, तत्र संज्ञाक्षरं व्यञ्जनाक्षरं च द्रव्याक्षरं, श्रुतज्ञानाख्य-

भावाक्षरकारणत्वात्, लब्ध्यक्षरं तु भावाक्षरं विज्ञानात्मकत्वात्, अक्षरं च तत् श्रुतं च अक्षरश्रुतं ॥ उक्तमक्षरश्रुतम्। इदानीमनक्षरश्रुतस्वरूपमभिधित्सुराह—

"ऊससियं नीससियं निच्छूढं खासियं च छीयं च। निस्सिंघियमणुसारं अणक्खरं छेलियाईयं ॥ २० ॥"

उच्छ्वसनमुच्छ्वसितं, भावे क्तप्रत्ययः, तथा निःश्वसनं निःश्वसितं निष्ठीवनं निष्ठ्यूतं कासनं कासितं, चशब्दः समुच्चयार्थः, क्षवणं क्षुतं, चशब्दः समुच्चयार्थ एव, अस्य च व्यवहितः सम्बन्धः सेण्टितादि चानक्षरश्रुतमिति, निस्संघनं निस्सिंघितं, अनुस्वारवत् अनुस्वारं, 'अभ्रादिभ्य' इति मत्वर्थीयात्प्रत्ययविधानादनक्षरमपि यदनुस्वारवत् उच्चार्यते तदनक्षरमनुस्वारमिति भावार्थः, एतदुच्छ्वसिताद्यनक्षरं—अनक्षरश्रुतं, न केवलमेतत्, किन्तु सेण्टनं सिण्टितं एतदादि चानक्षरश्रुतमिति ॥ इह उच्छ्वसितादि द्रव्यश्रुतमात्रं, ध्वनिमात्रत्वात्, अथवा श्रुतविज्ञानोपयुक्तस्य जन्तोः सर्व एव व्यापारः श्रुतं, तस्य तद्भावेन परिणतत्वात्, यद्येवं तर्हि किमिति करचरणादिचेष्टापि श्रुतमिति न व्यवह्रियते ?, येनोच्छ्वसिताद्येवोक्तमिति, उच्यते, रूढिवशात्, तथाहि—उच्छ्वसिताद्येव श्रुतमिति व्यवहारमवतीर्णं, तस्य श्रूयमाणत्वात्, न करादिचेष्टा, तस्याः श्रवणपथातीतत्वात्, अनुस्वारादयस्त्वकारादिवर्णा इवार्थस्याधिगमका इति निर्विवादमेव ते श्रुतं, आह च भाष्यकृत्—"ऊससियाई दव्वसुयमेत्तमहवा सुतोवउत्तस्स। सव्वोच्चिय वावारो सुयमिह तो किं न चेट्ठावि ? ॥१॥ रूढीएँ तं सुयं सुव्वइत्ति चेट्ठा न सुव्वइ कयावि। अहिगमगा वण्णा इव जमणुस्सारादयो तेणं ॥२॥"(वि० ५०२-५०३) उक्तमनक्षरश्रुतद्वारं, इदानीं संज्ञिद्वारम्—अथ संज्ञीति कः शब्दार्थः ?, उच्यते, संज्ञानं संज्ञा, सा अस्यास्तीति संज्ञी, ननु

यदि संज्ञासम्बन्धमात्रेण संज्ञी तत एकेन्द्रिया अपि संज्ञिनः प्राप्नुवन्ति, तेषामप्याहारादिसंज्ञासद्भावात्, तथा च प्रज्ञापना-
सूत्रम्—"एगिंदियाणं भंते! कइविहा सण्णा पण्णत्ता?, गोयमा! दसविहा पन्नत्ता, तंजहा—आहारसण्णा भयसण्णा
मेहुणसण्णा परिग्गहसण्णा कोहसण्णा माणसण्णा मायासण्णा लोभसण्णा ओहसण्णा लोगसण्णा" इति, सत्यमेतत्,
केवलमेतासु संज्ञासु मध्ये या ओघसंज्ञा लोकसंज्ञा वा साऽतिस्तोका, ततो न तत्सम्बन्धमात्रेण संज्ञीति व्यपदेष्टुं शक्यः,
न खलु कार्षापणधनमात्रेण लोके धनवानित्युच्यते, या त्वाहारभयपरिग्रहमैथुनादिका संज्ञा सा भूयस्यपि मोहनीयो-
दयप्रभवत्वेन न विशिष्टा, न चाविशिष्टया संज्ञया संज्ञीत्यभिधातुं शक्यं, न ह्यविशिष्टेन मूर्त्तिमात्रेण लोके रूपवानिति व्यव-
हारः, ततो या महती शोभना च ज्ञानावरणकर्म्मक्षयोपशमजन्या मनोज्ञानरूपा संज्ञा तयैव संज्ञीति व्यपदिश्यते,
उक्तं च—"जइ सण्णासंबंधेण सण्णिणो तेण सण्णिणो सव्वे। एगिंदियाइयाणवि जं सण्णा दसविहा भणिया
॥ १ ॥ थोवा न सोहणाविय जं सा तो नाहिकीरए इहइं। करिसावणे न धणवं न रूववं मुत्तिमित्तेणं ॥ २ ॥
जह बहुदव्वो धणवं पसत्थरूवो य रूववं होइ। महतीए सोहणाए य तह सण्णी नाणसण्णाए ॥ ३ ॥" (त्रि०५०५–५०७) स च
संज्ञी त्रिविधस्तद्यथा—दीर्घकालिकोपदेशेन हेतुवादोपदेशेन दृष्टिवादोपदेशेन च, तत्र यया संज्ञया सुदीर्घमपि कालमती-
तमर्थं स्मरति एष्यन्तं च चिन्तयति, यथा—कथं नु नाम मया कर्त्तव्यमिति, स दीर्घकालिकोपदेशेन संज्ञी, दीर्घः कालो दीर्घ-
कालः सोऽस्यास्तीति दीर्घकालिकः स चासावुपदेशश्च, उपदेशो भणनं, दीर्घकालिकोपदेशस्तेन, एष च दीर्घकालिकोपदेशेन
संज्ञी मनोज्ञानावरणकर्म्मक्षयोपशमवशान्मनोलब्धिसम्पन्नोऽनन्तान् मनोयोग्यान् पुद्गलान् गृहीत्वा मनस्त्वेन परिण-

मस्य मन्यते चिन्तनीयं वस्तुजातं, तेनासौ गर्भजस्तिर्यग्मनुष्यो वा देवो नारको वा द्रष्टव्यो, न शेष एकेन्द्रियादिः, विशिष्टमनोलब्धिविकलत्वात्, तथा च सति दीर्घकालिकोपदेशेनासंज्ञी एकेन्द्रियो द्वीन्द्रियादिश्च प्रतिपत्तव्यः, हेतुर्निमित्तं कारणमित्यनर्थान्तरं तस्य वदनं वादः तद्विषय उपदेशः—प्ररूपणं हेतुवादोपदेशस्तेन संज्ञी, यो बुद्धिपूर्वकं स्वदेहपरिपालनाय इष्टेष्वाहारादिषु प्रवर्त्तते अनिष्टेभ्यस्तु निवर्त्तते, स च द्वीन्द्रियादिरपि वेदितव्यः, तस्यापि मनःसञ्चिन्तनपूर्वकमिष्टानिष्टविषयप्रवृत्तिनिवृत्तिदर्शनात्, केवलमस्य मनसा चिन्तनं प्रायो वर्त्तमानकालविषयं, न भूतभविष्यद्विषयमल्पमनोलब्धिसम्पन्नत्वात्, ततो न दीर्घकालिकोपदेशेन संज्ञी लभ्यते, एतन्मतेनासंज्ञिन एकेन्द्रिया एव द्रष्टव्याः, उक्तं च—"जे पुण संचिंतेउं इट्ठाणिट्ठेसु विसयवत्थुसुं । वत्तंति नियत्तंति य सदेहपरिपालणाहेउं ॥ १ ॥ पाएण संपइच्चिय कालंमि तया ण दीहकालण्णू । ते हेउवायसण्णी निच्चिट्ठा होंति उ असण्णी ॥२॥" (वि०५१५–५१६) तथा दृष्टिः दर्शनं—सम्यक्त्वादि तस्य वदनं वादः तद्विषय उपदेशः–प्ररूपणं तेन संज्ञी–सम्यग्दृष्टिस्तस्य संज्ञा ज्ञानावरणक्षयोपशमभावात्, असंज्ञी मिथ्यादृष्टिः, उक्तं च—"सम्मद्दिट्ठी सण्णी संते नाणे खओवसमियंमि । अस्सण्णी मिच्छत्तं दिट्ठीवायोवएसेणं ॥१॥(वि०५१७)"ततश्च संज्ञिनः श्रुतं संज्ञिश्रुतं, तथा असंज्ञिनः श्रुतमसंज्ञिश्रुतं, तथा सम्यक् श्रुतं–अङ्गानङ्गप्रविष्टमाचारावश्यकादि, तथा मिथ्याश्रुतं–पुराणरामायणभारतादि, सर्वमेव वा दर्शनपरिग्रहविशेषात्सम्यक्श्रुतं इतरद्वा, तथाहि–सम्यग्दृष्टौ सर्वमपि श्रुतं सम्यक्श्रुतं, हेयोपादेयशास्त्राणां हेयोपादेयतया परिज्ञानात्, मिथ्यादृष्टौ सर्वं मिथ्याश्रुतं विपर्ययात् ॥ तथा सादिसपर्यवसितमनाद्यपर्यवसितं च नयानुसारतोऽवसेयं, तत्र द्रव्यास्तिकनयमतादेशेन अनाद्यपर्यवसितं धर्मास्तिका-

यादिवत्, पर्यायास्तिकनयमतादेशेन सादिसपर्यवसितं अनित्यत्वात् नारकादिपर्यायवत्, आह च भाष्यकृत्—"अत्थित्ति नयस्सेयं अणाइपज्जंतमत्थिकायव्व । इयरस्स साइसंतं गइपज्जाएहिं जीवव्व ॥ १ ॥ (वि० ५३७)" अथवा द्रव्यादिचतुष्टयमधिकृत्य साद्यनाद्यादि भावनीयम्, तद्यथा—एकं पुरुषं प्रतीत्य सादिसपर्यवसितं, नानाजीवानाश्रित्यानाद्यपर्यवसितं, कदाचिदपि व्यवच्छेदाभावात्, क्षेत्रतः पञ्च भरतानि पञ्चैरवतानि प्रतीत्य सादिसपर्यवसितं, सुषमसुषमादावभावात्, पञ्च महाविदेहानधिकृत्यानाद्यपर्यवसितं, सकलकालं तत्र भावात्, कालतोऽवसर्प्पिणीं उत्सर्प्पिणीं चाधिकृत्य सादिसपर्यवसितं, तृतीयाद्यरकेष्वेव भावात्, नोत्सर्प्पिण्यवसर्प्पिणीमधिकृत्यानाद्यपर्यवसितं, महाविदेहेषु सततं भावात्, भावतः प्रज्ञापकगतान् उपयोगस्वरप्रयत्नस्थानविशेषादीन् भावान् गतिस्थानभेदसङ्घातवर्णरसगन्धस्पर्शनादीन् ज्ञेयगतांश्च भावान् प्रतीत्य सादिसपर्यवसितं, प्रज्ञापकभावानां ज्ञेयभावानां चान्यथान्यथाभावात्, क्षायोपशमिकं पुनर्भावमङ्गीकृत्यानाद्यपर्यवसितं, तस्य सर्वकालं भावात्, खलुशब्द एवकारार्थः स चावधारणे तस्य च व्यवहितः सम्बन्धः, सप्तैवैते श्रुतपक्षाः सप्रतिपक्षाः, न पुनः पक्षान्तरमस्ति, सतोऽत्रैवान्तर्भावात् । सम्प्रति गमिकद्वारं—तत्र गमा—भङ्गकाः गणितादिविशेषाश्च, यदिवा कारणवशतो ये सदृशपाठास्ते गमाः तेऽस्य सन्तीति गमिकं 'अतोऽनेकस्वरा'दितिमत्वर्थीय इकप्रत्ययः, तच्च प्रायो दृष्टिवादः, उक्तं च नन्द्यध्ययने—"गमियं दिट्ठिवादो" इति, यत्पुनरसदृशपाठं तद् अगमिकं, तच्च प्रायः कालिकं । साम्प्रतं अंगप्रविष्टद्वारं—अथ अङ्गप्रविष्टानङ्गप्रविष्टयोः कः प्रतिविशेषः ?, उच्यते, यद् गणधरैः साक्षाद् दृब्धं तदङ्गप्रविष्टं, तच्च द्वादशाङ्गं, यत्पुनः स्थविरैर्भद्रबाहुस्वामिप्रभृतिभिराचार्यैरुपनिबद्धं तदनङ्गप्रविष्टं, तच्चावश्यक-

निर्युक्त्यादि, अथवा वारत्रयं गणधरपृष्टेन सता भगवता तीर्थंकरेण यत्प्रत्युच्यते 'उप्पन्नेइ वा विगमेइ वा धुवेइ वा' इति पदत्रयं तदनुसृत्य यन्निष्पन्नं तदङ्गप्रविष्टं, यत्पुनर्गणधरप्रश्नव्यतिरेकेण शेषकृतप्रश्नपूर्वकं वा भगवतो मुत्कलं व्याकरणं तदधिकृत्य यन्निष्पन्नं जम्बूद्वीपप्रज्ञप्त्यादि, यच्च वा गणधरवचांस्येवोपजीव्य दृब्धमावश्यकनिर्युक्त्यादि पूर्वस्थविरैस्तदनङ्गप्रविष्टं, यदिवा यत्सर्वतीर्थकरतीर्थेष्वनियतं तदनङ्गप्रविष्टं, सर्वपक्षेषु द्वादशाङ्गान्यङ्गप्रविष्टं, शेषमनङ्गप्रविष्टं, उक्तं च—“गणहरथेरकयं वा आएसा मुक्कवागरणतो वा । धुवचलविसेसतो वा अंगाणंगेसु नाणत्तं ॥१”॥(वि०५५०) ननु पूर्वं तावत् पूर्वाणि भगवद्भिर्गणधरैरुपनिबध्यन्ते, पूर्वं करणात् पूर्वाणीति पूर्वाचार्यप्रदर्शितव्युत्पत्तिश्रवणात्, पूर्वेषु च सकलवाङ्मयस्यावतारो, न खलु तदस्ति यत्पूर्वेषु नाभिहितं, ततः किं शेषाङ्गविरचनेनाङ्गबाह्यविरचनेन वा ?, उच्यते, इह विचित्रा जगति प्राणिनः तत्र ये दुर्मेधसः ते पूर्वाणि नाध्येतुमीशते, पूर्वाणामतिगम्भीरार्थत्वात् तेषां च दुर्मेधस्त्वात्, स्त्रीणां पूर्वाध्ययनानधिकार एव, तासां तुच्छत्वादिदोषबहुलत्वात्, उक्तं च—“तुच्छा गारवबहुला चलिंदिया दुब्बला धिईए य । इति अइसेसज्झयणा भूयावायो न इत्थीणं ॥१॥(वि०५५२)” अत्र अतिशेषाध्ययनानि—उत्थानश्रुतादीनि भूतवादो—दृष्टिवादः। ततो दुर्मेधसां स्त्रीणां चानुग्रहाय शेषाङ्गानामङ्गबाह्यस्य च विरचनमिति, उक्तं च—“जइवि य भूयावाए सव्वस्स वयोगयस्स ओयारो । निज्जूहणा तहावि हु दुम्मेहे पप्प इत्थी य ॥१॥ (वि०५५१)” गाथाशेषं अवधारणप्रयोगं दर्शयता व्याख्यातं ॥ सत्पदप्ररूपणादि मतिज्ञानवत् आयोज्यं ॥ तदेवं प्रतिपादितं स्वरूपेण श्रुतज्ञानं, साम्प्रतं विषयद्वारेण निरूप्यते—चतुर्विधं श्रुतज्ञानं, तद्यथा—द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतः श्रुतज्ञानी उपयुक्तः सर्वाणि द्रव्याणि जानाति, नतु पश्यति, क्षेत्रतः सर्वं

क्षेत्रं कालतः सर्वं कालं भावतः सर्वान् भावान्। इदं च श्रुतज्ञानं सर्वातिशयरत्नकल्पं प्रायो गुर्वधीनं च ततो विनेयजनानुग्रहार्थं यो यथा चास्य लाभस्तं तथाऽस्य दर्शयति—

“आगमसत्थग्गहणं जं बुद्धिगुणेहिं अट्ठहिं दिट्ठं। बेंति सुयणाणलंभं तं पुव्वविसारया धीरा ॥ २१ ॥”

आ—अभिविधिना सकलश्रुतविषयव्याप्तिरूपेण मर्यादया वा यथावस्थितप्ररूपणया गम्यंते—परिच्छिद्यंते अर्था येन स आगमः, ‘पुंनाम्नी’तिकरणे घप्रत्ययः, स चैवंव्युत्पत्त्या अवधिकेवलादिरूपोऽपि प्राप्नोति ततस्तद्व्यवच्छेदार्थं विशेषणान्तरमाह—‘शास्त्रे’ति शिष्यतेऽनेनेति शास्त्रं आगमश्च तत् शास्त्रं च आगमशास्त्रं, आगमग्रहणेन षष्टितन्त्रादिकुशास्त्रव्यवच्छेदः, तेषां यथावस्थितार्थप्रकाशनाभावेनानागमत्वात्, आगमशास्त्रस्य ग्रहणमागमशास्त्रग्रहणं, यद् बुद्धिगुणैः वक्ष्यमाणैः करणभूतैरष्टभिर्दृष्टं तदेव ग्रहणं श्रुतज्ञानस्य लाभं ब्रुवते, पूर्वेषु विशारदाः पूर्वविशारदाः, विशारदा—विपश्चितः, धीराः—व्रतपालने स्थिराः, किमुक्तं भवति ?—यदेव जिनप्रणीतवचनार्थपरिज्ञानं तदेव परमार्थतः श्रुतज्ञानं, न शेषमिति ॥ बुद्धिगुणैरष्टभिरित्युक्तमतस्तानेव बुद्धिगुणानाह—

“सुस्सूसइ पडिपुच्छइ सुणेइ गिण्हइ य ईहए वावि। तत्तो अपोहए वा धारेइ करेइ वा सम्मं ॥ २२ ॥”

पूर्वं तावत् शुश्रूषते—विनययुक्तो गुरुवदनारविन्दान्निर्गच्छद्वचनं श्रोतुमिच्छति, ततः प्रतिपृच्छति यत्र शङ्कितं भवति तत्र भूयोऽपि विनयनम्रतया वचसा गुरुमनः प्रह्लादयन् पृच्छति, पृष्टे च सति यद्गुरुः कथयति तत् सम्यक्—व्याक्षेपपरिहारेण सावधानः शृणोति, श्रुत्वा चार्थरूपतया गृह्णाति, गृहीत्वा च ईहते—पूर्वापराविरोधेन पर्यालोचयति, चशब्दः समु-

च्चयार्थः, अपिशब्दः पर्यालोचयन् किञ्चित्स्वबुद्ध्याऽभ्युत्प्रेक्षते इति सूचनार्थः, ततः—पर्यालोचनानन्तरमपोहते एवमेतत् यदादिष्टमाचार्येण नान्यथेत्यवधारयति, ततस्तमर्थं निश्चितं स्वचेतसि विस्मृत्यभावार्थं सम्यक् धारयति, करोति च सम्यक्—यथोक्तमनुष्ठानं, यथोक्तानुष्ठानमपि श्रुतज्ञानप्राप्तिहेतुः, तदावरणकर्मक्षयोपशमनिमित्तत्वात्, अथवा यद् यद् आज्ञापयति गुरुस्तत्तत्सम्यगनुग्रहं मन्यमानः श्रोतुमिच्छति शुश्रूषते, पूर्वसन्दिष्टश्च सर्वकार्याणि कुर्वन् पुनः पृच्छति प्रतिपृच्छति, पुनरादिष्टः सम्यक् शृणोति, शेषं पूर्ववत् ॥ तदेवं व्याख्याता गुणाः, सम्प्रति यत् शुश्रूषते इत्युक्तं तत्र श्रवणविधिमाह—



"मूयं हुंकारं वा बाढक्कार पडिपुच्छ वीमंसा । तत्तो पसंग पारायणं च परिणिट्ठ सत्तमए ॥ २३ ॥"

'मूक'मिति प्रथमतो मूकं शृणुयात्, किमुक्तं भवति ?—प्रथमश्रवणे संयतगात्रस्तूष्णीमासीत, ततो द्वितीये श्रवणे हुङ्कारं दद्यात्, वन्दनं कुर्यादित्यर्थः, तृतीये बाढकारं कुर्यात्, बाढं—एवमेतत् नान्यथेति प्रशंसेदित्यर्थः, चतुर्थे श्रवणे गृहीतपूर्वापरसूत्राभिप्रायो मनाक् प्रतिपृच्छां कुर्यात्, कथमेतत् इति, पञ्चमे मीमांसां—प्रमाणजिज्ञासां कुर्यादिति भावः, षष्ठे श्रवणे तदुत्तरोत्तरगुणप्रसङ्गः पारगमनं चास्य भवति, ततो सप्तमे श्रवणे परिनिष्ठो, गुरुवदनुभापते इत्यर्थः॥ एवं तावत् श्रवणविधिरुक्तः, सम्प्रति व्याख्यानविधिमभिधित्सुराह—

॥ ४९ ॥

"सुत्तत्थो खलु पढमो बीओ निज्जुत्तिमीसितो भणितो । तइओ य निरवसेसो एस विही होइ अणुओगे २४"

प्रथमोऽनुयोगः सूत्रार्थः—सूत्रार्थप्रतिपादनपरः, खलु एवकारार्थः स चावधारणे, ततोऽयमर्थः—गुरुणा प्रथमोऽनु-

द्वितीयोऽनुयोगः सूत्रस्पर्शकनिर्युक्तिमिश्रितो
योगः सूत्राभिधानलक्षण एव कर्त्तव्यः, मा भूत् प्राथमिकविनेयानां मतिभेदः, द्वितीयोऽनुयोगः सूत्रस्पर्शकनिर्युक्तिमिश्रितो
भणितस्तीर्थंकरगणधरैः, सूत्रस्पर्शनिर्युक्तिसहितं द्वितीयमनुयोगं गुरुर्विदध्यादित्याख्यातं तीर्थंकरगणधरैरिति भावः,
तृतीयश्चानुयोगो निरवशेषः–प्रसक्तानुप्रसक्तप्रतिपादनलक्षण इति, 'एषः' उक्तलक्षणो विधिर्भवत्यनुयोगे–व्याख्यायां,
आह—परिनिष्ठा सप्तमे इत्युक्तं त्रयश्चानुयोगप्रकारास्तदेतत्कथं ?, उच्यते, त्रयाणामनुयोगप्रकाराणामन्यतमेन केनचि-
त्प्रकारेण भूयो भूयो भाव्यमानेन सप्तवारं श्रवणं कार्यते, ततो न कश्चिद्दोषः, अथवा कञ्चिन्मन्दमतिविनेयमधिकृत्य
तदुक्तं द्रष्टव्यं, न पुनरेष एव सर्वत्र श्रवणविधिनियमः, उद्घटितज्ञविनेयानां सकृच्छ्रवणत एवाशेषग्रहणदर्शनादिति
कृतं प्रसङ्गेन ॥ तदेवमुक्तं श्रुतज्ञानस्वरूपम्, सम्प्रति प्रागभिहितप्रस्तावमवधिज्ञानमुपदर्शयन्नाह—

"संखातीताओ खलु ओहीनाणस्स सव्वपयडीओ । काई भवपच्चइया खओवसमिया उ काओवि ॥ २९ ॥"

सङ्ख्यानं सङ्ख्या तामतीताः–अतिक्रान्ताः सङ्ख्यातीताः, असङ्ख्येया इत्यर्थः, तथा सङ्ख्यातीतमनन्तमपि भवति ततश्चा-
नन्ता अपीति द्रष्टव्यं, तथा च खलुशब्दो विशेषणार्थः, स चैतत् विशिनष्टि–क्षेत्रकालाख्यप्रमेयापेक्षया सङ्ख्यातीता
द्रव्यभावाख्यप्रमेयापेक्षया त्वनन्ता इति, अवधिज्ञानस्य–प्राग्निरूपितशब्दार्थस्य प्रकृतयो–भेदा,ः सर्वाश्च ताः प्रकृतयश्च
सर्वप्रकृतयः, इयमत्र भावना–इहावधेर्लोकक्षेत्रासङ्ख्येयभागादारभ्य प्रदेशवृद्ध्या असङ्ख्येयलोकपरिमाणमुत्कृष्टमालम्बन-
तया क्षेत्रमुक्तं, कालश्चावलिकाया असङ्ख्येयभागादारभ्य समयवृद्ध्या खल्वसङ्ख्येयोत्सर्पिण्यवसर्पिणीप्रमाण उक्तः, ज्ञेय-
भेदाच्च ज्ञानस्य भेद इति क्षेत्रकालावधिकृत्य संख्यातीतास्तत्प्रकृतयः, तथा तैजसवाग्द्रव्यापान्तरालवर्त्त्यनन्तप्रादेशिक-

द्रव्यादारभ्य विचित्रवृद्ध्या सर्वमूर्त्तद्रव्याण्युत्कृष्टं विषयपरिमाणं द्रव्यतः प्रतिवस्तुगतासङ्ख्येयपर्यायपरिमाणं विषयमानं भावतो, ज्ञेयभेदेनैव ज्ञानस्यापि भेद इति समस्तं पुद्गलास्तिकायं तत्पर्यायांश्चाङ्गीकृत्यानन्ता अवधेः प्रकृतयः, आसां च मध्ये काश्चनान्यतमाः प्रकृतयो 'भवप्रत्ययाः' भवन्ति कर्मवशवर्त्तिनः प्राणिनोऽस्मिन्निति भवो-नारकादिजन्म स पक्षिणां गगनगमनलब्धिरिवोत्पत्तौ प्रत्ययः-कारणं यासां ताः भवप्रत्ययाः, ताश्च नारकामराणामेव, काश्चन पुनरन्यतमाः 'गुणप्रत्ययाः' क्षयोपशमेन निर्वृत्ताः क्षायोपशमिकाः ताश्च तिर्यङ्मनुष्याणां, उक्तंच-"भवपच्चइया नारयसुराण पक्खीण वा नभोगमणं। गुणपरिणामननिमित्ता सेसाण खओवसमियाओ ॥१॥" (वि.५७२) ननु अवधिज्ञानं क्षायोपशमिके भावे प्रतिपादितं, नारकादिभवस्त्वौदयिकः, ततः स कथं तासामवधिप्रकृतीनां प्रत्ययो भवितुमर्हति ?, नैष दोषः, तासामपि क्षयोपशमनिबन्धनत्वात्, केवलमसौ क्षयोपशमस्तस्मिन् नारकामरभवे सत्यवश्यंभावीति भवप्रत्ययास्ता इत्युक्तं, आह च भाष्यकृत्-"ओही खओवसमिए भावे भणितो भवो तहोदइए । तो किह भवपच्चइओ वोत्तुं जुत्तोऽवही दोण्हं ? ॥ १ ॥ सोवि हु खओवसमिओ किं तु स एवक्खओवसमलाभो । तंमि सइ होअवस्सं भण्णइ भवपच्चओ तो सो ॥ २ ॥" ( वि. ५७३-५७४ ) साम्प्रतं सामान्यरूपतयोद्दिष्टानामवधिप्रकृतीनां वाचः क्रमवर्त्तित्वादायुषश्चाल्पत्वात् यथावद्भेदेन तत्प्रतिपादनसामर्थ्यमात्मनोऽपश्यन्निर्युक्तिकृदाह—

"कत्तो मे वण्णेउं सत्ती ओहिस्स सव्वपयडीओ । चोद्दसविहनिक्खेवं इड्ढीपत्ते य वोच्छामि ॥ २६ ॥"

कुतो 'मे' मम वर्णयितुं शक्तिरवधेः सर्वप्रकृतीः?, नैव शक्तिरित्यर्थः, आयुषः परिमितत्वाद्वाचः क्रमवर्त्तित्वाच्च,

सम्बन्धिनमामर्पौषध्यादिलक्षणं ऋद्धिं प्राप्ताः ऋद्धिप्राप्तास्तांश्च,
तथापि विनेयजनानुग्रहाय चतुर्दशविधनिक्षेपं अवधेः
चतुर्दशविधनिक्षेपप्रतिपिपादयिषुस्तद्द्वारगाथाद्वयमाह—
चशब्दः समुच्चये, वक्ष्ये—अभिधास्ये ॥ तत्र
"ओही खेत्त परिमाणे, संठाणे आणुगामिए। अवट्ठिए चले तिव्व-मंदपडिवाउप्पया इय ॥ २७ ॥
नाणदंसणविब्भंगे, देसे खित्ते गई इय। इड्ढीपत्ताणुओगे य, एमेया पडिवत्तीओ ॥ २८ ॥"
इह अवध्यादीनि गतिपर्यन्तानि चतुर्दश द्वाराणि, ऋद्धिस्तु चशब्दसमुच्चितत्वात् पञ्चदशं द्वारम्, तच्च चतुर्दश-
विधनिक्षेपवक्तव्यतानन्तरं पश्चाद्वक्ष्यते, अन्ये त्वाचार्या अवधिरित्येतत्पदं परित्यज्य आनुगामिकमनानुगामिकसहितम-
र्थतोऽभिगृह्य चतुर्दश द्वाराणि व्याचक्षते, वदन्ति च—यस्मान्नावधिः प्रकृतिः, किन्तु प्रकृतिमान्, प्रकृतीनां च चतु-
र्दशधा निक्षेप इति, पक्षद्वयेऽप्यविरोधः, तत्रावधिरिति अवधेर्नामादिभेदभिन्नस्य स्वरूपमभिधातव्यं, अवधिशब्दो
द्विरावर्त्यते, अर्थवशाच्च विभक्तिपरिणाम इति १, जघन्यमध्यमोत्कृष्टभेदभिन्नमवधेः क्षेत्रपरिमाणं वक्तव्यं २, तथा संस्था-
नमवधेर्वक्तव्यं ३, तथा अनुगमनशील आनुगामिकोऽवधिः सप्रतिपक्षो वक्तव्यः, एकारान्तता सर्वत्रापि प्रथमान्तस्य
प्राकृतत्वात्, यथा—'कयरे आगच्छइ दित्तरूवे' इत्यादि ४, तथा द्रव्यादिषु कियन्तं कालमप्रतिपतितः सन् उपयोगतो
लब्धितश्चावतिष्ठते इत्यवस्थितोऽवधिर्वक्तव्यः५, तथा वर्द्धमानतया क्षीयमाणतया च चलः—अनवस्थितोऽवधिर्वक्तव्यः ६,
तथा तीव्रो मन्दो मध्यमश्चावधिर्वक्तव्यः, तत्र तीव्रो—विशुद्धः मन्दः—अविशुद्धः तीव्रमन्दस्तूभयप्रकृतिरिति ७, तथा
द्रव्याद्यपेक्षया एककाले प्रतिपातोत्पादौ वक्तव्यौ ८, तथा ज्ञानदर्शनविभङ्गा वाच्याः, किमुक्तं भवति ?—किमत्र ज्ञानं

किं वा दर्शनं को वा विभङ्गः?, परस्परतश्चामीषामल्पबहुत्वं च चिन्तनीयमिति ज्ञानदर्शनविभङ्गैर्द्वारत्रयमवसातव्यं ११, तथा 'देस'त्ति कस्य देशविषयः सर्वविषयो वाऽवधिर्भवतीति वक्तव्यं १२, तथा 'खेत्त'त्ति सम्बद्धासम्बद्धसङ्ख्येयासङ्ख्येयान्तरालक्षेत्रद्वारेण क्षेत्रविषयोऽवधिर्वक्तव्यः १३, 'गतिरिति चे'त्यत्र इतिशब्दो गणसंसूचको द्रष्टव्यः, 'इत्यादिबहुवचनानि गणस्य संसूचकानि भवन्ती'ति वचनात्, ततो 'गइ इंदिए य काए' इत्यादिद्वारकलापोऽवधेर्द्रष्टव्यः इत्युक्तं वेदितव्यं १४, तथा ऋद्धिप्राप्तानुयोगश्च वक्तव्यः, अनुयोगं—अन्वाख्यानं, एवं अनेन प्रकारेण एता—अनन्तरोक्ताः 'प्रतिपत्तयः' प्रतिपदनं प्रतिपत्तिः परिच्छित्तिरित्यर्थः अवधेः प्रकृतय एव प्रतिपत्तिहेतुत्वात् प्रतिपत्तय इत्युच्यते, अथवा प्रतिपद्यते— यथावदवगम्यते अवधिराभिः प्रकृतिभिरिति प्रतिपत्तयः, 'लाभादिभ्य'इति करणे क्तिप्रत्ययः ॥ साम्प्रतमनन्तरद्वारगाथाद्वयव्याचिख्यासया इदमाह—

"नामंठवणादविए खेत्ते काले भवे य भावे य। एसो खलु ओहिस्सा निक्खेवो होइ सत्तविहो ॥ २९ ॥"

नामावधिः, यथा लोके मर्यादा अवधिरिति, यस्य जीवस्याजीवस्य वाऽवधिरिति नाम क्रियते स नाम्ना नाममात्रेणावधिर्नामावधिः, अथवा अवधेरेव यदभिधानमवधिरिति तन्नामावधिर्नाम च तदवधिश्च स्थापनावधिरक्षादिः अवधिरेष इति न्यस्यमानः, अथवा अवधेरालम्बनस्य द्रव्यस्य क्षेत्रस्य यदिवा स्वामिनः आकारविशेषः, स हि नामावधिरिति व्युत्पत्तेः, स्थापनावधिर्यः खलु अवधेरालम्बनस्य द्रव्यस्य क्षेत्रस्य यदिवा स्वामिनः आकारविशेषः, स हि विषयविषयिणोरभेदोपचारादवधेः सम्बन्धी, आकारश्च स्थापना, 'स्थापनाऽऽकारविशेष' इति वचनात्, उक्तं च—"अहवा नामं तस्सेव जमभिहाणं सपज्जतस्सेव। ठवणाऽऽगारविसेसो तद्दव्वक्खेत्तसामीणं ॥१॥"(वि.५८२)अथ द्रव्यावधिरित्युच्यते—

क्षेत्रादीनि द्वाराणि निक्षेपाः २७-२९

स द्विविधः-आगमतो नोआगमतश्च, तत्रागमतोऽवधिपदार्थज्ञस्तत्र चानुपयुक्तः, 'अनुपयोगो द्रव्य'मिति वचनात्, नोआगमतस्त्रिविधस्तद्यथा-ज्ञशरीरद्रव्यावधिः भव्यशरीरद्रव्यावधिः ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्यावधिश्च, तत्र ज्ञशरीरभव्यशरीरे प्रतीते, तृतीयस्तु साक्षात्सूत्रेणैवोपात्तः 'दविए' इति द्रव्यावधिर्द्रव्यालम्बन इत्यर्थः, अथवा सूत्रे प्रथमान्तस्याप्येकारान्तता, जिनवचनस्य च सर्वस्याप्यर्द्धमागधभाषात्वात्, ततो द्रव्यमेवावधिर्द्रव्यावधिः, कारणं द्रव्यमिति भावः, यदिवा उत्पद्यमानस्यावधेर्यदुपकारकं शरीरादि तदवधिकारणत्वात् द्रव्यावधिः, आह च-दव्वोही उप्पज्जइ जत्थ ततो जं च पासए तेण। जं वोवयारि दव्वं देहाइ तदुब्भवे होइ ॥१॥" (वि.५८४) तथा क्षेत्रेऽवधिः क्षेत्रावधिः, किमुक्तं भवति ?- यत्र क्षेत्रेऽवस्थितस्यावधिरुत्पद्यते यत्र वा क्षेत्रेऽवधिः प्रज्ञापकेन प्रकाश्यते यत्र वा क्षेत्रे स्वयोग्यानि द्रव्याण्यवधिः परिच्छिनत्ति स क्षेत्रस्याधारत्वेन प्राधान्यविवक्षया क्षेत्रे व्यपदिश्यते इति क्षेत्रेऽवधिः क्षेत्रावधिरित्युच्यते, एवं यत्र प्रथमपौरुष्यादौ कालेऽवधिरुत्पद्यते यत्र वा प्रज्ञापकेन प्ररूप्यते यस्मिन् वा काले स्वयोग्यानि द्रव्याणि परिच्छिनत्ति स कालस्य प्राधान्यविवक्षया कालेन व्यपदिश्यते, कालेनावधिः कालावधिः, अथ किमिति क्षेत्रकालावस्थितानि द्रव्याणि पश्यत्यसावित्युच्यते, न पुनः क्षेत्रकालावेव साक्षात्पश्यतीति ?, उच्यते, क्षेत्रकालयोरमूर्त्तत्वेन तदविषयत्वात्, आह च भाष्यकृत्-"खेत्ते जत्थुप्पज्जइ कहिज्जए पेच्छए व दव्वाइं। एवं चेव य काले नउ पेच्छइ खेत्तकाले से ॥१॥" ( वि.५८५) तथा भवन्ति तत्तत्कर्मवशवर्त्तिनः प्राणिनोऽस्मिन्निति भवः-नारकादिलक्षणः, 'तुदादिभ्यो नक्का'वित्यधिकारे 'अकितौ चे'ति अप्रत्ययः, तस्मिन् भवे उत्पद्यते वर्त्तते प्रेक्षते वा योऽवधिः स भवावधिः, भावः-क्षायोपशमिकः द्रव्यपर्यायो वा तस्मिन्नवधिर्भा-

वावधिः, चशब्दौ समुच्चयार्थौ, एषोऽनन्तरव्यावर्णितस्वरूपः, खलुशब्द एवकारार्थः स चावधारणे, एष एव नान्यः, निक्षेपणं निक्षेपोऽवधेर्भवति सप्तविधः—सप्तप्रकारः ॥ सम्प्रति क्षेत्रपरिमाणाख्यं द्वितीयद्वारं अभिधातव्यं, क्षेत्रपरिमाणं च त्रिधा—जघन्यं मध्यममुत्कृष्टं च, तत्र जघन्यं क्षेत्रपरिमाणमभिधित्सुराह—

"जावइया तिसमयाहारगस्स सुहुमस्स पणगजीवस्स। ओगाहणा जहण्णा ओही खेत्तं जहण्णं तु ॥ ३० ॥"

आहारयति—आहारं गृह्णातीत्याहारकः, त्रयः समयाः समाहृतास्त्रिसमयं, त्रिसमयमाहारकः त्रिसमयाहारकः, 'व्यासा'विति समासः, 'नाम नाम्नैकार्थे समासो बहुल'मिति समासः, तस्य त्रिसमयाहारकस्य 'सूक्ष्मस्य' सूक्ष्मनामकर्मोदयवर्त्तिनः, पनकजीवस्य पनकश्चासौ जीवश्च पनकजीवः—वनस्पतिविशेषः तस्य, 'यावती' यावत्परिमाणाऽवगाहन्ते क्षेत्रं यस्यां स्थिता जन्तवः साऽवगाहना—तनुरित्यर्थः जघन्या—शेषत्रिसमयाहारकसूक्ष्मपनकजीवापेक्षया सर्वस्तोका एतावत्परिमाणमवधेर्जघन्यं क्षेत्रं, तुशब्दोऽवधारणे 'तुः स्याद्भेदेऽवधारणे' इति वचनात्, जघन्यं क्षेत्रमवधेरेतावदेवेति, अत्रायं सम्प्रदायः—यः किल योजनसहस्रपरिमाणायामो मत्स्यः स्वशरीरस्य बहिरेकदेशे एवोत्पद्यमानः प्रथमसमये सकलनिजशरीरसम्बद्धानामात्मप्रदेशानामायामं संहृत्याङ्गुलासङ्ख्येयभागबाहल्यं स्वदेहविष्कम्भप्रमाणायामविस्तारं प्रतरं करोति, तमपि द्वितीयसमये संहृत्याङ्गुलासङ्ख्येयभागविष्कम्भां मत्स्यदेहविष्कम्भप्रमाणायामामात्मप्रदेशानां सूचीं विरचयति, तृतीयसमये तामपि संहृत्याङ्गुलासङ्ख्येयभागमात्रे स्वशरीरस्य बहिः प्रदेशे सूक्ष्मपरिणामपनकरूपतयोत्पद्यते, तस्योपपातसमयादारभ्य तृतीये समये वर्त्तमानस्य यावत्प्रमाणं शरीरं भवति तावत्परिमाणं जघन्यमालम्बनवस्तुभाजनक्षेत्रमव-

सातव्यं, उक्तं च—योजनसहस्रमानो मत्स्यो मृत्वा स्वकायदेशे यः। उत्पद्यते हि पनकः सूक्ष्मत्वेनेह स ग्राह्यः ॥ १ ॥ संहृत्य चाद्यसमये स ह्यायामं करोति च प्रतरम्। सङ्ख्यातीताख्याङ्गुलविभागबाहल्यमानं तु ॥ २ ॥ स्वतनु (क) पृथुत्वमात्रां दीर्घत्वेनापि जीवसामर्थ्यात्। तमपि द्वितीयसमये संहृत्य करोत्यसौ सूचिम् ॥ ३ ॥ सङ्ख्यातीताख्याङ्गुलविभागविष्कम्भमाननिर्दिष्टाम्। निजतनुपृथुत्वदैर्घ्यां तृतीयसमये तु संहृत्य ॥ ४ ॥ उत्पद्यते च पनकः स्वदेहदेशे स सूक्ष्मपरिणामः। समयत्रयेण तस्यावगाहना यावती भवति ॥ ५ ॥ तावज्जघन्यमवधेरालम्बनवस्तुभाजनं क्षेत्रम्। इदमित्थमेव मुनिगणसुसम्प्रदायात् समवसेयम् ॥ ६ ॥" अत्र कश्चिदाह—किमिति योजनसहस्रायामो मत्स्यः?, किं वा तस्य तृतीयसमये स्वदेहदेशे सूक्ष्मत्वेनोत्पादः? किं वा त्रिसमयाहारकत्वं परिगृह्यते?, उच्यते, इह योजनसहस्रमानो मत्स्यः स किल त्रिभिः समयैः आत्मानं सङ्क्षिपति महतः प्रयत्नविशेषात्, महाप्रयत्नविशेषाधिरूढश्चोत्पत्तिदेशेऽवगाहनामारभमाणो अतीव सूक्ष्मामारभते, ततो महामत्स्यस्य ग्रहणं, सूक्ष्मपनकश्चान्यजीवापेक्षया सूक्ष्मावगाहनो भवति, ततः सूक्ष्मपनकग्रहणं, तथा उत्पत्तिसमये द्वितीये समये चातिसूक्ष्मो भवति चतुर्थादिषु तु समयेष्वतिस्थूरस्त्रिसमयाहारकस्तु योग्यस्ततस्त्रिसमयाहारकग्रहणं, उक्तं च—"मच्छो महल्लकाओ संखित्तो जो उ तीहिं समएहिं। स किर पयत्तविसेसेण सह्णोगाहणं कुणइ ॥ १ ॥ सण्हयरा सण्हयरो सुहुमो पणगो जहण्णदेहो य। सुबहुविसेसविसिट्ठो सण्हयरो सव्वदेहेसु ॥ २ ॥ पढमबीएऽतिसण्हो जमइत्थूलो चउत्थयादीसु। तइयसमयंमि जोग्गो गहियो तो तिसमयहारो ॥ ३ ॥ (वि.५९३–५९४)" अन्ये तु व्याचक्षते—त्रिसमयाहारकस्येति, आयामप्रतरसंहरणे समयद्वयं तृतीयश्च समयः सूचीसंहरणोत्पत्तिदेशागमविषयः, एवं त्रयः

समयाः, विग्रहगत्यभावाच्चैतेषु त्रिष्वपि समयेष्वाहारकस्तत उत्पादसमय एव त्रिसमयाहारकः सूक्ष्मपनकजीवो, जघन्यावगाहनश्चासौ, ततस्तच्छरीरमानं जघन्यमवधिक्षेत्रं, तच्चायुक्तं, यतस्त्रिसमयाहारकस्येति विशेषणं पनकस्य, न तु मत्स्यस्य, नच मत्स्यायामप्रतरसंहरणसमयौ पनकभवस्य सम्बन्धिनौ, किन्तु मत्स्यभवस्य, तत उत्पादसमयादारभ्य त्रिसमयाहारकस्येति द्रष्टव्यं नान्यथा, एतावत्प्रमाणजघन्यक्षेत्रस्यावधिः तैजसभाषाप्रायोग्यवर्गणापान्तरालवर्त्ति द्रव्यमालम्बते, 'तेयाभासादव्वाणमंतरा एत्थ लहइ पट्ठवतो' इतिवक्ष्यमाणवचनात् ॥ तदेवं जघन्यमवधेः क्षेत्रमुक्तम्, साम्प्रतमुत्कृष्टमभिधातुकाम आह—

"सव्वबहुअगणिजीवा निरंतरं जत्तियं भरिज्जंसु । खेत्तं सव्वदिसागं परमोही खेत्त निद्दिट्ठो ॥ ३१ ॥"

'सव्वबहु' इति, यत ऊर्द्धमन्य एकोऽपि जीवो न कदाचनापि प्राप्यते ते सर्वबहवः, सर्वबहवश्च तेऽग्निजीवाः-सूक्ष्मबादररूपाः सर्वबह्वग्निजीवाः, कदा सर्वबह्वग्निजीवा इति चेत्, उच्यते, यदा सर्वासु कर्मभूमिषु निर्व्याघातं अग्निकायसमारम्भकाः सर्वबहवो मनुष्याः, ते च प्रायोऽजितस्वामितीर्थकरकाले प्राप्यन्ते, यदा चोत्कृष्टपदवर्तिनः सूक्ष्मानलजीवास्तदा सर्वबह्वग्निजीवपरिमाणं, उक्तं च-अव्वाघाए सव्वासु कम्मभूमीसु जं तदारंभा । सव्वबहवो मणुस्सा, होन्तऽजियजिणिंदकालंमि ॥ १ ॥ उक्कोसया य सुहुमा जया तया सव्वबहुगमगणीणं । परिमाण"मिति, (वि.५९९-६००) 'निरन्तर'मिति क्रियाविशेषणं, यावद्-यावत्परिमाणं क्षेत्रं 'भृतवन्तो' व्याप्तवन्तः, किमुक्तं भवति ?-नैरन्तर्येण विशिष्टसूचीरचनया यावद्व्याप्तवन्तः, व्याप्तवन्त इति भूतकालनिर्देशः अजितस्वामिकाल एव च प्रायः सर्वबहवोऽनलजीवा अस्यामवसर्प्पिण्यां भवन्ति

भवति तत आह–सर्वदिक्कं,अनेन सूचीभ्रमणप्रमितत्वं क्षेत्रस्य
स्येति ख्यापनार्थः, इदं चानन्तरोदितविशेषणं क्षेत्रमेकदिक्कमपि भवति तत आह–सर्वदिक्कं,अनेन सूचीभ्रमणप्रमितत्वं क्षेत्रस्य
सूचयति, परमश्चासाववधिश्च परमावधिः, एतावद् अनन्तरोदितं सर्ववह्ननलसूचीपरिक्षेपप्रमितं क्षेत्रमङ्गीकृत्य 'निर्दिष्टः'
प्रतिपादितो गणधरादिभिः क्षेत्रनिर्दिष्टः, किमुक्तं भवति ?–सर्ववह्निजीवा निरन्तरं यावत् क्षेत्रं सूचीभ्रमणेन सर्वदिक्कं
भृतवन्तः एतावति क्षेत्रे यान्यवस्थितानि द्रव्याणि तत्परिच्छेदसामर्थ्ययुक्तः परमावधिः क्षेत्रमधिकृत्य निर्दिष्टो गणध-
रादिभिः। अयमिह सम्प्रदायः–सर्ववह्निजीवादयः प्रायोऽजितस्वामितीर्थकाले प्राप्यन्ते, तदारम्भकमनुष्यबाहुल्यभा-
वात्, सूक्ष्माश्चोत्कृष्टपदवर्त्तिनः तत्रैव विवक्ष्यंते, ततश्च ते सर्वबहवोऽनलजीवा भवन्ति, तेषां स्वबुद्ध्या षोढा अवस्थानं
कल्प्यते–एकैकक्षेत्रप्रदेशे एकैकजीवावगाहनया सर्वतश्चतुरस्रो घन इति प्रथमं, स एव घनो जीवैः स्वावगाहनाभिरिति
द्वितीयं, एवं प्रतरोऽपि द्विभेदः, श्रेणिरपि द्विधा, तत्राद्याः पञ्च प्रकारा अनादेशाः, तेषु क्षेत्रस्याल्पीयस्तया प्राप्यमाण-
त्वात्, षष्ठस्तु प्रकारः सूत्रादेशः, उक्तं च–"एक्केक्कागासपएस जीवरयणा य सावगाहे य। चउरंस घणं पयरं सेढी छट्ठो
सुयादेसो ॥१॥" (वि.६०१) ततश्चासौ श्रेणिः स्वावगाहनासंस्थापितसकलानलजीवावलिरूपा अवधिज्ञानिनः सर्वासु दिक्षु
शरीरपर्यन्तेन भ्राम्यते, सा च भ्राम्यमाणा असङ्ख्येयान् लोकमात्रान् क्षेत्रविभागान् अलोके प्राप्नोति, एतावत्क्षेत्रमवधिरु-
त्कृष्टः, उक्तं च–नियगावगाहणागणिजीवसरीरावलीभमंतेण । भामिज्जइ ओहिनाणीदेहपज्जंतत्तो सा य ॥ १ ॥ अइ-
गंतूणमलोगे लोगागासप्पमाणमेत्ताइं। ठाइ असंखेज्जाइं इदमोहीखेत्तमुक्कोस ॥ २ ॥(वि.६०३–६०४)" इदं च सामर्थ्यमात्रमु-
पवर्ण्यते, एतावति क्षेत्रे यदि द्रष्टव्यं भवति तर्हि पश्यति, यावताऽलोके तन्न विद्यते, अलोके रूपिद्रव्याणामसंभवात्, रूपिद्र-

व्यविषयश्चावधिः, केवलमयं विशेषो—यावदद्यापि परिपूर्णमपि लोकं पश्यति तावदिह स्कन्धानेव जानाति, यदा पुनः अलोके प्रसरमवधिरधिरोहति तदा यथा २ अभिवृद्धिमासादयति तथा तथा लोके सूक्ष्मान् सूक्ष्मतरान् स्कन्धान् पश्यति, यावदन्ते परमाणुमपि, उक्तञ्च—“सामत्थमेत्तमुत्तं दट्ठव्वं जइ हवेज्ज पेच्छेज्जा । न उ तं तत्थत्थि जतो सो रूविनिबंधणो भणिओ ॥ १ ॥ वड्ढंतो पुण बाहिं लोगत्थं चेव पासई दव्वं । सुहुमयरं सुहुमयरं परमोही जाव परमाणू ॥ २ ॥ (वि. ६०५–६०६)” एवं तावत् जघन्यमुत्कृष्टं चावधिक्षेत्रमुक्तं, सम्प्रति मध्यमं प्रतिपिपादयिषुरेतावत्क्षेत्रोपलभे एतावत्कालोपलम्भः एतावत्कालोपलंभे च एतावत् क्षेत्रोपलम्भ इत्यस्यार्थस्य प्रकटनार्थं गाथाचतुष्टयमाह—

“अंगुलमावलियाणं भागमसंखेज्ज दोसु संखेज्जा । अंगुलमावलियंतो आवलिया अंगुलपुहुत्तं ॥ ३२ ॥
हत्थंमि मुहुत्तंतो दिवसंतो गाउयम्मि बोद्धव्वो । जोयण दिवसपुहुत्तं पक्खंतो पण्णवीसाओ ॥ ३३ ॥
भरहंमि अद्धमासो जंबुद्दीवम्मि साहितो मासो । वासं च मणुयलोए वासपुहुत्तं च रुयगंमि ॥ ३४ ॥
संखिज्जंमि उ काले दीवसमुद्दा य हुंति संखेज्जा । कालम्मि असंखेज्जे दीवसमुद्दा य भइयव्वा ॥ ३५ ॥”

अङ्गुलमिह क्षेत्राधिकारात् प्रमाणाङ्गुलमभिगृह्यते, अन्ये त्वाहुः—अवध्यधिकारादुच्छ्रयाङ्गुलमिति, आवलिका असङ्ख्येयसमयात्मिका, जघन्ययुक्तासङ्ख्यातकप्रमाणसमयसमुदायात्मिका इति भावः, अंगुलं च आवलिका च अंगुलावलिके तयोर्भागं—अंशमसंख्येयं पश्यत्यवधिज्ञानी, किमुक्तं भवति—क्षेत्रतोऽङ्गुलासङ्ख्येयभागमात्रं पश्यन् कालत आवलिकाया असङ्ख्येयमेव भागमतीतमनागतं च पश्यति, उक्तं च—“खेत्तमसंखेज्जंगुल पासं पासं तमेव कालेणं । आवलियाए भागं नी-

यमणागं च जाणाइ ४, ॥"(वि. ६११) आवलिकायाश्चासङ्ख्येयभागं पश्यन् क्षेत्रतोऽङ्गुलासङ्ख्येयं भागं पश्यति, एवं सर्वत्रापि
क्षेत्रकालयोः परस्परं योजना कर्त्तव्या, क्षेत्रकालदर्शनं चोपचारेण द्रष्टव्यं, न साक्षात्, न खलु क्षेत्रं कालं वा साक्षादवधिज्ञानी
पश्यति, तयोरमूर्त्तत्वाद्, रूपिद्रव्यविषयश्चावधिः, तत एतदुक्तं भवति–एतावति क्षेत्रे काले च यानि द्रव्याणि तेषां द्रव्याणां ये
पर्यायास्तान् पश्यतीति, उक्तं च–"तत्थेव य जे दव्वा, तेसिं चिय जे हवंति पज्जाया। इय खेत्ते कालंमि य जोएज्जा दव्वप-
ज्जाए ॥१॥" (वि. ६१२) एवं च सर्वत्रापि भावनीयं, क्रिया च गाथाचतुष्टये स्वयमेव योजनीया, तथा द्वयोरङ्गुलावलिकयोः
सङ्ख्येयौ भागौ पश्यति, अङ्गुलस्य सङ्ख्येयं भागं पश्यन् आवलिकाया अपि सङ्ख्येयमेव भागं पश्यतीत्यर्थः, तथा अङ्गुलं–अङ्गु-
लमात्रं क्षेत्रं पश्यन् आवलिकान्तः–किञ्चिदूनामावलिकां पश्यति, आवलिकां चेत् कालतः पश्यति क्षेत्रतोऽङ्गुलपृथक्त्वं–परि-
पूर्णाङ्गुलपृथक्त्वपरिमाणं क्षेत्रं पश्यति, उक्तं च–"संखेज्जंगुलभागे आवलियाएवि मुणइ तइभागं। अंगुलमिह पेच्छंतो आव-
लियंतो मुणइ कालं ॥१॥ आवलियं मुणमाणो संपुण्णं खेत्तमंगुलपुहुत्तं"मिति (वि. ६१३, ६१४) पृथक्त्वं द्विप्रभृतिरा नवभ्यः,
तथा हस्ते-हस्तमात्रे क्षेत्रे ज्ञायमाने कालतो मुहूर्त्तान्तः पश्यति, अन्तर्मुहूर्त्तप्रमाणं कालं पश्यतीत्यर्थः, तथा कालतो दिवसान्तः-
किञ्चिदूनं दिवसं पश्यन् क्षेत्रतो गव्यूतं–गव्यूतविषयो द्रष्टव्यः, तथा योजनं–योजनमात्रं पश्यन् कालतो दिवसपृथक्त्वमात्रं
कालं पश्यतीत्यर्थः, तथा पक्षान्तः–किञ्चिदूनपक्षं पश्यन् क्षेत्रतः पंचविंशतियोजनानि पश्यति, "भरहंमी" त्यादि, भरते-
सकलभरतप्रमाणे क्षेत्रेऽवधौ कालतोऽर्द्धमास उक्तः, भरतप्रमाणं क्षेत्रं पश्यन् कालतोऽतीतमनागतं चार्द्धमासं–पश्यतीति
भावार्थः, एवं जम्बूद्वीपविषयेऽवधौ साधिको मासः कालतो विषयत्वेन बोद्धव्यः, तथा मनुष्यलोके–मनुष्यलोकप्रमाणक्षे-

त्रविषयोऽवधिर्वर्ष–संवत्सरमतीतमनागतं च पश्यति, तथा रुचके–रुचकाख्यबाह्यद्वीपप्रमाणक्षेत्रविषयोऽवधिर्वर्षपृथक्त्वं पश्यति। 'संखे' त्यादि, संख्यायते इति सङ्ख्येयः, स च संवत्सरलक्षणोऽपि भवति, ततश्चशब्दो विशेषणार्थ उपात्तः, स चैतद्विशिनष्टि–सङ्ख्येयः कालो वर्षसहस्रात्परो वेदितव्यः, तस्मिन् सङ्ख्येये कालेऽवधिगोचरे सति क्षेत्रतस्तस्यैवावधेर्गोचरतया द्वीपाश्च समुद्राश्च द्वीपसमुद्रास्तेऽपि भवन्ति सङ्ख्येयाः, अपिशब्दान्महानेकोऽपि महत एकदेशोऽपि, किमुक्तं भवति ?– सङ्ख्येये कालेऽवधिना परिच्छिद्यमाने क्षेत्रमपि संख्ये यद्वीपसमुद्रपरिमाणं परिच्छेद्यं भवति, तत्र यदि नाम अत्रत्यस्यावधिरुत्पद्यते ततो जम्बूद्वीपादारभ्य सङ्ख्येया द्वीपसमुद्रास्तस्य परिच्छेद्याः, अथ बाह्ये द्वीपे समुद्रे वा सङ्ख्येययोजनविस्तृते कस्यापि तिरश्चः सङ्ख्येयकालविषयोऽवधिरुत्पद्यते तदा यथोक्तक्षेत्रपरिमाणं तमेवैकं द्वीपं समुद्रं वा पश्यति, यदि पुनरसङ्ख्येययोजनविस्तृते स्वयंभूरमणादिके द्वीपे समुद्रे वा सङ्ख्येयकालविषयोऽवधिः कस्याप्युपजायते तदानीं स प्रागुक्तपरिमाणं तस्य द्वीपस्य समुद्रस्य वा एकदेशं पश्यति, यदिवा इहत्यतिर्यङ्मनुष्यबाह्यावधिरेकद्वीपविषयो द्वीपैकदेशविषयो वा वेदितव्यः। तथा कालेऽसङ्ख्येये–पल्योपमादिलक्षणेऽवधिविषये सति तस्यैवासङ्ख्येयकालपरिच्छेदकस्यावधेः क्षेत्रतया परिच्छेद्या द्वीपसमुद्रास्तु भाज्याः–विकल्पयितव्याः, कस्यचिदसङ्ख्येया एव कस्यचित्सङ्ख्येयाः कस्यचिन्महानेकः कस्यचिदेकदेश इत्यर्थः, तत्र इह यदा मनुष्यस्यासङ्ख्येयकालविषयोऽभ्यन्तरावधिरुत्पद्यते तदानीमसङ्ख्येया द्वीपाः समुद्राश्चास्य विषयः, यदा पुनर्बहिर्द्वीपे समुद्रे वा वर्त्तमानस्य कस्यचित्तिरश्चोऽसङ्ख्येयकालविषय उपजायते तदा तस्य सङ्ख्येया द्वीपसमुद्राः, अथवा यस्य मनुष्यस्यासङ्ख्येयकालविषयो बाह्यद्वीपसमुद्रालम्बनो बाह्यावधिरुत्पद्यते तस्य सङ्ख्येया द्वीपसमुद्राः, एवमेकद्वीपविषयोऽपि

भावनीयः, यदा पुनः स्वयंभूरमणे द्वीपे समुद्रे वा कस्यचित्तिरश्चोऽवधिरसङ्ख्येयकालविषयो जायते तदा तस्य स्वयंभूरमणस्य द्वीपस्य समुद्रस्य वा एकदेशो विषयः, स्वयम्भूरमणविषयमनुष्यवाह्यावधिर्वा तदेकदेशो विषयः, क्षेत्रपरिमाणं पुनः सर्वत्रापि योजनापेक्षया संख्येयाख्यं असङ्ख्येयाख्यं वा, तदेवं यथा क्षेत्रवृद्धौ कालवृद्धिः कालवृद्धौ च यथा क्षेत्रवृद्धिस्तथा परिस्थूरन्यायमङ्गीकृत्य प्रतिपादितं। सम्प्रति द्रव्यक्षेत्रकालभावानां मध्ये यद्वृद्धौ यस्य वृद्धिरुपंजायते यस्य च न तदभिधित्सुराह—

काले चउण्ह वुड्ढी, कालो भइयव्वु खेत्तवुड्ढीए। वुड्ढीए दव्वपज्जव भइयव्वा खित्तकाला उ ॥ १ ॥

काले-अवधिगोचरे वर्द्धमाने चतुर्णां-द्रव्यक्षेत्रकालभावानां वृद्धिर्भवति, तथा क्षेत्रस्य वृद्धिः क्षेत्रवृद्धिस्तस्यां सत्यां कालो भजनीयो-विकल्पनीयः, कदाचिद्वर्द्धते कदाचिन्न, क्षेत्रं ह्यत्यंतसूक्ष्मं कालस्तु तदपेक्षया परिस्थूरः, ततो यदि प्रभूता क्षेत्रवृद्धिस्ततो वर्द्धते शेषकालं नेति। द्रव्यपर्यायौ तु नियमतो वर्द्धेते, यत उक्तम्-"काले पवड्ढमाणे सव्वे दव्वादयो पवड्ढंति। खित्ते कालो भइओ वड्ढंति उ दव्वपज्जाया"॥ १ ॥ (वि. ६१८) तथा द्रव्यं च पर्यायश्च द्रव्यपर्यायौ तयोर्वृद्धौ सत्यां, सूत्रे विभक्तिलोपः प्राकृतत्वाद्, भजनीयावेव क्षेत्रकालौ, तुशब्द एवकारार्थः स च भिन्नक्रमः तथैव च योजितः, भजना चैवं-कदाचित्तयोर्वृद्धिर्भवति कदाचिन्न, यतो द्रव्यं क्षेत्रादपि सूक्ष्मं, एकस्मिन्नपि नभःप्रदेशेऽनन्तस्कन्धावगाहतः, द्रव्यादपि सूक्ष्मः पर्यायः, एकस्मिन्नपि द्रव्येऽनन्तपर्यायसम्भवात्, ततो द्रव्यपर्यायवृद्धौ क्षेत्रकालौ भजनीयावेव भवतः, द्रव्ये च वर्द्धमाने पर्याया नियमतो वर्द्धन्ते, प्रतिद्रव्यं सङ्ख्येयानामसङ्ख्येयानां वा पर्यायाणामवधिना परिच्छेदसम्भवात्, पर्याये तु

वर्द्धमाने द्रव्यं भाज्यम्, एकस्मिन्नपि द्रव्ये पर्यायविषयावधिवृद्ध्यवृद्धिसम्भवात्, आह च भाष्यकृत्—"भयणा य खेत्तकाले परिवड्ढंतेसु दव्वभावेसुं। दव्वे वड्ढइ भावो भावे दव्वं तु भयणिज्जं ॥१॥"(वि. ६१९)आह—ननु जघन्यमध्यमोत्कृष्टभेदभिन्नयोरवधिज्ञानसम्बन्धिनोः क्षेत्रकालयोः अङ्गुलावलिकासङ्ख्येयभागादिरूपयोः परस्परं प्रदेशसमयसङ्ख्यया तुल्यत्वमुत हीनाधिकत्वं ?, उच्यते, हीनाधिकत्वं, तथाहि—आवलिकाया असंख्येये भागे जघन्यावधिविषये यावन्तः समयास्तदपेक्षया अङ्गुलस्यासङ्ख्येयभागे जघन्यावधिविषये एव ये नभःप्रदेशास्ते असङ्ख्येयगुणाः, एवं सर्वत्राप्यवधिविषयात् कालादसङ्ख्येयगुणत्वमवधिविषयस्य क्षेत्रस्यावगन्तव्यं, उक्तं च—"सव्वमसंखेज्जगुणं कालाओ खित्तमोहिविसयंमि। अवरोप्परसंबद्धं समयपएसप्पमाणेणं ॥१॥" (वि. ६२४) अथ क्षेत्रस्येत्थं कालादसङ्ख्येयगुणता कथमवसीयते ?, उच्यते, सूत्रप्रामाण्यात्, तदेव सूत्रमुपदर्शयति—

**सुहुमो य होइ कालो तत्तो सुहुमयरयं हवइ खेत्तं। अंगुलसेढीमित्ते, ओसप्पिणिओ असंखेज्जा ॥३६॥**

'सूक्ष्मश्च' श्लक्ष्णश्च भवति कालः, चशब्दो वाक्यभेदक्रमोपदर्शनार्थः, यथा सूक्ष्मस्तावत्कालो भवति, यस्मादुत्पलपत्रशतभेदे प्रतिपत्रमसङ्ख्येयाः समयाः प्रतिपद्यन्ते, ततः सूक्ष्मः कालः, तस्मादपि कालात् सूक्ष्मतरं क्षेत्रं भवति, यस्मादङ्गुलश्रेणिमात्रे क्षेत्रे—प्रमाणाङ्गुलैकमात्रे श्रेणिरूपे नभःखण्डे प्रतिप्रदेशं समयगणनया असङ्ख्येया अवसर्प्पिण्यस्तीर्थकृद्भिराख्याताः, इदमुक्तं भवति—प्रमाणाङ्गुलैकमात्रे एकैकप्रदेशश्रेणिरूपे नभःखण्डे यावन्तोऽसङ्ख्येयास्ववसर्प्पिणीषु समयास्तावत्प्रमाणा (:प्रदेशा) वर्त्तन्ते, ततः सर्वत्रापि कालादसङ्ख्येयगुणं क्षेत्रं, क्षेत्रादपि चानन्तगुणं द्रव्यं, द्रव्यादपि चावधिविषयः

पर्यायः सङ्ख्येयगुणोऽसङ्ख्येयगुणो वा, उक्तं च—“खेत्तविसेसेहिंतो, दव्वमणंतगुणियं पएसेहिं । दव्वेहिंतो भावो संखगुणोऽसंख-
गुणियो वा ॥१॥” ( वि. ६२५ पए. ) उक्तमवधेर्जघन्यमध्यमोत्कृष्टभेदभिन्नं क्षेत्रपरिमाणं, क्षेत्रं चावधिगोचरद्रव्याधारे-
णावधेर्व्यपदिश्यते, ततः क्षेत्रस्य द्रव्यावधिकत्वात्तदभिधानानन्तरं अवधिपरिच्छेदयोग्यं द्रव्यमभिधातव्यं, अवधिश्च
त्रिधा-जघन्यो मध्यम उत्कृष्टश्च, तत्र जघन्यावधिपरिच्छेदयोग्यं तावद्द्रव्यमभिधित्सुराह—

**तेयाभासादव्वाण अंतरा एत्थ लहइ पट्ठवगो । गुरुलहु अगुरुयलहुयं तंपि य तेणेव निट्ठाइ ॥ ३७ ॥**

तैजसं च भाषा च तैजसभाषे तयोर्द्रव्याणि तैजसभाषाद्रव्याणि तेषां तैजसभाषाद्रव्याणामन्तरात्, प्राकृतत्वाद्विभक्ति-
परिणामः, अन्तरे, अथवा अंतरे इति पाठान्तरमेव, किमुक्तं भवति ?—तैजसभाषाद्रव्याणामपान्तराले इति, 'अत्र' एत-
स्मिन् उभयायोग्यद्रव्यसमूहे तैजसभाषाभ्यामन्यदेव द्रव्यं 'लभते' पश्यति, कोऽसावित्याह—'प्रस्थापकः' प्रस्थापको नाम
तत्प्रथमतया अवधिज्ञानप्रारम्भकः, किंविशिष्टं तदित्याह— 'गुरुलघ्वगुरुलघु' गुरु च लघु च गुरुलघु तथा न गुरुलघु
अगुरुलघु, किमुक्तं भवति ?—गुरुलघुपर्यायोपेतं गुरुलघु अगुरुलघुपर्यायोपेतमगुरुलघु, तत्र यत्तैजसद्रव्यासन्नं तद् गुरु-
लघु यत्पुनर्भाषाद्रव्यासन्नं तदगुरुलघु, तदपि चावधिज्ञानं प्रच्यवमानं सत्पुनस्तेनैव द्रव्येणोपलब्धेन सता निष्ठां याति,
प्रच्यवते इति भावः, तथा चोक्तं—“पट्ठवगो नाणस्सारंभतो (पासए) जं त(या)दीए । उभयाजोग्गं पेच्छइ तेयाभासंतरे दव्वं
॥ १ ॥ गुरुलहु तेयासन्नं भासासन्नमगुरुं व पासेज्जा । आरंभे जं दिट्ठं दट्ठूणं पडइ तं चेव ॥ २ ॥ ” (वि.६२८-९) 'तदपि
चे'त्यत्रापिशब्दो यत्प्रतिपाति तत्रायं नियमो न पुनरवधिज्ञानं प्रतिपात्येव भवतीति संदर्शनार्थः, चशब्दस्त्वेवकारार्थः

स चावधारणे, तस्य चैवं प्रयोगः—अवधिज्ञानमेवैवं प्रच्यवते, न शेपज्ञानानीति, अथ कियत्प्रदेशं तत् द्रव्यं यत्तैजसभापाद्रव्याणामपान्तरालवर्त्ति जघन्यावधिप्रमेयमित्याशङ्क्य, तत्किल परमाण्वादिक्रमोपचयादौदारिकादिवर्गणानुक्रमतः प्रतिपादयितुं शक्यं, अतस्तत्स्वरूपं प्रतिपिपादयिपुर्गाथाद्वयमाह—

ओरालविउव्वाहारतेयभासाणपाणमणकम्मे । अह दव्ववग्गणाणं कमो विवज्जासतो खेत्ते ॥ ३९ ॥
कम्मोवरिं धुवेयर सुन्नेअरवग्गणा अणंताओ । चउधुवणंतरतणुवग्गणा य मीसो तहाऽचित्तो ॥४०॥

आह—किमर्थमौदारिकादिशरीरप्रायोग्याप्रायोग्यद्रव्यवर्गणाः प्ररूप्यन्ते?, उच्यते—विनेयानामसंमोहार्थं, तथा चात्रोदाहरणम्—इह भरतक्षेत्रे मगधाजनपदे प्रभूतगोमण्डलस्वामी कुचिकर्णो नाम गृहपतिरासीत्, स च तासां गवामतिप्रभूतत्वात् सहस्रादिपरिमितानां पृथक् पृथगनुपालनार्थं प्रभूतान् गोपालान् चक्रे, ते च तासु परस्परं मिलितासु गोपा आत्मीयाः २ सम्यगजानन्तः सन्तोऽनवरतं कलहमकार्पुः, तांश्च तथा परस्परं विवदमानान् उपलभ्यासौ तेपामव्यामोहार्थं कलहव्यवच्छित्तये च शुक्लकृष्णरक्तकर्बुरादिभेदभिन्नानां गवां प्रतिगोपालं सजातीयगोसमुदायरूपा भिन्ना वर्गणा व्यवस्थापितवान्, एप दृष्टान्तोऽयमर्थोपनयः—इह गोपालप्रभुकल्पो भगवांस्तीर्थकरः गोपकल्पेभ्यः शिष्येभ्यो गोसमूहसमानपुद्गलास्तिकायं तदसम्मोहाय परमाण्वादिवर्गणाविभागेन निरूपितवान् इति, कृतं प्रसङ्गेन, पदार्थः प्रतिपाद्यते, तत्र औदारिकग्रहणादौदारिकशरीरप्रायोग्या वर्गणाः परिगृहीताः, इह वर्गणाः सामान्यतश्चतुर्विधा भवन्ति, तद्यथा—द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यत एकपरमाण्वादीनां यावदनन्तपरमाणूनां क्षेत्रत एकप्रदेशावगाढानां

यावत् असंख्यप्रदेशावगाढानां, कालत एकसमयस्थितीनां सर्वेषां परमाणूनां स्कन्धानां च एका वर्गणा द्विसमयस्थितीनां सर्वेषां द्वितीया वर्गणा त्रिसमयस्थितीनां सर्वेषां तृतीया वर्ग्गणा एवमेकैकसमयवृद्ध्या संख्येयसमयस्थितीनां परमाण्वादीनां सङ्ख्येया वर्गणाः असङ्ख्येयसमयस्थितीनां त्वसङ्ख्येया वर्गणाः, भावत एकगुणकृष्णानां परमाणूनां स्कन्धानां च सर्वेषामेका वर्गणा कृष्णवर्णगुणद्वययुक्तानां परमाण्वादीनां द्वितीया वर्गणा एवमेकैकगुणवृद्ध्या सङ्ख्येयकृष्णवर्णगुणानां सङ्ख्येया वर्गणाः असङ्ख्येयकृष्णवर्णगुणानामसङ्ख्येया अनन्तकृष्णवर्णगुणानामनन्ताः, एवं नीललोहितहारिद्रशुक्लेषु ४ सुरभीतरयोर्गन्धयोः ६ तिक्तकटुकषायाम्लमधुरेषु पञ्चसु रसेषु ११ कर्कशमृदुगुरुलघुशीतोष्णस्निग्धरूक्षेषु अष्टासु स्पर्शेषु १९ सर्वसङ्ख्यया एकोनविंशतिस्थानेषु प्रत्येकमेकादीनां सङ्ख्येयगुणानां सङ्ख्येयाः असङ्ख्येयगुणानामसङ्ख्येयाः अनन्तगुणानामनन्ता वर्गणा वाच्याः, तथा लघुगुरुपर्यायाणां बादरपरिणामान्वितवस्तूनामेका वर्गणा, अगुरुलघुपर्यायाणां तु सूक्ष्मपरिणामपरिणतवस्तूनामेका वर्गणा, एवमेते द्वे वर्गणे भवतः, तत्र समस्तलोकाकाशप्रदेशवर्त्तिनामेकाकिपरमाणूनां समुदाय एका वर्ग्गणा, ततः समस्तलोकवर्त्तिनां द्विप्रदेशिकस्कन्धानां द्वितीया वर्गणा, ततः समस्तानामपि त्रिप्रदेशिकस्कन्धानां तृतीया वर्ग्गणा, चतुष्प्रदेशिकस्कन्धानां चतुर्थी, एवमेकोत्तरवृद्ध्या तावन्नेयं यावत् सङ्ख्यातप्रदेशिकस्कन्धानां सङ्ख्येया वर्ग्गणाः असङ्ख्येयप्रदेशिकानामसङ्ख्येयाः अनन्तप्रदेशिकानामनन्ताः खल्वग्रहणप्रायोग्या वर्ग्गणा विलङ्घ्य विशिष्ट परिणामयुक्ता औदारिकशरीरग्रहणप्रायोग्या अनन्तवर्गणा भवन्ति, ततो एकोत्तरप्रदेशवृद्ध्या वर्द्धमानाः प्रचुरद्रव्यत्वात्सूक्ष्मतरपरिणामत्वाच्चौदारिकस्याग्रहणप्रायोग्या अनंता वर्गणा भवंति, ताश्च स्वल्पपरमाणुनिष्पन्नत्वाद्बादरपरि-

णामयुक्तत्वाच्च वैक्रियस्याप्यग्रहणप्रायोग्याः, केवलमौदारिकवर्गणानामासन्नत्वेन तदाभासत्वात् तदग्रहणयोग्या इति व्यवह्रियन्ते, तासामौदारिकाग्रहणप्रायोग्यवर्गणानामुपरि एकैकप्रदेशवृद्ध्या वर्धमानाः स्वल्पद्रव्यनिष्पन्नत्वाद् बादरपरिणामत्वाच्च वैक्रियशरीरस्याग्रहणप्रायोग्या अनन्ता वर्गणा भवन्ति, ताश्च प्रचुरद्रव्यनिष्पन्नत्वात् सूक्ष्मपरिणामत्वाच्चौदारिकस्याप्यग्रहणप्रायोग्याः परं वैक्रियवर्गणाप्रत्यासन्नतया तदाभासत्वाद्वैक्रियशरीराग्रहणप्रायोग्या इति व्यपदिष्टाः, तत एवमेकोत्तरवृद्ध्या वर्द्धमानाः प्रचुरद्रव्यनिर्वृत्तत्वात्तथाविधसूक्ष्मपरिणामत्वाच्च वैक्रियशरीरस्य ग्रहणप्रायोग्या अनन्ता वर्गणा भवन्ति, तत ऊर्ध्वमेकोत्तरवृद्ध्या प्रवर्द्धमानाः प्रचुरद्रव्यारब्धत्वात्सूक्ष्मतरपरिणामत्वाच्च वैक्रियस्याग्रहणप्रायोग्या अनन्ता वर्गणाः, तासां च वैक्रियाग्रहणप्रायोग्यवर्गणानामुपर्येकोत्तरवृद्ध्या प्रवर्द्धमानाः स्वल्पद्रव्यनिष्पन्नत्वाद्बादरपरिणामत्वाच्चाहारकशरीरस्याग्रहणप्रायोग्या अनन्ता वर्गणाः, तदनन्तरमेकोत्तरवृद्ध्या वर्धमानाः प्रचुरद्रव्यनिर्वृत्तत्वात् तथाविधसूक्ष्मपरिणामपरिणतत्वाच्चाहारकशरीरस्य ग्रहणप्रायोग्या अनन्ता वर्गणाः, ततोऽप्येकोत्तरवृद्ध्या वर्द्धमाना बहुतमद्रव्यनिष्पन्नत्वादतिसूक्ष्मपरिणामत्वाच्चाहारकशरीरस्याग्रहणप्रायोग्याः अनन्ता वर्गणाः, एवं तैजसस्य ४ भाषायाः ५ आनप्राणयोः ६ मनसः ७ कर्मणश्च ८ यथोत्तरमेकोत्तरवृद्ध्युपेतानां प्रत्येकमनन्तानामयोग्यानां योग्यानां पुनरयोग्यानां वर्गणानां पृथक् त्रयं वक्तव्यं, आह च भाष्यकृत्–"एगा परमाणूणं, एगुत्तरवड्ढितो ततो कमसो। संखेज्जपएसाणं संखेज्जा वग्गणा होंति ॥ १ ॥ तत्तो संखातीता संखातीतप्पएसमाणाणं। तत्तो पुणो अणंताणंतपएसाण गंतूणं ॥ २ ॥ ओरालियस्स गहणप्पायोग्गा वग्गणा अणंताओ। अग्गहणप्पायोग्गा, तस्सेव ततो अणंताओ ॥३॥ एवमजोग्गा जोग्गा, पुणो अजोग्गा य वग्ग-

औदारिकाद्या वर्गणाः

णाणंता। वेउव्वियाइयाणं, नेयं तिविगप्पमेक्केक्कं ॥४॥ (वि.६३३-६३६) आह-कथं पुनरेकैकस्यौदारिकादेः त्रयं त्रयं गम्यते?,
उच्यते, तैजसभाषाद्रव्यापान्तरालवर्त्युभयायोग्यद्रव्यावधिगोचराभिधानात्, उक्तं च-"एक्केक्कस्सादीए पज्जन्तंमि हवंतऽ-
जोग्गाइं। उभयाजोग्गाइं जतो तेयाभासंतरे पढइ॥१॥" (वि. ६३७) 'अहे' त्यादि, अथ एष द्रव्यवर्गणानां क्रमः-परिपाटी,
वर्गणा वर्गो राशिरिति पर्यायाः, तथा 'विपर्यासतो' विपर्यासेन 'क्षेत्रे' क्षेत्रविषयो वर्गणाक्रमो वेदितव्यः, तद्यथा-परमा-
णूनां द्व्यणुकाद्यनन्ताणुकपर्यन्तस्कन्धानां च एकैकाकाशप्रदेशावगाहिनां सर्वेषामेका वर्गणा, द्व्यणुकाद्यनन्ताणुकपर्यन्त-
स्कन्धानां द्विप्रदेशावगाहिनां स्कन्धानां द्वितीया वर्गणा, त्र्यणुकाद्यनन्ताणुपर्यन्तस्कन्धानां त्रिप्रदेशावगाहिनां
तृतीया वर्गणा, एवमेकैकाकाशप्रदेशवृद्ध्या सङ्ख्येयप्रदेशावगाहिनां स्कन्धानां सङ्ख्येया वर्गणाः, ततोऽसङ्ख्येयप्रदेशाव-
गाहिनां स्कन्धानामसङ्ख्येयाः, ताश्च एकैकाकाशप्रदेशवृद्ध्या वर्द्धमानाः खलु असङ्ख्येया वर्गणा विलङ्घ्य कर्मणः
प्रायोग्या असङ्ख्येया वर्गणा भवन्ति, ततोऽनन्तरमल्पपरमाणुनिष्पन्नत्वाद् बादरपरिमाणत्वेन बह्वाकाशप्रदेशावगाहि-
त्वाच्च तस्यैव कर्मणोऽग्रहणप्रायोग्या एकैकाकाशप्रदेशवृद्ध्या असङ्ख्येया वर्गणाः १ एवमेकैकाकाशप्रदेशवृद्ध्या वर्द्धमा-
ना मनसोऽप्यसङ्ख्येया अग्रहणवर्गणाः, पुनरेतावत्य एव तस्य ग्रहणवर्गणाः, पुनरेतावत्प्रमाणा एव तस्यैवाग्रहणप्रायोग्या
वर्गणाः, एवमानप्राणयोर्भाषायास्तैजसस्याहारकस्य वैक्रियस्यौदारिकस्य चायोग्ययोग्यायोग्यवर्गणानां क्षेत्रतोऽपि प्रति-
लोमं त्रयं त्रयं प्रत्येकमायोजनीयम् "परं परं सूक्ष्मं। प्रदेशतोऽसङ्ख्येयगुण" मिति (तत्त्वा.२-३८-३९) वचनात्, भाष्यकारो-
ऽप्याह-"एगपएसोगाढाण वग्गणेगा पएसवुड्ढीए। संखेज्जोगाढाणं, संखेज्जा वग्गणा तत्तो॥१॥ (वि.६७५) तत्तो संखातीता
संखातीतप्पएसमाणाणं। गंतुमसंखेज्जातो जोग्गातो कम्मुणो भणिया॥२॥ तत्तो संखातीया तस्सेव पुणो हवंतऽजोग्गातोत।

माणसद्वाईणवि, एवं तिविकप्पमेक्केक्कं ॥ ३ ॥" ( वि. ६४८, ६४९ ) अधुना द्वितीयगाथाव्याख्या-तत्रानन्तरगाथायां कर्मद्रव्यवर्गणाः प्रतिपादिताः, सम्प्रति प्रदेशोत्तरवृद्ध्या तदग्रहणप्रायोग्याः प्रदर्श्यन्ते-क्रियते-मिथ्यात्वादिसचिवैर्जीवैर्निर्वर्त्यते इति कर्म्म कर्म्मण उपरि कर्म्मोपरि, ' नाम नाम्नैकार्थ्ये समासो बहुल'मिति समासः, षष्ठीतत्पुरुषस्तु न प्राप्नोति, 'अव्यये'ति प्रतिषेधात्, कर्म्माग्रहणप्रायोग्यवर्ग्गणानामुपरीतिभावः, 'धुवे'ति ध्रुववर्गणा अनन्ता भवन्ति, तद्यथा-कर्म्मग्रहणप्रायोग्यवर्गणानामुपरि एकाधिकपरमाणूपचितातिसूक्ष्मपरिणामाऽनन्तपरमाण्वात्मिका प्रथमा ध्रुववर्ग्गणा भवति, तत एकोत्तरवृद्ध्या वर्द्धमानाः एता अपि ध्रुववर्गणा अनन्ता वेदितव्याः, ध्रुवा-नित्याः लोकव्यापितया सर्वकालावस्थायिन्य इति भावः, अन्तदीपकं चेदं, ततश्चैतासां ध्रुवत्वभणनेन प्रागुक्ता अपि कर्म्मवर्गणान्ताः सर्वा एव वर्गणा ध्रुवा इत्यवगन्तव्यम्, तासामपि सर्वत्र लोके सदैवाव्यवच्छेदात्, अन्यच्च-एता ध्रुववर्गणा वक्ष्यमाणाश्चाध्रुवाद्याः सर्वा अपि ग्रहणाप्रायोग्यवर्गणाः अतिबहुद्रव्योपचितत्वेनातिसूक्ष्मपरिणामत्वेन च सर्वजीवैरौदारिकादिभावेनाग्रहणात् , तदनन्तरमित्थमेवैकोत्तरवृद्ध्या वर्द्धमाना ध्रुववर्गणाभ्य इतरा अध्रुववर्गणा अनन्ता भवन्ति, एताश्च तथाविधपुद्गलपरिणामवैचित्र्यात् कदाचिल्लोके न भवन्त्यपि, तत एता अध्रुवा इति व्यपदिश्यन्ते, अध्रुवा-अशाश्वत्यः, कदाचिन्न सन्त्यपीति भावः, ततः 'सुन्ना' इति 'सूचनात् सूत्र'मिति न्यायात् शून्यान्तरवर्गणाः परिगृह्यन्ते एकोत्तरवृद्ध्या, कदाचिच्छून्यानि-व्यवहितानि अन्तराणि यासां ताः शून्यान्तराः ताश्च ता वर्गणाश्च शून्यान्तरवर्गणाः, किमुक्तं भवति ?-एता एकोत्तरवृद्ध्या निरन्तरमनन्ताः सदैव प्राप्यन्ते, परं कदाचिदेतास्वेकोत्तरवृद्धिरन्तरान्तरा त्रुट्यति, तत एताः शून्यान्तरवर्ग्गणाः, एता अप्य-

न्ता एव, 'इयर' इति इतरग्रहणादशून्यान्तरवर्गणा गृह्यन्ते, एकोत्तरवृद्ध्या सर्वदैवाशून्यानि अन्तराणि यासां ता अशून्यान्तराः ताश्च ता वर्गणाश्च अशून्यान्तरवर्गणाः, एता ह्येकोत्तरवृद्ध्या निरन्तरमेव लोके सर्वदैव प्राप्यन्ते, न पुनरेकोत्तरवृद्धिहानिरपान्तराले, तत एता अशून्यान्तरवर्गणाः, ता अपि च प्रदेशोत्तरवृद्ध्या खल्वनन्ताः, 'चउधुवणंतर' इति, ततोऽशून्यान्तरवर्गणानामुपरि ध्रुवानन्तराणि चत्वारि वर्गणाद्रव्याणि भवन्ति, ध्रुवाणि च सर्वकालभावित्वादनन्तराणि च निरन्तरैकोत्तरवृद्धिभाक्त्वात् ध्रुवानन्तराणि, किमुक्तं भवति?–आद्या ध्रुवाऽनन्तरवर्गणाः प्रथमतोऽनन्ता भवन्ति, तदनन्तरमेतावत्यो द्वितीयास्ततस्तृतीयाः ततश्चतुर्थ्यो वाच्याः, ध्रुववर्गणाः प्रागप्युक्ताः परं ताभ्य एता भिन्ना एव, न पुनस्तास्वन्तर्भवन्ति, अतिसूक्ष्मपरिणामत्वाद्बहुद्रव्योपचितत्वाच्च, एतासां चतसृणामपि ध्रुववर्गणानां प्रत्येकमपान्तराले एकोत्तरवृद्धिहानिरवसातव्या, अन्यथा निरन्तरमेकोत्तरवृद्धिसम्भवे चातुर्विध्यासम्भवात्, एवं तनुवर्गणानामपि भावनीयम्; एतासां चतसृणां ध्रुववर्गणानामुपरि प्रत्येकमेकोत्तरवृद्धियुक्तानन्तवर्गणात्मिकाश्चतस्रस्तनुवर्गणा भवंति, तनूनाम्–औदारिकादिशरीराणां भेदाभेदपरिणामाभ्यां योग्यत्वाभिमुखा वर्गणास्तनुवर्गणाः, अथवा वक्ष्यमाणमिश्रस्कन्धाचित्तस्कन्धद्वयस्य तनुः-देहः शरीरं मूर्तिरितियावत्, तद्योग्यत्वाभिमुखा वर्गणास्तनुवर्गणाः, आह च भाष्यकृत्– "धुवणंतराइ चत्तारि, जं धुवाइं अणंतराइं च। भेयपरिणामतो जा सरीरजोग्गत्तणाभिमुहा ॥ १ ॥ खंधदुगदेहजोग्गत्तणेण वा देहवग्गणातोत्ति (वि. ६४१-६४२)। 'मीसो' इति, तदनन्तरं मिश्रस्कंधो भवति, सूक्ष्म एव सन् ईषद्बादरपरिणामाभिमुखः सूक्ष्मत्वबादरत्वपरिणाममिश्रणात् मिश्रस्कन्धः, आह च भाष्यकृत्– "सुहुमो दरगयवायरपरिणामो मीसगो खंधो।

(वि. ६४२) 'तहा अचित्तो" इति, तथेत्यानन्तर्ये अचित्त इति 'पदैकदेशे पदसमुदायोपचाराद्' अचित्तमहास्कन्धः, स च विश्रसापरिणामवैचित्र्यात् केवलिसमुद्घातगत्या चतुर्भिः समयैः सकललोकमापूरयति, चतुर्भिरेव च समयैस्तस्य संहरणमिति, आह च भाष्यकृत्–जइणसमुग्घायगई चउहिं समएहिं पूरणं कुणइ। लोगस्स तेहिं चेव य, संहरणं तस्स पडिलोमं ॥ १ ॥ ( वि.२८२ ) आह–अचित्तत्वाव्यभिचारादचित्तविशेषणमनर्थकमिति, न, केवलिसमुद्घातसचित्तकर्म्मपुद्गललोकव्यापि(ता)व्यवच्छेदपरतया विशेषणस्य सार्थकत्वात्, एष एव सर्वोत्कृष्टप्रदेशोऽचित्तमहास्कन्ध इति केचिद् व्याचक्षते, तदसम्यक्, यस्मात्प्रज्ञापनायामवगाहनस्थितिभ्यामसङ्ख्येयभागहीनादिभेदाच्चतुःस्थानपतिता उक्ताः उत्कृष्टप्रादेशिकाः स्कन्धाः, तथा च तत्सूत्रम्– "उक्कोसपएसियाणं भंते! खंधाणं केवइया पज्जवा पन्नत्ता?, गोयमा! अणंता, से केणट्ठेणं भंते! एवं वुच्चइ?, गोयमा! उक्कोसपएसिए खंधे उक्कोसपएसियस्स खंधस्स दवट्ठयाए तुल्ले, एकैकद्रव्यत्वात्, पदेसट्ठयाए तुल्ले, उत्कृष्टप्रदेशस्य चिन्त्यमानत्वात्, ओगाहणट्ठयाए चउट्ठाणवडिए, तंजहा–असंखेज्जभागहीणे वा संखेज्जभागहीणे वा असंखेज्जगुणहीणे वा संखिज्जगुणहीणो वा, अह अब्भहिए असंखेज्जभागअब्भहिए वा संखेज्जभागअब्भहिए वा संखिज्जगुणअब्भहिए वा असंखिज्जगुणब्भहिए वा, एवं ठिइएवि चउट्ठाणवडिए, वण्णरसगंधफासेहिं छट्ठाणवडिए" इति, एषः पुनरचित्तमहास्कन्धोऽचित्तमहास्कन्धान्तरेण सहावगाहनास्थितिभ्यां तुल्य एव, अन्यच्च सामान्य उत्कृष्टप्रादेशिकस्कन्धोऽष्टस्पर्शो गीयते, अचित्तमहास्कन्धः पुनश्चतुःस्पर्शः, ततोऽन्येऽपि उत्कृष्टप्रादेशिकाः स्कन्धाः सन्तीति नियमतः प्रतिपत्तव्यम्, तथा चोक्तं–सव्वुक्कोसपएसो एसो केई न चायमेगंतो। उक्कोसपएसो जमवगाहठिईओ चउट्ठाणो ॥१॥ (वि.६४५)

उत्कृष्टाचित्तस्कन्धयोर्नानात्वम्

अट्ठप्फासो य जतो भणितो एसो य चउफासो। अण्णेऽवि ततो पोग्गलभेया संतित्ति सद्धेयं ॥२॥ (वि. ५४५–५४६) इह प्राक् तैजसभाषाद्रव्याणामपान्तराले गुरुलघ्वगुरुलघु च जघन्यावधिप्रायोग्यं द्रव्यमुक्तम्, जघन्यावधिश्च द्विधा–गुरुलघुद्रव्यारब्धोऽगुरुलघुद्रव्यारब्धश्च, तत्र गुरुलघुद्रव्यारब्धः कोऽपि तान्येव तैजसप्रत्यासन्नानि गुरुलघुद्रव्याणि दृष्ट्वा विध्वंसमापद्यते, 'तंपिय तेणेव निट्ठाइ' इति वचनात्, यस्तु विशुद्धिमासादयन् प्रवर्द्धते सोऽधस्तनानि तान्येव गुरुलघून्यौदारिकादीनि द्रव्याणि दृष्ट्वा ततोऽधिकतरां विशुद्धिमासादयन् क्रमेणैवागुरुलघूनि भाषादिद्रव्याणि पश्यति, अगुरुलघुद्रव्यसमारब्धोऽपि कश्चिदूर्ध्वं हि वर्द्धमान इतराण्यपि तत्कालं गुरुलघून्यौदारिकादीनि पश्यति, उक्तं च–"गुरुलहुदव्वारद्धो गुरुलहुदव्वाइ पेच्छिउं पच्छा। इयराइं कोइ पेच्छइ, विसुज्झमाणो कमेणेव ॥१॥ अगुरुलहुसमारद्धो उड्ढं वड्ढइ कमेण सो नाहो। वड्ढंतोऽविय कोई पेच्छइ इयराइं सयराहं ॥ २ ॥" (वि.६५५–६५६) अत्र 'सयराह'मिति शीघ्रं युगपदिति तात्पर्यार्थः॥

अथ किं गुरुलघु किं वा अगुरुलघु इति शङ्कायां तत्स्वरूपप्रतिपादनार्थमाह—

"ओरालिय वेउव्विय आहारग तेय गुरुलहू दव्वा। कम्मगमणभासाइं एयाइं अगुरुलहुयाइं ॥ ४१ ॥

इह द्वौ नयौ–व्यवहारनयो निश्चयनयश्च, तत्र व्यवहारनयः प्राह–चतुर्धा द्रव्यम्, तद्यथा–किञ्चिद्गुरु किञ्चिल्लघु किञ्चिद्गुरुलघु किञ्चिदगुरुलघु, तत्र यदूर्ध्वं तिर्यग्वा प्रक्षिप्तमपि पुनर्निसर्गादधो निपतति द्रव्यं तद्गुरु, तद्यथा लोष्ठादि, यत्तु द्रव्यं निसर्गत एवोर्ध्वगतिस्वभावं तल्लघु, यथा दीपकलिकादिः, यत्पुनर्नोर्ध्वगतिस्वभावं नाप्यधोगतिस्वभावं किन्तु स्वभावेनैव तिर्यग्गतिधर्मकं तद्गुरुलघु, यथा वायुः, यत्तूर्ध्वाधस्तिर्यग्गतिस्वभावानामेकतरस्वभावमपि न भवति

सर्वत्र वा गच्छति तदगुरुलघु, यथा व्योमपरमाण्वादि; उक्तं च-"गुरुयं लहुयं उभयं नोभयमिति वावहारियनयस्स। दव्वं लेट्ठुं दीवो वाऊ वोमं जहासंखं॥१॥" (वि.६५८) निश्चयनयः पुनरिदमाह-न सर्वगुर्वेकांतेन किमपि वस्त्वस्ति, गुरोरपि लोष्टादेः प्रयोगादूर्ध्वादिगमनदर्शनात्, नाप्येकान्तेन सर्वलघ्वप्यस्ति, अतिलघोरपि वाय्वादेः करताडनादिना अधोगमनादिदर्शनतः, तस्माद् द्विविधमेव वस्तु, तद्यथा-गुरुलघु अगुरुलघु च, तत्र यद् बादरं भूभूधरादिकं तत्सर्वं गुरुलघु, शेषं तु भाषाप्राणापानमनोवर्ग्गणादिकं परमाणुद्व्यणुकव्योमादिकं च सर्वमगुरुलघु, उक्तं च-"निच्छयतो सव्वगुरुं सव्वलहुं वा न विज्जए दव्वं। बायरमिह गुरुलहुयं अगुरुलहुं सेसयं दव्वं॥१॥" (वि. ६५९) तत्रेयं गाथा निश्चयनयमतेन, पदार्थव्याख्या त्वेवम्—औदारिकवैक्रियाहारकतैजसद्रव्याणि अपराण्यपि तैजसद्रव्यप्रत्यासन्नानि तदाभासानि बादररूपत्वाद् 'गुरुलघूनि' गुरुलघुस्वभावानि, कार्म्मणमनोभाषाद्रव्याणि तु आदिशब्दात् प्राणापानद्रव्याणि भाषाद्रव्यार्वाग्वर्त्तीनि भाषाभासानि अपराण्यपि च परमाणुद्व्यणुकादीनि व्योमादीनि च एतानि 'अगुरुलघूनि' अगुरुलघुस्वभावानि॥ वक्ष्यमाणगाथाद्वयसम्बन्ध एवं-पूर्वं किल क्षेत्रकालसम्बन्धिनोः केवलयोरङ्गुलावलिकासङ्ख्येयादिविभागकल्पनया परस्परोपनिबन्ध उक्तः, सम्प्रति तयोरेवोक्तलक्षणेन द्रव्येण सह परस्परोपनिबन्ध उपदर्श्यते—

संखेज्ज मणोदव्वे, भागो लोगपलियस्स बोद्धव्वो। संखेज्ज कम्मदव्वे, लोगे थोवूणयं पलियं॥ ४२॥
तेयाकम्मसरीरे तेयादव्वे य भासदव्वे य। बोद्धव्वमसंखेज्जा दीवसमुद्दा य कालो य॥ ४३॥

मनोवर्ग्गणागतं मनःपरिणामयोग्यं मनोद्रव्यं तस्मिन् मनोद्रव्ये-मनोद्रव्यविषये अवधौ 'संखेज्जत्ति' सङ्ख्येयतमो

भागो लोकपल्योपमयोः, सूत्रे चैकत्वं समाहारद्वन्द्वविवक्षणात्, विषयत्वेन बोद्धव्यः, किमुक्तं भवति?-मनोवर्गणागतं द्रव्यं पश्यन् अवधिः क्षेत्रतो लोकस्य सङ्ख्याततमं भागं कालतस्तु पल्योपमस्य सङ्ख्याततमं भागं पश्यति, 'संखेज्ज कम्मदव्वे' इति कर्म्मवर्गणागतं कर्मपरिणामयोग्यं कर्मद्रव्यं तद्विषयेऽवधौ सङ्ख्येया लोकपल्योपमयोर्भागा विषयत्वेन विज्ञेयाः, इदमुक्तं भवति-कर्म्मवर्गणाद्रव्यं पश्यन् अवधिः क्षेत्रतो लोकस्य सङ्ख्येयान् भागान् पश्यति, कालतस्तु पल्योपमस्य सङ्ख्येयान् भागान्, उक्तं च-“लोगपलियाण भागं संखइमं मुणइ जो मणोदव्वं। संखेज्जे पुण भागे, पासइ जो कम्मुणो जोग्गं ॥१॥”(वि.६७०)'लोए थोऊणयं पलियं' ति लोके-चतुर्दशरज्ज्वात्मकलोकविषयेऽवधौ कालतः स्तोकोनं पल्योपमं विषयतया विज्ञेयम्, किमुक्तं भवति?-क्षेत्रतः समस्तं लोकं पश्यन्नवधिः कालतः स्तोकोनं पल्योपमं पश्यतीति, द्रव्येणं सह क्षेत्रकालयोरुपनिबन्धे प्रस्तुते केवलयोरुपनिबन्धप्ररूपणमसमीचीनं, विस्मरणशीलतासूचकत्वादिति चेत्, नैष दोषः, द्रव्योपनिबन्धस्यात्रापि सामर्थ्यप्रापितत्वात्, तथाहि-पूर्वं 'काले चउण्ह वुड्ढी' इत्युक्तम्, कालवृद्धिश्चात्र अनन्तरोक्तकर्म्मद्रव्यदर्शकापेक्षया प्रतिपादिता, ततोऽस्य समस्तलोकस्तोकोनपल्योपमदर्शिनः सामर्थ्यात्कर्म्मद्रव्योपरि यत् किमपि ध्रुववर्गणादि तद्विषयत्वेन द्रष्टव्यम्, अत एव तदुपर्युपरि द्रव्याणि पश्यतः क्षेत्रकालवृद्धिक्रमेण परमावधिसम्भवोऽप्यनुमेयः, द्वितीयगाथाव्याख्या-शरीरशब्दः प्रत्येकमभिसम्बध्यते, तैजसशरीरे कार्मणशरीरे च-एतद्विषयेऽवधाविति भावः, तथा तैजसवर्गणाद्रव्यविषयेऽवधौ भाषाद्रव्यवर्गणाविषये चावधौ क्षेत्रतः प्रत्येकमसङ्ख्येया द्वीपसमुद्राः कालश्चासङ्ख्येयः-पल्योपमासङ्ख्येयभागरूपो विषयत्वेनावसातव्यः, इह यद्यप्यविशेषेणोक्तं तथापि तैजसशरीरात् कार्मणशरीरस्य सूक्ष्मत्वात्

तद्दर्शिन इदमेव द्वीपसमुद्रकालासङ्ख्येयत्वं बृहद् द्रष्टव्यम्; कार्मणशरीरादप्यबद्धानां तैजसवर्गणाद्रव्याणां सूक्ष्मत्वाद् बृहत्तरं, तेभ्योऽपि भाषाद्रव्याणामतिसूक्ष्मत्वाद् बृहत्तममिति, ननु पूर्वं कर्म्मद्रव्यदर्शिनः प्रत्येकं लोकपल्योपमभागाः सङ्ख्येया विषयत्वेनोक्ताः, अत्र तु कार्म्मणशरीरद्रव्यदर्शिनः किमतिस्तोकावेव क्षेत्रकालौ विषयत्वेनाभिहिताविति, उच्यते–पूर्वं कर्म्मद्रव्याणि कर्म्मवर्गणागतानि जीवेन शरीरतया अबद्धानि उक्तानि, अत्र तु शरीरतया बद्धानि, बद्धानि चाबद्धेभ्यो बादराणि भवन्ति, अव्यूततन्तुभ्यो व्यूततन्तुषु तथादर्शनात्, ततः कार्मणशरीरदर्शिनः स्तोकौ क्षेत्रकालावुक्ताविति, अपरस्त्वाह–ननु यदि तैजसद्रव्याणि पश्यतोऽसङ्ख्येया द्वीपसमुद्राः कालश्चासङ्ख्येयो विषयः, तर्हि यत्प्रागुक्तम्-तैजसभाषापान्तरालद्रव्यदर्शिनोऽङ्गुलावलिकासङ्ख्येयभागादि क्षेत्रकालप्रमाणं तद्विरुध्यते, अपान्तरालद्रव्याणि हि तैजसेभ्योऽपि परत्वात्सूक्ष्माणि, तत्र तैजसद्रव्योपलब्धावसङ्ख्येयक्षेत्रकालाभिधानं तैजसद्रव्येभ्योऽपि परसूक्ष्मद्रव्योपलब्धौ त्वङ्गुलावलिकाऽसङ्ख्येयभागादिक्षेत्रकालाभिधानमिति कथं न विरोधः?, नैष दोषः, इह विचित्रा वस्तुशक्तयः, ततोऽपान्तरालद्रव्याणि प्रारम्भकस्यावधेर्विषयः, तैजसानि त्वसङ्ख्येयद्वीपसमुद्रासङ्ख्येयकालविषयस्येति न कश्चिद्दोषः, यदिवा अल्पद्रव्याण्यधिकृत्य तत् अङ्गुलावलिकासङ्ख्येयभागादिक्षेत्रकालप्रमाणमुक्तमिदं तु प्रचुरतैजसद्रव्याण्यधिकृत्यासङ्ख्येयद्वीपसमुद्रासङ्ख्येयकालाभिधानमित्यविरोधः ॥ ननु जघन्यावधिप्रमेयं प्रतिपादयता गुरुलघ्वगुरुलघु च द्रव्यं पश्यतीत्युक्तं, न सर्वमेव, विमध्यमावधिप्रमेयमपि च अङ्गुलावलिकासङ्ख्येयभागाद्यभिधानान्न सर्वद्रव्यरूपं, तत्रस्थानामेव दर्शनात्, तत उत्कृष्टावधेरपि किमसर्वद्रव्यरूपमालम्बनमाहोश्वित् सर्वद्रव्यमालम्बनमिति संशयः, ततस्तदपनोदार्थमाह—

"एगपएसोगाढं, परमोही लहइ कम्मगसरीरं । लहइ अ अगुरुअलहुअं तेअसरीरे भवपुहुत्तं" ॥ ४४ ॥

प्रकृष्टो देशः प्रदेशः एकश्चासौ प्रदेशश्च एकप्रदेशः तस्मिन्नवगाढं-व्यवस्थितं एकप्रदेशावगाढं-परमाणुद्व्यणुकादि द्रव्यं, परमश्चासाववधिश्च परमावधिः उत्कृष्टावधिरित्यर्थः, लभते पश्यति, अवध्यवधिमतोरभेदोपचारादवधिः पश्यतीत्युक्तम्, तथा कार्मणशरीरं च लभते, आह-परमाणुद्व्यणुकादिकं द्रव्यमनुक्तं कथं लभ्यते ?, यावता एकप्रदेशावगाढं कार्मणशरीरमित्युपात्तमेव कस्मान्न योज्यते ?, तदसम्यक्, कार्मणशरीरस्य जीवप्रदेशानुसारितया सङ्ख्यातीतप्रदेशावगाहित्वेनैकप्रदेशावगाढत्वायोगात्, लभते चागुरुलघु चशब्दाद् गुरुलघु च जात्यपेक्षया सर्वमे(त्रै)कवचनम्, ततः सर्वाण्यप्येकप्रदेशावगाढानि कार्मणशरीराणि अगुरुलघूनि गुरुलघूनि च द्रव्याण्यसौ पश्यतीति प्रतिपत्तव्यमिति, तथा तैजसशरीरविषयेऽवधौ कालतो भवपृथक्त्वं तेनासङ्ख्येयेन कालेन विशिष्यते, भवपृथक्त्वमध्य एव स पल्योपमासङ्ख्येयभागः कालो नाधिकः, एतन्मध्ये एव च भवपृथक्त्वं न तदतिक्रमेऽपीति । आह—नन्वेकप्रदेशागाढस्य परमाण्वादेरतिसूक्ष्मत्वात् तदुपलम्भे बादराणां कार्मणशरीरादीनामुपलम्भो गम्यते एव; ततः किमर्थं तेषां पृथगुपन्यासो ?, व्यर्थत्वात्, अथवा एकप्रदेशावगाढमित्यपि न वक्तव्यम्, 'रूपगतं लभते सर्व'मित्यस्य वक्ष्यमाणत्वात्, तदयुक्तं, सम्यग्वस्तुतत्त्वापरिज्ञानात्, तथाहि-यः सूक्ष्मं परमाण्वादि पश्यति तेन बादरं कार्म्मणशरीरादिकमवश्यं द्रष्टव्यम् यो वा बादरं पश्यति तेन सूक्ष्ममप्यवश्यं ज्ञातव्यमिति न कोऽपि नियमः, यतः-'तेयाभासादव्वाणमंतरा' इत्यादिवचनात् प्रथमोत्पत्तावगुरुलघुद्रव्यं पश्यन्नप्यवधिर्न गुरुलघूपलभते, अन्यद्वा अतिस्थूरमपि घटादिकं, तथा मनःपर्यायज्ञानी मनोद्रव्याणि सूक्ष्माण्यपि

पश्यति, चिन्तनीयं तु घटादिकं स्थूरमपि न पश्यति, तत एवं विज्ञानविषयवैचित्र्यसम्भवे सति संशयव्यवच्छेदार्थमेकप्रदेशावगाढग्रहणे सत्यपि शेषविशेषणोपादानमदुष्टमेव, यदप्युक्तम्–अथवा एकप्रदेशावगाढमित्यपि न वक्तव्यमित्यादि, तदप्यश्लीलं, तस्यैव वक्ष्यमाणस्य प्रपञ्चायास्य प्रवृत्तत्वात्, लभते रूपगतं सर्वं, यत एकप्रदेशावगाढादिकं पश्यतीति, यदिवा एकप्रदेशावगाढग्रहणेन परमाण्वादि द्रव्यं गृहीतम्, शेषं तु कर्मवर्गणापर्यन्तं कार्मणशरीरग्रहणेनोपलक्षितं, कर्म्मवर्गणोपरितनं तु सर्वमपि द्रव्यमगुरुलघुग्रहणेन गृहीतं, चशब्दसूचितगुरुलघुग्रहणेन तु घटपटभूभूधरादिकमतः समस्तपुद्गलास्तिकायविषयत्वं परमावधेरनेन सूत्रेणाविष्कृतं, तथा च सति रूपगतं लभते सर्वमित्येतद् वक्ष्यमाणमस्यैव नियमाय प्रतिपत्तव्यम्, 'सिद्धे सत्यारम्भो नियमाय भवती'ति न्यायात्, एतदेव रूपगतं सर्वं लभते, नान्यदित्यलं विस्तरेण ॥ तदेवं परमावधेर्द्रव्यरूपो विषय उक्तः, अधुना क्षेत्रकालौ तद्विषयतया प्रतिपिपादयिषुराह—

"परमोहि असंखेज्जा लोगमेत्ता समा असंखेज्जा। रूवगयं लहइ सव्वं खेत्तोवमियं अगणिजीवा ॥ ४५ ॥"

परमश्चासाववधिश्च परमावधिः, क्षेत्रतोऽसङ्ख्येयानि लोकमात्राणि, खण्डानि इति गम्यते, लभते इति सम्बन्धः, कालतस्तु समा–उत्सर्पिण्यवसर्पिणीरसङ्ख्येया एव लभते, तथा द्रव्यतो रूपगतं–मूर्त्तद्रव्यजातं 'लभते' पश्यति 'सर्वं' समस्तं, किमुक्तं भवति?–परमाण्वादिभेदभिन्नं समस्तं पुद्गलास्तिकायं पश्यतीति, भावतस्तु प्रतिद्रव्यं सङ्ख्येयानसङ्ख्येयान् वा पर्यायानिति। यदुक्तमसङ्ख्येयानि लोकमात्राणि खण्डानि परमावधिः पश्यतीति, तदसङ्ख्येयकमूनमधिकं च कोऽपि सङ्कल्पयेदतो नियतपरिमाणप्रतिपादनार्थमाह–उपमीयतेऽनेन उपमितं, बाहुलकात् करणे निष्ठाप्रत्ययः, क्षेत्रस्योपमितं क्षेत्रोपमितं,

॥ ६३ ॥

क्षेत्रप्रमाणकारिणः प्रागभिहिता एवाग्निजीवाः, इदमुक्तं भवति—उत्कृष्टावधेर्विषयत्वेन क्षेत्रतो येऽसङ्ख्येया लोकाः प्रोक्तास्ते प्रागभिहितस्वागवाहनाव्यवस्थापितोत्कृष्टासङ्ख्येयसूक्ष्मबादराग्निजीवसूच्या परमावधिमतो जीवस्य सर्वतो भ्राम्यमाणया यत्प्रमाणं क्षेत्रं व्याप्यते तत्प्रमाणाः समवसेया इति, ननु रूपगतं लभते सर्वमित्येतदनन्तरगाथायामर्थतोऽभिहितमेव ततः किमर्थं पुनरत्राभिहितम्?, तदयुक्तम्, अत्रार्थे परिहारस्य प्रागेवोक्तत्वाद्, अथवा अनन्तरगाथायामेकप्रदेशावगाढमित्यादि परमावधेः द्रव्यपरिमाणमुक्तम्, इह तु रूपगतं लभते सर्वमिति क्षेत्रकालयोर्विशेषणं, तच्चैवम्—क्षेत्रकालद्वयं लोकमात्रासङ्ख्येयखण्डासङ्ख्येयोत्सर्पिण्यवसर्पिणीलक्षणं यदि रूपिद्रव्यानुगतं भवति ततः समस्तं लभते, न केवलं, तस्यारूपित्वादवधिज्ञानस्य च रूपिद्रव्यनिबन्धनत्वात्, इत्थंभूतपरमावधिकलितश्च नियमादन्तर्मुहूर्त्तमात्रेण केवलालोकलक्ष्मीमासादयति, उक्तं च—'परमोहिन्नाणविदो केवलमंतोमुहुत्तमेत्तेण' (वि.६८९) ॥ तदेवं मनुष्यानधिकृत्य क्षायोपशमिकः खल्वनेकप्रकारोऽवधिरुक्तः, सम्प्रति तिरश्चोऽधिकृत्य तं प्रतिपिपादयिपुराह—

"आहारतेयलंभो, उक्कोसेणं तिरिक्खजोणीसु। गाउय जहण्णमोही नरएसु य जोयणुक्कोसो ॥ ४६ ॥"

आहारश्च तेजश्च आहारतेजसी तयोर्लाभः प्राप्तिः परिच्छित्तिरित्येकोऽर्थः आहारतेजोलाभः, सूत्रे च लम्भ इति निर्देशः प्राकृतत्वाद्, आहारतेजोग्रहणमुपलक्षणं, ततः यान्यौदारिकवैक्रियाहारकतैजसद्रव्याणि यानि च तदन्तरालेषु तदयोग्यानि तेषां सर्वेषामपि परिग्रहणं, उत्कर्षतस्तिर्यग्योनिषु, किमुक्तं भवति?—तैर्यग्योनिकसत्त्वाधारो योऽवधिः स उत्कर्षत औदारिकवैक्रियाहारकतेजोद्रव्याणि तदन्तरालद्रव्याणि च सर्वाणि पश्यतीति, उक्तं च—"ओरालियवेउब्वियआहार-

गतेयगाइं तिरिएसु। उक्कोसेणं पेच्छइ जाइं च तदंतरालेसु ॥१॥" ( वि. ६९१ )एतद्द्रव्यानुसारेण क्षेत्रकालभावा अपि परिच्छेद्यतया स्वयमभ्यूह्याः, तदेवं यदुक्तम्—"काओ भवपच्चइआ, खओवसमियाओ काऽओ वि।" इति तत्र क्षायोपशमिकप्रकृतयोऽभिहिताः, अथ भवप्रत्ययास्ताः प्रतिपाद्याः, ताश्च सुरनारकाणां भवन्ति, तत्राल्पवक्तव्यत्वात् प्रथमं नारकाणामभिधित्सुराह—'गाउये' त्यादि, 'नरकेषु तु' नरकेषु पुनरुत्कृष्टेष्वेव मध्ये जघन्योऽवधिः क्षेत्रतो गव्यूतं पश्यति, स च सप्तमपृथिव्यामवसातव्यः, उत्कृष्टस्तु योजनं पश्यति, स च प्रथमायां पृथिव्याम्, आह च भाष्यकृत्—"भणितो खयोवसमिओ, भवपच्चइओ स चरमपुढवीए। गाउयमुक्कोसेणं पढमाए जोयणं होइ ॥१॥" (वि.६९२)इत्थंभूतक्षेत्रानुसारेण द्रव्यादयः स्वयं परिभावनीयाः॥तदेवं सामान्येन नारकजातिमधिकृत्याभिहितमुत्कृष्टमवधिक्षेत्रपरिमाणम्, अथ तदेव रत्नप्रभादिपृथिवीभागेनाह—

"चत्तारि गाउयाइं, अद्धुट्ठाइं तिगाउयं चेव। अड्ढाइज्जा दोन्नि य दिवड्ढमेगं च नरएसु ॥ ४७ ॥"

इह नरका नाम नारकाणामाश्रयाः, ते च सप्तपृथिव्याधारत्वेन सप्तधा भिद्यन्ते, तत्र नरकेषु रत्नप्रभायां उत्कृष्टमवधिक्षेत्रपरिमाणं चत्वारि गव्यूतानि जघन्यमर्द्धचतुर्थानि, अर्द्धं चतुर्थं येषां तान्यर्द्धचतुर्थानि, सार्द्धानि त्रीणि गव्यूतानीति भावः, शर्कराप्रभायामुत्कृष्टमर्द्धचतुर्थानि जघन्यं त्रीणि गव्यूतानि, वालुकाप्रभायामुत्कृष्टं त्रीणि गव्यूतानि जघन्यमर्द्धतृतीयानि, पङ्कप्रभायामुत्कृष्टमर्द्धतृतीयानि जघन्यं द्वे गव्यूते, धूमप्रभायामुत्कृष्टं द्वे गव्यूते जघन्यं द्व्यर्द्धं गव्यूतं, तमःप्रभायामुत्कृष्टं द्व्यर्द्धं गव्यूतं, द्वितीयमर्द्धं यस्य तत् द्व्यर्द्धं, सार्धमित्यर्थः, पूरणार्थो वृत्तावन्तर्भूतो यथा द्वितीयो भागो द्विभाग इत्यत्र, जघन्यं गव्यूतं, तमस्तमःप्रभायामुत्कृष्टं गव्यूतं जघन्यमर्द्धं गव्यूतं, सर्वत्रोत्कृष्टमर्द्धगव्यूतोनं जघन्यमिति तात्प-

र्यम्, अथ जघन्यमनुक्तं कुतोऽवसीयते?, उच्यते, प्रज्ञापनासूत्रात्, तथा च तत्सूत्रम्—"रयणप्पभापुढविनेरइया णं भंते! केवइयं खेत्तं ओहिणा जाणंति पासंति?, गोयमा! जहण्णेणमद्धुट्ठाइं गाउयाइं, उक्कोसेणं चत्तारि गाउयाइं जाणंति पासंति. सक्करप्पभापुढविनेरइयाणं भंते! पुच्छा, गोयमा! जहण्णेणं तिन्नि गाउयाइं उक्कोसेणं अद्धुट्ठाइं गाउयाइं जाणंति पासंति, वालुयप्पभापुढविनेरइयाणं भंते! पुच्छा, गोयमा! जहण्णेणं अड्ढाइज्जाइं गाउयाइं उक्कोसेणं तिन्नि गाउयाइं जाणंति पासंति, पंकप्पभापुढविनेरइयाणं पुच्छा, गोयमा! जहन्नेणं दोन्नि गाउयाइं उक्कोसेणं अड्ढाइज्जाइं गाउयाइं जाणंति पासंति, धूमप्पभापुढविनेरइयाणं पुच्छा, गोयमा! जहण्णेणं दिवड्ढं गाउयं उक्कोसेणं दो गाउयाइं जाणंति पासंति; तमप्पभापुढवीनेरइयाणं भंते! पुच्छा, गोयमा! जहण्णेणं गाउयं उक्कोसेणं दिवड्ढगाउयं जाणंति पासंति, अहे सत्तमाए पुच्छा, गोयमा! जहण्णेणं अद्धगाउयं उक्कोसेणं गाउयं जाणंति पासंति" ननु यदि सप्तमपृथिव्यामर्द्धगव्यूतं जघन्यमवधिक्षेत्रपरिमाणं तर्हि यदुक्तं प्राक् 'गाउय जहण्णमोही नरएसु य' इति तद् व्याहन्यते, नैष दोषः, उत्कृष्टजघन्यापेक्षया तदभिधानात्, इदमत्र हृदयम्—सप्तस्वपि पृथिवीषु यद् गव्यूतचतुष्टयादिकमुत्कृष्टमवधिक्षेत्रपरिमाणं तन्मध्ये सप्तमपृथिवीनारकाणां गव्यूतलक्षणमवधिक्षेत्रं स्वस्थाने उत्कृष्टमपि शेषपृथिव्युत्कृष्टापेक्षया सर्वस्तोकत्वाज्जघन्यमुक्तमिति, न चैतत् स्वमनीषिकाविजृम्भितं, यत आह भाष्यकृत्—"अद्धुट्ठगाइयाइं, जहण्णयं अद्धगाउयंताइं। जं गाउयंति भणियं तंपिय उक्कोसगजहण्णं ॥१॥ (वि.६९४) तदेवं नारकसम्बन्धिनो भवप्रत्ययावधेः स्वरूपमभिहितम्, सम्प्रति देवसम्बन्धिनः प्रतिपिपादयिषुरिदं गाथात्रयमाह—

"सक्कीसाणा पढमं, दोच्चं च सणंकुमारमाहिंदा । तच्चं च बंभलंतग सुक्कसहस्सारग चउत्थिं ॥ ४८ ॥
आणयपाणयकप्पे, देवा पासंति पंचमिं पुढविं । तं चेव आरणच्चुय ओहीणाणेण पासंति ॥ ४९ ॥
छट्ठिं हेट्ठिममज्झिमगेविज्जा सत्तमिं च उवरिल्ला । संभिन्नलोगनालिं, पासंति अणुत्तरा देवा ॥ ५० ॥

शक्रश्च ईशानश्च शक्रेशानौ-सौधर्मेशानकल्पदेवेन्द्रौ प्रथमां रत्नप्रभाभिधानां पृथिवीं, पश्यन्तीति क्रियां द्वितीयगाथायां वक्ष्यति, शक्रेशानग्रहणं चोपलक्षणं तेन सौधर्म्मेशानकल्पनिवासिनो देवाः सामानिकादयोऽपि परिगृह्यन्ते, तेषामप्यवधिना रत्नप्रभायाः पृथिव्याः सर्वान्तिममधस्तनं भागं यावद्दर्शनात्, द्वितीयां च पृथिवीमित्यग्रतः सम्बध्यते, सनत्कुमारमाहेन्द्रौ-तृतीयचतुर्थकल्पदेवाधिपौ, अत्रापीन्द्रग्रहणमुपलक्षणं तेन तत्कल्पनिवासिनः सामानिकादयोऽपि प्रतिपत्तव्याः, एवं तृतीयां च पृथिवीं ब्रह्मलोकलान्तकदेवेन्द्रोपलक्षितास्तत्कल्पनिवासिनो देवाः पश्यन्ति, शुक्रसहस्रारसुरेन्द्रोपलक्षितास्तत्कल्पनिवासिनश्चतुर्थी (र्थीं) पृथिवीं पश्यन्ति । द्वितीयगाथाव्याख्या-आनतप्राणतकल्पे प्राकृतत्वाद्विभक्तिवचनव्यत्यय इति वचनात् द्वयोरर्थयोरेकवचनं, ततोऽयमर्थः-आनतप्राणतयोः कल्पयोर्देवाः पश्यन्ति पञ्चमीं पृथिवीं, तामेव आरणाच्युतयोः कल्पयोर्देवा अवधिज्ञानेन पश्यन्ति, स्वरूपकथनमेवेदम्, नतु व्यवच्छेदकमवधिज्ञानस्यैवेह प्रस्तुततया व्यवच्छेद्याभावात्, नवरं तां विशुद्धतरां वहुपर्यायां चेति प्रतिपत्तव्यम्, उत्तरोत्तरदेवानां विमलतरावधिज्ञानसद्भावात् । तृतीयगाथाव्याख्या-लोकपुरुषग्रीवास्थाने भवानि ग्रैवेयकानि विमानानि, तानि च त्रिधा-अधस्तनग्रैवेयकानि मध्यमग्रैवेयकानि उपरितनग्रैवेयकानि च, तत्राधस्तनमध्यमग्रैवेयका आधेये आधारोपचारात् अधस्तनम-

पृथिवीं पश्यन्ति, सप्तमीं च पृथिवीं उपरितना–उपरि-
ध्यमग्रैवेयकविमानवासिनो देवाः षष्ठीं तमःप्रभाभिधानां पृथिवीं पश्यन्ति, सप्तमीं च पृथिवीं उपरितना–उपरि-
तनग्रैवेयकविमानवासिनो देवाः पश्यन्ति, तथा सम्भिन्नां चतसृष्वपि दिक्षु स्वज्ञानेन व्याप्तां लोकनाडीं चतुर्दशर-
ज्जुप्रमाणां कन्याचोलकसंस्थानामवधिना पश्यन्ति 'अनुत्तरा' अनुत्तरविमानवासिनो देवाः । एष क्षेत्रतो देवानां भवप्रत्य-
यावधेर्विषय उक्तः, एतदनुसारेण द्रव्यतः कालतो भावतश्चावसेयः, तदेवमधो वैमानिकावधेः क्षेत्रपरिमाणं प्रतिपादितम्,
अधुना तिर्यगूर्ध्वं च तत्प्रतिपादयन्नाह—

"एएसिमसंखेज्जा, तिरियं दीवा य सागरा चेव । बहुययरं उवरिमगा उड्ढं च सकप्पथूभाइं ॥ ५१ ॥

एतेषां सौधर्मादिदेवानां सङ्ख्यायन्ते इति सङ्ख्येया न सङ्ख्येया असङ्ख्येयास्तिर्यक् द्वीपाश्च जम्बूद्वीपादयः सागराश्च
लवणसागरादयः, क्षेत्रतोऽवधिपरिच्छेद्यतया इति वाक्यशेषः, तदेव द्वीपसमुद्रासङ्ख्येयं बहुतरकं-प्रभूततरं पश्यन्ति उप-
रिमा एव उपरिमकाः, उपर्युपरि देवलोकनिवासिनो देवा इत्यर्थः, उपर्युपरिदेवलोकनिवासिनां देवानां विशुद्धविशुद्धतरा-
वधिज्ञानसद्भावात्, तथा ऊर्ध्वं स्वकल्पस्तूपाद्येव यावत्, आदिशब्दात् ध्वजादिपरिग्रहः, क्षेत्रं सौधर्मादयो देवाः सर्वेऽपि
पश्यन्ति, न परतः, तथा भवस्वाभाव्यात्, जघन्यतः पुनरमी सर्वेऽपि सौधर्मादयोऽनुत्तरविमानवासिपर्यन्ता अङ्गुला-
सङ्ख्येयभागमात्रं क्षेत्रं पश्यन्ति, उक्तं च प्रज्ञापनायाम्–"सोहम्मगदेवा णं भंते ! केवइयं खेत्तं ओहिणा जाणंति पासंति ?,
गोयमा ! जहण्णेणं अंगुलस्स असंखेज्जइभागं उक्कोसेणं अहे जाव इमीसे रयणप्पभाए पुढवीए हेट्ठिल्ले चरिमंते, तिरियं
जाव असंखेज्जे दीवसमुद्दे, उड्ढं जाव सगाइं विमाणाइं ओहिणा जाणंति पासंति, एवं ईसाणगदेवावि, सणंकुमारदेवावि
एवं चेव, नवरं 'अहे जाव दोच्चाए सक्करप्पभाए पुढवीए हेट्ठिल्ले चरिमंते, एवं माहिंददेवावि, बंभलोगलंतगदेवा तच्चाए

पुढवीए हेट्ठिल्ले चरिमंते, महासुक्कसहस्सारगदेवा चउत्थीए पंकप्पभाए पुढवीए हेट्ठिल्ले चरिमंते, आणयपाणयआरण-अच्चुयदेवा अहे पंचमाए पुढविए धूमप्पभाए हेट्ठिल्ले चरमंते, हेट्ठिममज्झिमगेविज्जगदेवा अहे जाव छट्ठीए तमाए पुढवीए हिट्ठिल्ले चरमंते, उवरिमगेविज्जगदेवा णं भंते ! केवइयं खेत्तं ओहिणा जाणंति पासंति?, गोयमा! जहण्णेणं अंगुलस्स असंखेज्जभागं उक्कोसेणं अहे सत्तमाए पुढवीए हेट्ठिल्ले चरिमंते, तिरियं जाव असंखिज्जे दीवसमुद्दे, उड्ढं जाव सगाइं विमाणाइं ओहिणा जाणंति पासंति, अणुत्तरोववाइदा णं भंते ! देवा णं केवइयं खेत्तं ओहिणा जाणंति पासंति ?, गोयमा ! जहन्नेणं अंगुलस्स असंखेज्जभागं उक्कोसेणं संभिन्नं लोगनालिं जाणंति पासंति", अत्र अपर आह—नन्वङ्गुलासङ्ख्येयभाग-प्रमितोऽवधिः सर्वजघन्यो भवति, सर्वजघन्यश्चावधिस्तिर्यङ्मनुष्येष्वेव, न शेषेषु, यत आह भाष्यकृत् स्वकृतभाष्य-टीकायाम्—"उत्कृष्टो मनुष्येष्वेव नान्येषु, मनुष्यतिर्यग्योनिषु जघन्यो नान्येषु, शेषाणां मध्यम एवे"ति, वक्ष्यति च—'उक्कोसो मणुएसुं मणुस्सतिरिच्छएसु य जहण्णो' इति(वि.७०२) तत्कथमिह वैमानिकानां सर्वजघन्य उक्तः?, उच्यते—सौधर्मादिदेवानां पारभविकोऽप्युपपातकालेऽवधिः सम्भवति, स च सर्वजघन्योऽपि कदाचिदवाप्यते, उपपातानन्तरं तु देवभवप्रत्ययज-स्ततो न कश्चिद्दोषः, आह च दुष्षमान्धकारनिमग्नजिनप्रवचनप्रदीपो भाष्यकृत् जिनभद्रगणिक्षमाश्रमणः—"वेमाणि-याणमंगुलभागमसंखं जहण्णतो होइ। उववाए परभविओ, तब्भवजो होइ तो पच्छा ॥१॥" (वि.७०२) तदेवं वैमानि-कानामवधिक्षेत्रपरिमाणमुक्तम्, इदानीं सामान्यतस्तद्वर्जदेवानां प्रतिपिपादयिषुराह—

"संखेज्जजोयणा खलु, देवाणं अद्धसागरे ऊणे। तेण परमसंखेज्जा जहण्णयं पण्णवीसं तु ॥ ५२ ॥

॥ ६६ ॥

सङ्ख्येयानि च तानि योजनानि च सङ्ख्येययोजनानि, खलुशब्द एवकारार्थः स चावधारणे अस्य च उभयथा सम्बन्धं
उपदर्शयिष्यामः, देवानामर्द्धसागरे पदैकदेशे पदसमुदायोपचारात् अर्द्धसागरोपमे न्यूने आयुषि सति, किमुक्तं
भवति, ?–अर्द्धसागरोपमे न्यूने आयुषि सति देवानां सङ्ख्येययोजनान्येवावधिक्षेत्रं, तथा देवानां सङ्ख्येययोजनान्यवधि-
क्षेत्रमर्द्धसागरोपमे न्यून एवायुषि सति, न परिपूर्णे नाप्यधिके इति, ततः परं सम्पूर्णार्द्धसागरोपमादावायुषि पुनरसङ्ख्ये-
यानि योजनान्यवधिक्षेत्रमवसेयम् , ऊर्ध्वमधस्तिर्यक् च संस्थानविशेषाद्वक्ष्यमाणाद् भावनीयम् ॥ उक्तं उत्कृष्टमव-
धिक्षेत्रम्, अथ जघन्यमाह–'जहण्णय'मित्यादि, जघन्यमवधिक्षेत्रमिति देवानामिति वर्त्तते, पञ्चविंशतिस्तुशब्दस्य
एवकारार्थत्वात् पञ्चविंशतिरेव योजनानि, तानि च दशवर्षसहस्रस्थितीनां भवनपतिव्यन्तराणामवसातव्यानि, 'पण-
वीस जोयणाइं दसवाससहस्सिया ठिई जेसिं' मिति वचनात्, ज्योतिष्काः पुनरसङ्ख्येयस्थितिकत्वाज्जघन्यतोऽपि सङ्ख्ये-
ययोजनप्रमितान् सङ्ख्येयान् द्वीपसमुद्रान् अवधिज्ञानतः पश्यन्ति, उत्कर्षतोऽपि सङ्ख्येययोजनप्रमितानेव सङ्ख्येयान्
द्वीपसमुद्रान्, केवलमधिकतरान्, उक्तं च प्रज्ञापनायाम्–"जोइसिया णं भंते! केवइयं खित्तं ओहिणा जाणंति पासंति?,
गोयमा! जहन्नेणवि संखिज्जे दीवसमुद्दे उक्कोसेणवि संखिज्जे दीवसमुद्दे" भाष्यकारोऽप्याह–"दुविहोऽवि जोइ[सि]याणं,
संखेज्जो ठिइविसेसेणं।" ( वि. ७०१ ) अत्र सङ्ख्येयः सङ्ख्येययोजनप्रमितसङ्ख्येयद्वीपसमुद्रविषयः स्थितेर्विशेषात्, स्थिते-
रसङ्ख्येयत्वादित्यर्थः ॥ अथ अयमेव चावधिर्येषामुत्कृष्टादिभेदभिन्नो भवति तानुपदर्शयन्नाह–

"उक्कोसो मणुएसुं, मणुस्सतेरिच्छिएसु य जहण्णो। उक्कोस लोगमित्तो पडिवाइ परं अपडिवाई ॥ ५३ ॥"

पृ. १२

इह द्रव्यतः क्षेत्रतः कालतो भावतश्चोत्कृष्टोऽवधिर्मनुष्येष्वेव, न देवादिषु, तथा मनुष्यांश्च तिर्यञ्चश्च मनुष्यतिर्यञ्च-स्तेषु मनुष्यतिर्यक्षु च जघन्यः, चशब्द एवकारार्थः, मनुष्यतिर्यक्ष्वेव जघन्यो, न नारकसुरेषु, तत्र प्रतिपातिष्ववधिषु मध्ये उत्कृष्टोऽवधिः प्रतिपतितुं शीलमस्येति प्रतिपाती लोकमात्र एव, मात्रशब्दोऽलोकव्यवच्छेदार्थः, इदमत्र हृदयम्— यद्यवधिः प्रतिपतति तत उत्कर्षतो लोकमात्र एव, न लोकात् परं प्रदेशमात्रमपि पश्यन्, तथा चाह—'परं अपडिवाई' ततो लोकात् परमेकमप्याकाशप्रदेशं पश्यन् नियमाद् अप्रतिपाती, क्षेत्रपरिमाणद्वारे प्रस्तुते प्रसङ्गतः प्रतिपात्यप्रतिपाति-स्वरूपाभिधानमदुष्टमेव, विनेयजनप्रतिपत्तिलाघवात्, उक्तं क्षेत्रपरिमाणद्वारम् १ ॥ अधुना संस्थानद्वारमभिधित्सुराह—

थिवुगागार जहण्णो, वट्टो उक्कोसमायतो किंचि । अजहण्णमणुक्कोसो य, खेत्ततोऽणेगसंठाणो ॥ ५४ ॥

स्तिबुकः—उदबिन्दुस्तस्येवाकारो यस्यासौ स्तिबुकाकारो जघन्यावधिः, तमेव स्पष्टयति—वृत्तः, सर्वतो वृत्त इति भावः, पनकक्षेत्रस्य वर्तुलत्वाद्, उत्कृष्टः—परमावधिः, आयतः—प्रदीर्घः, किञ्चित्—मनाक्, वह्निजीवसूच्या अवधिमच्छरीरस्य सर्वतो भ्राम्यमाणया व्याप्यमानस्य क्षेत्रस्य एतदाकारभावात्, उक्तं च—"पणको थिवुगागारो, तेण जहन्नावही तदागारो । इयरो सेढिपरिक्खेवतो सदेहाणुवत्तीए ॥१॥"(वि.७०४) तथा 'अजघन्योत्कृष्टश्च' न जघन्यो नाप्युत्कृष्टः अजघन्योत्कृष्टः, चशब्दोऽवधारणे, अजघन्योत्कृष्ट एव, 'क्षेत्रतोऽनेकसंस्थानः' अनेकानि संस्थानानि यस्यासावनेकसंस्थानः, एवं तावज्ज-घन्योत्कृष्टावधिसंस्थानमभिहितम् ॥ सम्प्रति विमध्यमावधिसंस्थानप्रतिपादनार्थमाह—

तप्पागारे पल्लग-पडहग-झल्लरि-मुइंग-पुप्फ-जवे । तिरिय-मणुएसु ओही, नाणाविहसंठिओ भणिओ ॥५५॥

इह उत्तरार्द्धे तिर्यग्मनुष्याणामवधेर्नानाविधसंस्थानभणनात् पूर्वार्द्धेन संस्थानप्रतिपादनं यथाक्रमं नारकभवनपतिव्यन्तरज्योतिष्ककल्पोपपन्नकल्पातीतग्रैवेयकानुत्तरसुराणामवधेरवसातव्यम्, तथा च पूर्वार्द्धप्रतिपादितसंस्थानविषयं भाष्यम्–"नेरइय-भवण-वणयर-जोइस-कप्पालयाणमोहिस्स। गेविज्जणुत्तराण य हौंतागिइओ जहासंखं ॥१॥" (वि.७०७) तप्रो नाम काष्ठसमुदायविशेषो यो नदीप्रवाहेण प्लाव्यमानो दूरादानीयते, स च आयतत्र्यस्रश्च भवति, तस्येवाकारो यस्यासौ तप्राकारोऽवधिर्नारकाणां, 'पल्लग'त्ति पल्लको नाम लाटदेशे धान्याधारविशेषः, स च ऊर्ध्वायत उपरि च किञ्चित्सङ्क्षिप्तः, आकारशब्दः प्रत्येकमभिसम्बध्यते, पल्लकस्येवाकारो यस्यासौ पल्लकाकारो भवनपतीनां, पटहः–आतोद्यविशेषः, स च किञ्चिदायत उपर्यधश्च समप्रमाणः, पटह एव पटहकस्तदाकारोऽवधिर्व्यन्तराणाम्, तथा उभयतो विस्तीर्णा चर्मावनद्धमुखा मध्ये सङ्क्षिप्ता ढक्काकारा झल्लरी–आतोद्यविशेषरूपा तदाकारोऽवधिर्ज्योतिष्कदेवानां, मृदङ्गो–वाद्यविशेषः, स चाधस्ताद्विस्तीर्ण उपरि च तनुकः सुप्रतीतस्तदाकारोऽवधिः सौधर्मादिदेवानामच्युतदेवपर्यन्तानां, 'पुप्फ'त्ति पदैकदेशे पदसमुदायोपचारात् सप्रशिखा पुष्पभृता चङ्गेरी पुष्पचङ्गेरी परिगृह्यते, तदाकारोऽत्रधिर्ग्रैवेयकविमाननिवासिदेवानां, 'जव' इति अत्रापि पदैकदेशे पदसमुदायोपचारात् यवनालक इति द्रष्टव्यम्, यवनालको नाम कन्याचोलकः, स च मरुमण्डलादिप्रसिद्धश्चरणकरूपेण कन्यापरिधानेन सह सीवितो भवति येन परिधानं न खसति, कन्यानां चैष मस्तकप्रदेशेन प्रक्षिप्यते, अत एवायमूर्ध्वः सरकञ्चुक इति व्यपदिश्यते, तथा च तप्रादिव्याख्यानं कुर्वन्नाह भाष्यकृत्–"तप्पेण समागारो तप्पागारो स चाययत्तंसो। उड्ढायओ य पल्लो, उवरिं च स किंचि संखित्तो ॥ २ ॥ नच्चायओ

समोऽविय, पडहो हिट्ठोवरिं पईओ सो । चम्मावणद्धविच्छिण्णवलयरूवा य झल्लरिया ॥३॥ उड्ढायओ मुइंगो, हेट्ठा रुंदो तहोवरिं तणुओ । पुप्फसिहावलिरइया, चंगेरी पुप्फचंगेरी ॥ ४ ॥ जवनालउत्ति भणिओ, उब्भो सरकंचुओ कुमारीए । अह सव्वकालनियओ कायाइक्कोऽवि सेसाणं ॥ ५ ॥" इति, (वि.७०८-११) यवनालकाकारोऽवधिरनुत्तरसुराणां । एष च नारकादीनामनुत्तरसुरपर्यन्तानामेतदाकारः सर्वकालनियतः प्रत्येतव्यः । 'तिरियमणुएसु' इत्यादि, तिर्यञ्चश्च मनुष्याश्च तिर्यङ्मनुष्यास्तेषु अवधिर्नानाविधं संस्थितं संस्थानं यस्य स नानाविधसंस्थितः, स्वयम्भूरमणजलनिधिवासिमत्स्यगणवत्, अपिच-तत्र मत्स्यानां वलयाकारं संस्थानं निषिद्धं, तिर्यङ्मनुष्यावधेस्तु तदपि भवति, उक्तं च-"नाणागारो तिरियमणुएसु मच्छा सयंभूरमणेव्व । तत्थ वलयं निसिद्धं, तस्सिह पुण तंपि होज्जा हि ॥ ६ ॥ ( वि.७१२ )" भणितः- प्रतिपादितस्तीर्थकरगणधरैः, अनेन च संस्थानप्रतिपादनेनेदमावेदितम्-भवनपतिव्यन्तराणामूर्ध्वं प्रभूतोऽवधिर्वैमानिकानामधः ज्योतिष्कनारकाणां तिर्यग् विचित्रो नरतिरश्चाम्, आह च भाष्यकृत्-"भवणवइ-वंतराणं उड्ढं बहुगो अहो य सेसाणं । नारग-जोइसियाणं तिरियं ओरालिओ चित्तो ॥ ७ ॥" (वि.७१३) उक्तं संस्थानद्वारम् २ । सम्प्रति सप्रतिपक्षमानुगामिकद्वारार्थं प्रचिकटयिषयेदमाह—

अणुगामिओ य ओही, नेरइयाणं तहेव देवाणं । अणुगामी अणणुगामी मीसो य मणुस्सतेरिच्छे ॥ ५६ ॥

गच्छन्तं पुरुषमासमन्तात् अनुगच्छतीत्येवंशीलः अनुगामी अनुगाम्येवानुगामिकः, स्वार्थे कप्रत्ययः, यदिवा अनुगमः प्रयोजनमस्येत्यानुगामिकः, अनुशतिकादिपाठाभ्युपगमादुभयपदवृद्धिः, आनुगामिकश्चावधिर्द्विधा, तद्यथा-अन्तगतो

मध्यगतः, अथान्तगत इति कः शब्दार्थः?, उच्यते, इह पूर्वाचार्यप्रदर्शितमर्थत्रयम्, अन्ते—आत्मप्रदेशानां पर्यन्ते गतः—स्थितोऽन्तगतः, काऽत्र भावनेति चेत्, उच्यते—इहावधिरुत्पद्यमानः कोऽपि स्पर्द्धकरूपतयोत्पद्यते, स्पर्द्धकं च नाम अवधिज्ञानप्रभाया गवाक्षजालादिद्वारविनिर्गतप्रदीपप्रभाया इव प्रतिनियतो विच्छेदविशेषः, तथा चाह भाष्यकृत्स्वोपज्ञभाष्यटीकायां—"स्पर्द्धकमवधिविच्छेदकविशेष" इति, तानि च एकजीवस्यासङ्ख्येयानि सङ्ख्येयानि वा भवन्ति, यद्वक्ष्यति—'फड्डा य असंखेज्जा संखेज्जे यावि एगजीवस्स' ( वि. ७३८ ) इति, तानि च विचित्ररूपाणि कानिचित्पर्यन्तवर्त्तिषु आत्मप्रदेशेषूत्पद्यन्ते, तत्रापि कानिचित्पुरतः कानिचित्पृष्ठतः कानिचिदधोभागे कानिचिन्मध्यवर्त्तिष्वात्मप्रदेशेषु, तत्र यः पर्यन्तवर्त्तिष्वात्मप्रदेशेष्ववधिरुत्पद्यते स आत्मनः पर्यन्ते स्थित इतिकृत्वा अन्तगत इत्यभिधीयते, तैरेव पर्यन्तवर्त्तिभिरात्मप्रदेशैः साक्षादवबोधात्, अथवा औदारिकशरीरस्यान्ते गतः—स्थितोऽन्तगतः, औदारिकशरीरमधिकृत्य कयाचिदेकया दिशोपलम्भात्, इदमपि स्पर्द्धकरूपकमवधिज्ञानं, अथवा सर्वेषामप्यात्मप्रदेशानां क्षयोपशमभावेऽपि औदारिकशरीरान्ते कयाचिदेकया दिशा यद्वशादुपलभते सोऽप्यन्तगतः, आह—यदि सर्वेषामप्यात्मप्रदेशानां क्षयोपशमस्ततः सर्वतः किं न पश्यति?, उच्यते, एकदिशैव क्षयोपशमसम्भवात्, विचित्रो हि देशाद्यपेक्षया कर्म्मणां क्षयोपशमः, ततः सर्वेषामप्यात्मप्रदेशानामित्थंभूत एव स्वसामग्रीवशात् क्षयोपशमः संवृत्तो यदौदारिकशरीरमपेक्ष्य कयाचिद्विवक्षितया दिशा पश्यतीति, तथा चोक्तं नन्द्यध्ययनचूर्णौ "ओरालियसरीरंते ठियं—गयंति एगट्ठं, तं च आयप्पएसफड्डगावहिएगदिसोपलंभाओ, य अंतगयमोहिनाणं भन्नइ, अहवा सव्वायप्पएसेसु विसुद्धेसुवि ओरालियसरीरगंतेण एगदिसि पासेण

गयमंतगयंति भण्णइ" इति, एष द्वितीयोऽर्थस्तृतीयः पुनरयं–एकदिग्भाविना तेनावधिना यदुद्योतितं क्षेत्रं तस्यान्ते वर्त्तते सोऽवधिः, अवधिज्ञानवतस्तदन्ते वर्त्तमानत्वात्, ततोऽन्ते एकदिग्गतस्यावधिविषयस्य पर्यन्ते गतः–स्थितोऽन्तगतः, अन्तगतश्चावधिस्त्रिधा, तद्यथा–पुरतोऽन्तगतः पृष्ठतोऽन्तगतः पार्श्वतोऽन्तगतश्च, तत्र यथा कश्चित् पुरुषो हस्तगृहीतया दीपिकया पुरतः प्रेर्यमाणया पुरत एव पश्यति, नान्यत्र, एवं येनावधिना तथाविधक्षयोपशमभावतः पुरत एव सङ्ख्येयान्यसङ्ख्येयानि वा योजनानि पश्यति, नान्यत्र, सोऽवधिः पुरतोऽन्तगत इत्यभिधीयते, तथा स एव पुरुषो यथा पृष्ठतो हस्तेन ध्रियमाणया दीपिकया पृष्ठत एव पश्यत्येवं येनावधिना पृष्ठत एव सङ्ख्येयान्यसङ्ख्येयानि वा योजनानि पश्यति सः पृष्ठतोऽन्तगतः, येन पुनः पार्श्वत एकतो द्वाभ्यां वा सङ्ख्येयान्यसङ्ख्येयानि वा योजनानि पश्यति स पार्श्वतोऽन्तगतः, उक्तं च नन्द्यध्ययने–"पुरतोऽन्तगएणं ओहिणाणेणं पुरतो चेव संखेज्जाणि वा असंखेज्जाणि वा जोयणाइं जाणइ पासइ, मग्गतोऽन्तगएणं ओहिणाणेणं मग्गतो चेव संखेज्जाणि वा असंखेज्जाणि वा" इत्यादि, मध्यगत इत्यत्रापि त्रिधा व्याख्यानं, इह मध्यं प्रसिद्धं दण्डादेरिव, तत्रात्मप्रदेशानां मध्ये–मध्यवर्त्तिष्वात्मप्रदेशेषु गतः–स्थितो मध्यगतः, अयं च स्पर्द्धकरूपः सर्वदिगुपलम्भकारणं मध्यवर्त्तिनामात्मप्रदेशानामवधिरवसातव्यः, अथवा सर्वेषामप्यात्मप्रदेशानां क्षयोपशमभावेऽपि औदारिकशरीरमध्यभागेनोपलब्धेः, तन्मध्ये गतो मध्यगतः, उक्तं च नन्द्यध्ययनचूर्णौ–"ओरालियसरीरमज्झे फड्डुगविसुद्धीतो सव्वायप्पएसविसुद्धीतो वा सव्वदिसोवलंभत्तणतो मज्झगतोत्ति भण्णइ' त्ति, अथवा तेनावधिना यदुद्योतितं क्षेत्रं सर्वासु दिक्षु तस्य मध्यभागे स्थितो मध्यगतः, अवधिज्ञानिनस्तदुद्योतितक्षेत्रमध्यवर्त्तित्वात्, आह च नन्द्यध्ययन-

चूर्णिकृत्–"अहवा उवलद्धिखेत्तस्स अवधिपुरिसो मज्झगतोत्ति, अतो वा मज्झगतो ओहि भन्नइ" इति, तत्रेहान्तगतो
न ग्राह्यो, देवनारकाणामभ्यन्तरावधित्वात्, किन्तु मध्यगतः, सोऽप्यन्त(न्त्य)व्याख्यानविशिष्टो, देवनारकाणां स्वावधि-
द्योतितक्षेत्रमध्यवर्त्तित्वात्, तुशब्द एवकारार्थः, स चावधारणे, आनुगामिक एव यथोक्तरूपो नान्य इति, केषामित्याह–
नरान् कायन्ति–स्वयोग्यान् आह्वयन्तीति नरकाः–नारकाश्रयाः तेषु भवा नारकास्तेषां, तथा 'दीव्यन्ति' यथेच्छया क्रीड-
न्तीति देवाः तेषां, मनुष्यश्च तिर्यक् च मनुष्यतिर्यक् तस्मिन् मनुष्यतिर्यचि (रश्चि) जातावेकवचनम्, ततोऽयमर्थः–मनुष्येषु
तिर्यक्षु आनुगामिक उक्तशब्दार्थः, अनानुगामिकः–अवस्थितशृङ्खलानियन्त्रितप्रदीप इव यो गच्छन्तं पुरुषं नानुग-
च्छति, आह च भाष्यकृत्–"अणुगामिओऽणुगच्छइ, गच्छंतं लोयणं जहा पुरिसं। इयरो य नाणुगच्छइ ठियपईवो
व गच्छंतं ॥१॥ (वि.७१४)" यस्य तूत्पन्नस्यावधेर्देशो व्रजति स्वामिना सह अपरश्च देशः प्रदेशान्तरचलितपुरुषस्योपहतै-
कलोचनवदन्यत्र न व्रजति स मिश्र उच्यते, उक्तं च–"उभयसहावो मीसो, देसो जस्साणुजाइ नो अन्नो। कासइ गयस्स
कत्थइ, एगं उवहम्मइ जहऽच्छि ॥२॥ (वि.७१५)" एष च भवति, अयं गाथासङ्क्षेपार्थः–देवनारकाणां सर्वात्मप्रदेशजाभ्य-
न्तरावधिरूपमध्यगतः आनुगामिकोऽवधिः, तिर्यङ्मनुष्याणां सर्वप्रभेदः–आनुगमिकोऽनानुगामिको मिश्रश्चेति ॥ उक्तमा-
नुगामिकद्वारम् ३। अथावस्थितद्वारं वक्तव्यम्, अवस्थितत्वं चावधेराधारभूतक्षेत्रत उपयोगतो लब्धितश्च चिन्तनीयम्,
तत्र क्षेत्रत उपयोगतश्च प्रतिपिपादयिषुरिदमाह–

खित्तस्स अवट्ठाणं तेत्तीसं सागरा उ कालेणं। दव्वे भिन्नमुहुत्तो पज्जवलंभे य सत्तट्ठ ॥ ५७ ॥

अवस्थितिः अवस्थानम्, अवधेराधाररूपतालक्षणेन पर्यायेण क्षेत्रस्यावस्थानं, कालेन–कालमाश्रित्य सागरोपमाणि तुशब्द एवकारार्थः स चावधारणे भिन्नक्रमश्च त्रयस्त्रिंशतमेव, अयमत्र भावना–अनुत्तरसुरा यत्र क्षेत्रे येष्वेव च प्रतिनियतेषु क्षेत्रप्रदेशेषु जन्मसमयेऽवगाढास्ते प्रायस्तत्रैवाभवक्षयमवतिष्ठन्ते, ततः तानधिकृत्योत्कर्षतोऽवधेरवस्थानं त्रयस्त्रिंशतं सागरोपमाणि यावदवाप्यते, उक्तं च–"आहारे उवओगे, लद्धीए वा हविज्जऽवत्थाणं। आहारो से खित्तं, तेत्तीसं सागरा तत्थ॥१॥ विजयाइसूववाए जत्थोगाढो भवक्खयं (ओ वि०) जाव। खेत्तेऽवचिट्ठइ तहिं दव्वेसु य देहसयणेसु ॥२॥ (वि.७१९-२०)" उपयोगमधिकृत्यावधेरवस्थानं, द्रवति–गच्छति तांस्तान् पर्यायानिति द्रव्यं, बाहुलकात् कर्त्तरि प्रत्ययः, तस्मिन् द्रव्ये–द्रव्यविषये तत्र चान्यत्र क्षेत्रे भिन्नश्चासौ मुहूर्त्तश्च भिन्नमुहूर्त्तः, अन्तर्मुहूर्त्तं कालं यावदिति तात्पर्यार्थः, न परतः, सामर्थ्याभावात्, उक्तं च–"दव्वे भिन्नमुहुत्तं, तत्थऽन्नत्थ व हवेज्ज खेत्तंमि। उवओगो न उ परओ सामत्थाभावओ तस्स ॥ ३ ॥ (वि.७२१)" तथा तत्रैव द्रव्ये ये पर्यवाः–पर्यायधर्मास्तल्लाभे पर्यायान्तरं संचरतोऽवधेरुपयोगमधिकृत्यावस्थानं सप्ताष्टौ वा समयान् यावत्, न परतः, पर्यायाणां सूक्ष्मतया परतस्तद्विषयेऽवस्थाने सामर्थ्याभावात्, अन्ये तु व्याचक्षते–पर्यवा द्विविधाः, तद्यथा–गुणाः पर्यायाश्च, तत्र सहवर्त्तिनो गुणाः शुक्लत्वादयः, क्रमवर्त्तिनः पर्यायाः नवपुराणादयः, तत्र गुणाः स्थूलाः पर्यायास्तु सूक्ष्माः, यथा २ च सूक्ष्मं वस्तु तथा २ उपयोगस्य स्तोककालता, द्रव्यगुणपर्यायाश्च यथोत्तरं सूक्ष्मास्ततो गुणेष्वष्टौ समयान् यावदुपयोगस्यावस्थानं, पर्यायेषु तु सप्त समयानिति, उक्तं च–"दव्वे तत्थेव गुणा, संचरओ सत्त वऽट्ठ वा समया। अण्णे पुण अट्ठ गुणे भणंति तप्पज्जवे सत्त ॥ ४ ॥ जह जह सुहुमं वत्थुं तह तह थोवोवओगया

होइ । दव्वगुणपज्जवेसुं तह पत्तेयंपि नायव्वं ॥ ५ ॥ (वि.७२२-३)" अथ लब्धिमधिकृत्यावस्थानकालमानमाह—

अद्धाएँ अवट्ठाणं, छावट्ठिं सागरा उ कालेणं । उक्कोसगं तु एयं, एक्को समओ जहन्नेणं ॥५८॥

इह अद्धा नामावधिज्ञानावरणक्षयोपशमरूपा लब्धिरभिप्रेता, ततो अद्धाया–लब्धेः कालेन–कालतोऽवधेरवस्थानं, तत्रान्यत्र वा क्षेत्रे तेष्वन्येषु वा द्रव्यादिषूपयुक्तस्यानुपयुक्तस्य वा भवति षट्षष्टिसागरोपमाणि, तुशब्दस्य विशेषणार्थत्वान्मनागधिकानि, उक्तं च–"सा सागरोवमाइं, छावट्ठिं होज्ज साइरेगाइं । विजयाइसु दो वारे गयस्स नरजम्मणा समयं ॥ ७ ॥" ( वि.७२५ ) उपसंहारमाह–'उक्कोसग'मित्यादि, कालतोऽवस्थानमिदमाधारादिषु उत्कर्षतः प्रतिपादितमवसातव्यम् । जघन्येन–जघन्यतः पुनरुपयोगलब्धी अङ्गीकृत्यावस्थानं द्रव्यादावप्येकः समयः, तत्र नरतिरश्चां समयादूर्ध्वमवधेः प्रतिपातादनुपयोगाद्वा एकसमयावस्थानता विज्ञेया, देवनारकाणां तु येषां भवस्य चरमसमये सम्यक्त्वलाभाद्विभङ्गज्ञानमवधिज्ञानरूपतया परिणमति ततः परं च मृतानां तदवधिज्ञानं प्रच्यवते तेषामवसातव्यम् । तदेवमुक्तमवस्थितद्वारम् ४ । अधुना चलद्वारमभिधित्सुराह—

वुड्ढी वा हाणी वा, चउव्विहा होइ खेत्त-कालाणं । दव्वेसु होइ दुविहा, छव्विह पुण पज्जवे होइ ॥ ५९ ॥

चलद्वारमिदमुच्यते, चलश्चावधिर्द्रव्यादिविषयमङ्गीकृत्य वर्द्धमानको हीयमानको वा भवति, वृद्धिहानी च प्रत्येकं सामान्येनागमे षड्विधे प्रोक्ते, तद्यथा–अनन्तभागवृद्धिः १ असङ्ख्यातभागवृद्धिः २ सङ्ख्यातभागवृद्धिः ३ सङ्ख्यातगुणवृद्धिः ४ असङ्ख्यातगुणवृद्धिः ५ अनन्तगुणवृद्धिः ६ तथा अनन्तभागहानिः १ असङ्ख्यातभागहानिः २ सङ्ख्यातभागहानिः ३ सङ्ख्या-

तगुणहानिः ४ असङ्ख्यातगुणहानिः ५ अनन्तगुणहानिः ६, एतयोश्च षड्विधवृद्धिहान्योर्मध्यादवधिविषयभूतक्षेत्रकालयोराद्यंतभेदद्वयवर्जिता चतुर्विधा वृद्धिर्हानिर्वा भवति, अनन्तभागवृद्धिरनन्तगुणवृद्धिर्वा तथा अनन्तभागहानिरनन्तगुणहानिर्वा क्षेत्रकालयोर्न सम्भवति, अवधिविषयभूतक्षेत्रकालयोरानन्त्याभावात्, इयमत्र भावना–यावत् क्षेत्रं प्रथममवधिना प्रवर्द्धमानाख्येन दृष्टं ततः प्रतिसमयं स प्रवर्द्धमानोऽवधिः कश्चिदसङ्ख्यातभागवृद्धं पश्यति कोऽपि सङ्ख्यातभागवृद्धं कोऽपि सङ्ख्यातगुणवृद्धमपरोऽसङ्ख्यातगुणवृद्धं, तथा यावत् क्षेत्रं प्रथममवधिना हीयमानेन दृष्टं ततः प्रतिसमयमसङ्ख्यातभागहीनं कश्चित्पश्यति कश्चित्सङ्ख्यातभागहीनं कोऽपि सङ्ख्यातगुणहीनमन्योऽसङ्ख्यातगुणहीनं, एवं क्षेत्रस्य वृद्धिर्हानिर्वा चतुर्विधा भवति, इत्थं कालेऽपि वृद्धिहान्योश्चातुर्विध्यं भावनीयम्, द्रव्येषु पुनरवधिविषयभूतेषु द्विविधा वृद्धिर्हानिर्वा भवति, तथाहि–यावन्ति द्रव्याणि प्रथममवधिना दृष्टानि ततः परं कोऽपि तेभ्योऽनन्तभागाधिकानि पश्यति, अपरस्तु तेभ्योऽनन्तगुणवृद्धानि, नत्वसङ्ख्यातभागादिना वृद्धानि, तथास्वाभाव्यात्, तथा ततः परं कोऽपि पूर्वोपलब्धेभ्योऽनन्तभागहीनानि द्रव्याणि पश्यति, अपरस्त्वनन्तगुणहीनानि, नत्वसङ्ख्यातभागादिना हीनानि, तथास्वाभाव्यादेव, पर्यायेषु पुनः पूर्वोक्ता षड्विधाऽपि वृद्धिर्हानिर्वा भवति, उक्तं च–"पइसमयमसंखिज्जइभागहियं कोइ संखभागहियं। अन्नो संखेज्जगुणं खित्तमसंखिज्जगुणमण्णो ॥ २ ॥ पेच्छइ विवड्ढमाणं, हायंतं वा तहेव कालंमि। नाणंतवुड्ढि–हाणी पेच्छइ जं दोऽवि नाणंते ॥ ३ ॥ दव्वमणंतसहियं अणंतगुणवुड्ढियं च पेच्छेज्जा। हायंतं वा भावम्मि, छव्विहा वुड्ढि–हाणीओ" ॥४॥ (वि.७३०-२) एतेषां च द्रव्यक्षेत्रकालभावानां परस्परं संयोगे चिन्त्यमाने एकस्य वृद्धावेवापरस्य वृद्धिः, नत्वेकस्य हाना-

वन्यस्य वृद्धिः, तथा एकस्य हानावेवापरस्य हानिः, नत्वेकस्य वृद्धावपरस्य हानिः, अन्यच्च-एकस्य द्रव्यादेर्भागेन वृद्धौ
हानौ वा जायमानायामपरस्यापि प्रायो भागेनैव वृद्धिहानी, न तु गुणकारेण, गुणकारेणाप्येकस्य गुणवृद्धिहान्योः प्रवर्त्तमान-
योरपरस्यापि प्रायो गुणकारेणैव ते प्रवर्त्तेते, न तु भागेन, यत उक्तं-"वुड्ढीए चिय वुड्ढी, हाणी हाणीएँ न उ विवज्जासो ।
भागे भागो गुणणे, गुणो य दव्वाइसंजोए" ॥ ५ ॥ (वि.७३२) आह-ननु क्षेत्रस्यासङ्ख्येयभागादिवृद्धौ तदाधेयद्रव्याणामपि
तन्निबन्धनत्वादसङ्ख्येयभागादिवृद्धिः प्राप्नोतीति, तथा द्रव्यस्यानन्तभागादिवृद्धौ सत्यां तत्पर्यायाणामप्यनन्तभागा-
दिवृद्धिरेव प्राप्नोति, न षट्स्थानकं, पर्यायाणां द्रव्यनिबन्धनत्वाद्, उच्यते, इह यद्यपि नाम स्वरूपेण क्षेत्रानुवर्त्तिनः पुद्गलाः
पुद्गलानुवर्त्तिनश्च पर्यायास्तथापि यदा क्षेत्रानुवृत्त्या पुद्गलाः परिसङ्ख्यायन्ते पुद्गलानुवृत्त्या च तत्पर्यायास्तदा
क्षेत्रस्यासङ्ख्येयादिभागवृद्धिहान्योर्द्रव्यस्यापि तदनुवृत्त्या तथैव वृद्धिहानी प्राप्नुतो, द्रव्यस्यापि चानन्तभागादिवृद्धि-
हान्योस्तत्पर्यायाणामपि तदनुवृत्त्या तथैव वृद्धिहानी, यदा तु स्वक्षेत्रादनन्तगुणाः पुद्गलाः पुद्गलेभ्योऽपि तत्पर्याया
अनन्तगुणाः, अवधिश्च क्षयोपशमाधीनः, क्षयोपशमश्च तत्तद्द्रव्यादिसामग्रीवशाद्विचित्रपरिणामः, केवलतेजसा
च भगवतैवंस्वरूप एवोपलब्धस्तदा यथोक्तस्वरूपे एव वृद्धिहानी प्रतिपत्तव्ये ५। नान्यथेति न कश्चिद्दोषः, उक्तं चलद्वार-
मिदानीं तीव्रमन्दद्वारमभिधित्सुराह—

फड्डा य असंखेज्जा, संखेज्जे यावि एगजीवस्स। एगफड्डुवओगे, नियमा सव्वत्थ उवउत्तो ॥ ६० ॥
फड्डा य आणुगामी, अणाणुगामी य मीसया चेव। पडिवाइ अपडिवाई, मीसा य मणुस्सतेरिच्छे ॥ ६१ ॥

स्पर्द्धकाणि प्रागुक्तस्वरूपाणि, तानि चैकजीवस्य सङ्ख्येयान्यसङ्ख्येयान्यपि भवन्ति, तत्र एकस्पर्द्धकोपयोगे सति नियमात् सर्वत्र—सर्वेषु स्पर्द्धकेषूपयुक्तो भवति, एकोपयोगत्वाज्जीवस्य, एकलोचनोपयोगे द्वितीयलोचनोपयुक्तवत्, द्वितीयगाथाव्याख्या—एतानि च स्पर्द्धकानि त्रिविधानि भवन्ति, तद्यथा—अनुगमनशीलान्यानुगामिकानि—यत्र प्रदेशे तिष्ठतोऽवधिमतो जीवस्योत्पन्नानि ततोऽन्यत्रापि व्रजतस्तस्यानुयायीनीति भावः, एतद्विपरीतानि अनानुगामिकानि, आनुगामिकानानुगामिकरूपोभयस्वरूपाणि मिश्राणि, कानिचिद्देशान्तरानुयायीनि कानिचिन्नेति भावः, एतानि च पुनः प्रत्येकं त्रिधा भवन्ति, तद्यथा—प्रतिपतनशीलानि प्रतिपातीनि, कियन्तमपि कालं स्थित्वा ततो ध्वंसगमनस्वभावानीति भावः, तद्विपरीतान्यप्रतिपातीनि, आमरणांतभावीनीत्यर्थः, प्रतिपाताप्रतिपातस्वभावानि मिश्राणि, कानिचित् प्रतिपातीनि कानिचिन्नेत्यर्थः, एतानि च स्पर्द्धकानि मनुष्यतिर्यक्षु योऽवधिस्तस्मिन्नेव भवन्ति, न देवनारकावधौ, पर आह—ननु तीव्रमन्दद्वारे प्रस्तुते स्पर्द्धकावधिस्वरूपं प्रतिपादयतः कथं न प्रक्रमविरोधः?, उच्यते, इह प्राय आनुगामिकाप्रतिपातीनि स्पर्द्धकानि तीव्रविशुद्धियुक्तत्वात् तीव्राणि भण्यन्ते, अनानुगामिप्रतिपातीनि त्वविशुद्धत्वान्मन्दानि, मिश्राणि मध्यमानि, ततस्तीव्रमन्दद्वारमित्यदोषः, अपरस्त्वाह—आनुगामिकाप्रतिपातिस्पर्द्धकयोः परस्परं कः प्रतिविशेषः? को वा अनानुगामिकप्रतिपातिस्पर्द्धकयोः?, उच्यते—अत्राप्रतिपातिस्पर्द्धकमानुगामिकमेव भवति, आनुगामिकं तु प्रतिपात्यप्रतिपाति चेति विशेषः, तथा प्रतिपाति प्रतिपतत्येव पतितमपि च देशान्तरे गतस्य कदाचिज्जायते, न चेत्थमनानुगामिकमित्यनानुगामिकप्रतिपातिनोर्विशेषः, उक्तं तीव्रमन्दद्वारम् ६। इदानीं प्रतिपातोत्पातद्वारं विवृण्वन् गाथाद्वयमाह—

वाहिरलंभे भज्जो, दव्वे खेत्ते य काल–भावे य। उप्पा–पडिवाओऽवि य तदुभयं चेगसमएणं ॥ ६२ ॥
अब्भिंतरलद्धीए, तदुभयं नत्थि एगसमएणं। उप्पा पडिवाओऽविय, एगयरो एगसमएणं ॥ ६३ ॥

इह द्रष्टुरवधिमतो योऽवधिस्तस्यैव एकस्यां दिशि भवति स वाह्यावधिरथवा अनेकास्वपि दिक्षु यः स्पर्द्धकावधिर-न्योऽन्यं विच्छिन्नो भवति सोऽपि वाह्यावधिः। स्थापना। अथवा सर्वतः परिमण्डलाकारोऽप्यवधिर्योऽवधिमतो जीवस्य अङ्गुलमानादिना क्षेत्रव्यवधानेन सर्वतोऽसम्बद्धः सोऽपि वाह्यावधिः, तथा चात्रार्थे चूर्णिः–"वाहिरलंभो नाम जत्थ से ठियस्स ओहिनाणं समुप्पन्नं तम्मि ठाणे सो ओहिनाणी न किंचि पासइ, तं पुण ठाणं जाहे अंतरियं होइ, तंजहा–अंगु-लेण वा अंगुलपुहुत्तेण वा विहत्थीए वा विहत्थिपुहुत्तेण वा एवं जाव संखेज्जेहि वा असंखेज्जेहि वा जोयणेहिं, ताहे पासइ, एस वाहिरलंभो भण्णइ, स्थापना ⊙ तस्य एवंविधस्य 'वाह्यस्य' वाह्यावधेर्लाभे–प्राप्तौ सत्यां 'भाज्यो' विकल्पनीयः, कोऽसावित्याह–'उत्पाद' उत्पत्तिः, 'प्रतिपातो' ध्वंसः, 'तदुभयं च' उत्पादप्रतिपातरूपं उभयं च एकसमयेन, कस्मिन् विषये इत्याह–द्रव्ये क्षेत्रे काले भावे च, इह गाथायामपिशब्दचशब्दाः यथायोगं पूरणसमुच्चयार्थाः, एकस्मिन् समये द्रव्यादौ विषये यथोक्तरूपस्य वाह्यावधेः कदाचिदुत्पादो भवति कदाचिद् व्ययः कदाचिदुभयम्। उत्पादप्रतिपादयोः परस्परविरुद्ध-त्वात्कथमुभयमेकसमयेनेति चेत्, न एष दोषः, विभागेन भावात्, तथा चात्र दावानलदृष्टान्तः, तथाहि–दावानलः खल्वेककाल एव एकतो दीप्यते अन्यतश्च ध्वंसते, तथा अवधिरप्येकदेशे जायते अन्यत्र प्रच्यवते, उक्तं च–"उप्पाओ पडिवाओ उभयं वा होज्ज एगसमएणं। कहमुभयमेगसमए?, विभागओ तं, न सव्वस्स ॥ १ ॥ दावानलो व्व कत्थइ,

लग्गइ विज्झाइ समयमन्नत्तो। तह कोइ ओहिदेसो से जायइ नासए विइओ ॥२॥" (वि.७५०-१) द्वितीयगाथाव्याख्या— इह द्रष्टुर्यः सर्वतः सम्बद्धः प्रदीपस्य प्रभानिकरवत् सोऽभ्यन्तरावधिस्तस्य-अभ्यन्तरस्याभ्यन्तरावधेर्लब्धिरभ्यन्तरलब्धिस्तस्यां सत्यां, अभ्यन्तरावधिप्राप्ताविल्यर्थः, उक्तं च चूर्णौ—"तत्थ अब्भंतरलद्धी नाम जत्थ से ठियस्स ओहिनाणं समुप्पण्णं तत्थ ठाणातो आरब्भ ओहिनाणी निरंतरं संबद्धं संखेज्जमसंखेज्जं वा खेत्तं ओहिणा जाणइ पासइ, एस अब्भिंतरलद्धिंत्ति" तदुभयम्—उत्पादप्रतिपातरूपमुभयं नास्ति एकसमयेन, द्रव्यादौ विषये इत्यनुवर्त्तते, किं तर्हि?, उत्पादः प्रतिपातो वा एकतर एव एकसमयेन, अपिशब्द एवकारार्थः, स च भिन्नक्रमस्तथैव च योजितः, अयमिह भावार्थः—प्रदीपस्येवोत्पाद एव वा प्रतिपात एव वा एकसमयेनाभ्यन्तरावधेरुपजायते, न तूभयमदेशावधित्वात्, न ह्येकस्य एकपर्यायोत्पादव्ययौ युगपद्भवितुमर्हतः, परस्परं विरोधात्, आह च—"उप्पाओ विगमो वा, दीवस्स व तस्स नोभयं समयं। न भवण—नासा समयं वत्थुस्स ज्ञमेगधम्मेणं ॥ १ ॥" ( वि. ७५४ ) उक्तं प्रतिपातोत्पादद्वारम्। सम्प्रति यदुक्तं—"संखेज्ज मणोदव्वे भागो लोगपलियस्स' इत्यादि, तत्र किल द्रव्यादित्रयस्य परस्परोपनिबन्ध उक्तः, इदानीं प्रसङ्गत एवोत्पादप्रतिपाताधिकारे द्रव्यपर्याययोः परस्परमुपनिबन्धं प्रतिपादयन्नाह—

दव्वाओ असंखेज्जे, संखेज्जे यावि पज्जवे लहइ। दो पज्जवे दुगुणिए, लहइ य एगाउ दव्वाओ ॥ ६४ ॥

परमाण्वादि द्रव्यमेकं पश्यन्नवधिज्ञानी द्रव्यात् सकाशात् तत्पर्यायानुत्कर्षतोऽसङ्ख्येयान् सङ्ख्येयांश्चापि मध्यमतो 'लभते' प्राप्नोति, पश्यतीति तात्पर्यार्थः, जघन्यतस्तु द्वौ पर्यायौ द्विगुणितौ एकस्माद्द्रव्याल्लभते, किमुक्तं भवति?—सामा-

न्यतो वर्णगन्धरसस्पर्शलक्षणांश्चतुरः पर्यायानेकस्मिन् द्रव्ये पश्यति, न त्वेकगुणकालादीन् बहूनिति, उक्तं च—"एगं दव्वं पेच्छं, खंधमणुं वा स पज्जवे तस्स । उक्कोसमसंखिज्जे, संखिज्जे पेच्छई कोइ ॥ १ ॥ दो पज्जवे दुगुणिए, सव्वजहण्णेण पेच्छए ते य । वण्णाइया व चउरो नाणंते पेच्छइ कयाइ ॥२॥" (वि.७३१-२) अनन्तांश्च पर्यायानुत्कर्षतोऽपि न प्रेक्षते एकद्रव्यगतान्, अनन्तेषु द्रव्येषु समुदितेष्वनन्तांस्तान् पश्यत्येव, यत उक्तं नन्द्यध्ययने—"भावतो णं ओहिणाणी अणंते भावे जाणइ पासइ"इत्यादि ॥ गतं सप्रसङ्गं उत्पादप्रतिपातद्वारम्, इदानीं ज्ञानदर्शनविभङ्गलक्षणं द्वारत्रयं युगपदभिधित्सुराह—

सागारमणागारा, ओहि-विभंगा जहण्णया तुल्ला । उवरिमगेवेज्जेसु(उ) परेण ओही असंखेज्जो ॥ ६५ ॥

इह योऽवधिर्विशेषग्राहकः स साकारः, स च सम्यग्दृष्टेः ज्ञानमित्यभिधीयते, स एव मिथ्यादृष्टेर्विभङ्गः, यः पुनः सामान्यग्राहकोऽवधिः विभङ्गो वा सोऽनाकारः, स च दर्शनं, तत्र साकारानाकाराववधिविभङ्गौ जघन्यकादारभ्य तुल्यौ लोकपुरुषग्रीवाभवानि ग्रैवेयकानि उपरिमाणि च तानि ग्रैवेयकाणि च उपरिमग्रैवेयकाणि तेषु यावत्, तुशब्दो विशेषणार्थः, स चैतद्विशिनष्टि—नारकभवनपतिदेवेभ्य आरभ्य तिर्यङ्मनुष्यवर्ज्जमुपरिग्रैवेयकेषु यावत् साकारानाकाराववधिविभङ्गौ क्षेत्रकालविषयावधिमधिकृत्य जघन्यादारभ्य तुल्यस्थितिकत्वेन तुल्याविति, इयमत्र भावना—नारका भवनपत्यादयश्च उपरितनग्रैवेयकविमानवासिपर्यन्ता देवा ये ये जघन्यतुल्यस्थितयो मध्यमतुल्यस्थितयो उत्कृष्टतुल्यस्थितयो वा तेषां तेषामवधिविभङ्गज्ञानदर्शने क्षेत्रकालरूपौ विषयावधिकृत्य परस्परतस्तुल्ये, न तु द्रव्यभावविषयौ तावङ्गीकृत्य, तुल्यस्थितिकानामपि सम्यग्दर्शनं विशुद्धतपःकर्मादिकं च प्राग्भवगतं कारणं प्रतीत्यातिदूरं तुल्यत्वाभावात्, 'परेण

ओही असंखेज्जो' इति ग्रैवेयकविमानेभ्यस्तु परतोऽनुत्तरविमानेष्ववधिः, ज्ञानदर्शनरूपोऽवधिरेव भवति, न तु विभङ्ग-ज्ञानं, मिथ्यादृष्टीनां तत्रोपपाताभावात्, स च क्षेत्रतः कालतश्चासङ्ख्येयो भवति, असङ्ख्यातक्षेत्रकालविषयो भवतीति भावः, द्रव्यभावैस्त्वनन्तविषयः, इह तिर्यङ्मनुष्याणां तुल्यस्थितीनामपि क्षयोपशमतीव्रमन्दतादिकारणवैचित्र्यात् क्षेत्रकाल-विषययोरप्यवधिविभङ्गज्ञानदर्शनयोर्वैचित्र्यता, न पुनस्तुल्यतैवेतीह तद्वर्जनं। गतं ज्ञानदर्शनविभङ्गरूपं द्वारत्रयम्। अधुना देशद्वारमभिधित्सुरिदमाह—

नेरइयदेवतित्थं-करा य ओहिस्सऽबाहिरा होंति। पासंति सबओ खलु सेसा देसेण पासंति ॥ ६६ ॥

नैरयिकाश्च देवाश्च तीर्थंकराश्च नैरयिकदेवतीर्थंकराः, तीर्थकरा इत्यत्र 'तीर्थात्त्वेके' इति वचनात् खप्रत्यये तीर्थश-ब्दस्य मम्, चशब्दोऽवधारणेऽस्य च व्यवहितः प्रयोगः, तं च दर्शयिष्यामः, अवधेः—अवधिज्ञानस्याबाह्या एव, बाह्या न कदाचनापि भवन्तीत्यर्थः, सर्वतोऽवभासकावध्युपलब्धक्षेत्रमध्यवर्त्तिनः सदैव भवन्तीति भावना, उक्तं च—"ओहिणा-णक्खेत्तब्भंतरगा होंति नारयाईया। सबदिसोऽवहिविसओ तेसिं दीवप्पभोवम्मो ॥१॥"(वि.७६७) तथा पश्यन्ति सर्वतः—सर्वासु दिक्षु विदिक्षु च, खलुशब्दोऽवधारणार्थः सर्वास्वेव दिग्विदिक्ष्विति, आह—अवधेरबाह्या भवन्तीत्यस्मादेव सर्वत इत्यस्य लब्धत्वात् सर्वतःशब्दग्रहणमतिरिच्यते, नातिरिच्यते, अभ्यन्तरत्वाभिधानेऽपि सर्वतो दर्शनाप्रतीतेः, न खल्वव-धेरभ्यन्तरत्वेऽपि सति सर्वे सर्वतः पश्यन्ति, कस्यचिद्दिगन्तरालादर्शनात्, विचित्रत्वादवधेः, ततः सर्वतो दर्शनख्याप-नार्थं 'पासंति सबतो खलु' इत्युक्तम्, आह च भाष्यकृत्—"अब्भिंतरत्ति भणिए, भण्णइ पासंति सबओ कीस ?।

ओयइ जमसंतयदिसो अंतोऽवि ठिओ न सव्वत्तो ॥१॥" (वि. ७६८) शेषास्तिर्यङ्नरा देशेन-एकदेशेन पश्यन्ति, 'सर्वं वाक्यं सावधारणमिष्टितश्चावधारणविधि'रिति एवमवधारणीयः-शेषा एव देशतः पश्यन्ति, नतु शेषा देशतः एव, तिर्यङ्नराणां देशतः सर्वतश्च यथायोगमवधिना दर्शनात्, उक्तं च—"सेसे च्चिय देसेणं, न उ देसेणेव सेसया किं तु। देसेण सव्वओऽवि य पेच्छंति नरा तिरिक्खा य ॥१॥"(वि.७७१) अथवाऽन्यथा व्याख्यायते-नैरयिकदेवतीर्थङ्करा एवावधेरबाह्या भवन्ति, किमुक्तं भवति?-नियतावधयो भवन्ति, नियमेनैषामवधिर्भवतीति भावः, एवं चाभिहिते सति संशयः-किं ते देशेन पश्यन्ति उत सर्वतः?, ततः संशयापनोदार्थमाह—पश्यन्ति सर्वतः खलु-सर्वत एव तेनावधिना नैरयिकादयो, नतु देशतः, अत्र पर आह-ननु पश्यन्ति सर्वतः खल्वित्येतावदेवास्तामवधेरबाह्या भवन्तीत्येतन्न युक्तं, यतो नियतावधित्वप्रतिपादनार्थमिदमुच्यते, नियतावधित्वं च देवनारकाणां 'दोण्हं भवपच्चइयं, तंजहा-देवाणं नेरइयाणं चे'ति वचनसामर्थ्यात्सिद्धं, तीर्थकृतां तु पारभविकावधिसमन्वागमस्यातिप्रसिद्धत्वात्, उच्यते-इह यद्यपि 'दोण्हं भवपच्चइयं' इत्यादिवचनतो नैरयिकादीनां नियतावधित्वं लब्धं, तथापि सर्वकालं तेषां नियतोऽवधिरिति न लभ्यते, ततः सर्वकालं नियतावधित्वख्यापनार्थमवधेरबाह्या भवन्तीत्युक्तम्, आह—यद्येवं तीर्थकृतामवधेः सर्वकालावस्थायित्वं विरुध्यते, न, छद्मस्थकालस्यैव तेषां विवक्षणात्, शेषं प्राग्वत् ॥ गतं देशद्वारम्। इदानीं क्षेत्रद्वारं विवरीषुराह—

संखेज्जमसंखेज्जो, पुरिसमबाहाए खेत्तओ ओही। संबद्धमसंबद्धो लोगमलोगे य संबद्धो ॥ ६७ ॥

इह कश्चित् क्षेत्रतोऽवधिरवधिमति जीवे प्रदीपे प्रभापटलमिव सम्बद्धो-लग्नो भवति, जीवावष्टब्धक्षेत्रादारभ्य निर-

न्तरं द्रष्टव्यं वस्तु प्रकाशयतीति भावः, कश्चित्पुनरतिविप्रकृष्टं तमोव्याकुलमन्तरालवर्त्तिनं प्रदेशमुल्लङ्घ्य दूरस्थितभित्त्यादिप्रतिस्फलितप्रदीपप्रभेवासम्बद्धो जीवे भवति, कया हेतुभूतया असम्बद्ध इत्याह–'पुरिसमवाधाए' इति मकारोऽलाक्षणिकः, पूर्यते सुखदुःखाभ्यामिति पुरुषः, अवाधनमवाधा, अपान्तरालमित्यर्थः, आह च–'अवाहा नाम पुरिसस्स ओहीए य जं अंतरं सा अवाहा भण्णइ' इति, पुरुषादवाधा पुरुषावाधा तया हेतुभूतया असम्बद्धः। स च सम्बद्धोऽसम्बद्धश्चावधिः क्षेत्रतः कियान् भवतीत्यत आह—'संखेज्जमसंखेज्जो' अत्रापि मकारोऽलाक्षणिकः, सङ्ख्येयः असङ्ख्येयश्च योजनापेक्षया भवति, किमुक्तं भवति?–असम्बद्धोऽप्यवधिः क्षेत्रतः सङ्ख्येयानि वा योजनानि भवत्यसङ्ख्येयानि वा, एवं सम्बद्धोऽपि, किं केवल एव सम्बद्धो असम्बद्धो वाऽवधिः सङ्ख्येयोऽसङ्ख्येयो वा योजनापेक्षया भवति?, नेत्याह–पुरुषावाधया इदं पदं द्वितीयवारमावर्त्तितम्, नवरं अस्मिन् वारे सहार्थे तृतीया पुरुषावाधया सङ्ख्येयोऽसङ्ख्येयो वा भवतीति, इदमुक्तं भवति–पुरुषस्यावधेश्चापान्तरालमपि सङ्ख्येयान्यसङ्ख्येयानि वा योजनानि भवतीति, आह चूर्णिकृत्–"जोवि असंवद्धो सोवि संखिज्जाणि असंखिज्जाणि वा जोयणाणि अंतरे किच्चा ततो परेण पासइ, आरेण न पासइ" इति, सा च पुरुषावाधा असम्बद्ध एवावधौ भवति, नतु सम्बद्धे, तत्र सम्बद्धत्वेनैव तदसम्भवादिह त्वसम्बद्धेऽवधौ अपान्तराले च चतुर्भङ्गिका–सङ्ख्येयमन्तरं सङ्ख्येयोऽवधिः १ सङ्ख्येयमन्तरमसङ्ख्येयोऽवधिः २, असङ्ख्येयमन्तरं सङ्ख्येयोऽवधिः ३ असङ्ख्येयमन्तरं असङ्ख्येयोऽवधिः ४, सम्बद्धे त्ववधौ विकल्पाभावः, तदुत्थानहेतोरन्तरलक्षणस्य द्वितीयपदस्य तत्राभावात्, तथाऽयमवधिर्लोकेऽलोके च सम्बद्धोऽपि भवति, तथा चाह–'लोगमलोगे य संवद्धो' इह लोकशब्देन लोकान्तः परिगृह्यते,

तथा पूर्वसूरिकृतव्याख्यानात्, अत्रापि चतुर्भङ्गिका–पुरुषे सम्बद्धो लोकान्ते च १, पुरुषे सम्बद्धो न लोकान्ते, देशतोऽभ्यन्तरावधिः २, न पुरुषे सम्बद्धः किन्तु लोकान्ते, एकदिग्वर्त्ती बाह्यावधिः ३, शून्योऽयं भङ्ग इति टीकाकारः, तदसम्यक्, चूर्णौ भाष्ये चाप्रतिषेधादसम्भवहेतुत्वाभावाच्च, तथा न लोकान्ते सम्बद्धो नापि पुरुषे, बाह्यावधिरेव स्तोकदेशवर्त्ती ४ यस्त्वलोके सम्बद्धः स पुरुषे नियमात् सम्बद्ध एव, अभ्यन्तरावधेरेवालोकदर्शनसमर्थत्वात्, आह च भाष्यकृत्–"संखिज्जमसंखिज्जं, देहाओ खित्तमन्तरं काउं। संखेज्जाऽसंखेज्जं, पेच्छेज्ज तदंतरमबाहा" ॥ १ ॥ संबद्धा–ऽसंबद्धो, नरलोयंतेसु होइ चउब्भंगो। संबद्धो उ अलोए, नियमा पुरिसेऽवि संबद्धो ॥ २ ॥" ( वि. ७७४-५ ) इति गतं क्षेत्रद्वारम्।

इदानीं गतिद्वारं विभणिषुराह—

गइ नेरइयाईआ, हेट्ठा जह वण्णिया तहेव इहं। इड्ढी एसा वण्णिज्जइत्ति तो सेसियाओऽवि ॥ ६८ ॥

---

१ अत्रेदमवधेयं–श्रीहरिभद्रसूरिपादानां लोकान्तस्यालोकस्य चैक्यतामाश्रित्य यथाऽलोकसंबद्धस्यावधेरवश्यमभ्यन्तरावधिता श्रीमद्भिः स्वयमपि स्वीकृता तथा लोकान्तसंबद्धस्याप्यवधेरात्मसंबद्धत्वस्यावश्यंभावः संमतः, अत एव च लोकान्तमलोकान्तं चाश्रित्य न पुरुषसंबन्धभवं चतुर्भङ्गिकाद्वयं, एकस्यामेव च चतुर्भङ्ग्यां 'संबद्धो उ अलोए' इत्यादिभाष्यं 'जो पुण अलोगस्स अप्पमवि पासइ सो पुरिसेण नियमेण संबद्धो' इति चूर्णिश्च संगतिमावहति, चतुर्भंगिकाद्वयपक्षे तु श्रीमद्वाक्यं भाष्यचूर्णिवाक्याभ्यां भिन्नाभिप्रायकं, अलोकदर्शकस्यैवात्मसंबद्धत्वनियमात्, पूर्वत्र लोकालोकशब्देन तदन्तग्रहश्चतुर्भङ्गी चैका, उत्तरत्र चतुर्भङ्गीद्वयं ग्रहश्चान्तस्य विकल्पेन, भिन्नश्च परस्परं, मर्यादाभावोभयदर्शकत्वादन्तशब्दस्य, असम्यगित्यादि तु मर्यादापक्षेणैव, निकटप्रान्तनाशावयववाचित्वमन्तशब्दस्येति कोशकारोक्तिरपि ।

गतिर्नैरयिकादिका, गतिग्रहणं शेषस्य इन्द्रियादिद्वारकलापस्योपलक्षणं, ततोऽयमर्थो–ये गत्यादयः सत्पदप्ररूपणा-हेतवो ये च द्रव्यप्रमाणादयोऽष्टौ द्वारविशेषास्ते यथा अधस्तान्मतिश्रुतयोर्वर्णितास्तथैवेहापि द्रष्टव्याः, अयं तु विशेषः-ये पूर्वं मतिज्ञानस्य प्रतिपत्तारः प्रागुक्तास्तेऽवधिज्ञानस्यापि प्रतिपत्तव्याः, नवरं पूर्वं मतिज्ञानस्यावेदका अकषायिणो मनःपर्यायज्ञानिनश्च पूर्वप्रतिपन्ना एवोक्ताः, इह तु प्रतिपद्यमाना अपि द्रष्टव्याः, यतः श्रेणिद्वये वर्त्तमानानामवेदकाना-मकषायाणां च केषाञ्चिदवधिज्ञानमुत्पद्यते, येषां चानुत्पन्नावधिज्ञानानां मतिश्रुतचारित्रवतां प्रथममेव मनःपर्यायज्ञान-मुत्पद्यते ते च मनःपर्यायज्ञानिनः केचित्पश्चादवधिज्ञानस्य प्रतिपत्तारो भवन्ति, अन्यच्च–अनाहारका अपर्याप्तकाश्च मतिज्ञानस्य पूर्वप्रतिपन्ना एवोक्ताः, नतु प्रतिपद्यमानकाः, इह तु येऽप्रतिपतितसम्यक्त्वास्तिर्यङ्मनुष्येभ्यो देवनारका जायन्ते तेऽवधिज्ञानस्य प्रतिपद्यमानका अपि प्रत्तिपत्तव्याः, पूर्वप्रतिपन्नाः पुनर्ये एव मतिज्ञानस्य प्रागुक्तास्त एव द्रष्टव्याः, नवरं द्वित्रिचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियतिरश्चो मुक्त्वा, ते हि सास्वादनसम्यग्दृष्टयो मतिज्ञानस्य पूर्वप्रतिपन्ना उक्ताः, अवधेस्तु न प्रतिपद्यमानका नापि पूर्वप्रतिपन्ना इति, शेषं तथैव, उक्तं च–"जे पडिवज्जंति मइं, तेऽवहिनाणंपि ससंहिआ अण्णे। वेयकसायाईआ, मणपज्जवनाणिणो चेव ॥ १ ॥ सम्मा सुरनेरइयाऽणाहारा जे य होंति पज्जत्ता। ते च्चिय पुव्वपवण्णा, वियलाऽसण्णी य मोत्तूणं ॥२॥ (७७७-८) एतदेव विनेयजनानुग्रहाय सविस्तरं भाव्यते, तत्रैवं सत्पदप्ररू-पणावतारः–कोऽपि शिष्यः कञ्चिदाचार्यं पृच्छति, भगवन्! अवधिज्ञानं किमस्ति? नास्ति? इति, आचार्य आह–नियमादस्ति, यद्यपि अस्ति तथापि कथमवगन्तव्यम्?, आचार्य आह–गत्यादिभिर्मार्गणास्थानैः, तानि चामूनि 'गइ इंदिए य' गाहा 'भास-

गपरित्त गाहा, (वि.४०९-१०) तत्र गतिद्वारे चतुर्विधायामपि गतौ अवधिज्ञानस्य पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानकास्तु विवक्षितकाले भाज्याः, इन्द्रियद्वारे एकद्वित्रिचतुरिन्द्रियेषु न पूर्वप्रतिपन्ना नापि प्रतिपद्यमानकाः, पञ्चेन्द्रियेषु पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानकास्तु भाज्याः, कायद्वारे पृथ्व्यप्तेजोवायुवनस्पतिषूभयाभावः, त्रसकायेषु पञ्चेन्द्रियवत्, योगद्वारे त्रिषु योगेषु समुदितेषु पञ्चेन्द्रियवत्, मनोरहितवाग्योगिषु केवलकाययोगेषु चोभयाभावः, वेदद्वारे त्रिष्वपि वेदेषु पञ्चेन्द्रियवत्, अवेदकेषु उभयमपि भाज्यम्, एवं कषायद्वारेऽपि, लेश्याद्वारे उपरितनीषु तिसृषु लेश्यासु पञ्चेन्द्रियवत्, आद्यासु तिसृषु पूर्वप्रतिपन्नाः सन्ति, नत्वितरे, सम्यक्त्वद्वारे निश्चयव्यवहाराभ्यां विचारः, तत्र व्यवहारनयमतेन मिथ्यादृष्टिः सम्यग्दृष्टिश्चावधिज्ञानस्य प्रतिपत्ता, पूर्वप्रतिपन्नस्तु सम्यग्दृष्टिरेव, निश्चयनयमतेन प्रतिपद्यमानकः पूर्वप्रतिपन्नश्चावधिज्ञानस्य सम्यग्दृष्टिरेवेति, ज्ञानद्वारे व्यवहारनयमतेन ज्ञानी वा प्रतिपद्यमानको भवत्यज्ञानी वा, यदि ज्ञानी तत आभिनिबोधिकज्ञानी श्रुतज्ञानी मनःपर्यायज्ञानी, अज्ञानी मत्यज्ञानी श्रुताज्ञानी विभङ्गज्ञानी वा, पूर्वप्रतिपन्नाः पुनर्ज्ञानिन एव, ते च मतिज्ञानिनः श्रुतज्ञानिनोऽवधिज्ञानिनो मनःपर्यायज्ञानिनश्च, केवलज्ञानी पुनरवधिज्ञानस्य न पूर्वप्रतिपन्नो नापि प्रतिपद्यमानकः, समूलघातं देशज्ञानघाते केवलज्ञानसम्भवात्, निश्चयनयमतेन प्रतिपद्यमानकाः पूर्वप्रतिपन्नाश्च नियमतो ज्ञानिन एव, तत्र मतिश्रुतावधिमनःपर्यायज्ञानिनः पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानका अपि सम्भवंति, केवलज्ञानिनामुभयाभावः, देशज्ञानानां व्यवच्छेदे केवलज्ञानसद्भावात्, मत्याद्यज्ञानवन्तस्तु न पूर्वप्रतिपन्ना नापि प्रतिपद्यमानकाः, प्रतिपत्तिक्रियाकाले मत्यादिज्ञानभावात्, क्रियाकालनिष्ठाकालयोरैक्यात्, दर्शनद्वारे

चक्षुर्दर्शनी अचक्षुर्दर्शनी अवधिदर्शनी च लब्धिमङ्गीकृत्य पूर्वप्रतिपन्ना नियमतः प्राप्यन्ते, प्रतिपद्यमानकास्तु भाज्याः, उपयोगं प्रतीत्य पूर्वप्रतिपन्ना एव, नतु प्रतिपद्यमानकाः, अवधिज्ञानस्य लब्धित्वाल्लब्ध्युत्पत्तेश्च दर्शनोपयोगे निषिद्धत्वात्, केवलदर्शनी न पूर्वप्रतिपन्नो नापि प्रतिपद्यमानको, देशदर्शनव्यवच्छेदेन केवलदर्शनभावात्, संयतद्वारे संयता असंयताः संयतासंयताः अवधिज्ञानस्य पूर्वप्रतिपन्ना नियमतः सन्ति, प्रपद्यमानकास्तु भाज्याः, उपयोगद्वारे साकारोपयोगे पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानकास्तु विवक्षितकाले भाज्याः, अनाकारोपयोगे तु पूर्वप्रतिपन्ना एव, न तु प्रतिपद्यमानकाः, अनाकारोपयोगे लब्ध्युत्पत्तेरभावात्, आहारकद्वारे आहारकाः पूर्वप्रतिपन्नाः नियमतः सन्ति, प्रतिपद्यमानका विवक्षितकाले भाज्याः, अनाहारकाश्चापान्तरालगतौ पूर्वप्रतिपन्नाः प्रतिपद्यमानकाश्च विवक्षितकाले सम्भवन्ति, प्रतिपतितसम्यक्त्वानां तिर्यङ्मनुष्येभ्यो देवनारकत्वेनोत्पद्यमानानामवधिज्ञानस्य प्रतिपत्तेरपि सम्भवात्, भाषकपरीत्तद्वारे प्राग्वत्, पर्याप्तद्वारे षड्भिः पर्याप्तिभिर्ये पर्याप्तास्ते पूर्वप्रतिपन्नाः नियमतः सन्ति, प्रतिपद्यमानका विवक्षितकाले भाज्याः, अपर्याप्तका अपि पट्पर्याप्त्यपेक्षया करणापर्याप्तास्ते पूर्वप्रतिपन्नाः प्रतिपद्यमानकाश्च सम्भवन्ति, सूक्ष्मादीनि द्वाराणि द्रव्यप्रमाणादीनि च प्राग्वत्, उक्तमवधिज्ञानं, तच्चतुर्द्धा, तद्यथा—द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतोऽवधिज्ञानी जघन्यतोऽनन्तानि रूपिद्रव्याणि, उत्कर्षतः सर्वाण्यपि (रूपि) द्रव्याणि जानाति पश्यति, क्षेत्रतोऽवधिज्ञानी जघन्यतोऽङ्गुलस्यासङ्ख्येयभागं उत्कर्षतोऽलोके लोकप्रमाणमात्राणि सङ्ख्यातीतानि खण्डानि, कालतो जघन्येनावलिकाया असङ्ख्येयं

भागमुत्कर्षतोऽसङ्ख्येया उत्सर्पिण्यवसर्पिणीः, भावतो जघन्येनाप्यनन्तान् भावान् सर्वभावानामनन्तभागं जानाति पश्यति, एष चावधिः ऋद्धिविशेषो गीयते, तत ऋद्धिप्रतिपादनावसरात् शेषर्धयोरपि वर्ण्यन्ते, ता एवाह—

आमोसहि विप्पोसहि, खेलोसही जल्लमोसहि चेव । संभिन्नसोय उज्जुमइ, सव्वोसहि चेव बोद्धव्वो ॥ ६९ ॥
चारणआसीविसा केवली य मणनाणिणो य पुव्वधरा । अरिहंत–चक्कवट्टी बलदेवा वासुदेवा य ॥ ७० ॥

तत्र आमर्षणमामर्षः, संस्पर्शनमित्यर्थः, स एव औषधिर्यस्यासावामर्षौषधिः, करादिसंस्पर्शनमात्रादेव व्याध्यपनयनसमर्थो, लब्धिलब्धिमतोरभेदोपचारात् साधुरेवामर्षौषधिर्लब्धिरित्यर्थः, एवं शेषपदेष्वपि भावना कार्या, 'विप्पोसहि' इति, मूत्रस्य पुरीषस्य वाऽवयवो विट् उच्यते, अन्ये त्वाहुः–विडिति विष्ठा प्रइति प्रश्रवणं ते औषधिर्यस्यासौ तथा, खेलः-श्लेष्मा औषधिर्यस्य स तथा, जल्लो–मलः स औषधिर्यस्य स तथा, सुगन्धाश्चैते भवन्ति विडादयस्तल्लब्धिमतां, इयमत्र भावना–इहामर्षौषधिलब्धिः कस्यापि शरीरैकदेशे समुत्पद्यते, कस्यापि सर्वस्मिन् शरीरे, तेनात्मानं परं वा यदा व्याध्यपगमबुद्ध्या परामृशति तदा तदपगमो भवति, विडादिभिरपि तल्लब्धिमन्तो यदाऽऽत्मानं परं वा रोगापनयनबुद्ध्या परामृशन्ति तदा तद्रोगापगमः, 'सम्भिन्नसोय'इति यः सर्वैरपि शरीरदेशैः शृणोति स सम्भिन्नश्रोताः, अथवा श्रोतांसि-इन्द्रियाणि सम्भिन्नानि एकैकशः सर्वविषयैर्यस्य स सम्भिन्नश्रोताः–एकतरेणापीन्द्रियेण समस्तापरेन्द्रियगम्यान् विषयान् योऽवगच्छति स सम्भिन्नश्रोता इत्यर्थः, अथवा श्रोतांसि–इन्द्रियाणि सम्भिन्नानि–परस्परत एकरूपतामापन्नानि यस्य स तथा, श्रोत्रं चक्षुःकार्यकारित्वात् चक्षुरूपतामापन्नं, चक्षुरपि श्रोत्रकार्यकारित्वात् तद्रूपतामापन्नमित्येवं सम्भिन्नानि

यस्य परस्परमिन्द्रियाणि स सम्भिन्नश्रोता इति भावः, अथवा द्वादशयोजनविस्तृतस्य चक्रवर्त्तिकटकस्य युगपत् ब्रुवाणस्य तत्तूर्यसङ्घातस्य वा युगपदास्फाल्यमानस्य सम्भिन्नान्–लक्षणतो विधानतश्च परस्परतो विभिन्नान् जननिवहसमुत्थान् शङ्खकाहलाभेरीभाणकढक्कादितूर्यसमुत्थान् वा युगपदेव सुबहून् शब्दान् यः शृणोति स सम्भिन्नश्रोताः, उक्तं च–"जो सुणइ सव्वतो सुणइ सव्वविसए व सव्वसोएहिं । सुणइ बहुए व सद्दे भिन्ने संभिन्नसोओ सो ॥ १ ॥" ( वि. ७८३ ) एवं च सम्भिन्नश्रोतृत्वलब्धिरपि, तथा ऋज्वी–प्रायो घटादिमात्रग्राहिणी मतिः ऋजुमतिः–विपुलमतिमनःपर्यायज्ञानापेक्षया किञ्चिदविशुद्धतरं मनःपर्यायज्ञानमेव, 'सव्वोसहि'इति सर्वे एव विड्मूत्रकेशनखादयोऽवयवाः सुरभयो व्याध्यपनयनसमर्थत्वादौषधयो यस्यासौ सर्वौषधिः, अथवा सर्वा–आमर्षौषध्यादिका औषधयो यस्य एकस्यापि साधोः स तथा, 'चारण' इति चरणं–गमनं तद्विद्यते येषां ते चारणाः, ज्योत्स्नादिभ्योऽण् इति मत्वर्थीयोऽण्प्रत्ययः, तत्र गमनमन्येषामप्यस्ति ततो विशेषणान्यथानुपपत्त्या चरणमिह विशिष्टं गमनमागमनं चाभिगृह्यते, अत एवातिशयने मत्वर्थीयोऽयं, यथा रूपवती कन्येत्यत्र, ततोऽतिशायिगमनागमनलब्धिसम्पन्नाश्चारणाः, ते च द्विभेदाः–जङ्घाचारणा विद्याचारणाश्च, तत्र ये चारित्रतपोविशेषप्रभावतः समुद्भूतगमनागमनविषयलब्धिसम्पन्नास्ते जङ्घाचारणाः, ये पुनर्विद्यावशतः समुत्पन्नगमनागमनलब्धयस्ते विद्याचारणाः, जङ्घाचारणाश्च रुचकवरद्वीपं यावत् गन्तुं समर्थाः, विद्याचारणा नन्दीश्वरं, तत्र जङ्घाचारणा यत्र कुत्रापि गन्तुमिच्छवस्तत्र रविकरानपि निश्रीकृत्य गच्छन्ति, विद्याचारणास्त्वेवमेव, जङ्घाचारणश्च रुचकवरद्वीपं गच्छन् एकेनैवोत्पातेन गच्छति, प्रतिनिवर्त्तमानस्तु प्रथमेनोत्पातेन नन्दीश्वरमायाति, द्वितीयेन स्वस्थानं,यदि पुनर्मेरुशिखरं जिगमिषुस्तर्हि प्रथमेनैवोत्पातेन पण्ड-

कवनमभिरोहति, प्रतिनिवर्त्तमानस्तु प्रथमेनोत्पातेन नन्दनवनमागच्छति, द्वितीयेन स्वस्थानमिति, जङ्घाचारणो हि चारित्रातिशयप्रभावतो भवति, ततो लब्ध्युपजीवेन औत्सुक्यभावतः प्रमादसम्भवाच्चारित्रातिशयनिबन्धना लब्धिरपि हीयते, ततः प्रतिनिवर्त्तमानो द्वाभ्यामुत्पाताभ्यां स्वस्थानमायाति, विद्याचारणाः पुनः प्रथमेनोत्पातेन मानुषोत्तरं पर्वतं गच्छन्ति, द्वितीयेन तु नन्दीश्वरं, तत्र च गत्वा चैत्यानि वन्दते, ततः प्रतिनिवर्त्तमानस्त्वेकेनैवोत्पातेन स्वस्थानमायाति, तथा मेरुं गच्छन् प्रथमेनोत्पातेन नन्दनवनं गच्छति, द्वितीयेन पण्डकवनं, तत्र चैत्यानि वन्दित्वा ततः प्रतिनिवर्त्तमान एकेनैवोत्पातेन स्वस्थानमायाति, विद्याचारणो हि विद्यावशाद्भवति, विद्या च परिशील्यमाना स्फुटा स्फुटतरोपजायते, ततः प्रतिनिवर्त्तमानस्य शक्त्यतिशयसम्भवादेकेनैवोत्पातेन स्वस्थानागमनमिति, उक्तं च—"अइसयचरणसमत्था जङ्घा–विज्जाहिं चारणा मुणओ । जंघाहिँ जाइ पढमो नीसं काउं रविकरेऽवि ॥ २ ॥ एगुप्पाएण गओ रुयगवरमिओ तओ पडिनियत्तो । बीएणं नंदिस्सरमिहं तओ एइ तइएणं ॥ ३ ॥ पढमेण पंडगवणं, बीओप्पाएण नंदणं एइ । तइओप्पाएण तओ इह जंघाचारणो होइ ॥ ४ ॥ पढमेण माणुसोत्तरनगं स नंदिस्सरं तु विइएण । एइ तओ तइएणं कयचेइयवंदणो इहइं ॥ ५ ॥ पढमेण नंदणवणे बीओप्पाएण पंडगवणम्मि । एइ इहं तइएणं जो विज्जाचारणो होइ ॥ ५ ॥" (वि.७८६-९०) 'आसीविस' इति, आस्यो–दंष्ट्रास्तासु विषं येषां ते आशीविषाः, ते द्विविधा–जातितः कर्म्मतश्च, तत्र जातितो वृश्चिकमण्डूकोरगमनुष्यजातयः क्रमेण वहुवहुतरवहुतमविषाः, वृश्चिकविषं हि उत्कर्षतोऽर्द्धभरतक्षेत्रप्रमाणं शरीरं व्याप्नोति, मण्डूकविषं भरतक्षेत्रप्रमाणं, भुजङ्गमविषं जम्बूद्वीपप्रमाणं, मनुष्यविषं समयक्षेत्रप्रमाणं, कर्म्मतश्च पञ्चेन्द्रियतिर्यग्योनयो

मनुष्याः, देवाश्चासहस्रारात्, एते हि तपश्चरणानुष्ठानतोऽन्यतो वा गुणत आशीविषवृश्चिकभुजङ्गादिसाध्यां क्रियां कुर्वन्ति, शापप्रदानादिना परं व्यापादयन्तीति भावः, देवास्त्वपर्याप्तावस्थायां तच्छक्तिमन्तोऽवसातव्याः, ते हि पूर्वं मनुष्यभवे समुपार्जितोर्जिताशीविषलब्धयः सहस्रारान्तदेवेष्वभिनवोत्पन्ना अपर्याप्तावस्थायां प्राग्भविकाशीविषलब्धिसंस्कारादाशीविषलब्धिमंतो व्यवह्रियन्ते, ततः परं पर्याप्तावस्थायां संस्कारस्यापि निवृत्तिरिति न तद्व्यपदेशभाजः, यद्यपि च नाम पर्याप्ता अपि देवाः शापादिना परं व्यापादयन्ति तथापि न लब्धिव्यपदेशः, भवप्रत्ययतस्तथारूपसामर्थ्यस्य सर्वसाधारणत्वात्, गुणप्रत्ययो हि सामर्थ्यविशेषो लब्धिरिति प्रसिद्धिः। 'केवली ये'त्यादि, केवलिनश्च प्रसिद्धाः, मनोज्ञानिनो मनःपर्यायज्ञानिनः, तच्च मनःपर्यायज्ञानं विपुलमतिरूपं गृह्यते, ऋजुमतिरूपस्य प्रागेव गृहीतत्वात् तत्र, विपुलं-बहुविशेषोपेतं वस्तु मन्यते-गृह्णातीति विपुलमतिः, बाहुलकात्कर्त्तरि क्तप्रत्ययः, यदिवा विपुला-पर्यायशतोपेतचिन्तनीयघटादिवस्तुविशेषग्राहिणी मतिर्मननं यत् तद्विपुलमतिः, पूर्वाणि धारयन्तीति पूर्वधराः-दशचतुर्दशपूर्वविदः, अशोकाद्यष्टमहाप्रातिहार्यादिरूपां पूजामर्हन्तीत्यर्हन्तः-तीर्थकराःचक्रवर्त्तिनः-चतुर्दशरत्नाधिपाः षट्खण्डभरतेश्वराः, बलदेवाः प्रसिद्धाः, वासुदेवाः सप्तरत्नाधिपाः अर्द्धभरतप्रभवः, एते हि सर्वे एव चारणादयो लब्धिविशेषाः, इह वासुदेवत्वं चक्रवर्त्तित्वमर्हत्त्वं च ऋद्धयः प्रतिपादितास्तत्र तदतिशयप्रतिपादनार्थमाह—

सोलस रायसहस्सा सव्वबलेणं तु संकलनिबद्धं। अंछंति वासुदेवं अगडतडंमी ठियं संतं ॥ ७१ ॥
घेत्तूण संकलं सो, वामगहत्थेण अंछमाणाणं। भुंजिज्ज विलिंपिज्ज व महुमहणं ते न चाएंति ॥ ७२ ॥

इह वीर्यान्तरायक्षयोपशमविशेषाद्बलातिशयो वासुदेवस्य प्रदर्श्यते, षोडश राजसहस्राणि सर्वबलेन हस्त्यश्वरथपदातिरूपेण समन्वितानि श्रृङ्खलानिबद्धं 'अञ्छंति' देशीवचनमेतत् आकर्षन्ति वासुदेवं अवटतटे–कूपतटे स्थितं सन्तं, ततश्च गृहीत्वा श्रृङ्खलामसौ वामहस्तेन 'अंछमाणाणं'ति आकर्षतां, भुंजीत विलिंपेद्वा अवज्ञया हृष्टः सन्, न पुनस्ते मधुमथनं शक्नुवन्त्याक्रष्टुमिति वाक्यशेषः ॥ चक्रवर्त्तिबलप्रतिपादनार्थमाह—

दो सोला बत्तीसा, सव्वबलेणं तु संकलनिबद्धं । अंछंति चक्कवट्टिं, अगडतडम्मी ठियं संतं ॥ ७३ ॥
घेत्तूण संकलं सो, वामगहत्थेण अंछमाणाणं । भुंजिज्ज विलिंपिज्ज व, चक्कहरं ते न चाएंति ॥ ७४ ॥

'द्वौ षोडशकौ' द्वात्रिंशदित्येतावत्येव वाच्ये द्वौ षोडशकावित्यभिधानं चक्रवर्त्तिनो वासुदेवात् द्विगुणर्द्धिख्यापनार्थं, राजसहस्राणीति गम्यते, द्वात्रिंशद्राजसहस्राणि सर्वबलेन समन्वितानि श्रृङ्खलानिबद्धमाकर्षन्ति चक्रवर्त्तिनं अवटतटे स्थितं सन्तं, गृहीत्वा श्रृङ्खलामसौ वामहस्तेनाकर्षतां भुञ्जीत विलिम्पेद्वा, न पुनस्ते चक्रवर्त्तिनं शक्नुवन्त्याक्रष्टुमिति वाक्यशेषः ॥ सम्प्रति तीर्थंकरबलप्रतिपादनार्थमिदमाह–

जं केसवस्स उ बलं, तं दुगुणं होइ चक्कवट्टिस्स । तत्तो बला बलवगा, अपरिमियबला जिणवरिंदा ॥ ७५ ॥

यत् केशवस्य बलं तद् द्विगुणं भवति चक्रवर्त्तिनः, ततः शेषबलाद् 'बला' बलदेवा बलवन्तः, केशवबलापेक्षया त्वर्द्धबला इति प्रसिद्धेरवगन्तव्यम्, तथानिरवशेषवीर्यान्तरायक्षयादपरिमितं बलं येषां तेऽपरिमितबलाः, के ते इत्याह–जिनवरेन्द्राः-तीर्थंकृतः, तथा (यद्वा) ततश्चक्रवर्त्तिनो बलाद्बलवन्तो जिनवरेन्द्राः, कियता बलेनेत्याह–अपरिमितबलाः, अपरिमितेन

बलेन बलवन्त इति भावः, तदेवमुक्ता लब्धयः। एताश्चान्यासामपि क्षीराश्रवमध्वाश्रवसर्पिराश्रवकोष्ठबुद्धिबीजबुद्धिपदानुसारित्वाक्षीणमहानसत्वप्रभृतिलब्धीनामुपलक्षणं, तेन ता अपि प्रतिपत्तव्याः, तत्र पुंड्रेक्षुचारिणीनां गवां लक्षस्य क्षीरमर्द्धार्द्धक्रमेण दीयते यावदेवमेकस्याः पीतगोक्षीरायाः क्षीरं, तत्किल चातुरक्यमित्यागमे गीयते, तद्यथोपभुज्यमानमतीव मनःशरीरप्रल्हादहेतुरुपजायते तथा यद्वचनमाकर्ण्यमानं मनःशरीरसुखोत्पादनाय प्रभवति ते क्षीराश्रवाः, क्षीरमिव वचनमासमन्तात् श्रवन्तीति क्षीराश्रवाः इति व्युत्पत्तेः, तथा मध्वपि किमप्यतिशायि शर्करादिमधुरद्रव्यं द्रष्टव्यम्, घृतमपि पुंड्रेक्षुचारिगोक्षीरसमुत्थं मन्दाग्निक्कथितमतिविशिष्टवर्णाद्युपेतं, मध्विव वचनमाश्रवन्तीति मध्वाश्रवाः, घृतमिव वचनमाश्रवन्तीति घृताश्रवाः, तथा कोष्ठ इव धान्यं येषां बुद्धिराचार्यमुखाद्विनिर्गतौ तदवस्थावेव सूत्रार्थौ धारयति न किमपि तयोः कालान्तरेऽपि गलति ते कोष्ठबुद्धयः, कोष्ठ इव बुद्धिर्येषां ते कोष्ठबुद्धयः इति व्युत्पत्तेः, येषां पुनर्बुद्धिरेकमपि सूत्रपदमवधार्य शेषमश्रुतमपि तदवस्थमेव श्रुतमवगाहते, ते पदानुसारिबुद्धयः, येषां पुनर्बुद्धिः एकमर्थपदं तथाविधमनुसृत्य शेषमश्रुतमपि यथावस्थितं प्रभूतमर्थपदमवगाहते ते बीजबुद्धयः, उक्तं च–"खीरमहुसप्पिसाओवमा उ वयणा तयासवा होंति। कोट्ठयधन्नसुनिग्गलसुत्तत्था कोट्ठबुद्धीया ॥ १ ॥ जो सुत्तपएण बहुं सुयमणुधावइ पयाणुसारी सो। जो अत्थपएणत्थं अणुसरइ स बीयबुद्धी उ ॥२॥" (वि.७९९-८००) अक्षीणं महानसं येषां ते अक्षीणमहानसाः, येषां भिक्षा नान्यैर्बहुभिरप्युपभुज्यमाना निष्ठां याति, किन्तु तैरेव जिमितैः, तेऽक्षीणमहानसाः, आह च चूर्णिकृत्–"अक्खीणमहाणसियस्स भिक्खा न अन्नेण निट्ठविज्जइ, तंमि जिमिए निट्ठाइ' इति, प्रभृतिग्रहणात् गणधरत्वपुलाकत्वतेजःसमुद्घाताहारक-

शरीरकरणादिलब्धयो वेदितव्याः, एतासां च लब्धीनां मध्येऽर्हत्त्वलब्धिर्वासुदेवत्वलब्धिश्चक्रवर्त्तित्वलब्धिः सम्भिन्नश्रोतोलब्धिर्जङ्घाचारणलब्धिः पूर्वधरलब्धिरित्येताः सप्त लब्धयो भव्यस्त्रीणां नोपजायन्ते, अभव्यपुरुषाणामृजुमतित्वविपुलमतित्वलब्धी अपि, अभव्यस्त्रीणां मध्वाश्रवक्षीराश्रवसर्पिराश्रवलब्धयोऽपि, उक्तं च—"जिणबलचक्कीकेसव संभिन्ने जंघचरण पुव्वे य । भवियाए इत्थियाए एयाओं न सत्त लद्धीओ ॥१॥" शेषास्तु भवन्तीति सामर्थ्यादवसीयते, "रिजुमइविपुलमईओ, सत्त य एयाओं पुव्वभणियाओ । लद्धीओं अभव्वाणं, हौंति नराणंपि न कयाइ ॥१॥ अभवियमहिलाणंपिहु एयाओ न हौंति सत्त लद्धीओ । महुखीरासवलद्धीवि नेव सेसाओं अविरुद्धा ॥२॥" अन्ये त्वेवमाहुः—आमर्षौषधिलब्धिः १ श्लेष्मौषधिलब्धिः २ जल्लौषधिलब्धि ३ विंट्प्रश्रवणौषधिलब्धिः ४ सर्वौषधिलब्धिः ५ कोष्ठबुद्धिः ६ बीजबुद्धिः ७ पदानुसारी ८ सम्भिन्नश्रोता ९ ऋजुमतिः १० विपुलमतिः ११ क्षीरमध्वाश्रवलब्धिः १२ अक्षीणमहानसलब्धिः १३ वैक्रियलब्धिः १४ जङ्घाचारणलब्धिः १५ विद्याधरलब्धिः १६ अर्हत्त्वलब्धिः १७ चक्रवर्त्तित्वलब्धिः १८ बलदेवत्वलब्धिः १९ वासुदेवत्वलब्धिः २० एता विंशतिलब्धयो भव्यपुरुषाणां भवन्ति, तथा चोक्तम्—"आमोसही य खेले जल्ले विप्पे य होइ सव्वे य । कोट्ठे य बीयबुद्धी पयाणुसारी य संभिन्ने ॥१॥ उज्जुमइ विउल खीरे महु अक्खीणे विउव्वि चरणे य । विज्जाहर अरहंता चक्कीबलवासु वीसइमा ॥२॥ भवसिद्धियाणमेया, वीसंपि हवंति इत्थ लद्धीओ ।" इति, तदेतदसम्यक्, अन्यासामपि भवसिद्धिकयोग्यानां गणधरत्वपुलाकत्वप्रभृतीनां लब्धीनां सद्भावात्, नाप्येता भवसिद्धिकयोग्या एव, वैक्रियविद्याधरत्व-

लब्धीनामामर्षौषध्यादिलब्धीनामपि चाभव्यानामपि सम्भवात् ॥ सम्प्रति मनःपर्यायज्ञानं लब्धिनिरूपणायां सामान्यतोऽपदिष्टमपि विषयस्वाम्यादिविशेषोपदर्शनाय ज्ञानपञ्चकक्रमायातमभिधित्सुराह—

मणपज्जवनाणं पुण, जणमणपरिचिंतियत्थपागडणं । माणुसखेत्तनिबद्धं, गुणपच्चइयं चरित्तवओ ॥ ७६ ॥

मनःपर्यायज्ञानं प्राग्निरूपितशब्दार्थम्, पुनःशब्दो विशेषणार्थः, स च रूपिविषयक्षायोपशमिकत्वादिसाम्येऽप्यवधिज्ञानादिदं मनःपर्यायज्ञानं स्वाम्यादिभेदाद्भिन्नमिति विशेषयति, तथाहि—अवधिज्ञानमविरतसम्यग्दृष्टेरपि भवति, द्रव्यतोऽशेषरूपिद्रव्यविषयं क्षेत्रतो लोकविषयं कतिपयलोकप्रमाणखण्डापेक्षया लोकालोकविषयं च कालतोऽतीतानागतासङ्ख्येयोत्सर्प्पिण्यवसर्प्पिणीविषयं भावतोऽशेषेष्वपि रूपिद्रव्येषु प्रतिद्रव्यमसङ्ख्येयपर्यायविषयं, मनःपर्यायज्ञानं पुनः संयतस्याप्रमत्तस्यामर्षौषध्याद्यन्यतमर्द्धिप्राप्तस्य द्रव्यतः संज्ञिमनोद्रव्यविषयं क्षेत्रतो मनुष्यक्षेत्रगोचरं कालतोऽतीतानागतपल्योपमासङ्ख्येयभागविषयं भावतो मनोगतानन्तपर्यायालम्बनं, ततोऽवधिज्ञानाद्भिन्नम्, एतदेव लेशतः सूत्रकृदाह—जनमनःपरिचिन्तितार्थप्रकटनं, जायन्ते इति जनास्तेषां मनांसि जनमनांसि तैः परिचिन्तितश्चासावर्थश्च जनमनःपरिचिन्तितार्थः स प्रकट्यते—प्रकाश्यतेऽनेनेति जनमनःपरिचिन्तितार्थप्रकटनं, तथा मानुषक्षेत्रनिबद्धं, न तद्बहिर्व्यवस्थितप्राणिमनोद्रव्यविषयमिति भावः; तथा गुणाः—क्षान्त्यादयः ते प्रत्ययाः—कारणं यस्य तद् गुणप्रत्ययम्, चारित्रमस्यास्तीति चारित्रवान् तस्य चारित्रवतोऽप्रमत्तसंयतस्य । इदं मनःपर्यायज्ञानं समासतश्चतुर्विधं प्रज्ञप्तं, तद्यथा—द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतः ऋजुमतिरनन्तानन्तप्रादेशिकान् मनोभावपरिणतपुद्गलस्कन्धान् जानाति, तानेव विपुलमतिर्विशुद्धतरान्, क्षेत्रत

ऋजुमतिरधोलौकिकग्रामेषु यः सर्वाधस्तन आकाशप्रदेशप्रतरस्तं यावत् ऊर्ध्वं यावत् ज्योतिश्चक्रस्योपरितलं तिर्यग्याव-दर्द्धतृतीयद्वीपसमुद्रेषु अर्द्धतृतीयाङ्गुलहीनेषु संज्ञिनां पञ्चेन्द्रियाणां पर्याप्तानां मनोगतान् भावान् जानाति, विपुलमति-रर्द्धतृतीयैरङ्गुलैरभ्यधिकान्, कालत ऋजुमतिरतीतमनागतं च पल्योपमस्यासङ्ख्येयभागमेव विपुलमतिरभ्यधिकतरं विशु-द्धतरं च, भावत ऋजुमतिरनन्तान् भावान् जानाति, तानेव विपुलमतिरभ्यधिकतरान्, इह साक्षात् तानेव मनःपर्या-यान् परिच्छिनत्ति, मनस्त्वपरिणतैः पुनः स्कन्धैरालोचितान् बाह्यानर्थान् मनोद्रव्याणां तथारूपपरिणामान्यथानुपप-त्तितः, युक्तं चैतत्, यतो मूर्त्तद्रव्यालम्बनमेवेदं मनःपर्यायज्ञानमिष्यते, मन्तारस्त्वमूर्त्तमपि धर्मास्तिकायादिकं मन्यन्ते, ततोऽनुमानत एव चिन्तितमर्थमवबुध्यन्ते, नान्यथेति प्रतिपत्तव्यम्, आह च भाष्यकृत्—"मुणइ मणोदब्वाइं नरलोए सो मणिज्जमाणाइं । काले भूय-भविस्से पलियाऽसंखिज्जभागम्मि ॥ १ ॥ दब्वमणोपज्जाए जाणइ पासइ य तग्गएऽणंते । तेणावभासिए उण जाणइ बज्झेऽणुमाणेणं ॥२॥" (वि.८१३-४)इदं मनःपर्यायज्ञानं मनोद्रव्याणां पर्यायानेव गृह्णन् उपजायते, पर्यायाश्च विशेषाः, विशेषग्राहकं च ज्ञानमतो मनःपर्यायज्ञानमेव भवति, नतु मनःपर्यायदर्शनमिति, ॥ सत्पदप्ररूपणताद्य-स्त्ववधिज्ञानवदगन्तव्याः, नानात्वं चानाहारकापर्याप्तकौ न प्रतिपद्यमानकौ नापि पूर्वप्रतिपन्नाविति ॥ उक्तं मनःपर्याय-ज्ञानमिदानीमवसरप्राप्तं केवलज्ञानं प्रतिपादयन्नाह—

अह सव्वदव्वपरिणाम-भावविन्नत्तिकारणमणंतं । सासयमप्पडिवायं, एगविहं केवलण्णाणं ॥ ७७ ॥

अथशब्द इहोपन्यासार्थः, पूर्वमुद्देशसूत्रे मनःपर्यायानन्तरं केवलज्ञानमुपन्यस्तं, तत्सम्प्रति तात्पर्यनिर्देशार्थमुपन्यस्यते

इति, पठितश्चान्यत्राप्युपन्यासार्थोऽथशब्दः; यत उक्तम् "अथ प्रक्रियाप्रश्नानन्तर्यमङ्गलोपन्यासप्रतिवचनसमुच्चयेष्वि"ति, सर्वाणि च तानि द्रव्याणि च–जीवादीनि तेषां परिणामाः–प्रयोगविस्रसोभयजन्या उत्पादादयः पर्यायाः सर्वद्रव्यपरिणामास्तेषां भावः–सत्तास्वरूपं स्वलक्षणं वा स्वं स्वमसाधारणरूपं तस्य विशेषेण ज्ञपनं विज्ञप्तिः विज्ञानं वा विज्ञप्तिः परिच्छेद इत्यर्थः तस्याः कारणं–हेतुः सर्वद्रव्यपरिणामविज्ञप्तिकारणं, केवलज्ञानमिति सम्बध्यते, उक्तं च–"सव्वदव्वाण पओग–वीससामीसजा जहाजोग्गं । परिणामा पज्जाया जम्मविणासादओ सव्वे (ते उ) ॥ १ ॥ तेसिं भावो सत्ता, सलक्खणं वा विसेसतो तस्स । नाणं विण्णत्तीए कारणं केवलण्णाणं ॥२॥" (वि.८२५-६) तच्च स्वज्ञेयानन्तत्वादनन्तम्, तथा शश्वद् भवं शाश्वतम्, सदोपयोगवदिति भावार्थः, तथा प्रतिपतनशीलं प्रतिपाति न प्रतिपाति अप्रतिपाति, सदावस्थायीति भावः, ननु यत् शाश्वतं तदप्रतिपात्येव ततः किमनेन विशेषणेन?, तदयुक्तम्, सम्यक्शब्दार्थापरिज्ञानात्, शाश्वतं हि नाम अनवरतं भवदुच्यते, शश्वद्भवं शाश्वतमिति व्युत्पत्तेः, तच्च कियत्कालमपि भवति, यावद्भवति तावन्निरन्तरं भवनात्, ततः सकलकालभावप्रतिपत्त्यर्थमप्रतिपातिविशेषणोपादानं, एष तात्पर्यार्थः–अनवरतं सकलकालं भवतीति, अथवा एकपदव्यभिचारेऽपि विशेषणविशेष्यभावप्रतीतिज्ञापनार्थं विशेषणद्वयोपादानम्, तथाहि–शाश्वतमप्रतिपात्येव, अप्रतिपाति तु शाश्वतमशाश्वतं च भवति, यथा अप्रतिपात्येवावधिज्ञानमिति, तथा एकविधम्–एकप्रकारं तदावरणक्षयस्यैकरूपत्वात्, उक्तं च–"पज्जायओ अणंतं, सासयमिट्ठं सतोवओगाओ । अवयओऽपडिवाई एगविहं सव्वसुद्धीए ॥२॥" (वि.८२८) केवलं च तत् ज्ञानं च केवलज्ञानम् ॥ इह तीर्थकृत्समुपजातकेवलालोकस्तीर्थकरनामकर्मोदयतः तथास्वाभाव्यादुपकार्यकृतोपकारानपेक्षं सकलसत्त्वानुग्रहाय

सवितेव प्रकाशं देशनामातनोति, तत्राभ्युत्पन्नविनेयानां केषांचिदेवमाशङ्का भवेत्–भगवतोऽपि तीर्थकृतस्तावत् द्रव्यश्रुतं ध्वनिरूपं विद्यते, द्रव्यश्रुतं च भावश्रुतपूर्वकं, ततो भगवानपि श्रुतज्ञानीति, ततस्तदाशङ्कापनोदार्थमाह—

केवलनाणेणऽत्थे नाउं जे तत्थ पन्नवणजोग्गे। ते भासइ तित्थयरो, वइजोगसुयं हवइ सेसं ॥ ७८॥

केवलज्ञानेन 'सर्वं वाक्यं सावधारण'मिति न्यायात् केवलज्ञानेनैव, न श्रुतज्ञानेन, तस्य क्षायोपशमिकभावातिक्रमात्, सर्वक्षये देशक्षयाभावात्, अर्थान्–धर्मास्तिकायादीनभिलाप्यानभिलाप्यान् ज्ञात्वा–विनिश्चित्य ये तत्र–तेषामभिलाप्यानां मध्ये प्रज्ञापनयोग्या अभिलाप्या इत्यर्थः तान् भाषते, नेतरान्, तानपि प्रज्ञापनयोग्यान् भाषते, न सर्वान्, तेषामनन्तत्वेन सर्वेषां भाषितुमशक्यत्वात्, वाचः क्रमवर्त्तित्वाच्च, आयुषश्च परिमितत्वात्, किन्तु कतिपयानेवानन्तभागमात्रान्, आह च भाष्यकृत्–"पण्णवणिज्जा भावा अणंतभागो उ अणभिलप्पाणं। पण्णवणिज्जाणं पुण अणंतभागो सुयनिबद्धो ॥१॥"(वि.१४१) तत्रापि तान् कतिपयान् भाषते ग्राहकापेक्षया योग्यान्, तत्रापि यावन्मात्रे भणिते शेषं स्वयमप्यभ्यूहितुमीष्टे तावन्मात्रं, न त्वभ्यूह्यमपि, उक्तं च–"तत्थवि जोग्गे भासइ नाजोग्गे गाहगाणुवित्तीए। भणिएवि जंमि सेसं सयमूहइ भणइ तम्मत्तं ॥१॥"(वि.८३१) तत्र केवलज्ञानोपलब्धार्थाभिधायकः शब्दराशिः प्रोच्यमानस्तस्य भगवतो वाग्योग एव भवति, न श्रुतं, तस्य भाषापर्याप्त्यादिनामकर्मोदयनिबन्धनत्वात्, श्रुतस्य च क्षायोपशमिकत्वात्, स च वाग्योगो भवति श्रुतं शेषम्–अप्रधानं, द्रव्यश्रुतमित्यर्थः, श्रोतॄणां भावश्रुतकारणतया द्रव्यश्रुतं व्यवह्रियते इति तात्पर्यार्थः, अन्ये त्वेवं पठन्ति–'वइयोग सुयं हवइ तेसिं' तत्रायमर्थः–तेषां श्रोतॄणां श्रुतकारणत्वात् स वाग्योगः श्रुतं भवति, श्रुतमिति व्यवह्रियते इत्यर्थः, अथवा

वाग्योगश्रुतं द्रव्यश्रुतमिति ॥ तत्केवलज्ञानं स्वामिनमधिकृत्य द्विविधं प्रज्ञप्तम्, तद्यथा—भवस्थकेवलज्ञानं सिद्धकेवलज्ञानं, च, तत्र यद् मनुष्यभवे अवस्थितस्य चतुर्ष्वघातिकर्मस्वक्षीणेषु केवलज्ञानं तद् भवस्थकेवलज्ञानं, यत् पुनरशेषेषु कर्मांशेष्वपगतेषु सिद्धत्वावस्थायां तत् सिद्धकेवलज्ञानं, तत्र यद् भवस्थकेवलज्ञानं तद् द्विविधम्, तद्यथा—सयोगिभवस्थकेवलज्ञानमयोगिभवस्थकेवलज्ञानं च, तत्र केवलज्ञानोत्पत्तेरारभ्य यावदद्यापि शैलेश्यवस्थां न प्रतिपद्यते तावत् सयोगिभवस्थकेवलज्ञानं, शैलेश्यवस्थायामयोगिभवस्थकेवलज्ञानं, तत्र यत्सयोगिभवस्थकेवलज्ञानं तद् द्विविधं प्रज्ञप्तम्, तद्यथा—प्रथमसमयसयोगिभवस्थकेवलज्ञानमप्रथमसमयसयोगिभवस्थकेवलज्ञानं च, तत्र यस्मिन् समये केवलज्ञानमुत्पन्नं तस्मिन् समये तत्प्रथमसमयसयोगिभवस्थकेवलज्ञानं, शेषेषु तु समयेषु शैलेशीप्रतिपत्तेरर्वाक् वर्त्तमानमप्रथमसमयसयोगिभवस्थकेवलज्ञानम्, अथवाऽन्यथा द्विविधं प्रज्ञप्तम्, तद्यथा—चरमसमयसयोगिभवस्थकेवलज्ञानमचरमसमयसयोगिभवस्थकेवलज्ञानम्, तत्र यत्सयोगित्वावस्थायाश्चरमसमये वर्त्तमानं तत् चरमसमयसयोगिभवस्थकेवलज्ञानं, ततः प्राक् शेषेषु समयेषु वर्त्तमानमचरमसमयसयोगिभवस्थकेवलज्ञानं, तथा अयोगिभवस्थकेवलज्ञानमपि द्विविधं प्रज्ञप्तम्, तद्यथा—प्रथमसमयायोगिभवस्थकेवलज्ञानमप्रथमसमयायोगिभवस्थकेवलज्ञानं च, अथवा चरमसमयायोगिभवस्थकेवलज्ञानमचरमसमयायोगिभवस्थकेवलज्ञानं च, प्रथमाप्रथमचरमाचरमसमयभावना प्रागुक्तानुसारेण स्वयं भावनीया। सिद्धकेवलज्ञानं द्विविधं प्रज्ञप्तम्, तद्यथा—अनन्तरसिद्धकेवलज्ञानं परम्परसिद्धकेवलज्ञानं च, तत्र यस्मिन् समये सिद्धो जायते तस्मिन् समये वर्त्तमानमनन्तरसिद्धकेवलज्ञानं, सिद्धत्वद्वितीयादिसमयेषु वर्त्तमानं परम्परसिद्धकेवलज्ञानं, तत्रानन्तरसिद्धकेवलज्ञानमुपाधिभेदात् पञ्चदशविधं प्रज्ञप्तम्, तद्यथा—तीर्थ-

सिद्धकेवलज्ञान १ मतीथसिद्धकेवलज्ञानं २ तीर्थंकरसिद्धकेवलज्ञान ३ मतीर्थंकरसिद्धकेवलज्ञानं ४ स्वयंबुद्धसिद्धकेवलज्ञानं ५ प्रत्येकबुद्धसिद्धकेवलज्ञानं ६ बुद्धवोधितसिद्धकेवलज्ञानं ७ स्त्रीलिङ्गसिद्धकेवलज्ञानं ८ पुरुपलिङ्गसिद्धकेवलज्ञानं ९ नपुंसकलिङ्गसिद्धकेवलज्ञानं १० स्वलिङ्गसिद्धकेवलज्ञान ११ मन्यलिङ्गसिद्धकेवलज्ञानं १२ गृहिलिङ्गसिद्धकेवलज्ञानं १३ एकसिद्धकेवलज्ञानं १४ अनेकसिद्धकेवलज्ञानं १५ च। तत्र ये तीर्थंकराणां तीर्थे वर्त्तमाने सिद्धास्तेषां यत्केवलज्ञानं तत्तीर्थसिद्धकेवलज्ञानम्, यत्पुनस्तीर्थंकराणां तीर्थेऽनुत्पन्ने व्यवच्छिन्ने वा सिद्धास्तेषां यत्केवलज्ञानं तदतीर्थसिद्धकेवलज्ञानं, तीर्थंकराः सन्तो ये सिद्धास्तेषां केवलज्ञानं तीर्थंकरसिद्धकेवलज्ञानं, शेषाणामतीर्थंकरसिद्धकेवलज्ञानं, तथा स्वयंबुद्धाः सन्तो ये सिद्धास्तेषां केवलज्ञानं स्वयंबुद्धसिद्धकेवलज्ञानं, प्रत्येकबुद्धाः सन्तो ये सिद्धास्तेषां केवलज्ञानं प्रत्येकबुद्धसिद्धकेवलज्ञानम्, अथ स्वयंबुद्धप्रत्येकबुद्धानां कः प्रतिविशेषः?, उच्यते, वोध्युपधिश्रुतलिङ्गकृतः, तथाहि—स्वयंबुद्धा वाह्यप्रत्ययमन्तरेणैव बुध्यन्ते, स्वयमेव—वाह्यप्रत्ययमन्तरेणैव निजजातिस्मरणादिना बुद्धाः स्वयंबुद्धा इति व्युत्पत्तेः, आह च चूर्णिकृत्—"सयमप्पणिज्जं जाइस्सरणादिकारणं पडुच्च बुद्धा सयंबुद्धा" इति, ते च द्विधा—तीर्थंकरास्तीर्थंकरव्यतिरिक्ताश्च, इह तीर्थंकरव्यतिरिक्तैरधिकारः, आह च चूर्णिकृत्—"ते सयंबुद्धा दुविहा—तित्थयरा तित्थयरवइरित्ता य, इह वइरित्तेहिं अहिगारो' इति, प्रत्येकबुद्धास्तु वाह्यं प्रत्ययमपेक्ष्य, प्रत्येकं वाह्यं—वृपभादिकं कारणमभिसमीक्ष्य बुद्धाः प्रत्येकबुद्धाः इति व्युत्पत्तेः, तथा च श्रूयते वाह्यप्रत्ययसापेक्षा करकण्ड्वादीनां वोधिः, वहिःप्रत्ययमपेक्ष्य ते च बुद्धाः सन्तो नियमतः प्रत्येकमेव विहरन्ति, न गच्छवासिन इव संहताः, उक्तं च चूर्णौ—"पत्तेयं वाह्यं वृपभादिकं कारणमभिसमीक्ष्य बुद्धाः प्रत्येकबुद्धाः,

परम्पर-
सिद्धः
केवलभेदः

एएसिं नियमा पत्तेयं विहारो जम्हा तम्हा य ते पत्तेयबुद्धा" इति, तथा स्वयंबुद्धानामुपधिर्द्वादशविध एव पात्रादिकः, प्रत्येकबुद्धानां तु द्विधा–जघन्यत उत्कर्षतश्च, तत्र जघन्यतो द्विविधः, उत्कर्षतो नवविधः प्रावरणवर्जः, उक्तं च–"पत्तेयबुद्धाणं जहण्णेणं दुविहो, उक्कोसेण नवविधो पावरणवज्जो भवति" इति, तथा स्वयंबुद्धानां पूर्वाधीतं श्रुतं भवति वा नवा, यदि भवति ततो लिङ्गं देवता वा प्रयच्छति गुरुसन्निधौ वा गत्वा प्रतिपद्यते, यदि च एकाकिविहरणसमर्थ इच्छा च तस्य तथारूपा जायते तत एकाकी विहरत्यन्यथा गच्छवासेऽवतिष्ठते, अथ पूर्वाधीतं श्रुतं तस्य न भवति तर्हि नियमात् गुरुसन्निधौ गत्वा लिङ्गं प्रतिपद्यते, गच्छं चावश्यं न मुञ्चति, तथा चोक्तं चूर्णौ–"पुव्वाहीअं सुयं से हवइ वा नवा, जइ से नत्थि तो लिङ्गं नियमा गुरुसंन्निहे पडिवज्जइ, गच्छे य विहरइ इति, अह पुव्वाहीयसुयसंभवो अत्थि तो से लिङ्गं देवया पयच्छइ, गुरुसन्निहे वा पडिवज्जइ, जइ य एगविहारविहरणसमत्थो इच्छा च से तो एक्को चेव विहरइ, अन्नहा गच्छे विहरइ" इति, प्रत्येकबुद्धानां तु पूर्वाधीतं श्रुतं नियमतो भवति, तच्च जघन्यत एकादशाङ्गानि उत्कर्षतः किञ्चिन्न्यूनानि दश पूर्वाणि, तथा लिङ्गं तस्मै देवता प्रयच्छति, लिङ्गरहितो वा कदाचिद् भवति, तथा चोक्तम्–"पत्तेयबुद्धाण पुव्वाहीअसुयं नियमा हवइ, जहण्णेणं एक्कारस अंगा उक्कोसेणं भिन्नदसपुवी, लिङ्गं च से देवया पयच्छइ, लिंगवज्जिओ वा भवइ, जतो भणियं–"रूप्पं पत्तेयबुहा" इति, तथा बुद्धैः–आचार्यादिभिर्बोधितस्य यत्केवलज्ञानं तत् बुद्धबोधितकेवलज्ञानं, स्त्रिया लिङ्गं स्त्रीलिङ्गं, स्त्रीत्वस्योपलक्षणमित्यर्थः, तच्च त्रिधा, तद्यथा–वेदः शरीरनिर्वृत्तिः नेपथ्यं च, तत्रेह शरीरनिर्वृत्त्या प्रयोजनं, न वेदनेपथ्याभ्यां, वेदे सति सिद्धत्वाभावात्, नेपथ्यस्य चाप्रमाणत्वात्, आह च नन्द्यध्ययनचूर्णि-

कृत्—'इत्थीए लिंगं इत्थिलिंगं, इत्थीए उवलक्खणंतिवुत्तं भवति, तं च तिविहं—वेदो सरीरनिव्वित्ती नेवत्थं च, इह सरीरनिव्वित्तीए अहिगारो, न वेयनेवत्थेहिंति" तस्मिन् स्त्रीलिङ्गे वर्त्तमाना ये सिद्धास्तेषां केवलज्ञानं स्त्रीलिङ्गसिद्धकेवलज्ञानं, एवं पुरुषलिङ्गे सिद्धानां केवलज्ञानं पुरुषलिङ्गसिद्धकेवलज्ञानं, एवं नपुंसकलिङ्गसिद्धकेवलज्ञानमपि भाव्यम्, तथा स्वलिङ्गे-रजोहरणादौ सिद्धानां केवलज्ञानं स्वलिङ्गसिद्धकेवलज्ञानं, अन्यलिङ्गसिद्धकेवलज्ञानं नाम यदन्यस्मिन् लिङ्गे वर्त्तमानाः सम्यक्त्वं प्रतिपद्य भावनाविशेषात् केवलज्ञानमुत्पाद्य केवलोत्पत्तिसमकालमेव कालं कुर्वन्ति तदन्यलिङ्गसिद्धकेवलज्ञानं, यदि पुनस्तेऽन्यलिङ्गस्थिताः केवलमुत्पाद्यात्मनोऽपरिक्षीणमायुः पश्यन्ति ततः साधुलिङ्गमेव परिगृह्णन्ति, गृहलिङ्गे स्थिताः सन्तो ये सिद्धास्तेषां केवलज्ञानं गृहिलिङ्गसिद्धकेवलज्ञानम्, एकसिद्धकेवलज्ञानं नाम यस्मिन् समये स विवक्षितः सिद्धस्तस्मिन् समये यद्यन्यः कोऽपि न सिद्धस्ततस्तस्य केवलज्ञानमेकसिद्धकेवलज्ञानं, एकस्मिन् समयेऽनेकेषां सिद्धानां केवलज्ञानमनेकसिद्धकेवलज्ञानं, एकस्मिंश्च समयेऽनेके सिद्ध्यन्त उत्कर्षतोऽष्टोत्तरशतसङ्ख्या वेदितव्याः, यत उक्तम्—"बत्तीसा अडयाला, सट्ठी बावत्तरी य बोद्धव्वा। चुलसीओ छन्नउई, दुरहियमट्ठुत्तरसयं च ॥ १ ॥" अस्या विनेयजनानुग्रहाय व्याख्या—अष्टौ समयान् यावत् निरन्तरमेकादयो द्वात्रिंशत्पर्यन्ताः सिद्ध्यन्तः प्राप्यन्ते, किमुक्तं भवति,?—प्रथमे समये जघन्यत एको द्वौ वा उत्कर्षतो द्वात्रिंशत्सिद्ध्यन्तः प्राप्यन्ते, द्वितीयेऽपि समये जघन्यत एको द्वौ वा उत्कर्षतो द्वात्रिंशत्, एवं यावदष्टमेऽपि समये जघन्यत एको द्वौ वा उत्कर्षतो द्वात्रिंशत्, ततः परमवश्यमन्तरम्, तथा त्रयस्त्रिंशदादयोऽष्टचत्वारिंशत्पर्यन्ता निरन्तरं सिध्यन्तः सप्त समयान् यावत्प्राप्यन्ते, परतो नियमादन्तरं, तथा एकोनपञ्चाशदादयः षष्टिपर्यन्ता

निरन्तरं सिद्ध्यन्तः उत्कर्षतः षट् समयान् यावत्प्राप्यन्ते, तथैकषष्ट्यादयो द्विसप्ततिपर्यन्ता निरन्तरं सिध्यन्तः उत्कर्षतः पञ्च समयान् यावदवाप्यन्ते, ततः परमन्तरं, त्रिसप्तत्यादयश्चतुरशीतिपर्यन्ता निरन्तरं सिध्यन्त उत्कर्षतश्चतुरः समयान् यावत्, तत ऊर्ध्वमन्तरं, तथा पञ्चाशीत्यादयः षण्णवतिपर्यन्ता निरन्तरं सिध्यन्त उत्कर्षतस्त्रीन् समयान्, परतो नियमादन्तरं, तथा सप्तनवत्यादयो द्व्युत्तरशतपर्यन्ता निरन्तरं सिध्यन्त उत्कर्षतो द्वौ समयौ यावत्, परतोऽवश्यमन्तरं, तथा त्र्युत्तरशतादयोऽष्टोत्तरशतपर्यन्ताः सिद्ध्यन्तो नियमादेकमेव समयं यावदवाप्यन्ते, न द्वित्र्यादिसमयानिति। परम्परसिद्धकेवलज्ञानमनेकविधं प्रज्ञप्तम्, तद्यथा—अप्रथमसमयसिद्धकेवलज्ञानं, सिद्धत्वद्वितीयसमयकेवलज्ञानमिति भावः, द्विसमयसिद्धकेवलज्ञानं, सिद्धत्वतृतीयसमयकेवलज्ञानमित्यर्थः, एवं त्रिसमयसिद्धकेवलज्ञानं चतुःसमयसिद्धकेवलज्ञानं यावत् सङ्ख्येयसमयसिद्धकेवलज्ञानमसङ्ख्येयसमयसिद्धकेवलज्ञानमनन्तसमयसिद्धकेवलज्ञानम्। तदेवमुक्तं केवलज्ञानस्वरूपमथास्य गत्यादिद्वारविषया सत्पदप्ररूपणता द्रव्यप्रमाणादीनि च विभाव्यन्ते, तत्र सत्पदप्ररूपणायां गतिमङ्गीकृत्य सिद्धिगतौ मनुष्यगतौ च केवलज्ञानम्, इन्द्रियद्वारे नोइन्द्रियाऽतीन्द्रियेषु, कायद्वारे त्रसकायाकाययोः, योगद्वारे सयोगायोगयोः, वेदद्वारेऽवेदकेषु, कषायद्वारेऽकषायेषु, लेश्याद्वारे शुक्ललेश्यालेश्ययोः, सम्यक्त्वद्वारे सम्यग्दृष्टिषु, ज्ञानद्वारे केवलज्ञानिषु, दर्शनद्वारे केवलदर्शनिषु, संयतद्वारे संयतेषु नोसंयतेनोअसंयतेनोसंयतासंयतेषु, उपयोगद्वारे साकारानाकारोपयोगयोः, आहारकद्वारे आहारकानाहारकयोः, भाषकद्वारे भाषकाभाषकयोः, परीत्तद्वारे परीत्तेषु नोपरीत्तापरीत्तेषु च, पर्याप्तद्वारे पर्याप्तेषु नोपर्याप्तापर्याप्तेषु च, सूक्ष्मद्वारे बादरेषु नोसूक्ष्मबादरेषु च, संज्ञिद्वारे संज्ञिषु नोसंज्ञासंज्ञिषु, भव्यद्वारे भव्येषु नोभव्या-

भव्येषु च, चरमद्वारे चरमेषु, भवस्थकेवलिनां चरमत्वाद्, अचरमेषु च, सिद्धानां भवान्तरप्राप्त्यभावतोऽचरमत्वात्, पूर्वप्रतिपन्नप्रतिपद्यमानकयोजना तु स्वधिया कर्त्तव्या, द्रव्यप्रमाणद्वारे प्रतिपद्यमानकानाश्रित्योत्कर्षतोऽष्टोत्तरशतं केवलिनां प्राप्यते, पूर्वप्रतिपन्नाश्च जघन्यत उत्कर्षतश्च कोटीपृथक्त्वप्रमाणा भवस्थकेवलिनः प्राप्यन्ते, सिद्धाः अनन्ताः, क्षेत्रस्पर्शनाद्वारयोस्तु जघन्यतो लोकस्याप्यसङ्ख्येयभागे केवली लभ्यते, उत्कर्षतस्तु सर्वलोके, कालद्वारे साद्यपर्यवसितं कालं सर्वोऽपि केवली भवति, अन्तरं तु केवलज्ञानस्य न विद्यते, प्रतिपाताभावात्, भागद्वारं मतिज्ञानवत्, भावद्वारे क्षायिके भावे, अल्पबहुत्वद्वारं मतिज्ञानिवत् ॥ तच्च केवलज्ञानं समासतश्चतुर्विधं प्रज्ञप्तम्, तद्यथा–द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतः केवलज्ञानी सर्वद्रव्याणि जानाति पश्यति, क्षेत्रतः सर्वं क्षेत्रम्, कालतः सर्वकालम्, भावतः सर्वान् भावान्, उक्तं च केवलज्ञानं, तदभिधानाच्च नन्दी, तदभिधानान्मङ्गलमिति ॥ तदेवं मङ्गलस्वरूपाभिधानद्वारेण ज्ञानपञ्चकमुक्तम्, इह तु प्रकृतेन श्रुतज्ञानेनाधिकारः, तथा चाह निर्युक्तिकृत्—

इत्थं पुण अहिगारो सुयनाणेणं जतो सुएणं तु । सेसाणमप्पणोऽवि य अणुयोग पदीवदिट्ठंतो ॥७९॥

अत्र–पुनः प्रकृतेऽधिकारः श्रुतज्ञानेनैव (श्रुतेन) शेषाणां मत्यादिज्ञानानामात्मनोऽपि चानुयोगो व्याख्यानं क्रियत इति वाक्यशेषः, स्वपरप्रकाशकत्वात्, तथा चात्र प्रदीपदृष्टान्तः, यथा हि प्रदीपः स्वपरप्रकाशकत्वात् स एव गृहेऽधिक्रियते एवमिहापि श्रुतज्ञानमिति भावः ॥ पीठिका समाप्ता ॥

सम्प्रति मङ्गलसाध्यः प्रकृतोऽनुयोग उपदर्श्यते–स च स्वपरप्रकाशकत्वात् गुर्वायत्तत्वाच्च श्रुतज्ञानस्य, उक्तं च–सो मइनाणाईणं कयरस्स? सुयस्स, जं न सेसाइं। होंति पराहीणाइं, न य परबोहे समत्थाइं ॥ १ ॥ पाएण पराहीणं, दीवोव परप्पबोहगं जं च। सुयनाणं तेण परप्पबोहणत्थं तदणुयोगो ॥ २ ॥"(वि.८३८-९) आह–नन्वावश्यकस्यानुयोगः प्रकृत एव,पुनः श्रुतज्ञानस्येत्ययुक्तं,नैष दोषः,आवश्यकमिदं श्रुतान्तर्गतमित्येतदर्थप्रदर्शकत्वादेतद्वाक्यस्य,ननु यदि आवश्यकस्यानुयोगस्तर्हि तदावश्यकं किमङ्गं अङ्गानि श्रुतस्कन्धः श्रुतस्कन्धाः अध्ययनमध्ययनानि उद्देशक उद्देशकाः?, उच्यते, आवश्यकं श्रुतस्कन्धः अध्ययनानि च, न शेषा विकल्पाः, उक्तं च–"आवस्सयं नो अंगं नो अंगाइं सुयक्खंधो नो सुअक्खंधा नो अज्झयणं अज्झयणा नो उद्देसो नो उद्देसगा इति",(अनु.६) ननु नन्दीव्याख्याने अङ्गानङ्गप्रविष्टश्रुतनिरूपणायामनङ्गसंज्ञा प्रतिपादितैव, ततः कथं किमङ्गमङ्गानीत्याशङ्कासम्भवः, सत्यमेतत्, केवलं तद्व्याख्यानानियमप्रदर्शनार्थमेतद्वाक्यमित्यदोषः, न खल्ववश्यं शास्त्रादौ नन्द्यध्ययनार्थकथनं कर्त्तव्यमिति नियमः, अकृते चाशङ्कासम्भव इति, ननु शास्त्रस्यादाववश्यं मङ्गलार्थं नन्द्यभिधानं तावत् कर्त्तव्यम्, ततः कथमनियमः?, नैष दोषः, ज्ञानपञ्चकाभिधानमात्रस्यैव मङ्गलत्वात्, तथाहि–ज्ञानपञ्चकाभिधानमात्रमेवावश्यं शास्त्रस्यादौ मङ्गलार्थं कर्त्तव्यम्, नत्ववयवार्थाभिधानं, अवयवार्थानभिधाने चाशङ्कासम्भवः, किञ्च–आवश्यकव्याख्यानारम्भे शास्त्रान्तरव्याख्यानारम्भोऽसमीचीनोऽप्रस्तुतत्वात्, शास्त्रान्तरं च नन्दी, पृथक्श्रुतस्कन्धत्वात्, यद्येवमिहावश्यकश्रुतस्कन्धानुयोगप्रारम्भे किमिति नन्द्यनुयोगः कृतः?, उच्यते–शिष्यानुग्रहार्थं, न पुनरेष नियम इति ख्यापनार्थम्, अथवा अपवादपदप्रदर्शनार्थम्,तथाहि–कदाचिदुत्कलितप्रज्ञविनीतपुरुषापेक्षया तदनुग्रहार्थं उत्क-

मेणापि अन्यारम्भे चान्यद्व्याख्यायते, इति कृतं प्रसङ्गेन, तत्र यस्मादिदं शास्त्राभिधानमावश्यकश्रुतस्कन्ध इति तद्भेदाश्चाध्ययनानि तत आवश्यकं निक्षेप्तव्यम् श्रुतस्कन्धश्च, अपरस्त्वाह—किमिदं शास्त्राभिधानं प्रदीपाभिधानवत् यथार्थं आहोश्वित् पलाशाभिधानवत् अयथार्थं उत डित्थाद्यभिधानवत् अनर्थकं ?, तत्र यदि यथार्थं ततस्तदुपादेयम्, तत्रैव समुदायार्थपरिसमाप्तिभावात्, उच्यते—यथार्थम्, तथाहि—पूर्वसूरिप्रदर्शितेयमस्य व्युत्पत्तिः—अवश्यं कर्त्तव्यमावश्यकम्, श्रमणादिभिरवश्यं उभयकालं क्रियते इति भावः, क्वचिदिति कर्म्मणि बाहुलकात् डप्रत्ययः, पृषोदरादय इति निपातनात् शेषरूपसिद्धिः, अथवा ज्ञानादिगुणानामा—समन्तात् वश्या इन्द्रियकषायादिभावशत्रवो यस्मात् तदावश्यकं 'शेषाद्वे'ति कच्प्रत्ययः, यदिवा ज्ञानादिगुणकदम्बकं मोक्षो वा आ—समन्तात् वश्यं क्रियतेऽनेनेत्यावश्यकं, अथवा 'आवस्सयं'ति प्राकृतशैल्या आवासकं, गुणशून्यमात्मानं गुणैरावासयतीत्यावासकं, गुणसान्निध्यमात्मनः करोतीति भावः, तच्चावश्यकं चतुर्विधम्, तद्यथा—नामावश्यकं स्थापनावश्यकं द्रव्यावश्यकं भावावश्यकञ्च, तत्र जीवस्याजीवस्य जीवानां वा अजीवानां वा तदुभयस्य वा तदुभयेषां वा आवश्यकमिति नाम क्रियते तन्नामनामवतोरभेदोपचारात् नामावश्यकं, स्थापनावश्यकं नाम काष्ठकर्मादिष्वक्षवराटकादिषु वा सद्भावस्थापनया वा असद्भावस्थापनया वा यदावश्यकमिति स्थाप्यते तत् स्थापनावश्यकं, द्रव्यावश्यकं द्विधा, तद्यथा—आगमतो नोआगमतश्च, तत्र आगमतो यस्यावश्यकमिति पदं शिक्षितं स्थितं जितं मितं परिजितं नामसमं घोषसमं अहीनाक्षरमनत्यक्षरमव्याविद्धाक्षरमस्खलितममिलितमव्यत्याम्रेडितं प्रतिपूर्णं प्रतिपूर्णघोषं कण्ठौष्ठविप्रमुक्तं वाचनोपगतं च स्यात् स पुरुष आगमतो द्रव्यावश्यकं, तत्र शिक्षितं नाम यत् पठनक्रियया

अन्तं नीतम्, तदेवाविस्मरणतश्चेतसि स्थितत्वात् स्थितं अप्रच्युतमित्यर्थः, परावर्त्तनं कुर्वतः परेण वा क्वचित्पृष्टस्य यत् शीघ्रमागच्छति तत् जितम्, अक्षरसङ्ख्यया पदसङ्ख्यया वा परिच्छिन्नं मितं, परि समन्तात् जितं परिजितं, परावर्त्तनं कुर्वतो यत्क्रमेणोत्क्रमेण वा समागच्छतीति भावः, नामसमं यथा कस्यचित् स्वनाम शिक्षितं स्थितं जितं मितं परिजितं च भवति तथैतदपीति भावः, घोषसमं यथा गुरुणाऽभिहिता घोषास्तथा यत्र शिष्येणापि सम्यगुच्चार्यन्ते तद् घोषसममिति भावः, अहीनाक्षरमेकेनाप्यक्षरेणाहीनम्, अनत्यक्षरमेकेनाप्यक्षरेणानधिकं, तथा न व्याविद्धानि-विपर्यस्तरत्नमालागतरत्नानीव विपर्यस्तान्यक्षराणि यत्र तदव्याविद्धाक्षरम्, उपलशकलाद्याकुलभूभागे लाङ्गलमिव यन्न स्खलति तदस्खलितं, अनेकशास्त्रसम्बन्धीनि सूत्राणि एकत्र मीलयित्वा यत्पठ्यते तन्मिलितं यन्न तथा तदमिलितम्, अव्यत्याम्रेडितमस्थानविरतिरहितं, अत एव प्रतिपूर्णं हीनाधिकाक्षराभावात्, प्रतिपूर्णघोषं गुरुवत् सम्यगुदात्तादिघोषाणामुच्चारणात्, वाचनोपगतं वाचनया प्रश्नेन परिवर्त्तनया धर्म्मकथया नानुप्रेक्षया उपगतं प्राप्तं, शेषं सुगमम्, नोआगमतो द्रव्यावश्यकं त्रिविधम्, तद्यथा— ज्ञशरीरद्रव्यावश्यकं भव्यशरीरद्रव्यावश्यकं ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्यावश्यकं च, तत्र ज्ञशरीरभव्यशरीरे पूर्ववत्, तद्व्यतिरिक्तं त्रिधा, तद्यथा—लौकिकं कुप्रावचनिकं लोकोत्तरं च, तत्र ये इमे राजेश्वरतलवरमाडंविकप्रभृतयः प्रातरुत्थाय शरीरचिन्तामुखदन्तप्रक्षालनराजकार्यादि कुर्वन्ति तल्लौकिकं द्रव्यावश्यकं, ये पुनरिमे चरकप्रमुखाः परिव्राजकाः प्रातरुत्थाय स्कन्धादिदेवतागृहसम्मार्जनोपलेपनधूपनादि कुर्वन्ति तत् कुप्रावचनिकमावश्यकं, यत्पुनरेते श्रमणगुणमुक्तयोगिनः षड्जीवनिकायनिरनुकम्पा हया इव उद्दामानो गजा इव निरङ्कुशाः

आवश्यककरणायोपतिष्ठन्ते तल्लोकोत्तरं द्रव्या-
पाण्डुरपटप्रावरणा जिनानामनाज्ञया स्वच्छंदसो विहृत्योभयकालं
वश्यकं, भावशून्यत्वेनाभिप्रेतफलाभावात्, एत्थ उदाहरणं—वसंतपुरं नगरं, तत्थ गच्छो अगीअत्थसंविग्गो विहरइ, तत्थ
एगो अगीयत्थो समणगुणमुक्कजोगी, सो दिवसे २ उदउल्लससणिद्धआहाकम्माईणि पडिसेवित्ता विआले महया संवेएण
आलोएइ, तस्स पुण गणी अगीअत्थत्तणओ पायच्छित्तं दिंतो भणइ—अहो इमो धम्मसंठिओ साहू, सुहं पडिसेविउं
दुक्खं आलोएउं, एवं नाम एस आलोएइ अगूहंतो, असढत्तणतो एस सुद्धोत्ति, एयं दट्ठूण अन्ने अगीयत्था समणा
पसंसंति, चिंतंति य—नवरं आलोएयवं, नत्थेत्थ किंचि पडिसेविएणंति, तत्थन्नया कयाइ कोइ गीयत्थो संविग्गो विहर-
माणो आगतो, सो तं दिवसदेवसियविहिं दट्ठूण उदाहरणं दरिसेइ—गिरिनयरे अ कोइ रयणवाणियगो, सो रयणाण
घरं भरेऊण पलीवेइ, तं पासित्ता सवो लोगो पसंसइ, अहो इमो धन्नो भयवंतं हुयासणं तिप्पेइ, अन्नया कयाइ तेण तं
घरं पलीवियं, वातो य पबलो जाओ, दड्ढं सवं नयरं, पच्छा रण्णा पडिभणितो, सवस्सावहारो से कतो, अन्नहिं नगरे
एगो एवं करेइ, सो रायणा सुतो जहा एवं करेइ, सो सवस्सहरणं काऊण विसज्जितो, अडवीए कीस न पलीवेसि ?,
जहा तेण वाणियगेण अवसेसावि दड्ढा एवं तुमंपि एयं पसंसंतो एए साहुणो परिच्चयसि, जाहे न ठाइ ताहे साहुणो
भणिया—एस महानिद्धम्मो अगीयत्थो अलं एयस्स आणाए, जइ एयस्स निग्गहो न कीरइ ताहे अन्नेऽवि विणस्संति,
गतं द्रव्यावश्यकं, सम्प्रति भावावश्यकं वक्तव्यं, तदपि द्विधा—आगमतो नोआगमतश्च, तत्र आगमतो भावावश्यक-
मावश्यकज्ञाता उपयुक्तः, 'उपयोगो भावनिक्षेप' इति वचनात्, नोआगमतो भावावश्यकं त्रिविधं, तद्यथा—लौकिकं

कुप्रावचनिकं लोकोत्तरं च, तत्र यत्पूर्वाह्णे भारतव्याख्यानम् अपराह्णे रामायणव्याख्यानमेतल्लौकिकं, यत् पुनरेते चरक-
प्रभृतयः पाखण्डस्था निजनिजदेवतास्मरणजापप्रमुखमनुष्ठानं कुर्वन्ति तत् कुप्रावचनिकं भावावश्यकं, यत् पुनः श्रमणो
वा श्रमणी वा श्रावको वा श्राविका वा एकान्ते विशुद्धचित्त उभयकालं प्रतिक्रमणं करोति तल्लोकोत्तरं नोआगमतो
भावावश्यकं, ज्ञानक्रियारूपोभयपरिणामात्मकत्वात्, मिश्रवचनश्चात्र नोशब्दः, अनेन लोकोत्तरेणेहाधिकारः, अस्य
चामून्येकार्थिकानि—आवश्यकं अवश्यकरणीयं ध्रुवनिग्रहो विशुद्धिः अध्ययनषट्कवर्गः न्यायः आराधनामार्ग इति, उक्तं
च—"आवस्सयं अवस्सकरणिज्जं धुवनिग्गहो विसोही य। अज्झयणछक्कवग्गो नाओ आराहणामग्गो" ॥ १ ॥ (अनु-२*)
आवश्यकशब्दस्य व्युत्पत्तिप्रदर्शिका चेयं गाथा—"समणेण सावएण य अवस्स कायव्वयं हवइ जम्हा। अंतो अहोनिसस्स य
तम्हा आवस्सयं नाम॥१॥(अनु-२*)"श्रुतमपि चतुर्विधं—तद्यथा—नामश्रुतं स्थापनाश्रुतं द्रव्यश्रुतं भावश्रुतं च, तत्र नामस्था-
पने प्रतीते, द्रव्यश्रुतं द्विधा—आगमतो नोआगमतश्च, तत्र आगमतो ज्ञाता तत्र चानुपयुक्तः, नोआगमतस्त्रिविधं—
ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदात्, तत्र ज्ञशरीरभव्यशरीरे पूर्ववत्, तद्व्यतिरिक्तं पुस्तकपत्रन्यस्तम्, अथवा श्रुत-
मिति सूत्रमप्युच्यते, तच्च सूत्रं तद्व्यतिरिक्तं पञ्चधा, तद्यथा—अण्डजं पोण्डजं कीटजं वालजं वल्वजं च, तत्र अण्डजं
चटकसूत्रं, पञ्चेन्द्रियहंसगर्भसम्भवमित्यन्ये, पोण्डजं कर्पासप्रभवं, कीटजं पञ्चधा, तद्यथा—पट्टसूत्रं मलयं अंशुकं चीनांशुकं
कृमिरागं, अत्र वृद्धव्याख्या—किल यत्र विषये पट्टसूत्रमुत्पद्यते तत्रारण्ये वननिकुञ्जस्थाने मांसचीडादिरूपस्यामिषस्य
पुञ्जाः क्रियन्ते, तेषां च पुञ्जानां पार्श्वतो निम्ना उन्नताश्च सान्तरा बहवः कीलका भूमौ निखन्यन्ते, तेषु च वनान्तरेषु

सञ्चरन्तः पतङ्गकीटाः समागत्य मांसाद्यामिषोपभोगलुब्धाः कीलकान्तरेष्वितस्ततः परिभ्रमन्तो लालाः प्रमुञ्चन्ति, ताश्च कीलकेषु लग्नाः परिगृह्यन्ते, एतत्पट्टसूत्रमभिधीयते, अनेनैव क्रमेण मलयविषयोत्पन्नं तदेव मलयं, इत्थमेव चीनविषयबहिरुत्पन्नमंशुकम्, इत्थमेव चीनविषयोत्पन्नं तदेव चीनांशुकमित्यभिधीयते, क्षेत्रविशेषाद्धि कीटविशेषः, कीटविशेषाच्च पट्टसूत्रादिव्यपदेशविशेष इति, एवं क्वचिद् विषये मनुष्यादिशोणितं गृहीत्वा केनापि योगेन युक्तं भाजनसम्पुटे स्थाप्यते, तत्र च प्रभूताः कृमयः समुत्पद्यन्ते, ते च वाताभिलाषिणो भाजनच्छिद्रैर्निर्गत्य तदासन्नं पर्यटन्तो यल्लालाजालमभिमुञ्चन्ति तत्कृमिरागं पट्टसूत्रमुच्यते, तच्च रक्तवर्णकृमिसमुत्थत्वात् स्वपरिणामत एव रक्तं भवति, अन्ये त्वभिदधति—यदा तत्र शोणिते कृमयः समुत्पन्ना भवन्ति तदा सकृमिकमेव तन्मलित्वा किट्टिसं परित्यज्य रसो गृह्यते, तत्र च कश्चिद्योगः प्रक्षिप्यते, तेन यद्रज्यते पट्टसूत्रं तत्कृमिरागमिति, तच्च धौताद्यवस्थास्वपि न मनागपि रागं मुञ्चति, वालजं पञ्चविधं, तद्यथा—और्णिकमौष्ट्रिकं मृगलोमिकं कौतवं किट्टिसं च, तत्र ऊर्णामयं और्णिकम्, औष्ट्ररोमनिष्पन्नमौष्ट्रिकं, मृगाकृतयो बृहत्पुच्छा आटविका जीवविशेषा मृगास्तल्लोमनिष्पन्नं मृगलोमिकं, उदररोमनिष्पन्नं कौतवम्, ऊर्णादीनां यदुद्धरितं किट्टिसं तन्निष्पन्नं सूत्रमपि किट्टिसं, वल्वजं सणप्रभृति, भावश्रुतं द्विधा—आगमतो नोआगमतश्च, तत्र आगमतो ज्ञाता उपयुक्तः, नोआगमतो द्विविधं—लौकिकं लोकोत्तरं च, तत्र लौकिकं भारतरामायणादि, लोकोत्तरं द्वादशाङ्गं गणिपिटकम् । आवश्यकं नोआगमतो भावश्रुतं, नोशब्द एकदेशवचनः, तस्य चेमान्येकार्थिकानि—श्रुतं सूत्रं ग्रन्थः सिद्धान्तः प्रवचनमाज्ञा वचनं उपदेशः प्रज्ञापना आगमः, उक्तं च—"सुयसुत्तगंथसिद्धंतपवयणे आणवयणउवएसे । पण्णवणआगमे या एगट्ठा

पज्जवा सुत्ते॥१॥"(अनु-४*वि.८९४)स्कन्धोऽपि नामादिभेदाच्चतुर्विधः, तत्र नामस्थापने गते, द्रव्य[श्रुत]स्कन्धो द्विधा–आगमतो नोआगमतश्च, तत्र आगमतो ज्ञाताऽनुपयुक्तः, नोआगमतस्त्रिविधो–ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदात्, तत्र ज्ञशरीरभव्यशरीरे प्रतीते, तद्व्यतिरिक्तस्त्रिविधः, तद्यथा–सचित्तोऽचित्तो मिश्रश्च, तत्र सचित्तो द्विपदादिः अचित्तो द्विप्रदेशकादिर्मिश्रः सेनादेर्देशादिः, भावस्कन्धो द्विधा–आगमतो नोआगमतश्च, तत्र आगमतो ज्ञाता उपयुक्तो, नोआगमतस्त्विदमावश्यकं, नोशब्दो देशवचनः, सकलश्रुतस्कन्धापेक्षया आवश्यकश्रुतस्कन्धस्य एकदेशत्वात्, सामायिकादीनां श्रुतविशेषाणां स्कन्धः श्रुतस्कन्धः आवश्यकं च तत् श्रुतस्कन्धश्च आवश्यकश्रुतस्कन्धः। आह—कस्मादिदमावश्यकं षडध्ययनात्मकम् ?, उच्यते, षडर्थाधिकारभावात्, ते चामी सामायिकादीनां यथाक्रममर्थाधिकाराः, "सावज्जजोगविरई १ उक्कित्तण २ गुणवतो अ पडिवत्ती ३। खलियस्स निंदणा ४ वणतिगिच्छ ५ गुणधारणा ६ चेव॥१॥" (अनु-६*वि.९०२) अस्या विनेयजनानुग्रहायाक्षरगमनिका–प्रथमे सामायिकलक्षणेऽध्ययने प्राणातिपातादिसर्वसावद्ययोगविरतिरर्थाधिकारः, 'उक्कित्तण' इति द्वितीये चतुर्विंशतिस्तवाध्ययने प्रधानकर्म्मक्षयकारणत्वात् लब्धबोधविशुद्धिहेतुत्वात् पुनर्बोधिफलत्वाच्च सर्वसावद्ययोगविरत्युपदेशकत्वेनोपकारिणां तीर्थकृतां गुणोत्कीर्त्तनाधिकारः, 'गुणवतो अ पडिवत्ती'त्ति गुणाः–मूलगुणोत्तरगुणरूपा व्रतपिण्डविशुद्ध्यादयस्ते विद्यन्ते यस्यासौ गुणवान् तस्य प्रतिपत्तिः वन्दनकादिका कर्त्तव्येति तृतीये वन्दनाध्ययनेऽर्थाधिकारः, चशब्दात्पुष्टालम्बनेऽगुणवतोऽपि प्रतिपत्तिः कर्त्तव्येति द्रष्टव्यं, 'खलियस्स निंदण'त्ति स्खलितस्य–मूलोत्तरगुणेषु प्रमादाचीर्णस्य प्रत्यागतसंवेगस्य जन्तोर्विशुद्धाध्यवसायवतोऽकार्यमिति निन्दा प्रतिक्रमणेऽर्थाधिकारः, 'वणतिगिच्छा'

इति कायोत्सर्गाध्ययने व्रणचिकित्सा अर्थाधिकारः, इदमुक्तं भवति—चारित्रपुरुषस्य योऽयमतिचाररूपो भावव्रणस्तस्य दशविधप्रायश्चित्तभेषजेन कायोत्सर्गाध्ययने चिकित्सा प्रतिपादयिष्यते इति, 'गुणधारणा चेवे'ति प्रत्याख्यानाध्ययने गुणधारणा अर्थाधिकारः, इदमत्र हृदयम्—मूलगुणोत्तरगुणप्रतिपत्तिस्तस्याश्च निरतिचारसन्धारणं यथा भवति तथा प्रत्याख्यानाध्ययने प्ररूपणा करिष्यते, चशब्दादन्ये चापान्तरालार्थाधिकारा विज्ञेयाः, एवकारोऽवधारणे इति गाथार्थः॥ एतेषां चार्थाधिकाराणां प्रत्यध्ययनमर्थाधिकारद्वार एवावसरः, केवलमिह प्रसङ्गत उक्ताः। तदेवमावश्यकश्रुतस्कन्धानां न्यास उक्तः, इदानीमध्ययनन्यासप्रस्तावः, तं चानुयोगद्वारक्रमायातं प्रत्यध्ययनमोघनिष्पन्ने नामनिष्पन्ने च लाघवार्थं वक्ष्यामः, एष आवश्यकस्य समुदायार्थः, साम्प्रतमवयवार्थप्रदर्शनाय एकैकाध्ययनं वक्ष्यामः, तत्र प्रथममध्ययनं सामायिकं, प्रथमता चास्य समभावलक्षणत्वाच्चतुर्विंशतिस्तवादीनां च तद्भेदत्वात्, अस्य च सामायिकाध्ययनस्य महापुरस्येव चत्वारि अनुयोगद्वाराणि भवन्ति, अनुयोगो नाम सूत्रस्य व्याख्यानं तस्य द्वाराणीव द्वाराणि—तत्प्रवेशमुखानि अनुयोगद्वाराणि, यथा हि अकृतद्वारं नगरमनगरमेव भवति, कृतैकद्वारमपि हस्त्यश्वरथजनसङ्कुलत्वात् दुःखसञ्चारं कार्यातिपत्तये च जायते, कृतचतुर्मूलप्रतोलीद्वारं तु सप्रतिद्वारं सुखनिर्गमप्रवेशं कार्यानतिपत्तये च, सामायिकपुरमप्यर्थाधिगमोपायद्वारशून्यमशक्याधिगमं भवति, कृतैकानुयोगद्वारमपि कृच्छ्रेण द्राघीयसा च कालेनाधिगम्यते, विहितसप्रभेदोपक्रमादिद्वारचतुष्टयं तु सुखाधिगममल्पीयसा च कालेनाधिगम्यते, ततः फलवाननुयोगद्वारोपन्यासः, उक्तं च—"अणुओगदाराइं महापुरस्सेव तस्स चत्तारि। अणुओगोत्ति तदत्थो, दाराइं तस्स उ मुहाइं॥ १॥ अकयदारमनगरं,

सामाइयपुरमेवं (महपुरमवि) अकयदारं तहेगदारं वा। कएगदारंपि दुक्खसंचारं। चउमूलद्दारं पुण सप्पडिदारं सुहाहिगमं॥२॥ सामाइयपुरमेवं (महपुरमवि) अकयदारं तहेगदारं वा। दुरहिगमं चउदारं सप्पडिदारं सुहाहिगमं ॥३॥ (वि.९०७-९) तानि चानुयोगद्वाराण्यमूनि–उपक्रमो निक्षेपः अनुगमो नयः, तत्र शास्त्रमुपक्रम्यते–समीपमानीयते निक्षेपस्यानेनेति उपक्रमः, निक्षेपयोग्यतापादनमिति भावः, उपक्रमान्तर्गतभेदैर्हि विचारितं निक्षिप्यते नान्यथेति, निक्षेपणं निक्षेपो–नामादिभेदैः शास्त्रस्य न्यसनं, अनुगमनमनुगम्यते वा शास्त्रमनेनेति अनुगमः–सूत्रस्यानुकूलः परिच्छेदः, तथा नयनं नीयते वा अनेनेति नयः–वस्तुनो वाच्यस्य पर्यायाणां सम्भवतोऽधिगमः। ननूपक्रमादिद्वाराणां किमित्येवं क्रमः?, उच्यते, इह नानुपक्रान्तं सत् निक्षिप्यतेऽसमीपीभूतत्वात्, गुरुपर्वक्रमलक्षणेन हि सम्बन्धेन समीपमानीतं नामादिभेदैर्निक्षेप्तुं शक्यं, नान्यथेति, न च नामादिभेदैरनिक्षिप्तं यथावदर्थतोऽनुगम्यते, न चार्थतोऽननुगतं नयैर्विचारयितुं शक्यते, ततोऽयमेव क्रमः, उक्तं च–"दारक्कमोऽयमेव उ निक्खिप्पइ जेण नासमीवत्थं। अणुगम्मइ नानत्थं नाणुगमो नयमयविहूणो ॥१॥"(वि.९१५) तत्र उपक्रमो द्विविधः–शास्त्रीय इतरश्च, तत्रेतरः षट्प्रकारः, तद्यथा–नामोपक्रमः स्थापनोपक्रमो द्रव्योपक्रमः क्षेत्रोपक्रमः कालोपक्रमो भावोपक्रमश्च, तत्र नामस्थापने सुगमे, द्रव्योपक्रमो द्विधा–आगमतो नोआगमतश्च, तत्र आगमतः उपक्रमपदार्थज्ञस्तत्र चानुपयुक्तः, नोआगमतस्त्रिधा–ज्ञशरीरद्रव्योपक्रमो भव्यशरीरद्रव्योपक्रमो ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्योपक्रमश्च, तत्राद्यभेदद्वयं प्रतीतं, तद्व्यतिरिक्तद्रव्योपक्रमस्त्रिविधस्तद्यथा–सचित्तद्रव्योपक्रमोऽचित्तद्रव्योपक्रमः मिश्रद्रव्योपक्रमश्च, सचित्तद्रव्योपक्रमस्तु त्रिधा–द्विपदचतुष्पदापदोपाधिभेदात्, पुनरेकैको द्विधा-परिकर्म्मणि वस्तुनाशे च, तत्र परिकर्म्म नाम द्रव्यस्य गुणविशेषपरिणामकरणं, वस्त्वभावापादनं वस्तुनाशः, तत्र

परिकर्म्मणि द्विपदोपक्रमो यथा पुरुषस्य वर्णादिकरणमथवा कर्णस्कन्धवर्द्धनादि; अन्ये तु शास्त्रगन्धर्वनृत्यादिकलासम्पादनमपि द्रव्योपक्रमं व्याचक्षते, तदसाधु, शास्त्रादिपरिज्ञानस्य विज्ञानविशेषात्मकत्वात् तदुपक्रमस्य भावोपक्रमत्वात्, यदिवा आत्मद्रव्यसंस्कारविवक्षया द्रव्योपक्रमत्वेऽप्यविरोधः, एवं शुकशारिकादीनामपि शिक्षागुणविशेषकरणं भावनीयं, तथा चतुष्पदानां हस्त्यादीनां शिक्षागुणविशेषकरणं चतुष्पदोपक्रमः, अपदानां वृक्षादीनां वृक्षायुर्वेदोपदेशाद्वार्द्धक्यादिगुणापादनमपदोपक्रमः। ननु यत्स्वयं कालान्तरभाव्युपक्रम्यते यथा तरोर्वार्द्धक्यादि तत्र परिकर्म्मणि द्रव्योपक्रमता युक्ता, वर्णकरणं कलादिसम्पादनं च कालान्तरेऽपि विवक्षितहेतुजालमन्तरेण नोपपद्यते ततः कथं तस्य परिकर्म्मणि द्रव्योपक्रमता ?, नैष दोषः, विवक्षितहेतुजालमन्तरेण नोपपद्यते इत्यस्यासिद्धत्वात्, वर्णो हि नामकर्मविपाकोदयसम्भवी कलादयोऽपि च ज्ञानावरणकर्म्मक्षयोपशमभाविनः, ततो विवक्षितहेतुजालमन्तरेणापि कालान्तरे स्वयमप्येते सम्भवन्ति, विभ्रमविलासादीनां युवावस्थायां तथा दर्शनात्, ततः स्वयं कालान्तरभाविनामेतेषां अर्वाक् विवक्षितहेतुजालेन सम्पादनं उपपद्यते परिकर्म्मण्युपक्रमणमिति, वस्तुविनाशे तु पुरुषादीनामुपक्रमणं खड्गादिभिर्विनाशः। आह—परिकर्म्मवस्तुविनाशयोरभेद एव, उभयत्रापि पूर्वरूपपरित्यागेनोत्तरावस्थापत्तेरविशिष्टत्वात्, तदसम्यक्, परिकर्मोपक्रमजनितोत्तररूपापत्तौ हि प्राणिनामविशेषेण प्रत्यभिज्ञानाद्युपजायते, वस्तुनाशोपक्रमसम्पादिते तूत्तरधर्म्मे वस्तुन्यदर्शनमिति महान् विशेषः, अथवा एकत्र नाश एव विवक्षितो नोत्तरावस्थेत्यदोषः, अचित्तद्रव्योपक्रमः परिकर्म्मणि यथा पद्मरागमणेः

 क्षारमृत्पुटपाकादिना वैमल्यापादनं, वस्तुविनाशे विनाशः, मिश्रद्रव्योपक्रमः परिकर्म्मणि कटकादिविभूषितपुरुषादिद्र-

व्यस्य शिक्षापादनं, वस्तुविनाशे खड्गादिभिर्विनाशः । कारकयोजना स्वधिया भावनीया, तद्यथा—द्रव्यस्य द्रव्याणां द्रव्येण द्रव्यैर्वा द्रव्ये द्रव्येषु वा उपक्रमो द्रव्योपक्रमः, तत्र द्रव्यस्योपक्रमो यथा एकस्य पुरुषस्य शिक्षाकरणं, द्रव्याणामुपक्रमो यथा तेषामेव बहूनां, द्रव्येणोपक्रमो यथा फलकेन समुद्रतरणं, द्रव्यैरुपक्रमो बहुभिः यथा फलकैर्नावं निष्पाद्य समुद्रोल्लङ्घनं, द्रव्ये उपक्रमो यथा कस्याप्येकस्मिन् फलके उपविष्टस्य शिक्षाकरणं, द्रव्येषूपक्रमो बहूपविष्टस्य, तथा क्षेत्रस्योपक्रमः क्षेत्रोपक्रमः, सोऽपि द्विधा—परिकर्मणि वस्तुविनाशे च, ननु क्षेत्रमाकाशं 'खेत्तं खलु आगास' मिति वचनात्, तच्चामूर्त्तं नित्यं च, ततः कथं तस्य परिकर्म्मविनाशोपपत्तिः ?, उच्यते, इह तद्व्यवस्थितद्रव्यपरिकर्मविनाशौ भवतः उपचारेण खलु क्षेत्रस्यापि परिकर्म्मविनाशौ व्यपदिश्येते, भवति च तात्स्थ्यात्तद्व्यपदेशो, यथा—मञ्चाः क्रोशन्ति, ततो न कश्चिद्दोषः, तत्र परिकर्म्मणि क्षेत्रोपक्रमो नावा समुद्रस्योल्लङ्घनं हलकुलिकादिभिर्वा इक्ष्वादिक्षेत्रस्य परिकर्म्मणा, वस्तुविनाशे क्षेत्रोपक्रमो गजबन्धनादिभिः क्षेत्रस्य विरूपीकरणं, तथा कालो नाम वर्त्तनादिरूपत्वात् द्रव्यपर्यायः, ततो द्रव्यस्य परिकर्म्मणि वस्तुविनाशे वा कालस्यापि तावुपचर्येते, इति कालोपक्रमः, उक्तं च—"जं वत्तणाइरूवो कालो दव्वाण चेव पज्जाओ । ता तक्करणविणासे कीरइ कालोवयारोत्थ (उ) ॥१॥" (वि.९२६) अथ ये वर्त्तनादिरूपमेव कालमिच्छन्ति तन्मतेन कालोपक्रम एवंरूपो भवतात्, यस्तु लोकप्रसिद्धो घटिकामुहूर्त्तप्रहरादिरूपस्तस्य कथं परिकर्म्मरूपो विनाशरूपश्च उपक्रमः ?, उच्यते, इह यत् शङ्क्वादिच्छायया नाडिकया वा यथार्थं प्रहरादिपरिज्ञानं स परिकर्म्मणि कालोपक्रमः, यत्तु ग्रहनक्षत्रादिचारविशेषैर्विरूपीभवनं स वस्तुविनाशे कालोपक्रमः, आह च—"छायाएँ नालियाए व परिकम्मं से जहत्थविण्णाणं । रिक्खा-

इंचारेहिं व तस्स विणासो विवज्जासो ॥ १ ॥" ( वि. ९२७ ) भावोपक्रमो द्विधा—आगमतो नोआगमतश्च, तत्र आगमतो ज्ञाता उपयुक्तः, नोआगमतो द्विधा—प्रशस्तोऽप्रशस्तश्च, भावोपक्रमो हि नाम परहृदयाकूतस्य यथावत्परिज्ञानं, तच्च प्रशस्ताप्रशस्तविषयतया द्विभेदमिति द्विधा भावोपक्रमः—प्रशस्तोऽप्रशस्तश्च, तत्राप्रशस्तो ब्राह्मणीगणिकामात्यादीनां, अत्रोदाहरणानि, एगा मरुगिणी, सा चिंतेइ—किह धूयाओ सुहियाओ होज्जत्ति?, ताहे जेट्ठिया धूया सिक्खविया—जह तुमं वरेण सह कीलंती अवसरं लहेऊण वरं मत्थए पण्हियाए आहणिज्जासि, तीए तहा कयं, सो तुट्ठो पायं मद्दितुमारद्धो, न हु दुक्खाविया तुमंति, ततो पभाए तीए मायाए कहियं, ताए भण्णइ—जं करेहि तं करेहि, न एस तुब्भ अवरज्झइ' इति, बीया सिक्खविया, तीएवि तहा कयं, सो झंखित्ता उवसंतो, मायाए कहियं, सा भणइ—तुमंपि वीसत्था चिट्ठह, नवरं झंखणतो एसत्ति, तइया सिक्खविया, तीएवि पाएण मत्थए आहतो, सो रुट्ठो, तेण दढं पिट्टिता, धाडिया य, तं अकुलपुत्ती जा एवं करेसि, तीए मायाए कहियं, पच्छा कहवि अणुगमिओ, अम्हं एस कुलधम्मोत्ति, धूया य भणिया—जहा देवयस्स तहा वट्टिज्जासि, न अन्नहा इति । गणियादिट्ठंतो—एगंमि नयरे चउसट्ठिकलाकुसला गणिया, तीए परभावोवक्कमणनिमित्तं रइघरंमि सव्वाओ पगिईओ नियनियवावारं करेमाणीओ आलिहावियाओ, तत्थ य जो जो एइ वद्धइमाइ सो सो णियं णियं सिप्पं पसंसेइ, नायभावो य सुअणुयत्तो हवइ, अणुयत्तिओ य उवयारं गाहितो वहुयं बहुयं दव्वजायं वियरइ, एसवि अपसत्थो भावोवक्कमो । इयाणिममच्चदिट्ठंतो—एगंमि नयरे कोइ राया अस्सवाहणियाए अमच्चेण सह निग्गतो, तत्थ य से अस्सेण वच्चंतेण कंमिवि पएसे काइया वोसिरिया, खेल्लरं बद्धं, तं पुढवीए थिरत्तणतो तहट्ठियं चेव रण्णा पडिनियत्त-

माणेण सुइरं निज्झाइयं, चिंतियं च रण्णा–इह तलागं सोहणं हवइत्ति, न उण वुत्तं, अमच्चेण य इंगियागारकुसलेण रायाणमणापुच्छिय महासरवरं खणावियं, से पालिए आरामा पचुरा कया, तेणं कालेणं तेणं समएणं रन्ना पुणरवि अस्सवाहणियाए गच्छंतेणं दिट्ठं, भणियं चऽणेण–केणेयं खणावियं ?, अमच्चेण भणियं–सामि ! तुब्भेहिं चेव, राइणा भणियं–कहं ?, अमच्चेण भणियं–अवलोयणाए कहिए परितुट्ठेण रण्णा पसाओ कतो, एसोऽवि अपसत्थो भावोवक्कमो, उक्तोऽप्रशस्तो भावोपक्रमः । इदानीं प्रशस्त उच्यते–तत्र श्रुतादिनिमित्तमाचार्यभावोपक्रमः प्रशस्तः, आह–ननु व्याख्याङ्गप्रतिपादनाधिकारे गुरुभावोपक्रमाभिधानमनर्थकं, तदसम्यक्, तस्यापि व्याख्याङ्गत्वात्, गुर्वधीना हि शास्त्रारम्भास्ततः अवश्यं कर्त्तव्यो गुरुभावोपक्रमः, उक्तं च–"गुर्वायत्ता यस्माच्छास्त्रारम्भा भवन्ति सर्वेऽपि । तस्माद् गुर्वाराधनपरेण हितकाङ्क्षिणा भाव्यम् ॥ १ ॥ (प्रश.६९) तथा भाष्यकारेणाप्यभाषि—"गुरुचित्तायत्ताइं वक्खाणंगाइं जेण सबाइं । तो जेण सुप्पसन्नं होइ तयं तं तहा कज्जं ॥१॥ जो जेण पगारेणं तूसइ करणविणयाणुवित्तीहिं । आराहणाएँ मग्गो सोच्चिय अव्वाहतो तस्स ॥ २॥ आगारिंगियकुसलं जइ सेयं वायसं वए पुज्जा । तहविय सिं नवि कूडे विरहंमि य कारणं पुच्छे ॥ ३ ॥ निवपुच्छिएणगुरुणा भणितो गंगा कतोमुही वहइ ? । संपाइयवं सीसो जह तह सवत्थ कायवं ॥ ४ ॥ (वि. ९३१–४) एताश्चतस्रोऽपि भाष्यगाथाः सुगमाः, नवरं चरमगाथाया भावार्थः कथानकादवसेयः, तच्चेदम्–कन्यकुब्जे पुरे केनचिद्राज्ञा सूरिणा सह गोष्ठीप्रबन्धे प्रोक्तं–राजपुत्रा विनीताः, सूरिणाऽभिहितं–साधवः, ततो विवादे सूरिणा प्रोक्तं–युष्मदीयः सर्वोत्कृष्टगुणो विनेयो राजपुत्रः परीक्ष्यतामस्मदीयस्त्वविनीतो भवतां यः प्रतिभासते स एव साधुरिति, ततोऽभ्युपगतं राज्ञा,

समादिष्टश्च विनीततया प्रसिद्धो राजपुत्रः-कुतोमुखी गङ्गा वहतीति शोधय, तेनोक्तम्-किमिह शोधनीयं ?, बालानामपि प्रतीतमेतत्-पूर्वाभिमुखी गङ्गा प्रवहतीति, राज्ञा प्रोचे-किमिति त्वमत्रैव वितण्डावादं करोषि ?, गत्वा निरीक्षस्व तावत्, ततो मनस्यसूयां वहन् बहिः संवृतिं कृत्वा महता कष्टेन ततः प्रदेशान्निर्गतः, सिंहद्वारे च गच्छन् केनापि मित्रेण पपृच्छे-भद्र ! क्व गतव्यं ?, तेनासूयया प्रोक्तम्-अरण्ये रोझानां लवणदानार्थं, ततो मित्रेणोक्तम्-कोऽयं व्यतिकरो ?, राजपुत्रेण सर्वमपि राजादिष्टं निवेदितं, मित्रेणोक्तं-यदि राज्ञो ग्रहः संलग्नः तत्किं तवापि संलग्नः ?, गत्वा निवेदय-निरीक्षिता मया गङ्गा, पूर्वाभिमुखी वहति, तथैवानुष्ठितं राजपुत्रेण, प्रच्छन्नहेरिकेण च निवेदितं राज्ञस्तच्चेष्टितं, ततो विलक्षेण राज्ञा प्रोक्तम्—भव्यं, साधुरपि परीक्ष्यतां, ततो यः कश्चिदविनीतो राज्ञा लक्षितस्तद्विषये राज्ञा परीक्षार्थं प्रतिपादितेन गुरुणाऽभिहितः स शिष्यो-गत्वा निरीक्षस्व केन मुखेन गङ्गा वहतीति, तत्र पूर्वाभिमुखी गङ्गा वहतीति गुरवोऽपि विदन्ति, परमत्र केनापि कारणेन भवितव्यमिति चेतसि निश्चित्य तेन प्रोक्तम्-इच्छाम्यादेशमिति, एतच्चाभिधाय निर्गतः प्राप्तो गङ्गां निरीक्षिता सा स्वयं तदनन्तरं पृष्टा परेभ्यः तदनु शुष्कतृणादिवहनेनान्वयव्यतिरेकाभ्यां निश्चिता, ततो निवेदितमागत्य गुरुभ्यः-इत्थमित्थं च मया निश्चितं-पूर्वाभिमुखी गङ्गा वहतीति, प्रच्छन्नहेरिकेणाप्यस्य सर्वं निवेदितं, ततोऽभ्युपगतं सहर्षेण राज्ञा गुरुवचनमिति। ननु यद्येवं गुरुभावोपक्रम एवाभिधातव्यो न शेषा निष्प्रयोजनत्वात्, तदयुक्तं, गुरुचित्तप्रसादनार्थं तेषामुपयोगित्वात्, तथाहि-देशकालावपेक्ष्य परिकर्मनाशौ द्रव्याणामुदकौदनादीनामाहारादिकार्येषु कुर्वन् हरति विनेयो गुरूणां चेतः, अथवोपक्रमसामान्यात् प्रकृते निरुपयोगा अप्यन्यत्रोपयो-

क्ष्यन्ते इत्युपन्यस्तास्ततो न कश्चिद्दोष इत्यलं प्रसङ्गेन, उक्त इतर उपक्रमः । सम्प्रति शास्त्रीय उच्यते, स षोढा, तद्यथा–आनुपूर्वी १ नाम २ प्रमाणं ३ वक्तव्यता ४ अर्थाधिकारः ५ समवतारः ६, तत्रानुपूर्वी दशधा, तद्यथा–नामानुपूर्वी स्थापनानुपूर्वी २ द्रव्यानुपूर्वी ३ क्षेत्रानुपूर्वी ४ कालानुपूर्वी ५ गणनानुपूर्वी ६ उत्कीर्त्तनानुपूर्वी ७ संस्थानानुपूर्वी ८ सामाचार्यानुपूर्वी ९ भावानुपूर्वी १०, उक्तं च–"नामं ठवणादविए, खेत्ते काले य गणण अणुपुव्वी । उक्कित्तण संठाणे सामायारी य भावे य ॥ १ ॥" एतासु दशस्वानुपूर्वीषु यथासम्भवमवतारणीयमिदं सामायिकाध्ययनं, तत्रोत्कीर्त्तनानुपूर्व्यां गणनानुपूर्व्यां चाञ्जसा समवतरति, उत्कीर्त्तनं नाम संशब्दनं यथा सामायिकं चतुर्विंशतिस्तव इत्यादि, गणनं–परिसङ्ख्यानं, एकं द्वे त्रीणि चत्वारि, सा च गणनानुपूर्वी त्रिप्रकारा, तद्यथा–पूर्वानुपूर्वी पश्चानुपूर्वी अनानुपूर्वी च, तत्र सामायिकं पूर्वानुपूर्व्यां प्रथमं, पश्चानुपूर्व्यां षष्ठम्, अनानुपूर्व्यां त्वनियतं–क्वचित्प्रथमं क्वचिद् द्वितीयमित्यादि, तत्रानानुपूर्वीणामयं करणोपायः,–एगादेगुत्तरगा छगच्छगया परोप्परऽब्भत्था । पुरिमंतिमदुगहीणा परिमाणमणाणुपुव्वीणं ॥१॥(वि.९४२) अस्या गाथाया अक्षरगमनिका–एकाद्या एकोत्तरकाः अङ्का व्यवस्थाप्यन्ते, एकोत्तरका इति एकैक उत्तरो–वर्द्धमानो येषु ते एकोत्तरकाः ते च षडध्ययनप्रस्तावात् षड्गच्छगताः समवसेयाः, तत्र षण्णां गच्छः–समुदायः षड्गच्छः तं गताः–तत्प्रतिबद्धाः ते च परस्पराभ्यस्ताः–परस्परगुणिताः प्रथमान्तिमभङ्गद्वयरहिताः सर्वसङ्ख्यारूपमनानुपूर्वीणां परिमाणं भवति, तथाहि–एकोत्तरकाः षडध्ययनविषयाः षडङ्काः स्थाप्यन्ते, १ । २ । ३ । ४ । ५ । ६ । ते च परस्परं गुण्यन्ते, तद्यथा–एककेन द्विको गुण्यते, जातौ द्वौ, एकेन गुणितं तदेव भवतीति वचनात्, द्वाभ्यां त्रिको गुण्यते जाताः षट्

तैश्चत्वारो गुण्यन्ते जाताः चतुर्विंशतिः तया पञ्च गुण्यन्ते जातं विंशं शतं, तेन षट् गुण्यन्ते, जातानि विंशानि सप्त भङ्गकशतानि ७२०, इह च प्रथमभङ्गः पूर्वानुपूर्वीरूपः चरमभङ्गस्तु पश्चानुपूर्वीरूपस्तदपनयनेऽष्टादशोत्तराणि सप्त शतानि सर्वसङ्ख्यया अनानुपूर्वीभङ्गकपरिमाणं, अथवेयमनानुपूर्वीभङ्गकानामानयनोपायभूता करणगाथा-"पुव्वाणुपुव्वि हेट्ठा समयाभेएण कुण जहाजेट्ठं। उवरिमतुल्लं पुरओ नसेज्ज पुव्वक्कमो सेसे॥१॥"(वि.९४३) अस्या अपीयमक्षरगमनिका-इह विवक्षितपदानां क्रमेण स्थापना पूर्वानुपूर्वी, तस्या अधस्ताद् द्वितीयादिभङ्गकान् जिज्ञासुः कुरु-स्थापय एकादिपदानीति शेषः, कथमित्याह—ज्येष्ठस्यानतिक्रमेण यथाज्येष्ठं, यो यस्यादौ स तस्य ज्येष्ठः, यथा एकको द्विकस्य ज्येष्ठः, त्रिकस्यानुज्येष्ठः, चतुष्कादीनां तु ज्येष्ठानुज्येष्ठः, एवं त्रिकस्य द्विको ज्येष्ठः, स एव द्विकश्चतुष्कस्यानुज्येष्ठः पञ्चकादीनां ज्येष्ठानुज्येष्ठः, एवं सत्युपरितनाङ्कस्याधस्तात् ज्येष्ठो निक्षिप्यते तस्मिन्नलभ्यमानेऽनुज्येष्ठस्तस्मिन्नप्यलभ्यमाने ज्येष्ठानुज्येष्ठ इति यथाज्येष्ठं निक्षेपं कुरु, किमनियमेन,? नेत्याह-'समयाभेदेन' समयः-संकेतः प्रस्तुतभङ्गरचना व्यवस्था तस्य अभेदः-अनतिक्रमः तेन समयाभेदेन निक्षेपं कुरु, समयस्य च भेदस्तदा भवति यदा तस्मिन्नेव भङ्गके निक्षिप्ताङ्कसदृशोऽपरोऽप्यङ्कः समापतति, तत एवम्भूतं समयभेदं वर्जयन्नेव ज्येष्ठाद्यङ्कनिक्षेपं कुरु, उक्तं च-"जहियम्मि उ निक्खित्ते, पुणरवि सो चेव अंकविन्नासो। सो होइ समयभेदो वज्जेयव्वो पयत्तेणं॥१॥"(अनु.चू.) निक्षिप्तस्य चाङ्कस्य पुरस्तात्-अग्रतः उपरितनाङ्कैः तुल्यं-सदृशं यथा भवति एवं न्यसेत्, उपरितनाङ्कसदृशानेवाङ्कान् पुरतः स्थापयेदित्यर्थः, 'पुव्वक्कमो सेसे' इति यथासङ्ख्यं निक्षिप्ताङ्कस्य यथासम्भवं पृष्ठतः शेषे-उद्धरितशेषाङ्कानाम् पृष्ठतस्तानेवोद्धरितशेषान् पूर्वक्रमेण स्थापयेत्, यः सङ्ख्यया लघुः स प्रथमं

स्थाप्यते यस्तु सङ्ख्यया महान् स पश्चात् एष पूर्वक्रमः, पूर्वानुपूर्वीलक्षणे प्रथमभङ्गके इत्थमेव क्रमस्य दृष्टत्वादिति करणगाथार्थः, भावार्थस्तु दिङ्मात्रप्रदर्शनाय सुखाधिगमाय ज्ञानदर्शनचारित्ररूपाणि त्रीणि पदान्याश्रित्योपदर्श्यते–तत्र एकद्वित्रिलक्षणस्य पदत्रयस्याभ्यासे सामान्येन सर्वसङ्ख्यया षड् भङ्गाः, ते चैवमधिकृतेन करणेनानीयन्ते, तत्रायं पूर्वानुपूर्वीलक्षणः प्रथमो भङ्गकः १ । २ । ३ । अस्याश्च पूर्वानुपूर्व्या अधस्ताद् भङ्गकरचनायां क्रियमाणायामेककस्य तावत् ज्येष्ठ एव नास्ति, द्विकस्य तु विद्यते एककः स तदधस्तान्निक्षिप्यते, तस्य चाग्रत 'उवरिमतुल्लं पुरतो नसेज्ज' इति वचनात् त्रिको न्यस्यते, पृष्ठत उद्धरितशेषो द्विको दीयते, ततोऽयं द्वितीयो भङ्गकः सम्पन्नः २ । १ । ३ । अत्र द्विकस्य विद्यते ज्येष्ठः परं नासौ तदधस्तान्निक्षिप्यते, अग्रतः सदृशाङ्कपातेन समयभेदप्रसङ्गात्, एककस्य तु ज्येष्ठ एव नास्ति, त्रिकस्य तु विद्यते ज्येष्ठो द्विकः स तदधस्तान्निक्षिप्यते, अत्र चाग्रभागस्य तावदसम्भव एव, पृष्ठतस्तु स्थापितशेषौ एककत्रिकौ क्रमेण स्थाप्येते, 'पुव्वक्कमो सेसे' इति वचनात्, ततोऽयं तृतीयो भङ्गकः सञ्जातः १ । ३ । २ । अत्राप्येकस्य ज्येष्ठ एव न विद्यते, त्रिकस्य तु ज्येष्ठोऽस्ति द्विको न चासौ तदधस्तान्न्यस्यते, अग्रे सदृशाङ्कपातेन समयभेदापत्तेः, ततोऽस्यैवानुज्येष्ठ एककः स्थाप्यते, अग्रतस्तु द्विको दीयते, 'उवरिमतुल्लं पुरतो नसेज्ज' इति वचनात्, पृष्ठतस्तु स्थापितशेषस्त्रिको व्यवस्थाप्यते इति चतुर्थो भङ्गः ३ । १ । २ । अथतत्रिकस्य विद्यते द्विको ज्येष्ठः एककश्चानुज्येष्ठः परं तौ न तदधस्तान्निक्षिप्येते, पुरतः सदृशाङ्कपातेन समयभेदप्रसङ्गात्, एककस्य तु ज्येष्ठ एव नास्ति, द्विकस्य तु अस्त्येकको ज्येष्ठः स तदधस्तान्न्यस्यते, तस्य पृष्ठतस्तु स्थापितशेषौ द्विकत्रिकौ क्रमशः स्थाप्येते इति पञ्चमो भङ्गः २ । ३ । १ अत्र द्विकस्या-

स्त्येकको ज्येष्ठः किन्त्वसौ न तदधस्तान्निक्षिप्यते, पुरतः सदृशाङ्कन्यासापत्त्या समयभेदप्रसक्तेः, त्रिकस्य तु द्विको ज्येष्ठः, स तदधस्तान्निक्षिप्यते, अग्रतस्त्वेकको दीयते, 'उवरिमतुल्लं पुरतो नसेज्ज' इति वचनात्, पृष्ठतस्तु स्थापितशेषस्त्रिकः स्थाप्यते, एष षष्ठो भङ्गः ३।२।१ षण्णामपि च भङ्गानामियं समुदायस्थापना ॥

| |
|---|
| १२३ |
| २१३ |
| १३२ |
| ३१२ |
| २३१ |
| ३२१ |

अत्राद्यभङ्गस्य पूर्वानुपूर्वीत्वाच्चरमस्य च पश्चानुपूर्वीत्वान्मध्यमा एव चत्वारो भङ्गाः अनानुपूर्वीत्वेन मन्तव्याः, एवं चतुःपञ्चषट्सप्ताष्टादिपदानामपि भङ्गकाः समानेतव्याः। इदानीं नाम वक्तव्यं–प्रतिवस्तु नमनान्नाम, तच्चैकादिदशान्तं यथाऽनुयोगद्वारेषु तथा वक्तव्यं, तत्र सामायिकस्य षण्नाम्न्यवतारः, तत्र च षट् भावा औदयिकादयो निरूप्यन्ते, तत्र सर्वस्यापि श्रुतस्य क्षायोपशमिकत्वात् क्षायोपशमिके भावेऽवतारः। तथा प्रमाणं द्रव्यादि, प्रमीयतेऽनेनेति प्रमाणमिति व्युत्पत्तेः, तच्च प्रमाणं प्रमेयभेदाच्चतूरूपं, तद्यथा–द्रव्यप्रमाणं क्षेत्रप्रमाणं कालप्रमाणं भावप्रमाणं च, तत्र सामायिकं भावात्मकत्वात् भावप्रमाणविषयं, तच्च भावप्रमाणं गुणनयसङ्ख्याभेदात् त्रिप्रकारं, तद्यथा–गुणप्रमाणं नयप्रमाणं सङ्ख्याप्रमाणं चेति, तत्रेदं जीवगुणरूपत्वात् गुणप्रमाणेऽन्तर्भवतीति, गुणप्रमाणमपि द्विधा–जीवगुणप्रमाणमजीवगुणप्रमाणं च, तत्र जीवादपृथगभूतत्वात् सामायिकस्य जीवगुणप्रमाणे समवतारः, जीवगुणप्रमाणमपि त्रिधा, तद्यथा–ज्ञानगुणप्रमाणं दर्शनगुणप्रमाणं चारित्रगुणप्रमाणं च, तत्र बोधात्मकत्वात् सामायिकस्य ज्ञानगुणप्रमाणे समवतारः, ज्ञानगुणप्रमाणमपि चतुर्द्धा, तद्यथा–प्रत्यक्षमनुमानमुपमानमागमश्च, तत्र सामायिकस्य प्रायः परोपदेशसव्यपेक्षत्वादागमप्रमाणे समवतारः, आगमोऽपि द्विधा लौकिकलोकोत्तरभेदात्, तत्रेदं सामायिकं सर्वज्ञप्रणीतत्वाल्लोकोत्तरे समवतरति, ननु लोको-

त्तरोऽप्यागमः सूत्रार्थोभयरूपत्वात् त्रिविध एव तत्रेदं क्वान्तर्भवति ?, उच्यते, सामायिकस्य सूत्रार्थोभयरूपत्वा-त्रिविधेऽपि लोकोत्तरागमे, उक्तं च-"जीवानन्नत्तणतो जीवगुण बोहभावतो नाणे। लोगुत्तरसुत्तत्थोभयागमे तस्स भावाओ ॥१॥"(वि.९४७) ननु लोकोत्तर आगमस्त्रिधा, तद्यथा-आत्मागमः अनन्तरागमः परम्परागमश्च, ततः क्वेदं समवत-रति ?, उच्यते, इदं सूत्रतो गौतमादीनामात्मागमः तच्छिष्याणां जम्बूस्वामिप्रभृतीनामनन्तरागमः, प्रशिष्याणां तु प्रभवप्रमुखाणां परम्परागमः, तथा अर्थतोऽर्हतामात्मागमः गणधराणामनन्तरागमः तच्छिष्याणां परम्परागमः एवं सूत्र-तोऽर्थतश्च त्रिविधे प्रमाणेऽन्तर्भवति, उक्तं च-"सुत्ताउ गणहराणं तस्सिसाणं तहा पसिस्साणं। एवं अत्ताणंतरपरम्परा-गमपमाणंमि ॥१॥" "अत्थेण उ तित्थंकरगणहरसिस्साणमेवमेवेदं ॥(वि.९४८॥)" नयप्रमाणे तु मूढनयं कालिकश्रुतमिति नयस्य नाधुनाऽवतारः, पूर्वं त्वनुयोगानामपृथग्भावे स आसीत्, यदिवा पुरुषं कञ्चनापि समासाद्य नयप्रमाणतत्त्ववित् यथाशक्ति नयेऽपि समवतारं कुर्यात्, आह च-"आसि पुरा सो नियतो अणुओगाणमपुहुत्तभावंमि। संपइ नत्थि पुहुत्ते होज्जवि पुरिसं समासज्ज ॥१॥" (वि:९५०) सम्प्रति सङ्ख्याप्रमाणं चिन्त्यते, तत्र सङ्ख्या नामस्थापनाद्रव्यक्षेत्रकालौपम्यपरिमा-णभावभेदादष्टप्रकारा यथाऽनुयोगद्वारेषु तथा वक्तव्या, तत्रोत्कालिकश्रुतपरिमाणसङ्ख्यायां समवतारः, तत्र सूत्रतः सामा-यिकं परिमितप्रमाणं अर्थतोऽनन्तपर्यायत्वादपरिमितप्रमाणं। सम्प्रति वक्तव्यता, सा त्रिविधा, तद्यथा-स्वसमयवक्तव्यता परसमयवक्तव्यता उभयसमयवक्तव्यता चेति, तत्र समयः-सिद्धान्तः वक्तव्यता-पदार्थविचारः, तत्र स्वसमयवक्तव्य-तायामस्य सामायिकाध्ययनस्य समवतारः, स्वसमयस्यैव अत्र प्रतिपाद्यमानत्वाद्, एवं सर्वाण्यप्यध्ययनानि स्वसमयवक्त-

व्यतायां समवतारणीयानि, परसमयप्रतिपादकानां उभयसमयप्रतिपादकानामपि सम्यग्दृष्टेः स्वसमयत्वात्, हेयोपादेयार्थानां सम्यक् हेयोपादेयतया परिज्ञानात्, आह च–परसमओ उभयं वा सम्मद्दिट्ठिस्स ससमओ जेणं। तो सव्वज्झयणाइं ससमयवत्तव्वनिययाइं ॥१॥(वि.९५३)" इदानीमर्थाधिकारः, स चाध्ययनसमुदायार्थः, स च स्वसमयवक्तव्यतैकदेशः, स च सावद्ययोगविरतिरूपः। इदानीं समवतारः, स च लाघवार्थं प्रतिद्वारं समवतारणाद्वारेण प्रदर्शित एव, उक्त उपक्रमः। इदानीं निक्षेपः, स च त्रिविधस्तद्यथा–ओघनिष्पन्नो नामनिष्पन्नः सूत्रालापकनिष्पन्नश्च, तत्रौघो नाम सामान्यं शास्त्राभिधानं, तच्चेह चतुर्विधम्–अध्ययन १ मक्षीण २ मायः ३ क्षपणा ४ च, उक्तं च–"ओहो जं सामन्नं, सुयाभिहाणं चउव्विहं तं च। अज्झयणं अज्झीणं आओ झवणा य पत्तेयं॥१॥"(वि.९५८) पुनरेकैकं नामादिभेदाच्चतुर्विधं, तद्यथा–नामाध्ययनं स्थापनाध्ययनं द्रव्याध्ययनं भावाध्ययनं च, तथा नामाक्षीणं स्थापनाक्षीणं द्रव्याक्षीणं भावाक्षीणं, तथा नामायः स्थापनायो द्रव्यायो भावायः, नामक्षपणा स्थापनाक्षपणा द्रव्यक्षपणा भावक्षपणा च, एतानि च यथाऽनुयोगद्वारेषु तथा प्ररूप्येदं सामायिकमध्ययनं भावाध्ययने भावाक्षीणे भावाये भावक्षपणायां चायोज्यं, तत्र यस्मादनेन शुभमध्यात्मं जन्यतेऽथवाऽध्यात्ममानीयते, अधिकं वा अयनं बोधस्य संयमस्य मोक्षस्य वा इदमित्यध्ययनमाद्यव्युत्पत्तिपक्षद्वये पृषोदरादित्वादिष्टरूपनिष्पत्तिः, तथा शिष्येभ्योऽनवरतं दीयमानमप्यव्युच्छित्तिनयापेक्षया न क्षयमुपयात्यलोकवदित्यक्षीणं, ज्ञानदर्शनचारित्राणां प्राप्तिहेतुत्वादायः, पापकर्मक्षपणहेतुत्वात् क्षपणा, उक्तं च–"जेण सुहज्झप्पजणणंअज्झप्पाणयणमहियमयणं वा। बोहस्स संजमस्स व मोक्खस्स व जं तमज्झयणं॥१॥ अज्झीणं दिज्जंतं अव्वोच्छित्तिनयतो

अलोगोव । आयो नाणाईणं झवणा पावाण खवणंति ॥ २ ॥" (वि.९६०-१) नामनिष्पन्ने निक्षेपे सामायिकमिति विशेषनाम, तच्च नामादिभेदाच्चतुर्विधमिदं च निरुक्तिद्वारे सूत्रस्पर्शिकनिर्युक्तौ च प्रपञ्चेन वक्ष्यामः, आह-यदि तदिह नाम अवसरप्राप्तं तर्हि किमिति निरुक्त्यादावस्य स्वरूपप्रतिपादनं? तत्र चेत् स्वरूपाभिधानमस्य तर्हि कस्मादत्रोपन्यासः?, उच्यते, इह निक्षेपद्वारे निक्षेपमात्रस्यैवावसरः, निरुक्तौ तु तदन्वाख्यानस्येत्यदोषः, नन्वेवमपि निरुक्तिद्वार एव 'यदि सामायिकव्याख्यानं ततः किं सूत्रे पुनरभिधीयते?, तदसम्यक्, वस्तुतत्त्वापरिज्ञानात्, सूत्रे हि सूत्रालापकव्याख्यानं, न तु नाम्नः, निरुक्तौ तु निक्षेपद्वारन्यस्तं सामायिकमित्यध्ययनाभिधानं निरूप्यते, इत्यलं प्रसङ्गेन, उक्तो नामनिष्पन्नो निक्षेपः । सम्प्रति सूत्रालापकनिष्पन्ननिक्षेपस्यावसरः, स च प्राप्तावसरोऽपि न निक्षिप्यते, कस्मादिति चेत्, उच्यते, सूत्राभावाद्, असति हि सूत्रे कस्यालापकस्य निक्षेपः?, ततोऽस्तीतः तृतीयमनुयोगद्वारमनुगमाख्यं तत्रैव निक्षेप्स्यामः, आह-यदि प्राप्तावसरोऽप्यसाविह न निक्षिप्यते ततः किमित्युपन्यस्यते?, उच्यते, निक्षेपसामान्यात्, आह च-"इह जइ पत्तोऽवि तओ न नस्सए कीस भण्णए इहइं? । दाइज्जइ सो निक्खेवमित्तसामण्णतो नवरं ॥१॥" (वि.९७०) इदानीमनुगमावसरः, स च द्विधा-निर्युक्त्यनुगमः सूत्रानुगमश्च, निर्युक्त्यनुगमस्त्रिविधः, तद्यथा-निक्षेपनिर्युक्त्यनुगमः, उपोद्घातनिर्युक्त्यनुगमः सूत्रस्पर्शकनिर्युक्त्यनुगमश्च, तत्र निक्षेपनिर्युक्त्यनुगमो नाम यदधो नामादिन्यासान्व्याख्यानमुक्तं ततः सोऽनुगत एव, इदानीमुपोद्घातनिर्युक्त्यनुगमप्रस्तावः, स च उद्देशादिद्वारलक्षणः, ततोऽस्य महार्थत्वात् मा भूद्विघ्न इति प्रारम्भेऽस्य मङ्गलमुच्यते, आह-ननु मङ्गलं प्रागेवोक्तं ततः किं पुनस्तेन?, अथ कृतमङ्गलैरपि पुनर्मङ्गलमभिधीयते

ओघनिष्पन्नादिभेदाः

तर्हि प्रतिद्वारं प्रत्यध्ययनं प्रतिसूत्रं च वक्तव्यमिति, ततः कश्चिदेवं प्रतिविधानमाह–मङ्गलं हि शास्त्रस्यादौ मध्येऽवसाने चेति प्रतिपादितं, तत्रादिमङ्गलं ज्ञानपञ्चकरूपमुक्तमिदानीं मध्यमङ्गलमुच्यते इति, तदेतदयुक्तं, शास्त्रमेव हि तावन्नारभ्यते, अनारब्धे तु शास्त्रे कुतो मध्यावकाश इति। अथ ब्रूयात् चतुरनुयोगद्वारं शास्त्रम्, अत एव चानुयोगद्वाराणां शास्त्राङ्गता, ततोऽनुयोगद्वारद्वये उपक्रमनिक्षेपरूपेऽतिक्रान्ते मध्यावकाश इति भवति मध्यमङ्गलावसरः, नन्वेवमपीदं शास्त्रमध्यं न भवति, अध्ययनमध्यत्वात्, शास्त्रमध्ये च मध्यमङ्गलावसर इति यत्किञ्चिदेतत्, तस्मादयमत्र पक्षः श्रेयान्– इह यदादौ मङ्गलं प्रतिपादितं तदावश्यकस्यादिमङ्गलं, इदं तु वक्ष्यमाणं न आवश्यकस्य, किन्तु सर्वानुयोगोपयोग्युपोद्घातनिर्युक्तिरूपः प्रक्रान्त उपोद्घातः तस्य, सर्वानुयोगोपयोगित्वेनास्य महार्थत्वात् कथञ्चित् शास्त्रान्तरत्वात्, तथा च सर्वानुयोगोपयोगितामेव दर्शयन् वक्ष्यति "आवस्सयस्स दसकालियस्स तह उत्तरज्झमायारे। सूयगडे निज्जुत्तिं वोच्छामि तहा दसाणं च ॥ १ ॥" इत्यादि, तथा "सेसेसुवि अज्झयणेसु होइ एसेव निज्जुत्ती' इत्यत्र शेषेष्वप्यध्ययनेषु– चतुर्विंशतिस्तवादिष्विति, आह—सामायिकान्वाख्यानेऽधिकृते कोऽत्र दशवैकालिकादीनां प्रस्तावो येन तदुत्क्षेपोऽत्र क्रियमाणः शोभते ?, उच्यते, उपोद्घातसामान्यात्, तथाहि–तेषामपि प्रायः खल्वयमेवोपोद्घातः, स्तोको विशेषः, स च स्वस्वनिर्युक्तौ वक्ष्यते इत्यदोषः, इत्यलं प्रपञ्चेन। तत्रोपोद्घातस्यादिमङ्गलमाह—

तित्थयरे भगवंते अणुत्तरपरक्कमे अमियनाणी। तिन्ने सुगइगइगए सिद्धिपहपदेसए वंदे ॥ ८० ॥

१७ तीर्थं कुर्वन्तीत्येवंशीलास्तीर्थकराः, 'हेतुतच्छीलानुकूलेष्वि'त्यादिना टः प्रत्ययः, अथ तीर्थमिति कः शब्दार्थः ?, उच्यते,

तीर्यतेऽनेनेति तीर्थं, 'तॄतुदिरमिहनिनीकुषपागोरविकाशिवचिरिचिसिचिभ्यः कि'दिति कित्प्रत्ययः, तच्च नामादिभेदाच्चतुर्धा, तद्यथा—नामतीर्थं स्थापनातीर्थं द्रव्यतीर्थं भावतीर्थं च, नामस्थापने सुगमे, द्रव्यतोऽपि यावत् नोआगमतो ज्ञशरीरभव्यशरीरे, तद्व्यतिरिक्तं नद्यादीनामनपायः समो विभागः, तीर्थसिद्धौ च त्रितयं सिद्धं, तद्यथा—तरीता तरणं तरणीयं च, तत्र पुरुषस्तरीता बाहूडुपादि तरणं नद्यादि तरणीयं, द्रव्यता त्वस्य तीर्णस्यापि पुनस्तरणीयभावात्, कदाचिदपायसम्भवेनानेकान्तिकत्वाच्च, अथ तीर्थं नद्यादिस्नानतीर्थं पुराणेषु प्रसिद्धं गीयते, न शेषं, तच्च भवतारणात्तीर्थमिति, तदसम्यक्, तस्यापि बाह्यमलमात्रापनयनकारितया द्रव्यतीर्थत्वानतिक्रमात्, न खलु तदान्तरं मलमपनेतुं समर्थम्, आन्तरो हि मलः सर्वथा समुच्छिन्नो भवति भाविमलोत्पत्तिनिरोधतः प्राचीनमलविध्वंसतश्च, तत्र भाविमलोत्पत्तिनिरोधस्तावत्तीर्थस्नानान्न भवति, मलो हि प्राणातिपातादिकारणपूर्वकस्ततस्तन्निवृत्त्यैव तदुत्पत्तिनिरोध उपजायते, न तीर्थस्नानमात्रात्, अत एवोक्तमत्र धर्मकीर्त्तिना—"वेदप्रामाण्यं कस्यचित्कर्तृवादः, स्नाने धर्मेच्छाजातिवादावलेपः । सन्तापारम्भः पापहानाय चेति, ध्वस्तप्रज्ञाने पञ्च लिङ्गानि जाड्ये ॥ १ ॥" अन्यच्च—तीर्थस्नानं विशेषतो भाविमलोत्पत्तिकारणं, न पुनस्तदुत्पत्तिनिरोधहेतुः, जीवोपघातहेतुत्वादुदूखलाद्यधिकरणवत्, तथाहि—तीर्थस्नानं कुर्वता विराध्यन्ते बहवोऽप्कायिका जीवा इति, प्रतीतमेतत् तत्त्ववेदिनां, तत उदूखलाद्यधिकरणमिव शूनाङ्गमिदमिति न भवतारणायोपजायते, इतश्च न भवतारणकारणं—कामाङ्गतया यतिजनायोग्यत्वात्, मण्डनवत्, आह च—"सूणंगंपि व तमुदूखलं व न य मोक्खकारणं ण्हाणं । न य जइजोग्गं तं मंडणंव कामंगभावातो ॥१॥" (वि. १०३०) नापि प्राचीनमलोच्छेदहेतुः, प्राचीनमलस्य विशिष्ट-

क्रियासव्यपेक्षाध्यवसायजन्यस्य तत्प्रत्यनीकक्रियासहगताध्यवसायत एव क्षयसम्भवात्, ततो भाविमलोत्पत्तिनिरोधाभावतः प्राचीनमलक्षयाभावतश्च भवतरणानुपपत्तेर्न भावतीर्थं नद्यादितीर्थमिति, भावतीर्थं द्विधा-आगमतो नोआगमतश्च, तत्र आगमतो ज्ञाता उपयुक्तः, नोआगमतः सङ्घः सम्यग्दर्शनादिपरिणामानन्यत्वात्, उक्तं च-"तित्थं भंते! तित्थं तित्थयरे तित्थं?, गोयमा! अरिहा ताव नियमा तित्थंकरे, तित्थं पुण चाउवण्णो समणसंघो" इति(१२-६८२) अस्मिंश्च भावतीर्थे तरीता तद्विशेष एव साधुः, सम्यग्दर्शनादित्रयं करणभावापन्नं तरणं, तरणीयः संसारसमुद्रः, आह च-"भावे तित्थं संघो सुयविहिअं तारतो तहिं साहू। नाणाइतियं तरणं तरियव्वो भवसमुद्दो अ॥१॥"(वि.१०३२) अथवा यथा नद्यादिगतः समो विभागोऽनपायः पङ्कप्रक्षालनाद्दाहोपशमात्पिपासाव्यवच्छेदात्तीर्थमिति प्रसिद्धं, पृषोदरादिदर्शनतस्त्रिषु स्थितमिति तीर्थमिति व्युत्पत्तेः, एवं सङ्घोऽपि कर्ममलक्षालनात् क्रोधाग्निदाहोपशमात् लोभरूपतृष्णाव्यवच्छेदाच्च त्रिपु स्थित इति तीर्थमित्युच्यते, उक्तं च-"पङ्कदाहपिपासानामपहारं करोति यत्। तद्धर्म्मसाधनं तथ्यं, तीर्थमित्युच्युते बुधैः॥१॥" अथवा नद्यादिगतं द्रव्यतीर्थं चतुर्द्धा दृष्टं, तद्यथा—सुखावतारं सुखोत्तारं १ सुखावतारं दुरुत्तारं २ दुःखावतारं सुखोत्तारं ३ दुःखावतारं दुरुत्तारं ४, एवं भावतीर्थमपि चतुर्द्धा द्रष्टव्यं, तत्र यत्र सुखेनैवावतरन्ति-प्रविशन्ति प्राणिनः सुखेनैव च यत उत्तरन्ति-यन्मुञ्चन्ति तत्सुखावतारं सुखोत्तारं, तच्च शैवं द्रष्टव्यं, तत्र रागद्वेषकषायेन्द्रियपरीषहोपसर्गमनोवाक्कायजयादिलक्षणदुष्करानुष्ठानाभावतः सुखेनैव प्रवेशात्; निपुणयुक्त्यभावतो निविडवासनाया आकालपरिपालनहेतुभूताया अयोगतः, "शैवो द्वादश वर्षाणि, व्रतं कृत्वा ततः परम्। यद्यशक्तस्त्यजेत् पश्चाद्, यागं कृत्वा व्रतेश्वरे॥१॥" इत्या-

दिना दीक्षात्यागस्य निर्दोषताश्रवणाच्च सुखेनैव मोक्षणसम्भवाच्च, तथा यत् सुखेन स्वीक्रियते दुःखेन परित्यज्यते तत् सुखावतारं दुरुत्तारं, तच्च बौद्धं शासनं, तत्र हि 'मृद्वी शय्या प्रातरुत्थाय पेया, भक्तं मध्ये पानकं चापराह्णे । द्राक्षाखण्डं शर्करा चार्द्धरात्रे, मोक्षश्चान्ते शाक्यसिंहेन दृष्टः ॥ १ ॥" तथा—"मणुण्णं भोयणं भुच्चा, मणुण्णं सयणासणं । मणुण्णंसि अगारंसि, मणुण्णं झायए मुणी ॥२॥" इत्याद्यभिधानतो विषयसुखसिद्धेः सुखेनैव प्रवेशः, तथा निपुणकुयुक्तितस्तीव्रवासनोत्पादात् व्रतत्यागे महतः संसारदण्डादेः प्रतिपादनाच्च दुःशकस्तत्परित्यागः, तथा यत्र दुःखेन प्रवेशः सुखेन च विनिर्गमः तद् दुःखावतारं सुखोत्तारं, तच्च दिगम्बरं दर्शनं, तद्धि नाग्न्यमतिदुष्करं लज्जास्पदत्वादिति दुःखेन प्रविश्यते, अनेषणीयपरिभोगकषायबाहुल्यदर्शनतस्तु तद्विरागोपपत्तेः सुखेन परित्यज्यते इति, चतुर्थभङ्गगतं त्विदं पारमेश्वरं प्रवचनम्, अत्र हि रागद्वेषकषायेन्द्रियपरीषहोपसर्गादिजयस्य सदा अप्रमत्तभावस्य शिरोलुञ्चनादिकष्टानुष्ठानस्य च प्रतिपादनान्महता कष्टेन प्रवेशः प्रविष्टस्य च तत्त्वाधिगमेनामोचनात्, एतद्व्रतं त्विह संसारपरित्राणकारणं व्रतभङ्गे च महान् संसार इति जानानस्य दुष्करपरित्यागः, उक्तं च—"अहव सुहोत्तारोत्तारणाइ दवे चउव्विहं तित्थं । एवं चिअ भावंमिवि तत्थाइमयं सरक्खाणं ॥१॥ तच्चण्णियाण बीयं विसयसुहकुसत्थभावणाधणियं । तइयं च बोडियाणं चरिमं जइणं सिवफलं तु ॥२॥ (वि. १०४०-१) तत्र दुःखावतारदुःखोत्ताररूपपरमतीर्थकरणशीलास्तीर्थकरास्तान् वन्दे इति योगः, तथा भगः-समग्रैश्वर्यादिलक्षणः स येषामस्तीति भगवन्तः, उक्तं च—"इस्सरिय रूवसिरिजसधम्मपयत्ता मया भगाभिक्खा । ते तेसिमसामण्णा संति जतो तेण भगवंतो ॥१॥" (वि. १०४८) तान्, ननु तीर्थकरानित्यनेनैव भगवत इति गतं, तीर्थकृतामुक्तलक्षण-

भगाव्यभिचारात् ततः किमनेन विशेषणेन ?, तदयुक्तम् अस्य नयमतान्तरावलम्बिपरिकल्पितबुद्धादितीर्थकरतिरस्कारपरत्वात्, तथाहि—न ते बुद्धादयः स्वस्वदर्शनरूपतीर्थकारिणोऽपि तत्त्ववृत्त्या भगवन्तो, यथोक्तसमग्रैश्वर्यादिगुणकलापायोगादिति, तथा परे—शत्रवः ते च द्विधा—द्रव्यतो भावतश्च, तत्र द्रव्यतो मत्सरिणो भावतः क्रोधादयः, इह भावशत्रुभिः प्रयोजनं, तेषामेवोच्छेदतो मुक्तिभावात्, आक्रमणमाक्रमः—पराजयः उच्छेद इतियावत् परेषामाक्रमः पराक्रमः सोऽनुत्तरः—अनन्यसदृशो येषां तेऽनुत्तरपराक्रमास्तान्, वन्दे इति क्रिया सर्वत्र योज्या, आह—ये खल्वैश्वर्यादिभगवन्तस्तेऽनुत्तरपराक्रमा एव, तमन्तरेण विवक्षितभगासम्भवात्, ततोऽनुत्तरपराक्रमानित्येतदतिरिच्यते, नैष दोषः, अस्य अनादिसिद्धैश्वर्यादिसमन्वितपरमपुरुषप्रतिपादनपरनयवादनिषेधपरत्वात्, तथाहि—कैश्चिदनुत्तरपराक्रमत्वमन्तरेणैव हिरण्यगर्भादीनामनादिविवक्षितभगयोगोऽभ्युपगम्यते, उक्तं च—"ज्ञानमप्रतिघं यस्य, वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च, सहसिद्धं चतुष्टयम् ॥ १ ॥" इत्यादि, तथाभूतान् भगवतस्तीर्थकरान् मा ज्ञासिषुर्विनेया इति तद्व्यवच्छेदार्थमनुत्तरपराक्रमानित्युक्तं, तथा अमितम्—अपरिमितं ज्ञेयानन्तत्वात् ज्ञानं केवलज्ञानं अमितज्ञानं तद्येषामस्ति तेऽमितज्ञानिनस्तान्, ननु ये अनुत्तरपराक्रमास्तेऽमितज्ञानिन एव, क्रोधादिपरिक्षयोत्तरकालमवश्यममितज्ञानस्य भावात्, सत्यमेतत्, केवलं ये क्लेशक्षयेऽप्यसितज्ञानं नाभ्युपगच्छन्ति, तथा च तद्ग्रन्थः, "सर्वं पश्यतु वा मा वा, तत्त्वमिष्टं तु पश्यतु । कीटसङ्ख्यापरिज्ञानं, तस्य नः क्वोपयुज्यते ? ॥ १ ॥" इत्यादि, तन्मतव्यवच्छेदफलमिदं विशेषणमित्यदोषः, तद्व्यवच्छेदश्चैवम्—सर्वभावपरिज्ञानाभावे तत्त्ववृत्त्या एकस्यापि वस्तुनः परिज्ञानायोगात्, सर्वस्यापि यथायोगमनुवृत्तव्यावृत्तधर्मतया सर्वैः सह

सव्यपेक्षत्वात्, आह च–"एको भावः सर्वथा येन दृष्टः, सर्वे भावाः सर्वथा तेन दृष्टाः। सर्वे भावाः सर्वथा येन दृष्टाः, एको भावः सर्वथा तेन दृष्टः ॥ १ ॥" आचाराङ्गेऽप्युक्तम्–"जे एगं जाणइ से सव्वं जाणइ, जे सव्वं जाणइ से एगं जाणइ" इति, (८-१२२) अथवा ये स्वसिद्धान्ते छद्मस्थवीतरागास्तेऽनुत्तरपराक्रमा भवन्ति, कषायादिशत्रूणामाक्रमणात्, न त्वमितज्ञानिनः, केवलज्ञानाभावात्, ततस्तद्व्यवच्छेदार्थमिदं विशेषणमिति, तथा तरन्ति स्म भवार्णवमिति तीर्णास्तान्, तीर्त्वा च भवौघं सुगतिगतिगतान्, तत्र सर्वज्ञत्वात् सर्वदर्शित्वाच्च निरुपमसुखभागिनः सुगतयः–सिद्धास्तेषां गतिः सुगतिगतिः, अनेन तिर्यङ्नरनारकामरगतिव्यवच्छेदेन पञ्चमीं मोक्षगतिमाह, तां गताः–प्राप्ताः सुगतिगतिगतास्तान्, अनेन ये प्राप्ताणिमाद्यष्टविधैश्वर्यं स्वेच्छाविलसनशीलं पुरुषं तीर्णं प्रतिपादयन्ति, तथा च तद्ग्रन्थः–"अणिमाद्यष्टविधं प्राप्यैश्वर्यं कृतिनः सदा। मोदन्ते सर्वभावज्ञास्तीर्णाः परमदुस्तरम् ॥१॥" इत्यादि, तद्व्यवच्छेदमाह, तथा सिद्धेः–पञ्चमगतिरूपायाः पन्थाः सिद्धिपथः तस्य प्रधाना देशकास्तद्धेतुभूतसामायिकादिप्रतिपादनात् प्रदेशकाः सिद्धिपथप्रदेशकास्तान्, अनेनानेकभव्यसत्त्वोपकारितीर्थकरनामकर्म्मविपाकोदयसमन्वितं भगवतां स्वरूपमाह। एवं तावदविशेषेण ऋषभादीनां मङ्गलार्थं वन्दनमुक्तमिदानीमखिलश्रुतज्ञानार्थप्रदेशकत्वेनासन्नोपकारित्वाद्वर्त्तमानतीर्थाधिपतेर्वर्द्धमानस्वामिनो वन्दनमाह-

वंदामि महाभागं महामुणिं महायसं महावीरं। अमरनररायमहियं तित्थयरमिमस्स तित्थस्स ॥८१॥ 

'वंदामी'त्यादि दीपकमशेषोत्तरपदानुयायि द्रष्टव्यं, तत्र भागः—अचिन्त्यशक्तिः, आह च भाष्यकृत्–"भागोऽचिंता सत्ती स महाभागो महप्पभावोत्ति। स महामुणी महंतं जो मुणइ मुणिप्पहाणो वा ॥१॥ (वि-१०५८) इति, महान्

भागोऽस्य महाभागो-महाप्रभावस्तं, तथा मनुते मन्यते वा जगतस्त्रिकालावस्थामिति मुनिः सर्वज्ञत्वात्, महांश्चासौ मुनिश्च महामुनिः, तथा त्रैलोक्यव्यापित्वान्महद्यशोऽस्येति महायशास्तं, महावीरमित्यभिधानं, तस्येयं व्युत्पत्तिः 'शूर वीर विक्रान्तौ' कषायादिशत्रुजयात् महाविक्रान्तो महावीरः, यदिवा 'ईर विदारणे' विदारयति कर्म्मरिपुसङ्घातमिति वीरः, अथवा अनन्यानुभूतमहातपःश्रिया विशेषतो राजते इति वीरः, अन्तरङ्गमहामोहबलनिर्दलनाय तपोवीर्यमनन्तं व्यापारयतीति वा वीरः, पृषोदरादित्वादिष्टरूपनिष्पत्तिः, उक्तं च-"विदारयति यत्कर्म्म, तपसा च विराजते। तपोवीर्येण युक्तश्च, तस्माद्वीर इति स्मृतः ॥ १ ॥" तथा अमराश्च नराश्च अमरनरास्तेषां राजानः-इन्द्रचक्रवर्त्तिप्रभृतयस्तैर्महितः-पूजितस्तं, तीर्थकरं-तीर्थकरणशीलं, कस्य तीर्थस्य करणशीलमित्यत आह-अस्य-वर्त्तमानकालावस्थायिनस्तीर्थस्य। एवं तावदर्थवक्तुर्मङ्गलार्थं वन्दनमुक्तम्, इदानीं सूत्रकर्तृप्रभृतीनामपि पूज्यत्वाद्वन्दनमाह-

एक्कारसवि गणहरे पवायए पवयणस्स वंदामि। सव्वं गणहरवंसं वायगवंसं पवयणं च ॥ ८२ ॥

एकादशेति सङ्ख्यावाचकः शब्दः, अपिः समुच्चये, अनुत्तरं ज्ञानदर्शनादिधर्म्मगणं धारयन्तीति गणधरास्तान्, प्रकर्षेण प्रधाना आदौ वा वाचकाः प्रवाचकास्तान्, कस्य प्रवाचकाः?, प्रवचनस्य-द्वादशाङ्गस्य, वन्दे, एवं तावत् मूलगणधरवन्दनं कृतं, तथा सर्वं-निरवशेषं गणधरा-आचार्यास्तेषां वंशः-परम्परया प्रवाहस्तं, तथा वाचका-उपाध्यायास्तेषां वंशस्तं, तथा प्रवचनम्-आगमं च वन्दे, आह च-तीर्थकृतो मूलगणधराश्च वन्द्याः स्युः, तेषां यथाक्रममर्थसूत्रप्रणेतृत्वात्, वंशद्वयस्य प्रवचनस्य च कथं वन्द्यता?, उच्यते, इह यथा अर्थवक्तारोऽर्हन्तो वन्द्याः सूत्रवक्तारश्च गणधरास्तथा यैरिदमाचार्योपाध्यायैरर्थसूत्ररूपं प्रवचनमा-

नीतं तद्वंशोऽध्यानयनद्वारेणोपकारीति वन्द्यः, प्रवचनं तु साक्षाद्वृत्त्यैवोपकारीति वन्द्यमिति । इदानीं प्रकृतमुपदर्शयति—

ते वंदिऊण सिरसा अत्थपुहुत्तस्स तेहिं कहियस्स । सुयनाणस्स भगवओ निज्जुत्तिं कित्तइस्सामि ॥ ८३ ॥

तान्—अनन्तरोक्तान् तीर्थकरादीन् शिरसा उपलक्षणत्वात् मनःकायाभ्यां च वन्दित्वा, किम् ?–निर्युक्तिं कीर्त्तयिष्यामि, कस्य ?–'अर्थपृथक्त्वस्य' अर्थात् कथञ्चिद्भिन्नत्वात् सूत्रं पृथक् उच्यते, प्राकृतत्वाच्च पृथगेव पृथक्त्वम्, अर्थस्तु सूत्राभिधेयः प्रतीत एव, अर्थश्च पृथक्त्वं च अर्थपृथक्त्वं समाहारो द्वन्द्वः तस्य, श्रुतज्ञानविशेषणमेतत्, सूत्रार्थोभयरूपस्येत्यर्थः, तैः–तीर्थकरगणधरादिभिः कथितस्य–प्रतिपादितस्य, कस्येत्याह–श्रुतज्ञानस्य भगवतः, स्वरूपाभिधानमेतत्, सूत्रार्थयोः परस्परं निर्योजनं–सम्बन्धनं निर्युक्तिः, तां कीर्त्तयिष्यामि—प्रतिपादयिष्यामि । ननु किमशेषश्रुतज्ञानस्य?, न, किं तर्हि ?, श्रुतविशेषाणामावश्यकादीनाम्, अत आह—

आवस्सयस्स दसकालियस्स तह उत्तरज्झमायारे । सूयगडे निज्जुत्तिं वोच्छामि तहा दसाणं च ॥ ८४ ॥

कप्पस्स य निज्जुत्तिं ववहारस्सेव परमनिउणस्स । सूरिअपण्णत्तीए वोच्छं इसिभासिआणं च ॥ ८५ ॥

एएसिं निज्जुत्तिं वोच्छामि अहं जिणोवएसेणं । आहरण–हेउ–कारणपयनिवहमिणं समासेणं ॥ ८६ ॥

आवश्यकस्य दशवैकालिकस्य तथा 'भामा सत्यभामे'त्यादाविव पदैकदेशे पदसमुदायोपचारात् 'उत्तरज्झे'त्युत्तराध्ययनग्रहणं,ततोऽयमर्थः—उत्तराध्ययनाचारयोः,तथा 'सूत्रकृते' सूत्रकृताङ्गविषयां निर्युक्तिं वक्ष्ये,तथा दशानां च–दशाश्रुतस्कन्धस्य तथा कल्पस्य तथा व्यवहारस्य च परमनिपुणस्य, अत्र परमग्रहणं मोक्षाङ्गत्वात् निपुणग्रहणं त्वन्यंसकत्वात्,

न खल्वयं व्यवहारो मन्वादिप्रणीतव्यवहार इव व्यंसकः 'सच्चपइण्णा खु ववहारा' (३-२३९) इति वचनात्, तथा सूर्यप्रज्ञप्तेर्वक्ष्ये, तथा ऋषिभाषितानां च—देवेन्द्रस्तवादीनाम्, अनेकशः क्रियाभिधानं शास्त्रान्तरविषयत्वात्, समासव्यासरूपत्वाच्च शास्त्रारम्भस्येत्यदुष्टम्, 'एतेषां' श्रुतविशेषाणां निर्युक्तिं वक्ष्याम्यहं जिनोपदेशेन, न तु स्वमनीषिकया, कथंभूतामित्याह—आहरणहेतुपदनिवहाम्, इमाम्—अन्तस्तत्त्वतया निष्पन्नां 'समासेन' सङ्क्षेपेण, तत्र साध्यसाधनान्वयव्यतिरेकप्रदर्शनमाहरणं, दृष्टान्त इति भावः; साध्ये सत्येव भवति साध्याभावे च न भवत्येवं साध्यधर्मान्वयव्यतिरेकलक्षणो हेतुः, हेतुमुल्लङ्घ्य प्रथमं दृष्टान्ताभिधानं न्यायप्रदर्शनार्थं—क्वचिद्धेतुमनभिधाय दृष्टान्त एवोच्यते, यथा गतिपरिणामपरिणतानां जीवपुद्गलानां गत्युपष्टम्भको धर्मास्तिकायो मत्स्यादीनां सलिलमिव, तथा क्वचिद्धेतुरेव केवलोऽभिधीयते, न दृष्टान्तः, यथा मदीयोऽयमश्वो विशिष्टचिह्नोपलब्ध्यन्यथानुपपत्तेः, तथा च निर्युक्तिकारेणाभ्यधायि—"जिणवयणं सिद्धं चेव, भन्नई कत्थई उदाहरणं। आसज्ज उ सोयारं हेऊवि कहिंचि भणेज्जा॥१॥" (५-४९) इति, कारणम्—उपपत्तिमात्रं, यथा निरुपमसुखः सिद्धः, ज्ञानानाबाधप्रकर्षात्, नात्राविद्वदङ्गनादिलोके प्रतीतः साध्यसाधनधर्मानुगतो दृष्टान्तोऽस्ति, आहरणं च हेतुश्च कारणं च आहरणहेतुकारणानि तेषां पदान्याहरणहेतुकारणपदानि तेषां निवहः—सङ्घातो यस्यां निर्युक्तौ सा तथाविधा तां। तत्र 'यथोद्देशं निर्देश' इति न्यायात् प्रथमतोऽधिकृतावश्यकाध्ययनस्य सामायिकस्योपोद्घातनिर्युक्तिमभिधित्सुराह—

सामाइयनिज्जुत्तिं वोच्छं उवएसियं गुरुजणेणं। आयरियपरंपरएण आगयं आणुपुव्वीए ॥ ८७ ॥

सामायिकस्य निर्युक्तिः सामायिकनिर्युक्तिस्तां वक्ष्ये, कथंभूतामित्याह—उप—सामीप्येन देशिता उपदेशिता तां, केन?-

गुरुजनेन-तीर्थकरगणधरलक्षणेन, पुनरुपदेशकालादारभ्य आचार्यपारम्पर्येणागतां, स च परम्परको द्विधा-द्रव्यतो भावतश्च, तत्र द्रव्यपरम्परकः पुरुषपारम्पर्येण इष्टकानामानयनं, अत्र चासम्मोहार्थं कथानकं गाथाविवरणसमाप्तौ वक्ष्यामः, भावपरम्परकस्त्वियमेव उपोद्घातनिर्युक्तिराचार्यपारम्पर्येणागतेति, कथमाचार्यपारम्पर्येणागतमिति चेत्, अत आह-आनुपूर्व्या-परिपाट्या, तद्यथा-जम्बूस्वामिनः प्रभवेनानीता ततोऽपि शय्यम्भवादिभिरिति, अथवा जिनगणधरेभ्य आरभ्य आचार्यपारम्पर्येणागतां पश्चात् स्वकीयगुरुजनेनोपदेशितामिति । तत्र द्रव्यपरम्परके इदमुदाहरणं-साकेतं नाम नगरं, तस्स उत्तरपुरच्छिमे दिसीभागे सुरप्पियगो नामगो जक्खो, तस्सायतणं, सो य सुरप्पिओ जक्खो सन्निहियपाडिहेरो, सो वरिसे वरिसे चित्तिज्जइ, महो य से परमो किज्जइ, सो य चित्तितो समाणो तं चेव चित्तगरं मारेइ, अह न चित्तिज्जइ तो पभूयजणमारिं करेइ, तो चित्तगरा सबे पलाइउमारद्धा, पच्छा रण्णा नायं-जइ सबे पलाइस्संति तो एसो जक्खो अचित्तिज्जंतो अम्ह वहाए भविस्सइ, ततो तेण चित्तकरा सबे संकलियबद्धा कया, तेसिं सबेसिं नामाइं पत्तए लिहिऊण घडए छूढाणि, ततो वरिसे वरिसे जस्स नामं बालएण अयाणमाणेण कड्ढिज्जमाणं निग्गच्छइ तेण चित्तेयबो, एवं कालो वच्चइ, अन्नया कयाइ कोसंबिओ चित्तकरदारको घरातो पलाइउं तत्थागतो सिक्खगो, सो भमंतो सागेयस्स चित्तगरस्स घरमल्लीणो, सोऽवि एगपुत्तगो थेरीपुत्तगो, सो से मित्तो जातो, एवं तस्स तत्थ अच्छंतस्स अह तंमि वरिसे थेरीपुत्तस्स वारतो जातो, पच्छा सा थेरी बहुप्पगारं करुणं रुयइ, तं रुयमाणं थेरिं दट्ठूण कोसंबको जातकरुणो भणइ-किं अम्मो ! रुयसि ?, ताए कहियं-जहा मम पुत्तस्स वारतो जातो, सो भणइ-मा रुयह, अह एयं जक्खं चित्तिस्सामि,

ताहे सा भणइ–तुमं मे पुत्तो किं न होहिसि ?, तेण भणियं–सच्चं तव पुत्तोऽहं, तहावि अहं चित्तेमि, अच्छह तुब्भे असोगाओ, ततो तेण छट्ठभत्तं काऊण अहतं वत्थजुयलं परिहित्ता अट्ठगुणाए पोत्तीए मुहं बंधिऊण चोक्खेण पयत्तेण सुईभूतेण नवएहिं कलसेहिं ण्हावित्ता [वज्रलेपादिकुद्रव्यरहितैः] नवगेहिं कुचेहिं नवगेहिं मल्लसंपुडेहिं अलेस्सेहिं वन्नेहिं चित्तिऊण पायवडिओ भणइ–खमह मए जमवरद्धंति, ततो तुट्ठो जक्खो भणइ–वरेहि वरं, सो भणइ–एस चेव मम वरं देहि–मा लोगं मारेहि, जक्खो भणइ–एयं तावट्ठियमेव, जं तुमं न मारिओ, एवमन्नेऽवि न मारेमि, अन्नं भण, सो भणइ––जस्स एगदेसमवि पासामि दुपयस्स वा चउप्पयस्स वा अपयस्स वा तस्स तयणुरूवं रूवं निव्वत्तेमि, एवं होउत्ति दिण्णो वरो, ततो सो लद्धवरो रण्णा सक्कारितो समाणो गतो कोसंबिनयरिं, तत्थ सयाणितो नाम राया, सो अन्नया कयाइ सुहासणगतो दूयं पुच्छइ–किं मम नत्थि जं अन्नराईणं अत्थि ?, तेण भणियं–चित्तसभा नत्थि, 'मणसा देवाणं वायाए पत्थिवाणं' तक्खणमित्तमेव आणत्ता चित्तगरा, तेहिं सभाओवासा विभइया, पचित्तिया, तस्स वरदिण्णगस्स जो रण्णो अंतेउरकिड्डापदेसो सो दिन्नो, तेण तत्थ तयाणुरूवेसु रूवेसु निम्मिएसु कयाइ मिगावईए जालकडगंतरेण पायंगुट्ठतो दिट्ठो, उवमाणेण नायं––जहा एसा मिगावई, तेण पायंगुट्ठगाणुसारेणं देवीए रूवं निव्वत्तियं, तीसे चक्खुम्मि उम्मिल्लिज्जंते एगो मसिबिंदू ऊरुअंतरे पडितो, तेण फुसिओ, पुणोवि जातो, एवं तिन्नि वारा, पच्छा तेण नायं–एएण एवं होयव्वमेव, ततो चित्तसभा निम्माया, ततो राया चित्तसरूवं पलोयंतो तं पएसं पत्तो जत्थ सा देवी, तं निव्वन्नंतेण सो बिंदू दिट्ठो, तं दट्ठूण रुट्ठो, एएण मम पत्ती धरिसिया इति, ततो वज्झो आणत्तो, चित्तगरसेणी उवट्ठिया–सामि ! एस वरलद्धगोत्ति,

ततो से खुज्जाए मुहं दाइयं, तेण तयाणुरूवं निवत्तियं, तहावि तेण संडासगो छिंदावितो, निविसओ आणत्तो, सो पुणो जक्खस्स उववासेण ठितो, भणितो य-वामेण चित्तिहिसि, सयाणियस्स पदोसं गतो, तेण चिंतियं-पज्जोतो एयस्स पीई पिवेज्जा, ततो अणेण मिगावतीए चित्तफलए रूवं चित्तेऊण पज्जोयस्स उवट्ठवियं, तेण दिट्ठं, पुच्छिओ य, तेण कहियं सविसेसं, ततो पज्जोएण सयाणियस्स दूतो पेसिओ-मिगावइं देविं सिग्घं पट्ठवेह, जइ न पट्ठवेसि ततो सवसामग्गीए एहामि, गतो दूतो, तेण असक्कारितो निद्धमणेण निच्छूढो, तेण कहियं पज्जोतस्स, पज्जोतोऽविय दूयवयणेण आसुरुत्तो सव्वबलेण कोसंविं एइ, तं आगच्छंतं सोउं सयाणितो अप्पबलो चित्ते खुहितो, अतिसारेण पंचत्तमुवगओ, ताहे मिगावतीए चिंतियं-मा इमो बालो मम पुत्तो विणस्सिहिति, एस खरेण न सक्कए, पच्छा दूतो पट्ठवितो, भणितो य-एस कुमारो बालो, अम्हेहिं गएहिं मा सीमंतराइणा केणइ अण्णेण पिल्लिज्जिहिई ?, सो भणइ—को ममं धरमाणे पिल्लिहिइ ?, सा भणइ-उज्जेणीए इट्टगाओ बलियाओ ता एयाहिं कीरउ, आमंति, तस्स य चउद्दस राइणो वसवत्तिणो, तेण ते सबला ठाविया, पुरिसपरंपरएण तेहिं इट्टगा आणीयातो, कयं नगरं दढं, ताहे ताए भण्णइ-इयाणिं धन्नस्स भरेहि नगरिं, ततो तेण भरिया, जाहे नगरी रोहगसज्जा जाया ताहे सा विसंवइया, चिंतियं चऽणाए-धन्ना णं ते गामागरनगरपट्टणमडंबसन्निवेसा जत्थ सामी विहरइ, पव्वज्जामि जइ सामी एज्ज, ततो भगवं समोसढो, तत्थ सव्ववेरा पसमंति, मिगावती निग्गया, धम्मे कहिज्जमाणे एगो पुरिसो एस सव्वण्णुत्तिकाउं पच्छन्नं मणसा पुच्छइ, ततो सामिणा भणितो-वायाए पुच्छ देवाणु-

प्पिया !, वरं बहवे सत्ता संबुज्झंति, एवमवि भणिते तेण भणियं–भयवं ! जा सा सा सा ?, तत्थ भगवया आमंति भणितो, ततो गोतमसामिणा भणियं–भयवं ! किं एएणं जा सा सा सेति भणियं ? तत्थ तीसे उट्ठाणपारिआवणियं सबं भगवं परिकहेइ, तेणं कालेणं तेणं समएणं चंपा नाम नयरी, तत्थ एगो सुवण्णगारो इत्थीलोलो, सो पंच पंच सुवण्णसयाणि दाऊण जा पहाणा कन्ना तं परिणेइ, एवं तेण पंचसया पिंडिया, एक्केक्काए तिलगचोद्दसगं अलंकारं करेइ, जंदिवसं जाए समं भोगे भुंजइ तद्दिवसं देइ अलंकारं, सेसकालं न देइ, सो इस्सालुगो तं घरं न कयाइ मुयइ, न वा अन्नस्स अल्लियावं देइ, सो अन्नया मित्तस्स पगते मित्तेण वाहिओ, अणिच्छंतोऽवि बला जेमेउं नीतो, सो ताहिं गओत्तिनाऊण ताहिं चिंतियं–किं अम्हं एएणं सुवण्णएणंति ?, अज्ज पइरिक्कं ण्हामो समालभामो आविंधामो, ण्हायातो पइरिक्के मज्जियवयविहीए, तिलगचोद्दसगेण अलंकारेऊण अद्दागं गहाय पेहमाणीतो चिट्ठंति, सो य ततो आगतो, तं दट्ठूण आसुरत्तो, तेण एक्का महिला ताव पिट्टिया जाव मुयत्ति, ततो अन्नाओ भणंति–एवं अम्हेऽवि एक्केक्का निहंतवा, तम्हा एयं एत्थेव अद्दागपुंजं करेमो, तत्थ एगूणेहिं पंचहिं महिलासएहिं पंच एगूणाइं अद्दागसयाइं जमगसमगं पक्खित्ताइं, तत्थ सो अद्दागपुंजो जातो, पच्छा पुणोवि तासिं पच्छायावो जातो, का गई अम्ह पइमारिगाणं भविस्सइ ?, लोए य उद्धंसणाओ सहियवा, ताहे ताहिं घरकवाडाइं निरंतरं निच्छिद्दाइं दाराइं ठवेऊण से अग्गी दिन्नो सवतो समंततो, तेण पच्छाणुतावेण साणुक्कोसयाए ताए य अकामनिज्जराए य मणूसेसु उववण्णा, पंचवि सया चोरा जाया, एगंमि पवए परिवसंति, सोऽवि सुवण्णकारो

१८ कालमुवगतो तिरिक्खेसु उववन्नो, तत्थ जा सा पढममारिया सा एक्कं भवं तिरिएसु, पच्छा एक्कंमि बंभणकुले चेडो

आयातो, सो य पंचवरिसो जातो, सो य सुवण्णगारजीवो तिरिक्खेसु भमिऊणं तंमि कुले दारिया जाया, सो चेडो तीसे बालग्गाहो, सा य निच्चमेव रोयइ, तेण ओदरपोप्पयं करेंतेण किहवि सा जोणिद्दारेण हत्थेण आहया, तह चेव ठिया रोइउं, तेण नायं लद्धो मए उवाओ इति,एवं सो निच्चकालं करेइ,सो तेहिं मायापिईहिं नातो, ताहे हणिऊण धाडिओ, साऽवि अपडुप्पन्ना चेव कामाउरेण विप्पणट्ठा, सो चेडो पलायमाणो चिरनगरविणट्ठदुस्सीलायारो जातो, गतो एगं चोरपल्लिं जत्थ ताणि एगूणाणि पंच चोरसयाणि परिवसंति, सावि विणट्ठसीला पइरिक्कं हिंडंती एगं गामं गया, सो गामो तेहिं चोरेहिं पिल्लिओ,सा तेहिं गहिया, सा तेहिं पंचहिवि चोरसएहिं परिभुत्ता,तेसिं चिंता जाया—अह इमा वरागी एत्तियाण खुंदणं सहइ, जइ अन्ना से बिइज्जा लभेज्जामो तो से विस्सामो होज्जा, ततो तेहिं अन्नया कयाइ तीसे बिइज्जा आणीया, जंचेव दिवसं आणीया तद्दिवसं छिद्दाणि सा मग्गइ, केण उवाएण मारेज्जा ?, ते य अन्नया धाडिं घेत्तुं पट्ठा-विया, ताए सा भणिया—पेच्छ कूवेहिं किंपि दीसइ, सा दट्ठुमारद्धा, ताए तत्थेव छूढा, ते आगया पुच्छंति, ताए भण्णइ—अप्पणो महिलं कीस न सारवेह ?, तेहिं नायं—जहा एयाए मारिया, ततो तस्स बंभणचेडगस्स हियए ठियं—जहा एसा मम पावकम्मा भगिणित्ति, सुयइ य जहा भयवं महावीरो सव्वन्नू सव्वदरिसी य, ततो एस समोसरणे पुच्छइ, ततो सामी भणइ—सच्चेव सा तव भगिणी, एवं कहिए सो संवेगमावन्नो, पव्वइओ,एवं सोऊण सव्वा सा परिसा पयणुरागा जाया,ततो मिगा-वई जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ, उवागच्छित्ता समणं भगवं महावीरं वंदइ नमंसइ, वंदित्ता नमंसित्ता एवं वयासी—जं नवरं पज्जोयं आपुच्छामि,ततो तुब्भं सगासे पव्वयामित्तिभणिऊण पज्जोयं आपुच्छइ, ततो पज्जोतो तीसे महइमहा-

लियाए सदेवमणुयासुराए परिसाए लज्जाइ न तरइ वारेउं ताहे विसज्जेइत्ति,ततो मिगावई पज्जोयस्स उदयणं कुमारं निक्खेवग-निक्खित्तं काऊण पव्वइया,पज्जोयस्सवि अट्ठ अंगारवईपमुहाओ देवीओ पव्वइयातो,ताणिवि पंच चोरसयाणि तेण गंतूण संबो-हियाणि, एयं पसंगेण भणियं, एत्थ इट्टगापरंपरगेणाहिगारो, एस दव्वपरंपरगो।साम्प्रतं निर्युक्तिस्वरूपाभिधानार्थमिदमाह—

**निज्जुत्ता ते अत्था जं बद्धा तेण होइ निज्जुत्ती । तहवि य इच्छावेइ विभासिउं सुत्तपरिवाडी ॥ ८८ ॥**

यद्—यस्मात् सूत्रे निश्चयेनाधिक्येन साधु वा आदौ वा युक्ताः—सम्बद्धा निर्युक्ताः, निर्युक्ता एव सन्तस्ते श्रुताभिधेया जीवाजीवादयोऽर्था अनया प्रस्तुतनिर्युक्त्या बद्धा—व्यवस्थापिता व्याख्याता इतियावत् तेनेयं भवति निर्युक्तिः, निर्युक्तानां—सूत्रे प्रथममेव सम्बद्धानां सतामर्थानां व्याख्यारूपा युक्तिर्योजनं निर्युक्तयुक्तिरिति प्राप्ते शाकपार्थिवादिदर्शनात् युक्तलक्षणस्य पदस्य लोपात् निर्युक्तिरिति भवति, ननु यदि प्रथममेव सूत्रेऽर्थाः सम्बद्धा एव सन्ति तर्हि किमिति ते निर्युक्त्या व्याख्यायन्ते ?, सम्बद्धानां स्वयमेव विनेयवर्गेणावबुध्यमानत्वात्, तत आह—'तहविये'त्यादि, यद्यपि सूत्रे सम्बद्धा एवार्थाः सन्ति तथापि तान् सूत्रे निर्युक्तानपि अर्थान् विभाषितुं—व्याख्यातुं सूत्रपरिपाटी—सूत्रपद्धतिः एषयतीव एषयति—प्रयोजयति, इयमत्र भावना—अप्रतिबुध्यमाने श्रोतरि गुरुं तदनुग्रहार्थं सूत्रपरिपाट्येव विभाषितुमेषयति, इच्छत इच्छत मां प्रतिपादयितुमितीत्थं प्रयोजयतीवेति,क्वचित् 'सूत्रपरिपाटी'मिति पाठः, तत्रैवं व्याख्या—शिष्य एव सूत्रपरिपाटीमनवबुध्यमानो गुरुमिच्छायां प्रवर्त्तयति—इच्छत इच्छत मां विभाषितुं—व्याख्यातुं सूत्रपरिपाटीमिति, व्याख्या च निर्युक्तिः अतः पुनर्योजनरूपा निर्युक्तिरित्थमदोषायेति॥ इह प्रागिदमुक्तम्—अर्थपृथक्त्वस्य तैस्तीर्थकरगणधरैः कथितस्य श्रुतज्ञा-

नस्य निर्युक्तिं कीर्त्तयिष्यामीति, तत्र तेषामेव तीर्थकरगणधराणां शीलादिसम्पत्समन्विततांप्रतिपादनार्थं गाथाद्वयमाह—

तव-नियम-नाणरुक्खं आरूढो केवली अमियनाणी। तो मुयइ नाणवुट्ठिं भवियजणविबोहणट्ठाए ॥ ८९॥

तं बुद्धिमएण पडेण गणहरा गिण्हिउं निरवसेसं। तित्थयरभासियाइं गंथंति तओ पवयणट्ठा ॥ ९० ॥

रूपको नामात्रालङ्कारः, तत्र वृक्षो द्रव्यतो भावतश्च, द्रव्यतः प्रधानो वृक्षः कल्पवृक्षः, यथा तमारुह्य कश्चिद् गन्धादिगुणसमन्वितानां कुसुमानां सञ्चयं कृत्वा तदधोभागवर्त्तिनां पुरुषाणां तदारोहणासमर्थानामनुकम्पया कुसुमानि विसृजति, तेऽपि च भूपातरजोगुण्डनभयात् विमलविस्तीर्णपटैः प्रतीच्छन्ति, पुनर्यथोपयोगमुपभुञ्जानाः परेभ्यश्चोपकुर्वाणाः सुखं प्राप्नुवन्ति, एवं भाववृक्षेऽपि सर्वमिदमायोज्यं, तद्यथा-तपश्च नियमश्चज्ञानं च तपोनियमज्ञानानि तान्येव वृक्षस्तपोनियमज्ञानवृक्षः तम्, अनशनादिबाह्याभ्यन्तरभेदभिन्नं तपः, नियमस्त्विन्द्रियनोइन्द्रियसंयमः, तत्र श्रोत्रादीनां संयमनं इन्द्रियनियमः, क्रोधादीनां विनिग्रहो नोइन्द्रियसंयमः, ज्ञानमिह केवलज्ञानं परिगृह्यते,तस्यैव सम्पूर्णत्वात्, उत्तरत्र केवलिग्रहणाच्च, इत्थंभूतं वृक्षमारूढः,इह ज्ञानं सम्पूर्णमसम्पूर्णं च भवति ततः सम्पूर्णज्ञानपरिग्रहार्थमाह-केवलं-सम्पूर्णज्ञानमस्यास्तीति केवली,असावपि त्रिविधः,-तद्यथा श्रुतकेवली क्षायिकसम्यक्त्वकेवली क्षायिकज्ञानकेवली, यदिवा चतुर्विधः,तद्यथा-श्रुतकेवली अवधिकेवली मनःपर्यायज्ञानकेवली केवलज्ञानकेवलीति,तत्र श्रुतादिकेवलिव्यवच्छित्तये केवलज्ञानेन केवलित्वं प्रतिपिपादयिषुराह-अमितज्ञानी,अमितज्ञानेन केवलीति भावार्थः, स चेह प्रक्रमाद् भगवान् चतुस्त्रिंशदतिशयसम्पन्नस्तीर्थंकरः, 'तो'त्ति ततो वृक्षात् ज्ञानरूपकुसुमवृष्टिं कारणे कार्योपचारात् ज्ञानकारणभूतशब्दकुसुमवृष्टिं,

निर्युक्तिस्वरूपं ८८ सूत्ररचना ८९-९०

किमर्थमित्याह–भव्याश्च ते जनाश्च भव्यजनास्तेषां विबोधनम् तदर्थं–तन्निमित्तम्, अत्र पर आह–ननु कृतकृत्यो भगवान् ततस्तस्य परेभ्यस्तत्त्वकथनमनर्थकम्, प्रयोजनाभावात्, अथास्ति प्रयोजनं तर्हि नासौ कृतकृत्यः, प्रयोजनसापेक्षत्वादस्मदादिवत्, अन्यच्च–सर्वज्ञो वीतरागश्च भगवान् स भव्यानेव विबोधयतीत्ययुक्तं, तथाहि–सर्वज्ञत्वादसावभव्यानामपि विबोधनोपायमवगच्छति, अन्यथा सर्वज्ञत्वव्याघातप्रसङ्गात्, न च तस्य भव्येषु पक्षपातो येन भव्यानेव विबोधयति नाभव्यान् वीतरागत्वादिति, अत्रोच्यते, कृतकृत्यो भगवान् न भवति, तीर्थकरनामकर्मविपाकोदयस्याद्याप्यनुभूयमानत्वात्, तदनुभवश्च सद्धर्म्मदेशनादिप्रकारेणेति न तत्त्वकथनमनर्थकं, यदप्युक्तम् 'सर्वज्ञो वीतरागश्च भगवानि'त्यादि, तत्रापि यत एव भगवान् सर्वज्ञोऽत एव भव्यानेव विबोधयति, अभव्यानां बोधनोपायस्य कस्याप्यभावात्, अन्यथा अभव्यत्वायोगात्, ततो न कश्चिद्दोषः, न च पक्षपातो भव्येषु, वीतरागत्वात्, केवलं तस्य भगवतस्त्रैलोक्याधिपतेः पक्षपातनिरपेक्षमविशेषेण सद्धर्म्मदेशनां कुर्वतो विभिन्नस्वभावेषु प्राणिषु तथा तथा स्वाभाव्याद् विबोधाविबोधकारिणी पुरुषोलूककमलकुमुदादिष्वादित्यस्य प्रकाशनक्रियेव सद्धर्म्मदेशनक्रियोपजायते, ततो न कश्चिद्दोषः, उक्तं च वादिमुख्येन–"त्वद्वाक्यतोऽपि केषाञ्चिदबोध इति मेऽद्भुतम्। भानोर्मरीचयः कस्य, नाम नालोकहेतवः ?॥ १॥ नैवाद्भुतमुलूकस्य, प्रकृत्या क्लिष्टचेतसः। स्वच्छा अपि तमस्त्वेन, भासन्ते भास्वतः कराः॥ २॥" किञ्च–यथा सुवैद्यः साध्यमसाध्यं वा व्याधिं चिकित्समानः प्रत्याचक्षाणश्च नातज्ज्ञो न च रागद्वेषवान्, एवं साध्यासाध्यभव्याभव्यकर्मरोगमपनयन्ननपनयंश्च नातज्ज्ञो न च रागद्वेषवान्, यथा वा योग्ये दलिके रूपं कुर्वन् अयोग्ये चाकुर्वन् रूपकारो नातज्ज्ञो नवा रागद्वेषवान्

एवं योग्यान् विबोधयन् अयोग्याँश्चाविबोधयन् नातज्ज्ञो नवा रागद्वेषवान् भगवान्, उक्तंच–" सज्झं तिगिच्छमाणो, रोगं रागी न भण्णए वेज्जो । मुणमाणो य असज्झं निसेहयंतो जह अद्दोसो ॥ १ ॥ तह भवकम्मरोगं, नासंतो रागवं न जिणवेज्जो । नय दोसी अभवासज्झकम्मरोगं निसेहंतो ॥ २ ॥ मोत्तुमजोग्गं जोग्गे, दलिए रूवं करेइ रूयारो। न य रागदोसिल्लो, तहेव जोग्गे विबोहंतो ॥ ३ ॥ ( वि. )" द्वितीयगाथाव्याख्या–तां ज्ञानकुसुमवृष्टिं बुद्धिमयेन–बुद्ध्यात्मकेन पटेन गणधराः–प्रागुक्तस्वरूपा गौतमादयो ग्रहीतुम्–आदातुं निरवशेषां –सम्पूर्णां, गणभृतां बीजादिबुद्धित्वात्, किं कुर्वन्तीत्यत आह–भाषणानि भाषितानि, भावे निष्ठाप्रत्ययः, तीर्थंकरस्य भाषितानि तीर्थंकरभाषितानि कुसुमकल्पानि ग्रश्नन्ति, विचित्रकुसुममालावत्, किमर्थमित्याह–प्रगतं प्रशस्तमादौ वा वचनं प्रवचनं –द्वादशाङ्गं गणिपिटकं तदर्थं, कथमिदं प्रवचनं भवेदित्येवमर्थमिति वा, यदिवा प्रवक्तीति प्रवचनम्, बहुलवचनात् कर्त्तर्यनट्, सङ्घस्तदर्थमिति, तथा चायमेवार्थो भाष्यकारेणापि पोषितः,–" तुंगं विउलक्खंधं सातिसयो कप्परुक्खमारूढो । पज्जत्तगहियबहुविहसुरभिकुसुमोऽणुकंपाए ॥ १ ॥ कुसुमत्थिभूमिविट्ठियपुरिसपसारियपडेसु पक्खिवइ । गंथंति तेऽवि घेत्तुं सेसजणाणुग्गहट्ठाए ॥ २ ॥ लोगवणसंडमज्झे, चोत्तीसाइसयसंपदोवेतो । तवनियमनाणमइयं स कप्परुक्खं समारूढो ॥ ३ ॥ पज्जत्तनाणकुसुमो, ताइं छउमत्थभूमिसंथेसु । नाणकुसुमत्थिगणहरसियबुद्धिपडेसु पक्खिवइ ॥ ४ ॥ तं नाणकुसुमवुट्ठिं घेत्तुं बीयाइबुद्धयो सव्वं । गंथंति पवयणट्ठा माला इव चित्तकुसुमाणं ॥ ५ ॥ पगयं

वयणं पवयणमिह सुयनाणं कयं सहं होज्ज । पवयणमहवा संघो, गहिंति तयणुग्गहट्ठाए ॥ ६ ॥ ( वि. )”

प्रयोजनान्तरं प्रतिपिपादयिषुरिदमाह—

घेत्तुं व सुहं सुहगणणधारणा दाउ पुच्छिउं चेव । एएहिं कारणेहिं जीयंति कयं गणहरेहिं ॥ ९१ ॥

इह मुत्कलं भगवता तीर्थकरेणोक्तं वचनवृन्दं मुत्कलकुसुमनिकुरम्बमिव सर्वात्मना ग्रहीतुं न शक्यते, ग्रथितं तु सूत्रीकृतं सत् ग्रहीतुं आदातुं सुखं भवति, सुखेन ग्रहीतुं प्रभूतमपि शक्यते इति भावः, इयमत्र भावना—पदवाक्यप्रकरणाध्यायोद्देशाध्ययनप्राभृतवस्तुपल्लवादिनियतक्रमव्यवस्थापितं जिनवचनमेतावदस्य गृहीतमेतावच्च पुरस्ताद् ग्रहीतव्यमिति विवक्षया प्रवर्द्धमानेनोत्साहेन यत्नत एव ग्रहीतुं शक्यते, तथा गुणनं धारणं च गुणनधारणे ते अपि ग्रथिते सति सुखं भवतः, तत्र गुणनं—परावर्त्तनं धारणा त्वविस्मृतिः, तथा दातुं शिष्येभ्यः प्रष्टुं च संशयापनोदार्थं गुरुपादमूले सुखं भवति, सुखेन प्रश्नः शिष्येभ्यश्चातिसर्जनं कर्त्तुं शक्यत इति भावः, एतैरनन्तरोक्तैः कारणैः जीयन्त इति जीवितम्, श्रुतस्योज्जीवनमिदमिति, किमुक्तं भवति ?—जीवितं जीवनरूपं न कदाचिद् व्यवच्छेदमुपयाति तथा श्रुतमप्यव्यवच्छित्तिनयाभिप्रायतो न कदाचिद् व्यवच्छिद्यते, ततो जीवितमिव जीवितं—सदाऽवस्थानं द्वादशाङ्गस्य स्यादित्येवमर्थं कृतं ग्रथितं गणधरैः, अथवा न सुखादिकारणेभ्य एव, किं तर्हि ? ‘जीयंति’त्ति जीवितं—मर्यादा गणधराणामिदं जीवितम्—इयं मर्यादा तन्नामकर्मोदयतस्तत्स्वभावतया कर्त्तव्यमेव श्रुतविरचनमिति तैः सूत्रं ग्रथितम्, अथवा जीयन्त इति जीतम् आचरितं कल्प इत्येकोऽर्थः, ततः सर्वेषां गणभृतामिदं जी[वि]तम्—अयं कल्पो यथा सन्दर्भणीयं तीर्थकरवचनमिति तैः कृतं,

उक्तं च-"सबेहिं गणहरेहिं, जीयंति सुयं जतो न वोच्छिन्नं। गणहरमज्जाया वा जीयं सबाणुचिन्नं वा" ॥ १ ( वि० ) ॥ अथ तीर्थकरभाषितान्येव क्रमव्यवस्थापितानि सूत्रमस्तु, गणधरसूत्रीकरणे तु को विशेषः ?, उच्यते, इह भगवान् विशिष्ट-मतिसम्पन्नगणधरापेक्षया प्रभूतार्थं स्वल्पमेवार्थमात्रमभिधत्ते, नत्वितरजनसाधारणं ग्रन्थराशिं, ततो गणधराणां सूत्र-कृतिः, तथा चाह-

अत्थं भासइ अरहा सुत्तं गंथंति गणहरा निउणं। सासणस्स हियट्ठाए, तओ सुत्तं पवत्तेइ ॥ ९२ ॥

अर्थम्-अर्थमात्रमेवार्हन् भाषते, न प्रभूतजनसाधारणं ग्रन्थराशिं, ततो गणधराः शासनस्य हितार्थं 'निपुणं' बहु सूक्ष्मार्थप्रतिपादकं निगुणं वा-नियतगुणं सन्निहिताशेषसूत्रगुणमितियावत् 'सूत्रं' द्वादशाङ्गरूपं ग्रथ्नन्ति, तत एव सूत्रं जगति प्रवर्त्तते इति, क्वचित्पाठान्तरं 'गणहरा निउणा' इति, तत्र गणधराः विशेष्यन्ते, निपुणाः सूक्ष्मार्थदर्शित्वात्, नियतगुणा निगुणा वा, सन्निहितसमस्तगुणत्वात्॥आह-तत्पुनः सूत्रंकिमादिकं किंपर्यवसानं कियत्परिमाणं को वाऽस्य सार इत्यत आह-

सामाइयमाईयं सुयनाणं जाव बिंदुसाराओ
तस्सवि सारो चरणं सारो चरणस्स निवाणं ॥ ९३ ॥

तत् श्रुतज्ञानं सामायिकमादिर्यस्य तत् सामायिकादि यावत् बिन्दुसारात्-बिन्दुसारं यावत्, बिन्दुसाराख्यचतुर्दशपूर्वपर्यन्तमित्यर्थः, तच्च मूलभेदापेक्षया द्विभेदं, तद्यथा-अङ्गप्रविष्टमनङ्गप्रविष्टं च, अङ्गप्रविष्टं द्वादशभेदमाचारादिभेदाद्, अनङ्गप्रविष्टमनेकभेदमावश्यकतद्व्यतिरिक्तकालिकोत्कालिकादिभेदात्, उक्तं च-"द्व्यनेकद्वादशभेदं श्रुत"(तत्त्व१-)मिति,

सूत्रग्रन्थने हेतुः ९० सूत्रप्रवृत्तिः सूत्रादि ९१-३

तस्यापि—श्रुतज्ञानस्य सारश्चरणं, सारशब्दोऽत्र फलवचनः प्रधानवचनश्च मन्तव्यः, तस्य फलं चरणं, यदिवा तस्मादपि श्रुतज्ञानाच्चरणं प्रधानं, ननु चरणं नाम संवररूपा क्रिया, क्रिया च ज्ञानाभावे हता, 'हया अनाणतो किया' इति वचनात्, ततो ज्ञानक्रियाभ्यां समुदिताभ्यामेव मोक्ष इति समानत्वमेवोभयोः, कथं ज्ञानस्य सारश्चरणमिति?, उच्यते, इह यद्यपि "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग" (तत्त्वा-१-१) इति समानं ज्ञानचरणयोर्निर्वाणहेतुत्वमुपन्यस्तं, तथापि गुणप्रधानभावोऽस्ति, तथाहि—ज्ञानं प्रकाशकमेव, 'नाणं पयासय'मिति वचनात्, चरणं त्वभिनवकर्मादाननिरोधफलं प्रागुपात्तकर्म्मनिर्ज्जराफलं च, ततो यद्यपि ज्ञानमपि प्रकाशकतयोपकारीति ज्ञानचरणरूपद्विकाधीनो मोक्षः, तथापि प्रकाशकतयैव व्याप्रियते ज्ञानं, कर्ममलशोधकतया तु चरणमिति प्रधानगुणभावाच्चरणं ज्ञानस्य सारः, उक्तं च—"नाणं पयासयं चिय गुत्तिविसुद्धीफलं च जं चरणं। मोक्खो य दुगाहीणो चरणं नाणस्स तो सारो ॥ १ ॥" (वि० ) अपिशब्दात् सम्यक्त्वस्यापि सारश्चरणम्, अथवा अपिशब्दस्य व्यवहितः सम्बन्धः, तस्य—श्रुतज्ञानस्य सारश्चरणमपि, अपिशब्दान्निर्वाणमपीत्यर्थः, अन्यथा ज्ञानस्य निर्वाणहेतुता न स्यात्, किन्तु चरणस्यैव, अनिष्टं चैतत् 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' तथा 'नाणकिरियाहिं मोक्खो' इत्यादि वचनात्, केवलं सा ज्ञानस्य निर्वाणहेतुता गौणतया प्रतिपत्तव्या, मुख्यतया तु चरणस्य, यतः केवलज्ञानलाभेऽपि न तत्क्षणमेव मुक्तिरुपजायते, किन्तु शैलेश्यवस्थाचरमसमयभाविचरणप्रतिपत्त्यनन्तरम्, अतो मुख्यं कारणं निर्वाणस्य चरणं, तथा चोक्तम्—"जं सवनाणलंभानंतरमहवा न मुच्चए सवो । मुच्चइ य सवसंवरलाभे तो सो पहाणयरो ॥ १ ॥" (वि० ) तत उक्तम्—तस्य सारश्चरणमिति, तथा 'सारो चरणस्स निवाण'मित्यत्र

सारशब्दः फलवचनः, चरणस्य संयमतपोरूपस्य सारः-फलं निर्वाणम्, इहापि शैलेश्यवस्थाभाविसर्वसंवररूपचारित्रमन्तरेण निर्वाणस्याभावात् तद्भावे चावश्यंभावादिति प्रधानभावमधिकृत्य उपन्यस्तम्, अन्यथा शैलेश्यवस्थायामपि क्षायिकज्ञानदर्शने स्त इति सम्यग्ज्ञानदर्शनादिरूपरत्नत्रयस्य समुदितस्यैव निर्वाणहेतुत्वमिति॥तथा चाह निर्युक्तिकारः—

सुयनाणम्मिवि जीवो वट्टंतो सो न पाउणइ मोक्खं। जो तव-संजममइए जोगे न चएइ वोढुं जे ॥ ९४ ॥

श्रुतज्ञाने अपिशब्दान्मत्यादिष्वपि ज्ञानेषु जीवो वर्त्तमानः सन् न प्राप्नोति मोक्षमित्यनेन प्रतिज्ञार्थः सूचितः, यः किंविशिष्ट इत्याह-यस्तपःसंयममयान्-तपःसंयमात्मकान् योगान् न शक्नोति वोढुमित्यनेन हेत्वर्थः, जे इति पादपूरणे 'इजेराः पादपूरणे' इति वचनात्, दृष्टान्तस्तु स्वयमभ्यूह्यो वक्ष्यति वा, प्रयोगः-न ज्ञानमेवेप्सितार्थप्रापकं सत्क्रियाविरहात् स्वदेशप्राप्त्यभिलषितगमनक्रियाशून्यमार्गज्ञज्ञानवत्, सौत्रो वा दृष्टान्तः, मार्गज्ञनिर्यामकाधिष्ठितेप्सितदिक्सम्प्रापकपवनक्रियाशून्यपोतवत् ॥ तथा चाह—

जह छेयलद्धनिज्जामओऽवि वाणियगइच्छियं भूमिं। वाएण विणा पोओ न चएइ महण्णवं तरिउं ॥ ९५ ॥
तह नाणलद्धनिज्जामओऽवि सिद्धिवसहिं न पाउणइ। निउणोऽवि जीवपोओ तव-संजममारुयविहीणो ॥९६॥

'यथा' येन प्रकारेण 'छेको' दक्षो 'लब्धः' प्राप्तो निर्यामको येन पोतेन स तथाविधः अपिशब्दात् सुकर्णधाराद्यधिष्ठितोऽपि, वणिज इष्टा वणिगिष्टा तां भूमिं महार्णवं तीर्त्वा वातेन विना पोतो न शक्नोति, प्राप्तुमिति वाक्यशेषः, उपनयमाह-तथा श्रुतज्ञानमेव लब्धो निर्यामको येन जीवपोतेन स तथाविधः, अपिशब्दात्सुनिपुणमतिकर्णधाराद्यधिष्ठितोऽपि,

संयमतपोनियमरूपेण मारुतेन विहीनो निपुणोऽपि जीवपोतो भवार्णवं तीर्त्वा सन्मनोरथवणिजोऽभिप्रेतां सिद्धिवसतिं न प्राप्नोति, तस्मात्तपःसंयमानुष्ठाने खल्वप्रमादवता भवितव्यम् ॥ तथा चात्रौपदेशिकमेव गाथासूत्रमाह–

**संसारसागराओ उव्वुड्डो मा पुणो निवुड्डेज्जा । चरणगुणविप्पहीणो, बुड्डइ सुबहुंपि जाणंतो ॥ ९७ ॥**

अस्याः पदार्थो दृष्टान्ताभिधानद्वारेण प्रोच्यते, यथा नाम कश्चित् कच्छपः प्रचुरतृणपत्रपटलनिविडतमशैवलाच्छादितोदकान्धकारमहाह्रदान्तर्गतो विविधानेकजलचरक्षोभादिव्यसनपरम्पराव्यवस्थितमानसः सर्वतः परिभ्रमन् कथमपि शैवालरन्ध्रमासाद्य तेनैव च तत उपरि विनिर्गत्य शरदि पार्वणचन्द्रचन्द्रिकास्पर्शसुखमनुभूय भूयोऽपि स्वबन्धुस्नेहाकृष्टचेतोवृत्तिस्तेषामपि तपस्विनामदृष्टकल्याणानामहमिदं सुरलोककल्पं किमपि दर्शयामीत्यवधार्य तस्मिन्नेव ह्रदमध्ये निमग्नः, ततः समासादितबन्धुवर्गस्तद्दर्शननिमित्तं विवक्षितरन्ध्रोपलब्धये पर्यटन् अवश्यं कष्टतरं व्यसनमनुभवति स्म, एवमयमपि जीवकच्छपोऽनादिकर्मपटलसन्तानाच्छादितान्मिथ्यादर्शनादितमोऽनुगतान् विविधशिरोनेत्रकर्णवेदनाज्वरकुष्ठभगंदरादिशरीरेष्टवियोगानिष्टसम्प्रयोगादिमानसदुःखजलचरसमूहानुगतान्, संसरणं संसारः, भावे घञ् प्रत्ययः, स एव सागरस्तस्मात् परिभ्रमन् कथञ्चिदेव मनुष्यभवप्राप्तियोग्यकर्मोदयलक्षणं रंध्रमासाद्य मनुष्यत्वप्राप्त्या उन्मग्नः सन् जिनचन्द्रवचनकिरणावबोधमासाद्य दुष्प्रापोऽयं जिनवचनबोधिलाभ इत्येवं जानानः स्वजनस्नेहविषयातुरचित्ततया मा पुनः कूर्मवत् तत्रैव निमज्जेत्, आह–अज्ञानी कूर्मोऽतो निमज्जति, इतरस्तु हिताहितप्राप्तिपरिहारज्ञो ज्ञानी ततः कथं निमज्जति ?,

तत आह-चरणगुणैः विविधम्-अनेकप्रकारं प्रकर्षेण हीनश्चरणगुणविप्रहीणः, ततः सुवह्वपि जानन् निमज्जति, अथवा निश्चयनयदर्शनेनासावप्यज्ञ एव, ज्ञानफलशून्यत्वाद्, अतो निमज्जतीति प्रकृतमेवार्थं समर्थयमान आह—

सुबहुंपि सुयमहीयं किं काही चरणविप्पहीणस्स ? । अंधस्स जह पलित्ता दीवसयसहस्सकोडीवि ॥ ९८ ॥

सुबह्वपि श्रुतमधीतं चरणविप्रहीणस्य निश्चयतोऽज्ञानमेव, तत्फलाभावात्, ततस्तत्सदपि किं करिष्यति ?, न किञ्चिदपि, अकिञ्चित्करमेवेति भावः, अत्रैव दृष्टान्तमाह-अन्धस्य यथा दीपशतसहस्रकोट्यपि, प्रदीप्तानां दीपानां शतसहस्राणि तेषां कोटी, अपिशब्दात् तद्व्यादिकोटयोऽपि, आह च भाष्यकृत्—"संतंपि तमण्णाणं नाणफलाभावओ सुबहुयंपि । सक्किरियापरिहीणं, अंधस्स पदीवकोडीवि ॥ १ ॥" व्यतिरेकमाह-

अप्पंपि सुयमहीयं पगासयं होइ चरणजुत्तस्स । एक्कोऽवि जह पईवो, सचक्खुयस्सा पयासेइ ॥ ९९ ॥

अल्पमपि श्रुतमधीतं 'चरणयुक्तस्य' सावद्येतरयोगनिवृत्तिपरिणामरूपचरणलक्षणचक्षुष्मतः प्रकाशकं भवति-हेयोपादेयार्थप्राप्तिपरिहारप्रदर्शकमुपजायते, चरणानुगतयथावस्थितशुद्धपरिणामरूपचक्षुरुपेतत्त्वाद्, तत्रैव दृष्टान्तमाह-एकोऽपि यथा प्रदीपः सचक्षुष्कस्य प्रकाशयति ॥ आह-नन्वित्थं सति चरणरहितानां ज्ञानसम्पत् सुगतिफलापेक्षया निरर्थिका प्राप्नोति, सत्यमेवमेतत्, इष्यते एव निरर्थिका, यत आह-

जहा खरो चंदणभारवाही, भारस्स भागी नहु चंदणस्स ।
एवं खु नाणी चरणेण हीणो, नाणस्स भागी नहु सुग्गईए ॥ १०० ॥

यथा खरश्चन्दनभारवाही सन् भारस्य भागी—चन्दनकाष्ठभारमुद्वहन् तज्जनितश्रमादिकष्टभागी, न तु चन्दनस्य-चन्दनरसक्रियमाणविलेपनादेर्भागी, एवमेव, खुशब्दोऽवधारणे, ज्ञानी चरणेन हीनः सन् ज्ञानस्य—ज्ञानपठनपरावर्त्तन-चिन्तनादिजन्यक्लेशपरम्परकस्य भागी, नतु सुदेवत्वसुमानुषत्वसिद्धिलक्षणायाः सुगतेः, उक्तं च—"नहि नाणं विफलं च्चिय किलेसफलयंपि चरणरहियस्स। निप्फलपरिवहणातो चंदणभारो खरस्सेव ॥१॥" (वि०११५७) सम्प्रति मा भूद्विनेयस्य एकान्तेनैव ज्ञानेऽनादरः क्रियायां च तच्छून्यायां पक्षपात इति द्वयोरपि केवलयोरिष्टफलासाधकत्वमुपदर्शयति—

हयं नाणं कियाहीणं, हया अन्नाणओ किया। पासंतो पंगुलो दड्ढो, धावमाणो य अंधओ ॥ १०१ ॥

अत्राक्षरार्थः प्रतीत एव, भावार्थः तदुदाहरणादवसेयः, तच्चेदम्—एगम्मि महानगरे पलीवणं संवुत्तं, तंमि य अणाहा दुवे जणा, तंजहा—पंगुलो अंधलो य, ते य नगरलोए जलणभयसमुब्भंतलोयणे पलायमाणे संते पंगुलतो गमणकिरियावियलो जाणंतोवि पलायणमग्गं कमागएण अगणिणा दड्ढो, अंधोऽवि गमणकिरियाजुत्तो पलायणमग्गमजाणंतो तुरियं जलणाभिमुहं चेव गंतुं पयट्टो, ततो अगणिभरियाए खाणीए पडितो, दड्ढो य, एष दृष्टान्तः, अयमर्थोपनयः—ज्ञान्यपि क्रियारहितो न कर्माग्नेः पलायितुं समर्थः, नापीतरः समर्थो, ज्ञानविकलत्वात्, अत्र प्रयोगो—ज्ञानमेव विशिष्टफलसाधकं न भवति, सत्क्रियायोगशून्यत्वात्, नगरदाहे पङ्गुलपलायनविज्ञानवत्, नापि क्रियैव विशिष्टफलप्रसाधिका सज्ज्ञानरहितत्वात्, नगरदाह एवान्धस्य पलायनक्रियावत्, नन्वेवं समुदितयोरपि ज्ञानक्रिययोर्निर्वाणप्रसाधकसामर्थ्यानुपपत्तिः, प्रत्येकमभावात्, सिकतातैलवत्, आह च—"पत्तेयमभावाओ, निव्वाणं समुदियासुऽवि न जुत्तं। नाणकिरियासु वोत्तुं सिक-

तासमुदायतेल्लं व ॥२॥ (वि.११६३)" नैष दोषः, समुदायसामर्थ्यस्य प्रत्यक्षसिद्धत्वात्, तथाहि-ज्ञानक्रियाभ्यां कटादिकार्यसिद्धय उपलभ्यन्ते एव, नतु सिकतासु तैलं, न च दृष्टमपह्नोतुं शक्यते, एवमाभ्यामदृष्टकार्यसिद्धिरप्यविरुद्धेति न कश्चिद्दोषः, किञ्च-न सर्वथैवानयोः प्रत्येकं निर्वाणप्रसाधकसामर्थ्यायोगः, देशोपकारित्वाभ्युपगमात्, तथा हि तदेव देशोपकारित्वं समुदाये समग्रत्वादिष्टफलप्रसाधकं भवति, केवलं तु सामग्रीविकलतयेतरसापेक्षत्वादसाधकमिति केवलयोः सामर्थ्यायोगः, उक्तं च-"वीसुं न सव्वह च्चिय सिकतातेल्लं व साहणाभावो । देसोवगारिया जा सा समुदायंमि संपुण्णा ॥ १ ॥ (वि.११६५) एतदेवाह—

संजोगसिद्धीइ फलं वयंति, नहु एगचक्केण रहो पयाइ ।
अंधो य पंगू य वणे समिच्चा, ते संपउत्ता नगरं पविट्ठा ॥ १०२ ॥

ज्ञानक्रिययोः संयोगनिष्पत्तावेव मोक्षलक्षणं फलं वदन्ति-व्याचक्षते भगवन्तस्तीर्थकराः, न हि लोकेऽप्येकचक्रेण रथः प्रवर्त्तते, एवमन्यदपि सामग्रीजन्यं कार्यं सर्वमवगन्तव्यम्, अत्रैव दृष्टान्तमाह—अन्धश्च पङ्गुश्च वने समेत्य-मिलित्वा तौ सम्प्रयुक्तौ नगरं प्रविष्टौ, समेत्येत्युक्तेऽपि तौ सम्प्रयुक्ताविति पुनरभिधानमात्यन्तिकसम्प्रयोगप्रदर्शनार्थम्, अत्र उदाहरणं-एगम्मि रण्णे रायभएण नगरातो उव्वसिय लोगो ठिओ, पुणोवि धाडिभएण पवहणाणि उज्झिय पलातो, तत्थ दुवे अणाहा उज्झिया, गयाए धाडीए लोगग्गिणा वायपलीविएण वणदवो लग्गो, ते य भीया, तत्थ अंधो छुट्टकच्छो अयाणत्तणतो अग्गिसंमुहं चेव पलायइ, ततो पंगुणा भणियं-मा इतो नास, जत्तो इतो चेव अग्गी, तेण

भणियं—कुतो पुण गच्छामि?, पंगुणा भणियं—अहंपि पुरतो अतिदूरे मग्गदेसणे न समत्थो, जतो पंगू, ता मं खंधे करेह जेण अहं कंटगजलणादिअपाए परिहराविंतो सुहं तं नगरं पावयामि, तेण तहत्ति पडिवज्जिय मणुट्ठियं, गया य खेमेण दोवि नगरं, एष दृष्टान्तः, अयमर्थोपनयः—एवं ज्ञानक्रियाभ्यां समुदिताभ्यां सिद्धिपुरमवाप्यते इति, प्रयोगश्चात्र—विशिष्टकारणसंयोगोऽभिलषितकार्यप्रसाधकः, सम्यक्क्रियोपलब्धिरूपत्वादन्धपङ्ग्वोरिव नगरावाप्तेः, यः पुनरभिलषित-फलसाधको न भवति स सम्यक्क्रियोपलब्धिरूपोऽपि न भवति, इष्टगमनादिक्रियाविकलविघटितैकचक्ररथवदिति व्यतिरेकः, ननु ज्ञानक्रिययोः सहकारित्वे सति किं केन स्वभावेनोपकुरुते?, किमविशेषेण शिबिकोद्वाहकवत्, उत भिन्नस्वभावतया गमनक्रियायां नयनचरणादिवत्, उच्यते, भिन्नस्वभावतया, यत आह—

**नाणं पयासयं सोहओ तवो संजमो य गुत्तिकरो। तिण्हंपि समाओगे मोक्खो जिणसासणे भणिओ॥१०३॥**

इह यथा किञ्चिदुद्घाटद्वारं बहुवातायनजालकरूपच्छिद्रं वाताकृष्टादिप्रचुररेणुकचवरपूरितं शून्यगृहं, तत्र चैव वस्तुकामः कोऽपि तत् शुशोधयिषुर्द्वारवातायनजालकानि सर्वाण्यपि बाह्यरेणुकचवरप्रवेशनिषेधार्थं स्थगयति, मध्ये च प्रदीपं प्रज्वलयति, पुरुषं च कचवराद्याकर्षणाय व्यापारयति, तत्र प्रदीपो रेण्वादिमलप्रकाशनव्यापारेणोपकुरुते, द्वारादिस्थगनं बाह्यरेण्वादिप्रवेशनिषेधेन, पुरुषस्तु रेण्वाद्याकर्षणात् तच्छोधनेन, एवमिहापि जीवापवरक उद्घाटितास्रव-द्वारः सद्गुणशून्यो मिथ्यात्वादिहेत्वाकृष्टकर्मकचवरापूरितो मुक्तिसुखनिवासहेतोः शोधनीयो वर्त्तते, तत्र ज्ञायतेऽनेनेति ज्ञानं, तच्च प्रकाशयतीति प्रकाशकं, ज्ञानं प्रकाशकत्वेनोपकुरुते, तत्स्वभावत्वात्, गृहमलापनयने प्रदीपवदिति

भावः, क्रिया तु तपःसंयमरूपत्वादित्थमुपकुरुते, शोधयतीति शोधकं, किन्तदित्याह—तापयत्यनेकभवोपात्तमष्टप्रकारं कर्मेति तपः, तत् शोधकत्वेनोपकुरुते, तत्स्वभावत्वात्, गृहकचवरोज्झनक्रियया तच्छोधने कर्मकरपुरुषवत्, तथा संयमनं संयमः, भावेऽल्प्रत्ययः, आश्रवद्वारविरमणमितियावत्, चशब्दः पृथग्ज्ञानादीनां प्रक्रान्तफलसिद्धौ भिन्नोपकारकर्तृत्वावधारणार्थः, गोपनं गुप्तिः, स्त्रियां क्तिप्रत्ययः, आगन्तुककर्म्मकचवरनिरोध इति हृदयं, गुप्तिकरणशीलो गुप्तिकरो, हेतुतच्छीलानुकूलेष्वित्यादिना टप्रत्ययः, किमुक्तं भवति ?—संयमोऽप्यपूर्वकर्म्मकचवरागमननिरोधेनोपकुरुते, तत्स्वभावत्वात्, गृहशोधने पवनप्रेरितकचवरागमननिरोधेन वातायनादिस्थगनवत्, एवं च त्रयाणामेव, अपिशब्दोऽवधारणे, अथवा सम्भावने, किं सम्भावयति ?—त्रयाणामपि ज्ञानादीनां, किंविशिष्टानाम् ?—निश्चयतः क्षायिकाणां, न तु क्षायोपशमिकानामपि, समायोगे—संयोगे मोक्षः—सर्वथा अष्टविधकर्ममलवियोगलक्षणः जिनानां शासनं जिनशासनं तस्मिन् 'भणितः' उक्तः, नन्वेवं सति 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग' इत्यागमो विरुध्यते, सम्यग्दर्शनमन्तरेणोक्तलक्षणज्ञानादित्रयादेव मोक्षप्रतिपादनाद्, नैष दोषः, ज्ञानग्रहणेन तस्यापि ग्रहणाद्, अन्यथा ज्ञानत्वायोगात्, अत एवान्यत्र चतुष्टयमुक्तं—"ज्ञानं सुमार्गदीपं सम्यक्त्वं तदपराङ्मुखत्वाय । चारित्रमास्रवघ्नं क्षपयति कर्म्माणि तु तपोऽग्निः ॥ १ ॥" इति। इह यत् प्राग्निर्युक्तिकृताऽभ्यधायि—श्रुतज्ञानेऽपि जीवो वर्त्तमानः सन् न प्राप्नोति मोक्षमिति, तत्प्रतिज्ञागाथासूत्रं, तत्रैव सूत्रसूचितः खल्वयं हेतुरवगन्तव्यः, कुतः ?, तस्य क्षायोपशमिकत्वात्, दृष्टान्तोऽपि सूत्रसूचितोऽयमवधिज्ञानवदिति, क्षायिकज्ञानाद्यवाप्तौ च मोक्षावाप्तिरिति तत्त्वं, ततः श्रुतस्यैव क्षायोपशमिकभावमुपदर्शयति—

भावे खओवसमिए दुवालसंगंपि होइ सुयनाणं। केवलियनाणलंभो नण्णत्थ खए कसायाणं ॥ १०४ ॥

भवनं भावो भवतीति वा भावस्तस्मिन्, स च औदयिकाद्यनेकभेदस्तत आह-क्षायोपशमिके, द्वादशाङ्गानि यत्र तत् द्वादशाङ्गम्, अपिशब्दादङ्गबाह्यमपि, भवति श्रुतज्ञानम्, उपलक्षणमेतत्, मत्यादिज्ञानत्रयमपि सामायिकचतुष्टयमपि, तथा केवलस्य भावः कैवल्यं-घातिकर्मवियोग इत्यर्थः तस्मिन् ज्ञानं कैवल्यज्ञानं, कैवल्ये सति ज्ञानग्रहणेन इह यो 'बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते' इति वचनात् प्रकृतिविमुक्तस्य बुद्ध्यभावात् ज्ञानाभाव इति प्रतिपन्नस्तस्य प्रकृतिमुक्ताज्ञानिपुरुषप्रतिपादनपरकुनयमतव्यवच्छेदमाह, तस्य लाभः-प्राप्तिः, कथं ?-कषायाणां-क्रोधादीनां क्षये सति, नान्यत्र, तृतीयार्थे सप्तमी, नान्येन प्रकारेण, छद्मस्थवीतरागावस्थायां कषायक्षये सत्यप्यक्षेपेण कैवल्यज्ञानाभावे ज्ञानावरणक्षयानन्तरं चावश्यभावे कषायक्षयग्रहणं प्राधान्यख्यापनार्थं, कषायक्षय एव सति निर्वाणं, नान्यथा, कषायक्षय एव सति त्रयाणामपि सम्यक्त्वादीनां क्षायिकत्वसिद्धेः, नन्वेवं तर्हि यदादावुक्तं श्रुतज्ञानेऽपि वर्त्तमानः सन् जीवो न प्राप्नोति मोक्षं, यस्तपःसंयमात्मकयोगशून्य इति विशेषणं तदनर्थकं, श्रुतेऽपि सति तपःसंयमात्मकसहिष्णोरपि मोक्षाभावात्, सत्यमेतत्, केवलं क्षायोपशमिकसम्यक्त्वश्रुतचारित्राणामपि समुदितानां क्षायिकसम्यक्त्वादिनिबन्धनत्वेन परम्परया मोक्षहेतुत्वमस्तीत्यदोषः। आह-प्रतिपन्नमस्माभिर्मोक्षकारणकारणं श्रुतादि, परं तस्यैव कथमलाभो लाभो वेति ?, उच्यते—

अट्ठण्हं पयडीणं उक्कोसट्ठिईएँ वट्टमाणो उ। जीवो न लहइ सामाइयं चउण्हंपि एगयरं ॥ १०५ ॥

अष्टानां प्रकृतीनां-ज्ञानावरणीयादिकर्म्मप्रकृतीनाम् उत्कृष्टा चासौ स्थितिश्च उत्कृष्टस्थितिस्तस्यां वर्त्तमानो जीवो न लभ-

ते-न प्राप्नोति,किन्तदित्याह-सामायिकं, किं तदित्याह-चतुर्णां-सम्यक्त्वसामायिकश्रुतसामायिकदेशविरतिसामायिकसर्वविरतिसामायिकानामेकतरम्-अन्यतमद्, अपिशब्दात् मतिज्ञानादि च न लभते, न केवलमेतानि न लभते, पूर्वप्रतिपन्नोऽप्यायुर्वर्जकर्मोत्कृष्टस्थितौ न भवति, यतोऽवाप्तसम्यक्त्वस्तत्परित्यागेऽपि न भूयो ग्रन्थिमुल्लङ्घ्योत्कृष्टस्थितीः कम्मप्रकृतीर्बध्नाति, 'बंधेण न वोलइ कयाइं'ति वचनात्, एष सिद्धान्तिकाभिप्रायः,कर्म्मग्रन्थिकास्तु भिन्नग्रन्थेरप्युत्कृष्टस्थितिबन्धो भवतीति प्रतिपन्नाः, आयुषस्तूत्कृष्टस्थितौ वर्त्तमानः सम्यक्त्वश्रुतसामायिकयोरनुत्तरसुर उपपातकाले पूर्वप्रतिपन्नो न प्रतिपद्यमानकः,पूर्वमवश्यं प्रतिपन्नत्वात्,आयुषस्तु जघन्यस्थितौ वर्त्तमानो न पूर्वप्रतिपन्नो नापि प्रतिपद्यमानकः,आयुर्जघन्यस्थितिः क्षुल्लकभवग्रहणप्रमाणा, सा च वनस्पतिषु, न च वनस्पतिषु सम्यक्त्वस्यापि पूर्वप्रतिपन्नो नापि प्रतिपद्यमानकः, सास्वादनसम्यक्त्वसहितस्यापि तेष्वनुत्पादात्, 'उभयाभावो पुढवाइएसु' इति वचनात्, प्रकृतीनां चोत्कृष्टेतरभेदभिन्ना स्थितिरियं-ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां उत्कृष्टा स्थितिस्त्रिंशत्सागरोपमकोटीकोट्यः सप्ततिर्मोहनीयस्य नामगोत्रयोर्विंशतिः त्रयस्त्रिंशत्सागरोपमाण्यायुष्कस्येति, जघन्या तु द्वादश मुहूर्त्ता वेदनीयस्य नामगोत्रयोरष्टौ शेषाणामन्तर्मुहूर्त्तमिति, उक्तं च-''वीसमयरोवमाणं कोडाकोडीउ नामगोयाणं। सयरी मोहस्स ठिई सेसाणं तीस उक्कोसा ॥१॥ आउस्स सागराइं तेत्तीसं अवरतो मुहुत्तंतो। अट्ठ उ नामागोए वेयणिए बारस मुहुत्ता ॥२॥''(वि.११८७-८) नन्वेताः कर्म्मप्रकृतयः किं युगपदेवोत्कृष्टां स्थितिमासादयन्ति उत एकस्यामुत्कृष्टस्थितिमापन्नायां सत्यामन्या अपि नियमत उत्कृष्टस्थितयो जायन्ते, आहोश्विदन्यथा वैचित्र्यमिति ?, उच्यते, अन्यथा वैचित्र्यं, तथाहि-मोहनीयस्योत्कृष्टायां स्थितौ शेषाणा-

मपि षण्णामुत्कृष्टैव स्थितिः, आयुषस्तु उत्कृष्टा वा मध्यमा वा, न तु जघन्या, मोहनीयरहितानां तु शेषप्रकृतीनामन्यतमस्या उत्कृष्टस्थितिसद्भावे मोहनीयस्य शेषाणां च उत्कृष्टा वा मध्यमा वा, न तु जघन्येति, उक्तं च—"मोहस्सुक्कोसाए ठिईएँ सेसाण छण्हमुक्कोसा। आउस्सुक्कोसा वा मज्झमिया वा न उ जहण्णा ॥ १ ॥ मोहविवज्जुक्कोसट्ठिईएँ मोहस्स सेसियाणं च। उक्कोस मज्झिमा वा कस्सइ न जहण्णिया होज्जा ॥ २ ॥ (वि. ११८९-९०)" तदेवमुक्तं सम्यक्त्वादीनामलाभकारणम्, अधुना लाभकारणमाह—

सत्तण्हं पयडीणं अब्भिंतरओ उ कोडिकोडीए। काऊण सागराणं जइ लहइ चउण्हमण्णयरं ॥ १०२ ॥

सप्तानामायुर्वर्जानां कर्मप्रकृतीनां या पर्यन्तवर्त्तिनी स्थितिस्तामङ्गीकृत्य सागरोपमाणां कोटाकोटी तस्या अभ्यन्तर एव-मध्य एव, तुशब्दोऽवधारणार्थः, कृत्वा आत्मानमिति गम्यते, यदि लभते-यदि प्राप्नोति चतुर्णा-श्रुतसामायिकादीनामन्यतमत्, तत एव लभते नान्यथा, पाठान्तरं 'काऊण सागराणं ठिइं लभइ चउण्हमण्णयरं' तत्र सागरोपमाणां कोटीकोट्या अभ्यन्तरतो-मध्ये कृत्वा स्थितिं लभते चतुर्णामन्यतमत्, एष गाथाक्षरार्थः, इयमत्र भावना-आयुर्वर्जानां सप्तानां कर्मप्रकृतीनां यदा स्थितिः पर्यन्तवर्त्तिनी पल्योपमासङ्ख्येयभागहीनसागरोपमकोटीकोटीप्रमाणा अवतिष्ठते तदा घनरागद्वेषपरिणामरूपोऽत्यन्तदुर्भेददारुग्रन्थिवत्कर्मग्रन्थिर्भवति, उक्तं च-"अंतिमकोडाकोडीएँ, सव्वकम्माण आउवज्जाणं। पलियासंखेज्जइमे भागे खीणे हवइ गंठी ॥१॥ गंठित्ति सुदुब्भेदो कक्खडघणरूढगूढगंठिव। जीवस्स कम्मजणितो घणरागद्दोसपरिणामो ॥२॥"(वि. ११९४-५)तस्मिंश्च कर्मग्रन्थावपूर्वकरणनामविशेषविशुद्धिकुठारधारया भिन्ने परमपदहेतुः

सम्यक्त्वलाभ उपजायते, केवलं कर्म्मग्रन्थेर्भेद एव मनोविघातपरिश्रमादिभिर्दुःसाधः, तथाहि—स जीवः कर्मरिपुमध्यगतस्तं प्राप्य विघातयन्नतीव परिश्राम्यति, प्रभूतकर्म्मारातिसैन्यान्तकारितया सञ्जातखेदत्वात्, महासमरशिरसि दुर्जयापाकृतानेकशत्रुगणः सुभट इव, उक्तं च—"भिन्नंमि तंमि लाभो संमत्ताईण मोक्खहेऊणं । सो य दुलभो परिस्समचित्तविघायाइविग्घेहिं ॥ १ ॥(वि.११९६)" अपरस्त्वाह—ननु किं तेन कर्मग्रन्थिना भिन्नेन ? किं वा सम्यक्त्वादिना अवाप्तेन ? यावता यथाऽतिदीर्घा कर्म्मस्थितिः सम्यक्त्वादिगुणरहितेनैव क्षपिता एवं कर्म्मशेषमपि गुणरहित एव क्षपयित्वा विवक्षितफलभाग् भविष्यतीति, उच्यते, स हि तस्यामवस्थायां प्रवर्त्तमानोऽनासादितगुणान्तरो न शेषक्षपणया विशिष्टफलप्रसाधनायालं, चित्तविघातादिप्रचुरविघ्नसङ्कुलत्वात्, विशिष्टायाश्चाप्राप्तपूर्वफलप्राप्तेः प्रागभ्यस्तक्रिययाऽवाप्तुमशक्यत्वाच्च, अनेकसंवत्सरानुपालिताचाम्लादिपुरश्चरणक्रियाऽऽसादितगुणान्तरसहायक्रियारहितविद्यासाधकवद्, उक्तं च—"कम्मट्ठिई सुदीहा खविया जइ निग्गुणेण सेसंपि । खवेउ निग्गुणच्चिय किं थ पुणो दंसणादीहिं ? ॥१॥ आचार्य आह—"पाएण पुव्वसेवा परिमउई साहणंमि गुरुतरिया । होइ महाविज्जाए किरिया पायं सविग्घा य ॥ २ ॥ तह कम्मट्ठिइखवणे परिमउई मोक्खसाहणे गुरुई । इह दंसणाइकिरिया, दुलहा पायं सविग्घा य ॥३॥(वि.११९७-२००) अथवा यत एव बह्वी कर्म्मस्थितिरनेनोन्मूलिता अत एवापचीयमानदोषस्य सम्यक्त्वादिगुणलाभः सञ्जायते, अशेषकर्म्मपरिक्षये सिद्धत्ववत्, तत एव च मोक्षः, ततो न शेषमपि कर्म्म गुणरहित एवापाकृत्य मोक्षं प्रसाधयति, आह च—"अहव जउच्चिअ सुबहुं खविअं तो निग्गुणो न सेसंपि । स खवेइ जओ लभए संमत्तसुआइगुणलाभं ॥ १ ॥ (वि.१२०१)" इति । सम्प्रति सम्यक्त्वादिगुणा-

वाप्तिविधिरुच्यते, इह जीवा द्विविधा भवन्ति, तद्यथा–भव्याश्च अभव्याश्च, तत्र भव्यानां करणत्रयं भवति, करणं नाम सम्यक्त्वाद्यनुगुणो विशुद्धरूपः परिणामविशेषः, तद्यथा–यथाप्रवृत्तकरणमपूर्वकरणमनिवर्त्तिकरणं, तत्र यथैव–अनादिसंसिद्धेनैव प्रकारेण प्रवृत्तं यथाप्रवृत्तं क्रियते कर्म्मक्षपणमनेनेति करणं यथाप्रवृत्तं च तत्करणं च यथाप्रवृत्तकरणम्–अनादिकालात्कर्म्मक्षपणाय प्रवृत्तो गिरिसरिदुपलघोलना[ न्यायेन ] कल्पोऽध्यवसायविशेषो यथाप्रवृत्तकरणमिति, तथा अप्राप्तपूर्वमपूर्वं स्थितिघातरसघाताद्यपूर्वार्थनिर्वर्त्तकं वा अपूर्वकं, तच्च तत्करणं च अपूर्वकरणं, निवर्त्तनशीलं निवर्त्ति न निवर्त्ति अनिवर्त्ति–आसम्यग्दर्शनलाभान्न निवर्त्तत इत्यर्थः, ततः प्राग्वत्करणशब्देन सह विशेषणसमासः, एतानि त्रीण्यपि यथोत्तरं विशुद्धविशुद्धतराध्यवसायरूपाणि भवन्ति भव्यानाम्, अभव्यानां त्वाद्यमेव करणं, तत्र अनादिकालादारभ्य यावद् ग्रन्थिस्थानं तावदाद्यं, ग्रन्थिं तु समतिक्रामतो द्वितीयं, प्राक्तनात् विशुद्धतराध्यवसायरूपेण तेन ग्रन्थेर्भेदकरणात्, सम्यग्दर्शनलाभाभिमुखस्य तृतीयम्, उक्तं च—"करणं अहापवत्तं अपुव्वमनियट्टिमेव भवाणं। इयरेसिं पढमं चिय भन्नइ करणं तु परिणामो ॥ १ ॥ जा गंठी ता पढमं गंठिं समइच्छतो हवइ बीयं। अनियट्टीकरणं पुण सम्मत्तपुरक्खडे जीवे ॥२॥" (वि॰१२०२–३) सम्यक्त्वं पुरस्कृतम्–अभिमुखं कृतं येन स सम्यक्त्वपुरस्कृतोऽभिमुखसम्यक्त्व इत्यर्थः तस्मिन् जीवे सम्प्रति करणत्रयमङ्गीकृत्य सामायिकलाभदृष्टान्तानभिधित्सुराह—

पल्लगगिरिसरिओवल–पिवीलिया–पुरिस–पह–जरग्गहिया ।
कोद्दव–जल–वत्थाणि य सामाइयलाभदिट्ठंता ॥ १०७ ॥

इह सामायिकलाभे नव दृष्टान्ताः, तद्यथा-प्रथमः पल्यकदृष्टान्तः १ द्वितीयो गिरिसरिदुपलदृष्टान्तः २ तृतीयः पिपीलिकादृष्टान्तः ३ चतुर्थः पुरुषदृष्टान्तः ४ पञ्चमः पथदृष्टान्तः ५ षष्ठो ज्वरगृहीतदृष्टान्तः ६ सप्तमः कोद्रवदृष्टान्तः ७ अष्टमो जलदृष्टान्तः ८ नवमो वस्त्ररूपः ९। तत्र प्रथमपल्यकदृष्टान्तभावना-पल्यको नाम लाटदेशे धान्यालयः, तत्र यथा कश्चित् महापल्ये धान्यं स्वल्पं स्वल्पतरं प्रक्षिपति, प्रचुरं प्रचुरतरं तत आदत्ते, तत एवं ग्रहणनिक्षेपकरणे कालान्तरेण स रिक्तीभवति, एवं कर्म्मधान्यपल्ये जीवोऽनाभोगप्रवृत्तेन यथाप्रवृत्तकरणेन स्वल्पं स्वल्पतरमुपचिन्वन् प्रभूतं प्रभूततरमपचिन्वन् गच्छता कालेन ग्रन्थिमासादयति, पुनस्तं भिन्दानस्यापूर्वकरणं सम्यग्दर्शनलाभाभिमुखस्यानिवर्त्तीति, एष पल्यकदृष्टान्तः, उक्तं च-"जो पल्लेऽइमहल्ले धन्नं पक्खिवइ थोवथोवतरं। सोहेइ बहुबहुतरं झिज्जइ थोवेण कालेण ॥१॥ तह कम्मधन्नपल्ले, जीवोऽणाभोगतो बहुतरागं। सोहंतो थोवतरं, गिण्हंतो पावए गंठिं ॥२॥" (वि. १२०५-६) अत्र पर आह-नन्वेष दृष्टान्तोऽनुपपन्नो, यतः-संसारिणो योगवतः प्रतिसमयं चयापचयावुक्तौ, तत्रासंयतस्य बहुतरस्य चयोऽल्पतरस्यापचयः, अत आगमः-पल्ले महइमहल्ले, कुंभं पक्खिवइ सोहई नालिं। अस्संजए अविरए बहु बंधइ निज्जरइ थोवं ॥ १ ॥ पल्ले महइमहल्ले, कुंभं सोहेइ पक्खिवे नालिं। जे संजए पमत्ते बहुनिज्जर बंधए थोवं ॥ २ ॥ पल्ले महइमहल्ले कुंभं सोहेइ पक्खिव न किंचि। जे संजएऽपमत्ते, बहु निज्जर बंधइ न किंचि ॥ ३ ॥ (श्राव. ३५-३६-३७) ततो नाम पूर्वमसंयतस्य मिथ्यादृष्टेरतिप्रभूततरकर्म्मबन्धस्य कुतो ग्रन्थिदेशप्राप्तिसम्भवो ? यतः सम्यक्त्वावाप्तिरिति, तदयुक्तमभिप्रायापरिज्ञानात्, इदं हि सूत्रं बाहुल्यमङ्गीकृत्य प्रवृत्तं, प्रायेणासंयत उक्तप्रकारेण बध्नाति, नतु सर्व एवासंयत

एवमेव, ततो न कश्चिद्दोषः, उक्तं च-"एयमिह ओघविसयं भणियं सबे न एवमेवत्ति। अस्संजतो य एवं पडुच्च ओसन्नभावं तु ॥ १ ॥" (श्राव. ३८) अथैतदेवं कथमवसीयते यथेदं सूत्रं बाहुल्यविषयं न पुनः सर्व एवासंयत एवमेव बध्नातीति, उच्यते, अन्यथा बन्धाभावप्रसङ्गात्, तथाहि-यदि सर्व एवासंयतः सूत्रोक्तप्रकारेण कर्मपुद्गलोपादानमादत्ते ततः कालान्तरे प्रतिदिवसं पुरुषसहस्रदशकेन रूप्यकपञ्चकग्रहणे एकरूप्यकमोक्षे च (ऽर्ध) दिवसत्रयमध्ये लक्षस्य व्यवच्छेद इव सर्वपुद्गलानां जीवैर्ग्रहणतोऽभावः प्राप्नोति, तदभावे च बन्धाभावः, बन्धयोग्यकर्म्मपुद्गलासम्भवात्, आह च-"पावइ बंधाभावो अन्नहा पोग्गलाणऽभावातो। इयबुद्धिगहणतो ते सबे जीवेहिं जुज्जंति ॥ १ ॥" (श्राव. ३९) अथ मन्येथाः-गृहीतपुद्गलानामसङ्ख्येयकालादूर्द्ध्वमवश्यं मोक्षः, पुद्गलानामुत्कर्षतोऽप्यसङ्ख्येयकालस्थितिकत्वात्, ते च मुच्यमानाः प्रतिसमयं सर्वजीवेभ्योऽप्यनन्तगुणाः, ततः कथं पुद्गलानामसम्भवतो बन्धाभावप्रसङ्गः ?, उक्तं च-"मोक्खु असंखेज्जातो, कालातो ते य जं जिएहिंतो। भणियाणंतगुणा खलु न एस दोसो ततो जुत्तो ॥ १ ॥" (श्राव. ४०) तदेतदयुक्तम्, मोक्षो हि गृहीतानां कियत्कालातिक्रमे भवति, ग्रहणं त्ववश्यं प्रतिसमयं प्रतिजीवं च सर्वजीवेभ्योऽनन्तगुणानां, ततः कथं प्राक्प्रसञ्जितदोषानवकाश इति, आह च-"गहणमणंताण न किं जायइ समएण ता कहमदोसो ?" ॥ (श्राव. ४०॥) इति, अथ ब्रुवीथाः-एवंरूपस्तावदागमो विजृम्भते 'जाव णं एस जीवे एयइ वेयइ चलइ फंदइ घट्टइ खुब्भइ उदीरइ तं तं भावं परिणमइ ताव सत्तविहबंधए वा अट्ठविहबंधए वा छव्विहबंधए वा एगविहबंधए वा, नो चेव णं अबंधए सिया' (व्याख्या. सू.) इति, तथा संसारोऽपि प्रतिसमय-

बन्धकसत्त्वसंसृतिरूपः प्रत्यक्षत एवोपलभ्यते, तत आगमप्रामाण्यात्संसारदर्शनाच्च न तथा भूयसामनन्तानां पुद्गलानां ग्रहणं यथा बन्धयोग्यकर्म्मपुद्गलासम्भवतो बन्धाभावप्रसङ्ग इति, उक्तं च–"आगमसंसारातो, न तहाणंताण गहणं तु ।" (श्राव. ४१) इति, ननु यद्येवं सम्यक्त्वादेरपि प्रतिपादक आगमो वर्त्तते, "सम्मत्तंमि उ लद्धे पलियपुहुत्तेण सावतो होइ । चरणोवसमखयाणं सागर संखंतरा होंति ॥१॥ एवं अप्परिवडिए सम्मत्ते देवमणुयजम्मेसु । अन्नयरसेढिवज्जं एग-भवेणं च सवाइं ॥२॥"(वि.१२२२–३) तथा मोक्षोऽपि सम्यक्त्वादिगुणघातिनां कर्मपुद्गलानां सिद्ध एव, सम्यक्त्वादि-गुणानां स्वगतानां स्वसंवेदनतः परगतानां त्वनुमानतो दर्शनात्, ततो आगमतो मोक्षाच्च प्राचीनमेव सूत्रमोघविषयं किं नाभ्युपगम्यते ?, एवं ह्यनिष्टकल्पनापरिहारः पूर्वसूरिकृतव्याख्यानबहुमानं (च) तद्बहुमाने च सर्वज्ञाज्ञाराधनं, तस्मात्त-देत्र व्याख्यानं समीचीनमिति घटते ग्रन्थिदेशप्राप्तिरिति न कश्चिद्दोषः, उक्तं च—"आगममोक्खाउ न किंचि विसेसवि-सयत्तणेण सुत्तस्स । तो जाविहऽसंपत्ती न घडइ तम्हा अदोसो उ ॥ १ ॥" (श्राव.४२) इति भावितः पल्यकदृष्टान्तः, कथं पुनरनाभोगतः प्रचुरतरकर्मक्षय इति गिरिसरिदुपलदृष्टान्त उच्यते–गिरेः सरिद्गिरिसरित्तस्यामुपलाः–पाषाणा गिरि-सरिदुपलास्तद्वत्, इयमत्र भावना–यथा गिरिसरिदुपलाः परस्परसन्निकर्षेणोपयोगशून्या अपि विचित्राकृतयो जायन्ते एवं यथाप्रवृत्तकरणतो जीवास्तथाविधविचित्रकर्म्मस्थितिका विचित्रा इति यथाप्रवृत्तकरणतो ग्रन्थिदेशप्राप्तिः, उक्तं च— "गिरिनइवत्तणिपत्थरघडणोवम्मेण पढमकरणेणं । जा गंठी कम्मठिइक्खवणमणाभोगतो तस्स ॥ १ ॥ (वि.१२०७)"

[illegible] कीटिकाः तासां क्षितौ गमनं स्वभावतो भवति, कासांचित् स्वभावत एव

स्थाण्वारोहणमपरासां च सञ्जातपक्षाणां तस्मादप्युत्पतनमन्यासां स्थाणुबुध्नेऽवस्थानं कासाञ्चित् स्थाणुबुध्नात् प्रत्यवसर्प्पणम्, एवमिह जीवानां कीटिकानां क्षितौ स्वभावगमनमिव यथाप्रवृत्तकरणं, स्थाण्वारोहणसदृशमप्राप्तपूर्वत्वादपूर्वकरणं, ततः कीलकादुत्पतनमिव जीवानामनिवर्त्तिकरणम्, अनिवर्त्तिकरणबलेन मिथ्यादृष्टिगुणस्थानकादुल्लुत्य सम्यग्दृष्टिगुणस्थानगमनात्, स्थाणुबुध्नावस्थानसदृशं ग्रन्थावस्थानं, स्थाणुबुध्नादवसर्पणसदृशं ग्रन्थिदेशात्पुनर्व्यावर्त्तनेन दीर्घकर्म्मस्थितिकरणम्, उक्तं च–"खितिसाहावियगमणं, थाणूसरणं ततो समुप्पयणं । ठाणं थाणुसिरे वा ओरुहणं वा मुइंगाणं ॥ १ ॥ अत्र 'थाणुसिरे वा' इति स्थाणुबुध्ने इति द्रष्टव्यं, बुध्नप्रदेश एव भूतलसम्बद्धो निमग्नस्थाणुप्रदेशापेक्षया शिर इव शिरो विवक्षितम्, "खितिगमणंपिव पढमं थाणूसरणं व करणमप्पुव्वं । उप्पयणंपिव तत्तो, जीवाणं करणमनियट्टी ॥ २ ॥ थाणुव्व गंठिदेसो गंठियसत्तस्स तत्थऽवत्थाणं । ओयरणंपिव तत्तो पुणोवि कम्मट्ठितिविवड्ढी ॥ ३ ॥" (वि० १२०८-१०) अत्र 'थाणुव्व' इति स्थाणुबुध्नमिवेत्यर्थः । सम्प्रति पुरुषदृष्टान्तः–यथा केचन त्रयः पुरुषाः महानगरयियासया महाटवीं प्रपन्नाः सुदीर्घमध्वानमतिक्रामन्तः कालातिपातभीरवो भयस्थानमाढौकमानाः शीघ्रतरगतयो गच्छन्तः पुरस्तादुभयतः समुत्खातकरवालपाणी द्वौ तस्करावालोक्य तेषामेकः प्रतीपमनुप्रयातः अपरस्तु ताभ्यामेव गृहीतः अन्यस्तु तौ द्वावप्यतिक्रम्येष्टं नगरमनुप्राप्त इत्येष दृष्टान्तः, अयमुपनयः–इह संसाराटव्यां पुरुषास्त्रयः संसारिणः कल्प्यन्ते, पन्थाः कर्म्मस्थितिरतिदीर्घा, भयस्थानं ग्रन्थिदेशः, द्वौ तस्करौ रागद्वेषौ, तत्र प्रतीपगामी यो यथाप्रवृत्तिकरणेन ग्रन्थिदेशमासाद्य पुनरनिष्टपरिणामः सन् कर्मस्थितिमुत्कृष्टामासादयति, तस्करद्वयावरुद्धः प्रबलरागद्वेषोदयो ग्रन्थिकसत्त्वः, अभिलषितनगरानु-

प्राप्तोऽपूर्वकरणतो रागद्वेषचौरावपाकृत्यानिवर्त्तिकरणेनावाप्तसम्यग्दर्शनः, उक्तं च—“जह वा तिण्णि मणूसा जंतऽडविपहं सभावगमणेणं । वेलाइक्कमभीया तुरंति पत्ता य दो चोरा ॥ १ ॥ दट्ठुं मग्गतडत्थे, ते एगो मग्गतो पडिनियत्तो । बितितो गहितो तइतो समइक्कंतो पुरं पत्तो ॥ २ ॥ अडवी भवो मणूसा जीवा कम्मट्ठिई पहो दीहो । गंठी य भयट्ठाणं रागद्दोसा य दो चोरा ॥३॥ भग्गो ठिइपरिवुड्ढी, गहितो पुण गंठिओ गतो तइतो । सम्मत्तपुरं एवं जोइज्जा तिण्णि करणाणि ॥४॥” (वि.१२११-४) अत्र पर आह—ननु ग्रन्थिभेदं कृत्वा सम्यग्दर्शनमुपदेशतो लभते उतानुपदेशतः?, उच्यते, उभयथापि लभते, कथं?, पथः परिभ्रष्टपुरुषत्रयवत्, तथाहि—यथा कश्चित्पथः परिभ्रष्टपुरुष उपदेशमन्तरेणैव परिभ्रमन् स्वयं पन्थानमासादयति, कश्चित्तु परोपदेशेन, अपरस्तु नासादयत्येव, एवमिहाप्यत्यन्तप्रनष्टसत्पथो जीवो यथाप्रवृत्तकरणतः संसाराटव्यां परिभ्रमन् कश्चित् ग्रन्थिमासाद्यापूर्वकरणेन तमतिक्रम्यानिवर्त्तिकरणमनुप्राप्य स्वयमेव सम्यग्दर्शनादिरूपं निर्वाणपुरपन्थानं लभते, कश्चित्परोपदेशाद्, अपरस्तु प्रतीपगामी ग्रन्थिकसत्त्वो वा नैव लभते इति । सम्प्रति ज्वरदृष्टान्तः, यथा ज्वरः कश्चित्स्वयमेवापैति कश्चिद् भेषजोपयोगेन कश्चिन्नैवापैति, एवमिहापि मिथ्यादर्शनमहाज्वरोऽपि कश्चित्स्वयमेवापैति, कश्चिद्दर्हद्वचनभेषजोपयोगाद्, अपरस्तु तदौषधोपयोगेऽपि नापैति । कोद्रवदृष्टान्तः, यथा केषाञ्चित् कोद्रवाणां मदनभावः स्वयमेव कालान्तरतोऽपैति, केषाञ्चिद् गोमयादिपरिकर्म्मतोऽपरेषां तथापरिकर्म्मणायामपि नापैति, एवं मिथ्यादर्शनभावोऽपि केषाञ्चित्स्वयमेव विनाशमुपयाति, अपरेषामुपदेशपरिकर्म्मतः, अन्येषां तु न सर्वथाऽपैति, योऽपि च स्वयमुपदेशपरिकर्म्मणातो वाऽपैति सोऽप्यपूर्वकरणबलेन, तथाहि—स जीवोऽपूर्वकरणेन शुद्धार्धशुद्धाशुद्धमदनकोद्रवनिदर्श-

नेन मिथ्यात्वं मिथ्यादर्शनसम्यग्मिथ्यादर्शनसम्यग्दर्शनभेदेन त्रिधा विभजते, तथा चोक्तम्-"मयणा दरनिबलिया निबलिआ य जह कोद्दवा तिविहा। तह मिच्छत्तं तिविहं परिणामवसेण सो कुणइ ॥१॥" (वि.१२२०) ततोऽनिवर्त्तिकरण-विशेषात् सम्यक्त्वं प्राप्नोति, एवं करणत्रययोगवतो भव्यस्य सम्यग्दर्शनप्राप्तिः, अभव्यस्यापि कस्यचिद्यथाप्रवृत्तिकरणतो ग्रन्थिमासाद्यार्हदादिविभूतिसन्दर्शनतः प्रयोजनान्तरतो वा प्रवर्त्तमानस्य श्रुतसामायिकलाभो भवति, न शेषसामायि-कलाभः, उक्तं च-"नासेइ सयं व परिकम्मतो व जह कोद्दवाण मयभावो। नासइ तह मिच्छमओ, सयं व परिकम्मणाए वा ॥१॥ अप्पुव्वेण तिपुंजं, मिच्छत्तं कुणइ कोद्दवोवमया। अनियट्टीकरणेण उ सो सम्मद्दंसणं लहइ ॥२॥ तित्थं-कराइपूयं, दट्ठुं अण्णेण वावि कज्जेणं। सुयसामाइयलंभो होज्ज अभवस्स गंथिंमि ॥३॥" (वि.१२१५-७) सम्प्रति जलदृष्टान्तः, यथाहि-जलं मलिनमर्द्धविशुद्धं शुद्धं चेति त्रिधा भवति, एवं दर्शनमपि मिथ्यादर्शनादिभेदेन अपूर्वकरणतस्त्रिधा करोति, एवं वस्त्रदृष्टान्तेऽपि भावना कार्या, आह च-"जह वेह किंचि मलिणं, दरसुद्धं सुद्धमंबु वत्थं वा। एवं परिणामवसा, करेइ सो दंसणं तिविहं ॥१॥" (वि.१२२१) सम्प्रति प्रासङ्गिकमुच्यते-एवं सम्यग्दर्शनलाभोत्तरकालमवशेषकर्म्मणः पल्योपमपृथक्त्व-स्थितिपरिक्षयोत्तरकालं देशविरतिरवाप्यते, पुनः शेषायाः सङ्ख्येयेषु सागरोपमेषु स्थितेरपगतेषु सर्वविरतिः, तदनन्तरमव-शेषस्थितेरपि सङ्ख्येयेष्वेव सागरोपमेषु क्षीणेषु उपशमश्रेणिः, तदनन्तरं भूयोऽप्यवशिष्टस्थितेः सङ्ख्येयेषु सागरोपमेष्वपगतेषु क्षपकश्रेणिरिति, इयं च देशविरत्यादिप्राप्तिरेतावत्कालतो देवमनुष्येषूत्पद्यमानस्याप्रतिपतितस्योत्कर्षतो द्रष्टव्या, अन्यथा अन्यतरश्रेणिरहितस्य सम्यक्त्वादिगुणप्राप्तिरेकभवेनाप्यविरुद्धेति, भणितमानुषङ्गिकमिदानीं यदुदयात् सम्यक्त्वसामा-

यिकादिलाभो न भवति सञ्जातो वाऽपैति तानिह आवरणरूपान् कषायान् प्रतिपादयन्नाह, यदिवा यदुक्तं 'केवलज्ञानलाभो नान्यत्र कषायक्षयादि'ति, ते कषायाः के? किंसञ्ज्ञाका वा? को वा कस्य सम्यक्त्वादिसामायिकस्यावरणं? को वा खलु कस्योपशमादिक्रम? इत्यमुमर्थमभिधित्सुराह–

पढमिल्लुआण उदए नियमा संजोयणाकसायाणं। सम्मद्दंसणलंभं भवसिद्धीयावि न लहंति ॥ १०८ ॥

प्रथमा एव प्रथमेल्लुकाः, देशीवचनमेतत्, यथा 'पढमेल्ला एत्थ घरे'त्यादि, तेषां प्रथमेल्लुकानाम्–अनन्तानुबन्धिनां क्रोधादीनां, तेषां प्राथम्यं सम्यक्त्वाख्यप्रथमगुणविघातित्वात् क्षपणक्रमाद्वा, उदयः–उदयावलिकाप्रविष्टानां तत्पुद्गलानामुद्भूतसामर्थ्यता तस्मिन्नुदये, नियमेन अस्य पदस्य व्यवहितपदेन सह सम्बन्धः तं च दर्शयिष्यामः, सम्प्रति पुनः प्रथमेल्लुका एव विशेष्यन्ते, किंविशिष्टानां प्रथमेल्लुकानाम्?–कर्म्मणा तत्फलभूतेन वा संसारेण सह संयोजयन्ति जीवमिति संयोजनाः, उक्तं च–"खवणं पडुच्च पढमा पढमगुणविघाइणोत्ति से (वा) जम्हा। संजोयणा कसाया भवादिसंजोयणातो य॥१॥" (वि.१२२६) ते च कषायाश्च संयोजनाकषायाः, 'कषाया' इति कषन्ति–परस्परं हिंसन्ति प्राणिनोऽस्मिन्निति कषः–संसारः कर्म्म वा ततः कषः–कर्म्म भवो वा तस्य आयो–लाभो येभ्यस्ते कषायाः, अथवा कषं–संसारमाययन्ति–गमयन्तीति कषायाः, आह च–"कम्मं कसो भवो वा कसमातो सिं जतो कसाया तो। कसमाययंति व जतो गमयंति कसं कसायत्ति ॥ १ ॥" (वि.१२२७) तेषां प्रथमेल्लुकानां संयोजनकषायाणामुदये किम्?–नियमेन सम्यक्–अविपरीतं दर्शनं सम्यग्दर्शनं तस्य लाभः–प्राप्तिः सम्यग्दर्शनलाभः तं, भवे सिद्धिर्येषां ते भवसिद्धिकाः, सर्वेषामेव भवे सति सिद्धिर्भवति ततः किं

भवग्रहणेन ?, सत्यमेतत्, केवलं भवग्रहणादिह तद्भवो गृह्यते, तद्भवसिद्धिका अपि न लभन्ते, किं पुनः परीत्तसंसारिणः अभव्या वेति ॥ उक्ताः सम्यक्त्वस्यावरणभूताः कषायाः, सम्प्रति देशविरत्यावरणभूतान् तान् प्रतिपादयति—

बीयकसायाणुदए, अपच्चक्खाणनामधेज्जाणं । सम्मदंसणलंभं, विरयाविरइं न उ लहंति ॥ १०९ ॥

द्वितीयाश्च ते कषायाश्च द्वितीयकषायास्तेषां, द्वितीयता देशविरतिलक्षणद्वितीयगुणविघातित्वात् क्षपणक्रमाद्वा, उदये, 'प्रत्याख्याननामधेयानां' न विद्यते देशतः सर्वतो वा प्रत्याख्यानं येषूदयप्राप्तेषु तेऽप्रत्याख्यानाः, सर्वनिषेधवाची नञ्, आह च—"सव्वं देसो व जतो, पच्चक्खाणं न जेसिमुदएणं । ते अप्पच्चक्खाणा सवनिसेहे मतोऽकारो ॥ १ ॥" (वि. १२३२) अप्रत्याख्याना इति नामधेयं येषां तेऽप्रत्याख्याननामधेयास्तेषामुदये, सम्यग्दर्शनलाभं, भव्या लभन्त इति वाक्यशेषः, अयं च वाक्यशेषो विरताविरतिविशेषकतुशब्दसंसूचितो द्रष्टव्यः, आह च–"सम्मदंसणलंभं, लहिंति भविअत्ति वक्सेसोऽयं । विरयाविरइविसेसणतुसद्दसंलक्खितोऽयं च ॥ १ ॥" ( वि.१२३३ ) तथा विरमणं विरतं तथा न विरतिरविरतिर्विरतं चाविरतिश्च विरताविरतिर्देशविरतिरित्यर्थः तां नतु लभंते, तुशब्दात् सम्यग्दर्शनं तु लभंते इति भावः ॥ अथ तृतीयस्य सर्वविरतिगुणस्यावारकान् तृतीयकषायानाह–

तइयकसायाणुदए, पच्चक्खाणावरणनामधेज्जाणं । देसिक्कदेसविरइं, चरित्तलंभं न उ लहंति ॥ ११० ॥

सर्वविरतिलक्षणतृतीयगुणविघातित्वात् क्षपणक्रमाद्वा तृतीयास्ते च ते कषायाश्च तृतीयकषायास्तेषामुदये, किंविशिष्टानामित्याह–आवृण्वन्तीत्यावरणाः, 'कृद्बहुल'मिति कर्त्तर्यनट्, प्रत्याख्यानं–सर्वविरतिलक्षणं तस्यावरणाः प्रत्याख्यानाव-

रणाः प्रत्याख्यानावरणा इति नामधेयं येषां ते प्रत्याख्यानावरणनामधेयाः तेषां, नन्वप्रत्याख्याननामधेयानामुदये प्रत्याख्यानं नास्तीत्युक्तं, नञा प्रतिषिद्धत्वात्, इहापि चावरणशब्देन प्रत्याख्यानप्रतिषेध एवाभिधीयते, ततः क एषां प्रतिविशेषः ?, उच्यते, तत्र नञ् सर्वनिषेधवचनः, इह पुनराङ्मर्यादायामीषदर्थे वेति, ईषन्मर्यादया वाऽऽवृण्वन्तीत्यावरणास्ततः सर्वविरतिनिषेध एवायमावरणशब्दो वर्त्तते, न देशविरतिनिषेधे इति महान् विशेषः, आह च-"सव्वं पच्चक्खाणं, वरेंति ते जं न देसमेएणं। पच्चक्खाणावरणा आमज्जादीसदत्थेसु ॥ १ ॥" (वि.१२३५) देशश्च एकदेशश्च देशैकदेशौ, तत्र देशः-स्थूरप्राणातिपातादिः एकदेशस्तु-तस्यैव दृश्यवनस्पतिकायाद्यतिपातः तयोर्देशैकदेशयोर्विरतिः-निवृत्तिस्तां, लभंते इति वाक्यशेषः, अत्रापि वाक्यशेषः 'चरित्तलंभं नउ लहंती'त्यत्र तुशब्दोपदानाल्लभ्यते, यत आह-'चरित्ते'त्यादि, 'चर गतिभक्षणयोः' चरन्ति-गच्छन्त्यनिन्दितमनेनेति चरित्रं, 'खनसहलूधूवर्त्ते'रिति इत्रप्रत्ययः, चरित्रमेव चारित्रं, किमुक्तं भवति ?-अन्यजन्मोपात्ताष्टविधकर्म्मसञ्चयापचयाय चरणं-सर्वसावद्ययोगनिवृत्तिरूपं चारित्रमिति तस्य लाभश्चारित्रलाभस्तं न तु लभन्ते, तुशब्दात् देशैकदेशविरतिं तु लभन्ते एवेति ॥ अमुमेवार्थं सङ्गृह्य विभणिषुस्तथा चतुर्थकषायाणां यथाख्यातचारित्रादिविघातित्वं च दिदर्शयिषुराह-

मूलगुणाणं लंभं, न लहइ मूलगुणघाइणो उदए। संजलणाणं उदए न लहइ चरणं अहक्खायं ॥ १११ ॥

इह सम्यक्त्वं महाव्रतान्यणुव्रतानि च मूलभूता गुणाः मूलगुणाः, उत्तरगुणाधारा इत्यर्थः, तेषां मूलगुणानां लाभं न लभते-न प्राप्नोति, कदेत्याह-मूलगुणान् घातयितुं शीलं येषां ते मूलगुणघातिनः तेषां मूलगुणघातिनाम्-अनन्तानुब-

न्ध्यप्रत्याख्यानकषायप्रत्याख्यानावरणानां द्वादशानां कषायाणामुदये, तथा सम्–ईषत्परीषहादिसम्पाते चारित्रिणमपि ज्वलयन्तीति सञ्ज्वलनाः क्रोधादयस्तेषामुदये न लभते चरणं–चारित्रं, किं सर्वमेव ?, नेत्याह–'यथाख्यातं' यथैव तीर्थकरगणधरैराख्यातमकषायं भवति चारित्रमिति तथैव यत् तद् यथाख्यातम्, अकषायमित्यर्थः, सकषायं तु लभत एव ॥ न च यथाख्यातचारित्रमात्रोपघातिन एव सञ्ज्वलनाः, किन्तु शेषचारित्रदेशोपघातिनोऽपि, तदुदये शेषचारित्रस्यापि देशतोऽतिचारसम्भवात्, तथा चाह–

सव्वेवि य अइयारा संजलणाणं तु उदयओ होंति । मूलच्छेज्जं पुण होइ बारसण्हं कसायाणं ॥ ११२ ॥

सर्वेऽपि आलोचनादिच्छेदपर्यन्तप्रायश्चित्तशोध्या अपिशब्दात् कियन्तोऽपि अतिचरणान्यतिचाराः–चारित्रस्खलनविशेषाः सञ्ज्वलनानामेवोदयतो भवन्ति, तुशब्द एवकारार्थः, द्वादशानां पुनः कषायाणामुदयतो मूलच्छेद्यं भवति, मूलेन–अष्टमस्थानवर्त्तिना प्रायश्चित्तेन छिद्यते–अपनीयते यत् दोषजातं तत् मूलच्छेद्यम्, अशेषचारित्रोच्छेदकारीति भावः, पुनःशब्दः प्रक्रान्तार्थविशेषक एव, भवति द्वादशानामनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणलक्षणानां कषायाणामुदये, अथवा मूलच्छेद्यं दोषजातं यथासम्भवतो योज्यते, तद्यथा–प्रत्याख्यानावरणकषायचतुष्टयोदये सर्वविरतिरूपस्य चारित्रस्य मूलच्छेद्यं–सर्वनाशरूपं दोषजातं भवति, अप्रत्याख्यानकषायचतुष्टयोदये देशविरतिचारित्रस्य, अनन्तानुबन्धिकषायचतुष्टयोदये तु सम्यक्त्वस्येति ॥ यतश्चैवमतः–

बारसविहे कसाए, खइए उवसामिए व जोगेहिं । लब्भइ चरित्तलंभो, तस्स विसेसा इमे पंच ॥ ११३ ॥

द्वादशविधे—द्वादशप्रकारेऽनन्तानुबन्ध्यादिभेदभिन्ने कषाये—क्रोधादिरूपे 'क्षपिते' विध्याताग्नितुल्यतां नीते 'उपशमिते' भस्मच्छन्नाग्निकल्पतां प्रापिते वाशब्दात् क्षायोपशमिके च—अर्द्धविध्यातज्वलनसमतामुपनीते योगैः—मनोवाक्कायलक्षणैः प्रशस्तैर्हेतुभूतैः, किं ?—लभ्यते चारित्रलाभः, तत्र क्षयत उपशमतः क्षयोपशमतश्चाद्यानि त्रीणि लभ्यन्ते, सूक्ष्मसम्परायययथाख्यातचारित्रे पुनः क्षयत उपशमतो वा, न तु क्षयोपशमतः, उक्तं च—"खयतो वा समतो वा, खतोवसमतो व तिण्णि लब्भन्ति । सुहुमाहक्खायाइं खयतो समतो व नन्नत्तो ॥ १ ॥" (वि. १२५७) 'तस्य' चारित्रस्य सामान्यरूपस्य, न तु द्वादशविधकषायक्षयादिजन्यस्यैव, विशेषा—भेदा इमे—वक्ष्यमाणाः पञ्च ॥ तानेवाह—

सामाइय त्थ पढमं, छेओवट्ठावणं भवे बीयं । परिहारविसुद्धीअं, सुहुमं तह संपरायं च ॥ ११४ ॥

तत्तो य अहक्खायं, खायं सव्वंमि जीवलोयम्मि । जं चरिऊण सुविहिया, वच्चंतऽयरामरं ठाणं ॥ ११५ ॥

समो रागद्वेषरहितत्वाद् अयो-गमनं समायः, एष चान्यासामपि साधुक्रियाणामुपलक्षणं, सर्वासामपि साधुक्रियाणां रागद्वेषरहितत्वात्, समायेन निर्वृत्तं समाये भवं वा सामायिकं, यद्वा समानां—ज्ञानदर्शनचारित्राणामायो—लाभः समायः समाय एव सामायिकं, विनयादेराकृतिगणतया 'विनयादिभ्य' इति स्वार्थे इकण्, तच्च सर्वसावद्यविरतिरूपं, यद्यपि च सर्वमपि चारित्रमविशेषतः सामायिकं तथापि छेदादिविशेषैर्विशेष्यमाणमर्थतः शब्दान्तरतश्च नानात्वं भजते, प्रथमं पुनरविशेषणात् सामान्यशब्द एवावतिष्ठति, तच्च द्विधा—इत्वरं यावत्कथिकं च, तत्रेत्वरं भरतैरावतेषु प्रथमपश्चिमतीर्थंकरतीर्थेषु अनारोपितमहाव्रतस्य शैक्षकस्य विज्ञेयं, यावत्कथिकं प्रव्रज्याप्रतिपत्तिकालादारभ्याप्राणोपरमात्, तच्च महा-

विदेहतीर्थंकरतीर्थेषु भरतैरावतभाविमध्यद्वाविंशतितीर्थंकरतीर्थेषु च साधूनामवसेयं, तेषामुपस्थापनाया अभावात्, उक्तं च— "सव्वमिणं सामाइय छेयाइविसेसओ पुणो भिन्नं । अविसेसिय सामाइय ठियमिह सामन्नसन्नाए ॥१॥ सावज्जजोगविरइत्ति तत्थ सामाइयं दुहा तं च । इत्तरमावकहंतिय पढमं पढमंतिमजिणाणं ॥२॥ तित्थेसु अणारोवियवयस्स सेहस्स थेवकालीयं । सेसाणमावकहियं तित्थेसु विदेहयाणं च ॥३॥"(वि.१२६२-४) ननु चेत्वरमपि सामायिकं 'करोमि भदन्त ! सामायिकं यावज्जीव' मित्येवं यावदायुरागृहीतं, तत उपस्थापनाकाले तत्परित्यजतः कथं न प्रतिज्ञाभङ्गः ?, आह च—"ननु जावज्जीवाए इत्तरियंपि गहियं मुयंतस्स । होइ पइण्णालोवो, जहावकहियं मुयंतस्स ॥१॥" (वि.१२६५) उच्यते—ननु प्रागेवोक्तं-सर्वमेवेदं चारित्रमविशेषतः सामायिकं, सर्वत्रापि सर्वसावद्ययोगविरतिसद्भावात्, केवलं छेदादिविशुद्धिविशेषैर्विशेष्यमाणमर्थतः शब्दान्तरतश्च नानात्वं भजते, ततो यथा यावत्कथिकं सामायिकं छेदोपस्थापनं वा परमविशुद्धिविशेषरूपसूक्ष्मसम्परायादिचारित्रावाप्तौ न भङ्गमास्कन्दति तथेत्वरमपि सामायिकं विशुद्धिविशेषरूपच्छेदोपस्थापनावाप्तौ, यदि हि प्रव्रज्या परित्यज्यते तर्हि तद्भङ्ग आपद्यते, न तु तस्यैव विशुद्धिविशेषच्छेदोपस्थापनावाप्तौ, उक्तं च—"ननु भणियं सव्वं च्चिय, सामाइयमिणं विसुद्धितो भिन्नं । सावज्जविरइमइयं को वयलोवो विसुद्धीए ? ॥१॥उन्निक्खमतो भंगो जो पुण तं चिय करेइ सुद्धयरं।सन्नामेत्तविसिट्ठं सुहुमंपि व तस्स को भङ्गो ?॥२॥"(वि.१२६६-७)तथा छेदोपस्थापनं भवेत् द्वितीयं,तत्र छेदः पूर्वपर्यायस्य उपस्थापना च महाव्रतेषु यस्मिन् चारित्रे तत् छेदोपस्थापनं, तच्च द्विधा—सातिचारं निरतिचारं च, तत्र निरतिचारं यत् इत्वरसामायिकवतः शैक्षस्यारोप्यते, तीर्थान्तरसङ्क्रान्तौ वा, यथा पार्श्वनाथतीर्थाद्वर्द्धमानस्वामितीर्थं सङ्क्रामतः पञ्चयामधर्मप्रतिपत्तौ,सातिचारं यन्मूलगुण-

घातिनः पुनर्व्रतोच्चारणं, उक्तं च—"सेहस्स निरइयारं तित्थंतरसंकमे व तं होज्जा। मूलगुणघाइणो साइयारमुभयं च ठियकप्पे ॥१॥" (वि.१२६९) 'उभयं चे'ति सातिचारं निरतिचारं च स्थितकल्पे–प्रथमपश्चिमतीर्थकरतीर्थे, तथा परिहरणं परिहारः–तपोविशेषस्तेन विशुद्धिर्यस्मिन् चारित्रे तत्परिहारविशुद्धिः, तच्च द्विधा–निर्विशमानकं निर्विष्टकायकं च, तत्र निर्विशमानका–विवक्षितचारित्रसेवका निर्विष्टकायिका–आसेवितविवक्षितचारित्रकायाः, तदव्यतिरेकाच्चारित्रमेवमुच्यते, इह नवको गणश्चत्वारो निर्विशमानकाश्चत्वारश्चानुचारिणः एकः कल्पस्थितो वाचनाचार्यः, यद्यपि च सर्वेऽपि श्रुतातिशयसम्पन्नास्तथापि कल्पत्वात्तेषामेकः कश्चित्कल्पस्थितोऽवस्थाप्यते, निर्विशमानकानां चायं परिहारः–"परिहारियाण उ तवो जहन्न मज्झो तहेव उक्कोसो। सीउण्हवासकाले भणितो धीरेहिं पत्तेयं ॥१॥ तत्थ जहन्नो गिम्हे चउत्थ छट्ठं तु होइ मज्झिमओ। अट्ठममिह उक्कोसो एत्तो सिसिरे पवक्खामि ॥२॥ सिसिरे उ जहन्नाई, छट्ठाई दसमचरिमगो होइ। वासासु अट्ठमाई बारसपज्जंतगो नेओ ॥ ३ ॥ पारणगे आयामं, पंचसु गहु दोसऽभिग्गहो भिक्खे। कप्पट्ठियाइ पइदिण करेंति एमेव आयामं ॥ ४ ॥ एवं छम्मासतवं चरिउं परिहारगा अणुचरंति। अणुचरगे परिहारियपयट्ठिए जाव छम्मासा ॥५॥ कप्पट्ठितोवि एवं छम्मासतवं करेइ सेसा उ। अणुपरिहारगभावं वयंति कप्पठियत्तं वा ॥ ६ ॥ एवेसो अट्ठारसमासपमाणो उ वन्नितो कप्पो। संखेवतो विसेसो विसेससुत्ताउ नायव्वो ॥७॥ कप्पसमत्तीएँ तयं जिणकप्पं वा उवेंति गच्छं वा। पडिवज्जमाणगा पुण, जिणस्सगासे पवज्जंति ॥ ८ ॥ तित्थयरसमीवासेवगस्स पासे व नो उ अन्नस्स। एएसिं जं चरणं परिहारविसुद्धियं तं तु ॥ ९ ॥" (पंचव०) अथैते परिहारविशुद्धिकाः कस्मिन् क्षेत्रे काले वा भवन्ति ?, उच्यते, इह क्षेत्रादिनिरूपणार्थं विंशतिद्वाराणि, तद्यथा–क्षेत्रद्वारं १ कालद्वारं २

चारित्रद्वारं ३ तीर्थद्वारं ४ पर्यायद्वारं ५ आगमद्वारं ६ वेदद्वारं ७ कल्पद्वारं ८ लिङ्गद्वारं ९ लेश्याद्वारं १० ध्यानद्वारं ११ गणनाद्वारं १२ अभिग्रहद्वारं १३ प्रव्रज्याद्वारं १४ मुण्डापनद्वारं १५ प्रायश्चित्तद्वारं १६ कारणद्वारं १७ निष्प्रतिकर्म्मताद्वारं १८ भिक्षाद्वारं १९ पथद्वारं २०, तत्र क्षेत्रे द्विधा मार्गणा—जन्मतः सद्भावतश्च, तत्र यत्र क्षेत्रे जातस्तत्र जन्मतो मार्गणा, यत्र च कल्पे स्थितो वर्त्तते तत्र सद्भावतः, उक्तं च—"खेत्ते दुहेह मग्गण जम्मणतो चेव संतिभावे य। जम्मणतो जहिं जातो संतीभावो य जहिं कप्पे ॥१॥" (पंच.१४८५) तत्र जन्मतः सद्भावतश्च पञ्चसु भरतेषु पञ्चस्वैरवतेषु, न तु महाविदेहेषु, न चैतेषां संहरणमस्ति, येन जिनकल्पिका इव संहरणतः सर्वासु कर्म्मभूमिषु अकर्मभूमिषु वा प्राप्येरन्, उक्तं च—"खेत्ते भरहेरवएसु होंति संहरणवज्जिया नियमा।"(पं.१५२९) कालद्वारेऽवसर्प्पिण्यां तृतीये चतुर्थे वा अरके जन्म सद्भावः पञ्चमेऽपि, उत्सर्प्पिण्यां द्वितीये तृतीये चतुर्थे वा जन्म, सद्भावतः पुनः तृतीये चतुर्थे वा, उक्तं च—"ओसप्पिणीए दोसुं, जम्मणतो तीसु संतिभावेणं। उसप्पिणि विवरीतो, जम्मणतो संतिभावे य॥ २ ॥" (पंच.१४८७) नोत्सर्प्पिण्यवसर्प्पिणीरूपे चतुर्थारकप्रतिभागे काले न सम्भवन्ति, महाविदेहक्षेत्रेषु तेषामसम्भवात्, चारित्रद्वारे संयमस्थानद्वारेण मार्गणा, तत्र सामायिकस्य छेदोपस्थापनस्य च चारित्रस्य यानि जघन्यानि संयमस्थानानि तानि परस्परतुल्यानि, समानपरिणामत्वात्, ततोऽसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि संयमस्थानान्यतिक्रम्योर्ध्वं यानि संयमस्थानानि तानि परिहारविशुद्धिकयोग्यानि, तान्यपि च केवलिप्रज्ञया परिभाव्यमानान्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि, तानि प्रथमद्वितीयचारित्राविरोधीनि, तेष्वपि सम्भवात्, ततः ऊर्ध्वं यानि सङ्ख्यातीतानि संयमस्थानानि तानि सूक्ष्मसम्परायथाख्यातचारित्रयोग्यानि, उक्तं च—

"तुल्ला जहन्नठाणा संजमठाणाण पढमबीयाणं । तत्तो असंखलोगे गंतुं परिहारियट्ठाणा ॥ १ ॥ तेवि असंखा लोगा, अविरुद्धा चेव पढमबीयाणं । उवरिंपि ततोऽसंखा संजमठाणा उ दोण्हंपि ॥ २ ॥" (पंच. १५३०-१) तत्र परिहारविशुद्धिक-कल्पप्रतिपत्तिः स्वकीयेष्वेव संयमस्थानेषु वर्त्तमानस्य भवति, न शेषेषु, यदा त्वतीतनयमधिकृत्य पूर्वप्रतिपन्नो विवक्ष्यते तदा शेषेष्वपि संयमस्थानेषु भवेत्, परिहारविशुद्धिहेतुकल्पसमाप्त्यनन्तरमन्येष्वपि चारित्रेषु सम्भवात्, तेष्वपि च वर्त्तमान-स्यातीतनयमपेक्ष्य पूर्वप्रतिपन्नत्वाविरोधात्, उक्तं च-"सट्ठाणे पडिवत्ती अन्नेसुवि होज्ज पुव्वपडिवन्नो । तेसुवि वट्टंतो सो, तीयनयं पप्प वितीए ऊ ॥१॥" (पंच. १५३२) तीर्थद्वारे परिहारविशुद्धिको नियमात्तीर्थे प्रवर्त्तमान एव सति भवति, न तूच्छेदे नानुपपत्त्यां वा, तदभावे जातिस्मरणादिना, उक्तं च-"तित्थत्ति नियमतो च्चिय होइ स तित्थंमि न उण तदभावे । विग-एऽणुप्पन्ने वा जाइस्सरणाइएहिं तु ॥ १ ॥" (पंच. १४९१) पर्यायद्वारे पर्यायो द्विधा-गृहस्थपर्यायो यतिपर्यायश्च, एकैकोऽपि द्विधा-जघन्य उत्कृष्टश्च, तत्र गृहस्थपर्यायो जघन्य एकोनत्रिंशद्वर्षाणि यतिपर्यायो विंशतिः, द्वावपि चोत्कर्षतो देशोनपूर्वकोटी-प्रमाणौ, उक्तं च-"एयस्स एस नेओ गिहिपरियातो जहन्न गुणतीसो । जतिपरियातो वीसा दोसुवि उक्कोस देसूणा ॥१॥" (पंच. १४९४) आगमद्वारं अपूर्वमागमं स नाधीते, यस्मात्तं कल्पमधिकृत्योचितयोगाराधनत एव स कृतकृत्यतां भजते, पूर्वाधीतं तु विश्रोतसिकाक्षयनिमित्तं नित्यमेवैकाग्रमनाः सम्यक् प्रायोऽनुसरति, आह च-"अप्पुव्वं नाहिज्जइ, आगममेसो पडुच्च तं कप्पं । जमुचियपगहितजोगाराहणतो चेव कयकिच्चो ॥१॥ पुव्वाहीयं तु तयं पायं अणुसरइ निच्चमेवेसो । एगग्गमणो सव्वं विस्सो-यसिगाइखयहेऊ ॥ २ ॥" (पंच. १४९५-६) वेदद्वारे-प्रवृत्तिकाले वेदः पुरुषवेदो वा भवेत् नपुंसकवेदो वा, न स्त्रीवेदः, स्त्रियां

सवेदो वा भवेदवेदो वा, तत्र
परिहारविशुद्धिककल्पप्रतिपत्त्यसम्भवाद्, अतीतनयमधिकृत्य पुनः पूर्वप्रतिपन्नश्चिन्त्यमानः सवेदो वा भवेदवेदो वा, तत्र "वेदो पवित्तिकाले इत्थी-
सवेदः श्रेणिप्रतिपत्त्यभावे, उपशमश्रेणिप्रतिपत्तौ क्षपकश्रेणिप्रतिपत्तौ वा त्ववेद इति, उक्तं च—"वेदो पवित्तिकाले इत्थी- कल्पद्वारे स्थितकल्प एवायं,
वज्जो य होइ एगयरो।पुव्वपडिवन्नगो पुण, होज्ज सवेदो अवेदो वा॥१॥ (पंचव. १४९७)" कल्पद्वारे स्थितकल्प एवायं, किइकम्मे ५।
नास्थितकल्पे, 'ठियकप्पंमि य नियमा' इति वचनात्, तत्र 'आचेलक्कु १ देसिय २ सिज्जायर ३ रायपिंड ४ किइकम्मे ५। इत्येवंरूपेषु दशसु स्थानेषु ये स्थिताः
वय ६ जेट्ठ ७ पडिक्कमणे ८ मासं ९ पज्जोसवणकप्पे १० ॥ १ ॥' (पंच. १५००) इत्येवंरूपेषु दशसु स्थानेषु ये स्थिताः करणे चत्तारि
साधवस्तेषां कल्पः स्थितकल्पः, ये पुनः—"सेज्जायरपिंडंमी चाउज्जामे य पुरिसजेट्ठे य। किइकम्मस्स य करणे चत्तारि अस्थितास्तत्कल्पो-
अवट्ठिया कप्पा ॥ १ ॥"। इत्येवंरूपेषु चतुर्ष्ववस्थितेषु कल्पेषु स्थिताः शेषेषु चाचेलक्यादिषु षट्सु अस्थितास्तत्कल्पो- बीओ
ऽस्थितकल्पः उक्तं च—"ठिय अट्ठितो य कप्पो, आचेलक्काइएसु ठाणेसु। सव्वेसु ठिया पढमो चउठिय छसु अट्ठिया बीओ एकेनापि विना
॥ १ ॥" (पंच. १४९९) लिङ्गद्वारे नियमतो द्विविधेऽपि लिङ्गे भवति, तद्यथा—द्रव्यलिङ्गे भावलिङ्गे च, एकेनापि विना परिहारविशुद्धिकं
विवक्षितकल्पोचितसामाचार्ययोगात्, लेश्याद्वारे तेजःप्रभृतिकासु उत्तरासु तिसृषु विशुद्धासु लेश्यासु परिहारविशुद्धिकं नात्यन्तं सङ्क्-
कल्पं प्रतिपद्यन्ते, पूर्वप्रतिपन्नः पुनः कथञ्चित्सर्वास्वपि लेश्यासु भवति, तत्रापीतरासु अविशुद्धासु लेश्यासु नात्यन्तं सङ्क्- ताभ्यो
क्लिष्टासु वर्त्तते, तथाभूतासु च तासु वर्त्तमानो न प्रभूतं कालमवतिष्ठते, किन्तु स्तोकं, यतः स्ववीर्यवशात् झटित्येव ताभ्यो तीसु न
व्यावर्त्तते, अथ प्रथमत एव कस्मात्प्रवर्त्तते ?, उच्यते—कर्मवशात्, उक्तं च—"लेसासु विसुद्धासु य पडिवज्जइ तीसु न चित्ता
वण सेसासु। पुव्वपडिवन्नतो पुण होज्जा सव्वासुवि कहंचि ॥ १ ॥ नऽच्चंतसंकिलिट्ठासु थोवकालं च हंदि इयरासु। चित्ता

कम्माण गई तहावि विरियं फलं देइ ॥ २॥" ( पंच. १५०३-४ ) ध्यानद्वारे धर्म्मध्यानेन प्रवर्द्धमानेन परिहारिकं कल्पं प्रतिपद्यते, पूर्वप्रतिपन्नः पुनरार्त्तरौद्रयोरपि भवति, केवलं प्रायेण निरनुबन्धः, आह च-"झाणंमिवि नियमेणं पडिवज्जइ सो पवड्ढमाणेणं । इयरेसुऽवि झाणेसुं पुव्वपवन्नो न पडिसिद्धो ॥ १ ॥ एवं च कुसलजोगे उद्दामे तिव्वकम्मपरिणामो । रोद्दट्टेसुऽवि भावो, इमस्स पायं निरणुबन्धो ॥ २ ॥" ( पंच. १५०५-६ ) गणनाद्वारे जघन्यतस्त्रयो गणाः प्रतिपद्यन्ते, उत्कर्षतः शतसङ्ख्याः, पूर्वप्रतिपन्ना जघन्यत उत्कर्षतो वा शतशः, पुरुषगणनया जघन्यतः प्रतिपद्यमानाः सप्तविंशतिरुत्कर्षतः सहस्रं, पूर्वप्रतिपन्नकाः पुनर्जघन्यतः शतशः उत्कर्षतः सहस्रशः, आह च-"गणतो तिन्नेव गणा जहन्न पडिवत्ति सयस उक्कोसा । उक्कोस जहन्नेणं सयसोच्चिय पुव्वपडिवन्ना ॥१॥ सत्तावीस जहन्ना, सहस्समुक्कोसतो य पडिवत्ती । सयसो सहस्ससो वा, पडिवन्न जहन्न उक्कोसा ॥२॥" ( पंच. १५३४-५ ) अन्यच्च-यदा पूर्वप्रतिपन्नकल्पमध्यादेको निर्गच्छति अन्यः प्रविशति तदोनप्रक्षेपे प्रतिपत्तौ कदाचिदेकोऽपि भवति पृथक्त्वं वा, पूर्वप्रतिपन्नोऽप्येवं भजनया कदाचिदेकः प्राप्यते पृथक्त्वं वा, उक्तं च-"पडिवज्जमाण भयणाएँ होज्ज एक्कोऽवि ऊणपक्खेवे । पुव्वपडिवन्नयावि य, भइया एक्को पुहुत्तं वा ॥ १ ॥" ( पंच. १५३६ ) अभिग्रहद्वारे अभिग्रहाश्चतुर्विधाः, तद्यथा-द्रव्याभिग्रहाः क्षेत्राभिग्रहाः कालाभिग्रहा भावाभिग्रहाश्च, एते चान्यत्र चर्चिता इति न भूयश्चर्च्यन्ते, तत्र परिहारविशुद्धिकस्यैतेऽभिग्रहा न भवन्ति, यस्मादेतस्य कल्प एव यथोदितरूपोऽभिग्रहो वर्त्तते, उक्तं च-"दव्वाईय अभिग्गह, विचित्तरूवा न होंति पुण केई । एयस्स जाव कप्पो कप्पोच्चियऽभिग्गहो जेणं ॥ १ ॥ एयंमि गोयराई नियया नियमेण निरववादा य । तप्पालणं चिय परं एयस्स विसु-

द्विठाणं तु ॥ २ ॥" ( पं. १५०९-११ ) प्रव्रज्याद्वारे नासावन्यं प्रव्राजयति कल्पस्थितिरेषेतिकृत्वा, आह च-"पव्वावेइ न एसो अन्नं कप्पट्ठिइत्ति काऊणं।" ( पं. १५१० ) उपदेशं पुनर्यथाशक्ति प्रयच्छति, मुण्डापनाद्वारेऽपि नासावन्यं मुण्डयति, अथ प्रव्रज्यानन्तरं नियमतो मुण्डनमिति प्रव्रज्याग्रहणेनैव गृहीतमतः किमर्थमिदं पृथग् द्वारं ?, तदयुक्तं, प्रव्रज्यानन्तरं नियमतो मुण्डापनस्यासम्भवाद्, अयोग्यस्य कथञ्चिद्दत्तायामपि प्रव्रज्यायां पुनरयोग्यतापरिज्ञाने मुण्डापनाऽयोगात्, ततः पृथगिदं द्वारमिति। प्रायश्चित्तविधिद्वारे मनसाऽपि सूक्ष्ममप्यतिचारं प्राप्तस्य नियमतश्चतुर्गुरुकं प्रायश्चित्तं, यतोऽस्य कल्प एकाग्रताप्रधानस्ततस्तद्भङ्गे गुरुतरो दोष इति। कारणद्वारे—कारणं नाम आलम्बनं, तत्पुनः सुपरिशुद्धं ज्ञानादिकं, तच्चास्य न विद्यते येन तदाश्रित्यापवादपदसेविता स्यात्, एष हि सर्वत्र निरपेक्षः क्लिष्टकर्म्मक्षयनिमित्तं प्रारब्धमेव स्वं कल्पं यथोक्तविधिना समापयन् महात्मा वर्त्तते, उक्तं च—"कारणमालंबणमो तं पुण नाणाइयं सुपरिसुद्धं। एयस्स तं न विज्जइ उचियंतपसाहणा पायं ॥ १ ॥ सवत्थ निरवइक्खो, आढत्तं चिय दढं समाणिंतो। वट्टइ एस महप्पा, किलिट्ठकम्मक्खयनिमित्तं ॥ २ ॥ ( पं. १५१७-८ )" निष्प्रतिकर्म्मताद्वारे एष महात्मा निष्प्रतिकर्म्मशरीरोऽक्षिमलादिकमपि कदाचिन्नापनयति, न च प्राणान्तिकेऽपि समापतिते व्यसने द्वितीयपदमासेवते, उक्तं च—"निप्पडिकम्मसरीरो अच्छिमलाईवि नावणेइ सया। पाणंतिएविय तहा वसणंमि न वट्टए बीए ॥ १ ॥ अप्पबहुत्तालोयणविसयातीतो उ होइ एसत्ति। अहवा सुहभावातो बहुगं एयंचिय इमस्स ॥ २ ॥ ( पं. १५१९-२० )" भिक्षाद्वारे पथद्वारे च भिक्षा विहारक्रमश्चास्य तृतीयस्यां पौरुष्यां भवति, शेषासु च पौरुषीषु कायोत्सर्गो, निद्राऽपि चास्याल्पा द्रष्टव्या,

सूक्ष्मसंप-
रायः

यदि पुनः कथमपि जङ्घाबलमस्य परिक्षीणं भवति तथाप्येषोऽविहरन्नपि महाभागो न द्वितीयपदमापद्यते, किन्तु तत्रैव यथाकल्पमात्मीययोगं विदधातीति, उक्तं च—"तइयाए पोरिसीए भिक्खाकालो विहारकालो उ । सेसासु उ उस्सग्गो पायं अप्पा य निद्देति ॥ १ ॥ जंघाबलंमि खीणे अविहरमाणो उ न वीअमावज्जे । तत्थेव अहाकप्पं कुणइ य जोगं महाभागो ॥ २ ॥" ( पं. १५२१-२ ) एते च परिहारविशुद्धिका द्विविधाः, तद्यथा—इत्वरा यावत्कथिकाश्च, तत्र ये कल्पसमाप्त्यनन्तरं तमेव कल्पं गच्छं वा समुपयास्यन्ति ते इत्वराः, ये पुनः कल्पसमाप्त्यनन्तरमव्यवधानेन जिनकल्पं प्रतिपत्स्यन्ते ते यावत्कथिकाः, उक्तं च—"इत्तरिय थेरकप्पे, जिणकप्पे आवकहियत्ति ।" (पं. १५२३) अत्र स्थविरकल्पमुपलक्षणं स्वकल्पे चेति द्रष्टव्यं, तत्रेत्वराणां कल्पप्रभावादेव देवमनुष्यतिर्यग्योनिककृता उपसर्गाः सद्योघातिनः आतङ्का अतीवाविपह्याश्चातीव वेदना न प्रादुष्यन्ति, यावत्कथिकानां पुनः सम्भवेयुरपि, ते हि जिनकल्पं प्रतिपत्स्यमाना जिनकल्पभावमनुविदधति, जिनकल्पिकानां चोपसर्गादयः सम्भवन्तीति, उक्तं च—"इत्तरियाणुवसग्गा आयंका वेयणा य न हवंति । आवकहियाण-भइया" इति ॥ (पं. १५२६) 'सुहुमं तह संपरायं चे'ति 'तथे'त्यानन्तर्ये गाथाभङ्गभयाद् व्यवहितस्योपन्यासः, सूक्ष्ममित्यनुस्वारोऽप्यलाक्षणिकः, सूक्ष्मसम्परायं चतुर्थं चारित्रं, तत्र संपर्यैति संसारमनेनेति सम्परायः—कषायोदयः सूक्ष्मो—लोभांशावशेषः सम्परायो यत्र तत् सूक्ष्मसम्परायं, तच्च द्विधा—विशुद्ध्यमानकं सङ्क्लिश्यमानकं च, तत्र विशुद्ध्यमानकं क्षपकश्रेणिमुपशमश्रेणिं वा समारोहतः, सङ्क्लिश्यमानकं तूपशमश्रेणितः प्रच्यवमानस्य, उक्तं च—"सेढिं विलग्गतो तं विसुज्झमाणं ततो चयंतस्स । तह संकिलिस्समाणं परिणामवसेण विन्नेयं ॥१॥" (वि. १२७८) 'तत्तो अ अहक्खाय'मित्यादि, ततश्च—सूक्ष्म-

सम्परायान्तरं 'अथाख्यातम्' अथशब्दो यथार्थे आङ् अभिविधौ-याथातथ्येन अभिविधिना च यत् ख्यातं—कथितमकषायं चारित्रमिति तत् अथाख्यातं, उक्तं च-"अहसद्दो जाहऽत्थे आङऽभिविहीऍ कहियमक्खायं। चरणमकसायमुदितं तमहक्खायं जहक्खायं ॥१॥" (वि.१२७९) यथाख्यातमिति द्वितीयं नाम, तस्यायमन्वर्थः-यथा सर्वस्मिन् जीवलोके ख्यातं-प्रसिद्धमकषायं भवति चारित्रमिति तथैव यत् तद्यथाख्यातं, तथा चाह—ख्यातं-प्रसिद्धं सर्वस्मिन् जीवलोके, यत् कथंभूतमित्याह-यच्चरित्वा-आसेव्य शोभनं विहितम्-अनुष्ठानं येषां ते सुविहिताः-सुसाधवो व्रजन्त्यजरामरं-न विद्यते जरा यत्र तदजरं न म्रियते प्राणी यत्र तदमरम्, अच्प्रत्ययो बाहुलकात्, अजरं च तदमरं च अजरामरं-मोक्षलक्षणं स्थानं, इदं च द्विधा, तद्यथा—छाद्मस्थिकं कैवलिकं च, तत्र छाद्मस्थिकमुपशान्तमोहगुणस्थाने क्षीणमोहगुणस्थानके वा, कैवलिकं सयोगिकेवलिभवं अयोगिकेवलिभवं च। इह सूक्ष्मसम्परायं यथाख्यातचारित्रं च उपशमक्षयलभ्यमतः कर्मोपशमक्रमप्रदर्शनार्थमाह—

अण-दंस-नपुंसि-त्थीवेय-छक्कं च पुरिसवेयं च। दो दो एगंतरिए, सरिसे सरिसं उवसमेइ ॥ ११६ ॥

इह उपशमश्रेणिप्रारम्भको भवत्यप्रमत्तसंयत एव, अन्ये त्वविरतदेशविरतप्रमत्तसंयताप्रमत्तसंयतानामन्यतम इति, उपशमश्रेणिपर्यवसाने त्वप्रमत्तसंयतप्रमत्तसंयतदेशविरताविरतानामन्यतमः, उक्तं च-"उवसामगसेढीए पट्ठवगो अप्पमत्तविरतो उ। पज्जवसाणे सो वा होइ पमत्तो अविरतो वा ॥ १ ॥ अन्ने भणंति अविरयदेसपमत्तापमत्तविरयाणं। अन्नयरो पडिवज्जइ दंसणसमणम्मि उ नियट्टी ॥२॥ (वि. १२८५-६) स चेत्थमुपशमश्रेणिमारभते-'अण'त्ति 'अणरणे'त्यादि

दण्डकधातुः, अणन्तीव–अविकलहेतुत्वेनासातवेद्यं नरकाद्यायुष्कं च शब्दयन्त्याकारयन्तीत्यणाः–आद्याः क्रोधादयश्चत्वारः कषायाः, अथवा 'पदैकदेशे पदसमुदायोपचाराद् अण' इत्यनन्तानुबन्धिन इति द्रष्टव्यं, तत्रासौ प्रतिपत्ता प्रशस्तेष्वध्यवसायेषु वर्त्तमानः प्रथमं युगपदन्तर्मुहूर्त्तमात्रेण कालेनानन्तानुबन्धिनः क्रोधादीनुपशमयति, ततो दर्शनं दर्शस्तं–दर्शनं, तच्च त्रिविधं, तद्यथा—मिथ्यादर्शनं सम्यग्मिथ्यादर्शनं सम्यग्दर्शनञ्च, एतानि त्रीण्यपि युगपदन्तर्मुहूर्त्तमात्रेणोपशमयति, एवं सर्वत्र युगपदुपशमकालोऽन्तर्मुहूर्त्तप्रमाण एव द्रष्टव्यः, यदि पुरुषः प्रारम्भकः ततो 'नपुंस'त्ति अनुदीर्णमपि नपुंसकवेदमन्तर्मुहूर्त्तेनोपशमयति, ततः स्त्रीवेदं, तदनन्तरं हास्यरत्यरतिशोकभयजुगुप्सालक्षणं हास्यषट्कं, ततः पुरुषवेदम्, अथ स्त्रीप्रारम्भिका ततः प्रथमं नपुंसकवेदमुपशमयति, पश्चात् पुरुषवेदं तदनन्तरं हास्यादिषट्कं अथ नपुंसकः प्रारम्भकस्ततोऽसावनुदीर्णमपि प्रथमं स्त्रीवेदमुपशमयति ततः पुरुषं वेदं तदनन्तरं स्त्रीवेदम्, ततः हास्यादिषट्कं ततो नपुंसकवेदमिति, 'दो दो एगंतरिए' इत्यादि, इत ऊर्द्ध्वं द्वौ द्वौ–क्रोधाद्यौ एकान्तरितौ–संज्वलनक्रोधान्तरितौ सदृशौ–क्रोधादितया परस्परं तुल्यौ सदृशं युगपदेव प्रत्येकमन्तर्मुहूर्त्तेनोपशमयति, एतदुक्तं भवति–अप्रत्याख्यानप्रत्याख्यानावरणक्रोधौ क्रोधत्वेन सदृशौ युगपदन्तर्मुहूर्त्तमात्रेणोपशमयति, ततः सञ्ज्वलनक्रोधमेकाकिनमेवान्तर्मुहूर्त्तमात्रेणोपशमयति, ततोऽप्रत्याख्यानप्रत्याख्यानावरणमानौ युगपदेव ततः सञ्ज्वलनमानमेकाकिनमेव, ततोऽप्रत्याख्यानप्रत्याख्यानावरणमाये युगपत् ततः सञ्ज्वलमायामेकाकिनीं, ततोऽप्रत्याख्यानप्रत्याख्यानावरणलोभौ ततः सञ्ज्वलनलोभं, तं चोपशमयन् त्रिधा करोति, तत्र द्वौ भागौ युगपदुपशमयति, तृतीयभागं सङ्ख्येयानि खण्डानि करोति, तान्यपि पृथक्पृथक्का-

लभेदेनोपशमयति, तत एतेषां सङ्ख्येयानां खण्डानां यच्चरमं खण्डं तदसङ्ख्येयानि खण्डानि करोति, ततः समये समये एकैकं खण्डमुपशमयति, इह दर्शनसप्तके उपशान्तेऽपूर्वकरणोऽनिवृत्तिबादरो वाऽभिधीयते, स चानिवृत्तिबादरस्तावद् यावत् सङ्ख्येयान्तिमचरमखण्डं। ननूपशमश्रेणिप्रस्थापकोऽप्रमत्तसंयत एव 'उवसागमसेढीए पट्ठवगो अप्पमत्तविरतो य' इति वचनात्, अप्रमत्तसंयतश्च अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणमिथ्यात्वसम्यग्मिथ्यात्वानामुपशमाद् भवति, अन्यथा तेषामुदये सम्यक्त्वादिलाभायोगात्, तथा चाभिहितं प्राक्–'पढमेल्लुयाण उदये'इत्यादि, ततः कथमिदानीं तेषामुपशमो भण्यते ? इति, तदसत्, सम्यक् सिद्धान्तापरिज्ञानात्, पूर्वं हि तेषां क्षयोपशम एवासीत्, नोपशमः, इदानीं तूपशमः क्रियते। ननु क्षयोपशमोऽप्युदिते कर्मांशे क्षीणेऽनुदिते च उपशान्ते भवति, उपशमोऽपि चेत्थंभूत एव, ततः कोऽनयोः प्रतिविशेषो येनैवमुच्यते–पूर्वं क्षयोपशम आसीत् इदानीं तूपशमः क्रियते इति, उच्यते, इह क्षयोपशमे तदावारकस्य कर्मणः प्रदेशतोऽनुभवोऽस्ति, उपशमे तु स न भवतीति प्रतिविशेषः, आह च भाष्यकृत्—"वेएइ संतकम्मं खतोवसमिएसु नाणुभावं सो। उवसंतकसाओ पुण, वेएइ न संतकम्मंपि ॥१॥" (वि. १२९२) ननु यदि सत्यपि क्षयोपशमेऽनन्तानुबन्ध्यादिकषायमिथ्यात्वानां प्रदेशतोऽनुभवोऽस्ति तर्हि कथं न सम्यक्त्वादिगुणविघात उपजायते?, तदुदये ह्यवश्यं सम्यक्त्वादिगुणलाभः सन्नप्यपगच्छति, यथा सास्वादनसम्यग्दृष्टेरिति, नैष दोषः, प्रदेशतोऽनुभवस्य मन्दानुभावत्वात्, मन्दानुभावो ह्युदयो न स्वावार्यगुणविघातमाधातुमलं, यथा चतुर्ज्ञानिनो मतिज्ञानावरणादीनां विपाकतोऽप्युदयः, तथाहि—मतिज्ञानावरणादिकं कर्म्म ध्रुवोदयं ध्रुवोदयत्वाच्चावश्यं सर्वदा विपाकतोऽनुभवनीयं, विपाकानुभवापेक्षयैव ध्रुवोद-

यत्वाभिधानात्, अथ च तत् सकलचतुर्ज्ञानिनो गौतमादेरिव न मत्यादिज्ञानविघातकृत् भवति, तदनुभवस्य मन्दानुभा-वत्वात्, तद्यदि विपाकतोऽप्यनुभूयमानं मन्दानुभावोदयत्वान्न स्वावार्यगुणविघाताय प्रभवति ततः प्रदेशतोऽनुभूयमान-मनन्तानुबन्ध्यादि सुतरां न प्रभविष्यति, तदुदयस्यातीव मन्दानुभावत्वाद्, आह च भाष्यकृत्—"किह दंसणाइघातो न होइ संजोयणाइ वेदयतो ?। मंदाणुभावयाए जहाणुभावंमिवि कहंचि॥१॥ निच्चोदिण्णंपि जहा, सगलचउण्णाणिणो तदा-वरणं। न विघाइ मंदयाए पएसकम्मं तहा नेयं॥२॥" (वि. १२९७-८) इह सङ्ख्येयानि लोभखण्डानि उपशमयन् बादरसम्पराय उच्यते, चरमस्य तु सङ्ख्येयखण्डस्यासङ्ख्येयानि खण्डानि, प्रतिसमयमेकैकखण्डमुपशमन् सूक्ष्मसम्परायः॥ तथा चाह—

लोभाणू वेयंतो जो खलु उवसामओ व खवओ वा। सो सुहुमसंपराओ अहखाया ऊणओ किंचि॥ ११७॥

लोभस्य—सञ्ज्वलनलोभस्य अणून्—सङ्ख्येयतमस्य खण्डस्यासङ्ख्येयानि खण्डानि वेदयमानः—अनुभवन् उपशमकः क्षपको वा भवति, सोऽन्तर्मुहूर्त्तं कालं यावत्सूक्ष्मसम्परायो भण्यते, अयं च यथाख्यातात्किञ्चिदूनः, किमुक्तं भवति ?—सूक्ष्मसम्परायावस्थामन्तर्मुहूर्त्तमात्रकालमानामनुभूय उपशमकनिर्ग्रन्थो यथाख्यातचारित्री भविष्यतीति, इह यदि बद्धायुरुपशमश्रेणिप्रतिपन्नः श्रेणिमध्यगतगुणस्थानानुवर्त्ती उपशान्तमोहो वा भूत्वा कालं करोति तदा नियमेनानुत्तर-सुरेषूत्पद्यते, श्रेणिप्रतिपतितस्य तु कालकरणेऽनियमः, नानामतित्वेन नानास्थानगमनात्, अथाबद्धायुस्तां प्रतिपन्नः तर्ह्यन्तर्मुहूर्त्तमुपशान्तमोहो भूत्वा नियमतः पुनरप्युदितकषायः कात्स्न्र्येन श्रेणिप्रतिलोममावर्त्तते, उक्तं च—"बद्धा-ऊ पडिवन्नो सेढिगतो वा पसंतमोहो वा। जइ कुणइ कोइ कालं वच्चइ तोऽणुत्तरसुरेसुं॥ १॥ अनिबद्धाऊ होउं

क्षयोपशमे मन्दानुभावता सूक्ष्म. ११७

पसंतमोहो मुहुत्तमेत्तद्धं । उदितकसाओ नियमा नियत्तए सेढिपडिलोमं ॥ २ ( वि. १३०३-४ ) ॥ तथा च एतदेव दुरन्तं कषायसामर्थ्यमुत्कीर्त्तयन्नाह—

उवसामं उवणीया, गुणमहया जिणचरित्तसरिसंपि । पडिवायंति कसाया, किं पुण सेसे सरागत्थे? ॥ ११८ ॥

उपशमनमुपशमः तम्, अपिशब्दात् क्षयोपशममपि, उपनीताः, केनेत्याह—गुणैर्महान् गुणमहान् तेन गुणमहता-उपशमकेन, प्रतिपातयन्ति कषायाः संसारे, कम्?—तमेवोपशमकं, कथम्भूतमित्याह—'जिनचारित्रसदृशमपि' जिनस्य-केवलिनश्चारित्रेण कृत्वा सदृशः—तुल्यो जिनचारित्रसदृशो, द्वयोरपि कषायोदयरहितचारित्रयुक्तत्वात्, तमेवंभूतमपि प्रतिपातयन्ति, किं पुनः शेषान् सरागस्थान्?, तान् सुतरां प्रतिपातयन्ति, अथोपशान्ताः सन्तः कषायाः कथं स्वस्वरूपमुपदर्शयन्ति?, उच्यते, इह यथा भस्मच्छन्नोऽग्निः स्वरूपेणाद्यापि सत्त्वात् पवनादिसहकारिकारणान्तरमासाद्य पुनः स्वं स्वरूपमुपदर्शयति यथा वा अञ्जनद्रुमो वनदवध्यामितोऽप्यंतः सारस्य अद्यापि सचेतनत्वाद् उदकसेकादिकारणसामग्रीमवाप्य पुनरपि अङ्कुरपुष्पपत्रप्रवालादिरूपं निजस्वरूपमुपदर्शयति एवमुपशान्ता अपि कषायाः स्वरूपेणाद्यापि सन्त इति तथाविधं किञ्चिन्निमित्तमासाद्य स्वस्वरूपं प्रकटन्ति, ततोऽन्तर्मुहूर्त्तान्नियमेन प्रतिपतति, उक्तं च—"दवदूमियंजणदुमो छारच्छन्नागणिव्व पच्चयतो । दावेइ जह सरूवं तह स कसातोदयो भुज्जो ॥१॥" (वि. १३०७) प्रतिपतितश्च संसारं पर्यटति, तथाहि—स तावद् तद्भव एव निर्वाणं न लभते, उत्कर्षतस्तु देशोनमर्द्धपुद्गलपरावर्त्तमपि संसारमनुबध्नाति, उक्तं च—"तंमि भवे

निर्वाणं न लभइ उक्कोसतो व संसारं। पोग्गलपरियट्टद्धं, देसूणं कोइ हिंडेज्जा ॥१॥" (वि. १३०८) यत एवं तीर्थकरोपदेशोऽत औपदेशिकं गाथाद्वयमाह—

जइ उवसंतकसातो लहइ अणंतं पुणोऽवि पडिवायं। न हु भे वीससियव्वं थेवेऽवि कसायसेसम्मि ॥११९॥

अणथोवं वणथोवं अग्गीथोवं कसायथोवं च। न हु भे वीससियव्वं थेवंपि हु तं बहुं होइ ॥१२०॥

यद्युपशान्तकषायोऽप्यनन्तं भूयोऽपि प्रतिपातं लभते ततः स्तोकेऽपि कषायशेषे 'न हु' नैव 'भे' भवद्भिर्विश्वसितव्यम्, अमुमेवार्थं सदृष्टान्तं भावयति—'अणथोव'मित्यादि, ऋणस्य स्तोकं ऋणस्तोकं व्रणस्तोकमग्निस्तोकं कषायस्तोकं च दृष्ट्वा 'न हु' नैव भवद्भिर्विश्वसितव्यं, यतः स्तोकमपि तत्-ऋणादि बहु-प्रभूतं भवति, तथा चानेकदोषसम्भवः, तथाहि—ऋणं प्रवर्द्धमानं गच्छता कालेनातिप्रभूतं सद्दासत्वमुपनयति, यथा वणिग्दुहितुः साधुभगिन्याः, व्रणश्च विसर्पन् अतिप्रभूतो भूत्वा स्तोककालेन मरणं, वह्निर्वातादिसामग्रीवशादतिप्रसरमधिरोहन् सर्वस्यापि ग्रामनगरादेर्दाहं, कषायाः पुनः प्रवर्द्धमाना भवमनन्तमिति, उक्तं च—"दासत्तं देइ अणं अचिरा मरणं वणो विसप्पंतो। सव्वस्स दाहमग्गी देंति कसाया भवमणंतं ॥१॥" (वि. १३११) उक्तमौपशमिकं चारित्रमिदानीं क्षायिकमाह, अथवा सूक्ष्मसम्पराययथाख्यातच्चारित्रे उपशमश्रेण्यङ्गीकरणेनोक्ते, सम्प्रति क्षपकश्रेण्यङ्गीकरणतः प्रतिपादयति—

अण-मिच्छ-मीस-सम्मं, अट्ठ नपुंसित्थिवेय-छक्कं च। पुमवेयं च खवेइ कोहाईए य संजलणे ॥१२१॥

इह यः क्षपकश्रेणिप्रस्थापकः सोऽवश्यं मनुष्यो वर्षाष्टकाच्चोपरि वर्तमान उत्तमसंहननशुद्धध्यानार्पितमना अविरत-

सम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतमः, आह च-"पडिवत्तीए अविरयदेसपमत्तापमत्तविरयाणं। अन्नयरो पडिवज्जइ सुद्धज्झाणोवगयचित्तो ॥१॥" (वि. १३१४) केवलं यद्यप्रमत्तसंयतः पूर्ववित् ततः शुक्लध्यानोपगतः श्रेणिमारभते, शेषस्तु धर्मध्यानोपगतः, तत्र क्षपकश्रेणिमारोहन् स प्रथममनन्तानुबन्धिनश्चतुरोऽपि क्रोधादीनन्तर्मुहूर्त्तेन युगपत् क्षपयति, तदनन्तभागं तु मिथ्यात्वे प्रक्षिप्य मिथ्यात्वं सहैव तेन युगपत् क्षपयति, यथा ह्यतिसम्भृतो दवानलः खल्वर्द्धदग्धेन्धन एवेन्धनान्तरमासाद्य उभयमपि दहति, एवमसावपि क्षपकस्तीव्रशुभपरिणामत्वादवशेषमन्यत्र प्रक्षिप्य क्षपयति, तदनन्तरं तथैव सम्यग्मिथ्यात्वं तदनन्तरमेव च सम्यक्त्वम्, इह यदि बद्धायुः क्षपकश्रेणिमारभते अनन्तानुबन्धिक्षयानन्तरं च मरणसम्भवतो व्युपरमते ततः कदाचिन्मिथ्यादर्शनोदयात् भूयोऽप्यनन्तानुबन्धिन उपचिनोति, तद्बीजस्य मिथ्यात्वस्याविनाशात्, क्षीणमिथ्यादर्शनस्तु न उपचिनोति, बीजाभावात्, क्षीणसप्तकस्त्वप्रतिपतितपरिणामोऽवश्यं त्रिदशेषु मध्ये समुत्पद्यते, प्रतिपतितपरिणामस्तु नानामतिसम्भवात् यथापरिणामं सर्वगतिभाग् भवति, उक्तं च—"बद्धाऊ पडिवन्नो, पढमकसायक्खए जइ मरेज्जा। ता मिच्छत्तोदयतो चिणिज्ज भूतो न खीणंमि ॥ १ ॥ तंमि मतो जाइ दिवं तप्परिणामो य सत्तए खीणे। उवरयपरिणामो पुण पच्छा नाणामइगइओ ॥ २ ॥" (वि. १३१६-७) बद्धायुः कोऽपि यदि तदानीं कालं न करोति तथापि सप्तके क्षीणे नियमादवतिष्ठते, न चारित्रमोहक्षपणाय यत्नमादधाति, आह च—"बद्धाऊ पडिवन्नो नियमा खीणंमि सत्तए ठाए।" अत्राह-ननु यदि दर्शनत्रिकमपि क्षयमुपनीतं ततः किमसौ सम्यग्दृष्टिरुतासम्यग्दृष्टिः?, उच्यते, सम्यग्दृष्टिः, सम्यग्दर्शनाभावे सम्यग्दृष्टित्वमनुपपन्नमिति चेत्, तदसद्, अभिप्रा-

यापरिज्ञानात्, इह निमर्दनीकृतमदनकोद्रवकल्पा अपगतमिथ्यात्वभावा मिथ्यात्वपुद्गला एव यत् सम्यग्दर्शनं तदेव
क्षीणं, यत्पुनरात्मपरिणतिस्वभावं तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनं तन्न क्षीणम्, अपि च-तदतीव श्लक्ष्णशुद्धाभ्रपटलवि-
गमेन मनुष्यस्य दृष्टिरिव शुद्धजलानुगतं शुद्धं वस्त्रमिव वा जलक्षये विशुद्धतरस्वरूपं भवति, आह च—"खीणंमि
दंसणतिए किं होइ ततो तिदंसणातीतो ?। भण्णइ सम्मद्दिट्ठी सम्मत्तखए कुतो सम्मं ? ॥ १ ॥ निव्वलियमयणकोद्दव-
रूवं मिच्छत्तमेव सम्मत्तं। खीणं न उ जो भावो सद्दहणालक्खणो तस्स ॥ २ ॥ सो तस्स विसुद्धयरो जायइ सम्मत्तपुग्ग-
लक्खयए। दिट्ठिव्व सण्हसुद्धब्भपडलविगमे मणूसस्स ॥ ३ ॥ जह सुद्धजलाणुगयं वत्थं सुद्धं जलक्खए सुतरं । सम्म-
त्तसुद्धपोग्गलपरिक्खए दंसणं एवं ॥४॥" ( वि. १३१८-२१ ) यदि पुनरबद्धायुः क्षपकश्रेणिमारभते ततः सप्तके क्षीणे
नियमादनुपरतपरिणाम एव चारित्रमोहक्षपणाय यत्नमारभते, यदाह—"इयरो अणुवरतो च्चिय, सयलं सेढिं समाणेइ।"
तत्क्षपणक्रमश्चायं-सम्यक्त्वस्य क्षपितशेषेऽवतिष्ठमान एवाप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकं समकमेव क्षपयि
तुमारभते, एतेषु चार्द्धक्षपितेष्वन्याः षोडश प्रकृतीः क्षपयति, तत्प्रतिपादकमिदं गाथाद्वयम्-

गइआणुपुव्वि दो दो जाती नामं च जाव चउरिंदी। आयावं उज्जोयं, थावरनामं च सुहुमं च ॥ १२२ ॥

साहारमपज्जत्तं निद्दानिद्दं च पयलपयलं च। थीणं खवेइ ताहे अवसेसं जं च अट्ठण्हं ॥ १२३ ॥

गतिश्च आनुपूर्वी च गत्यानुपूर्व्यौ द्वे द्वे, तद्यथा-नरकगतिनाम नरकानुपूर्वीनाम तिर्यग्गतिनाम तिर्यगानुपूर्वी-
नाम, तथा जातिनाम एकेन्द्रियादिजातिनाम यावच्चतुरिन्द्रियाः, किमुक्तं भवति?-एकेन्द्रियजातिनाम द्वीन्द्रियजा-

तिनाम त्रीन्द्रियजातिनाम चतुरिन्द्रियजातिनाम इति, चः समुच्चये, तथा आतपनाम उद्योतनाम स्थावरनाम सूक्ष्मनाम साधारणनाम अपर्याप्तकनाम निद्रानिद्रां प्रचलाप्रचलां स्त्यानर्द्धिं च, एतांश्च षोडशापि कर्म्मप्रकृतीः क्षपयित्वा तदनन्तरं यदष्टानां कषायाणां शेषं तत् क्षपयति, सर्वमिदमन्तर्मुहूर्त्तमात्रेण, ततो नपुंसकवेदं ततः स्त्रीवेदं ततो हास्यादिषट्कं, ततः पुरुषवेदस्य खण्डत्रयं कृत्वा खण्डद्वयं युगपत् क्षपयति, तृतीयं तु खण्डं सञ्ज्वलनक्रोधे प्रक्षिपति, पुरुषे प्रतिपत्तर्ययं क्रमः, नपुंसकादौ प्रतिपत्तर्युपशमश्रेणिन्यायो वक्तव्यः, ततः क्रोधादीन् चतुरः संज्वलनान् प्रत्येकमन्तर्मुहूर्त्तमात्रेण क्षपयति, क्षपणं चैषां खण्डत्रयादिकरणक्रमेण पुरुषवेदवत् वाच्यं, क्रोधसत्कं च तृतीयं खण्डं माने प्रक्षिपति, मानसत्कं मायायां मायासत्कं लोभे, क्षपणकालश्च प्रत्येकं सर्वत्रान्तर्मुहूर्त्तप्रमाणो मन्तव्यः, श्रेणिरपि सर्वा अन्तर्मुहूर्त्तमाना, एकस्मिन्नप्यन्तर्मुहूर्त्ते लघुतराणामन्तर्मुहूर्त्तानामसङ्ख्येयानां भावात्, लोभस्य तु चरमं तृतीयं खण्डं सङ्ख्येयानि खण्डानि करोति, तानि च खण्डानि पृथक् पृथक् कालभेदेन क्षपयति, तेषामपि च सङ्ख्याततमं चरमं खण्डमसङ्ख्येयानि खण्डानि करोति, तानि तु समये समये एकैकशः क्षपयति। इह च क्षीणदर्शनसप्तको निवृत्तिबादर उच्यते, तत ऊर्द्ध्वमनिवृत्तिबादरो यावत् सङ्ख्याततमं चरमं लोभखण्डं, तत ऊर्द्ध्वमसङ्ख्येयानि लोभखण्डानि प्रतिसमयमेकैकं क्षपयन् सूक्ष्मसम्परायो यावच्चरमलोभांशक्षयः, अत ऊर्द्ध्वं यथाख्यातचारित्री भवति, उक्तं च—“दंसणमोहक्खवणे, नियट्टि अनियट्टिबादरो परतो। जाव उ सेसो संजलणलोभमसंखेज्जभागोत्ति ॥१॥ तदसंखेज्जयभागं समये समये खवेइ एक्केक्कं। एत्थ य सुहुमसरागो लोभाणू जाव इक्कोऽवि ॥ २ ॥ (वि. १२२०-१)” स च महासमुद्रप्रतरणपरिश्रान्तवत् मोहसागरं

तीर्त्त्वा अनाभोगनिर्वर्त्तितेन करणेन विश्राम्यति, ततः छद्मस्थवीतरागत्वद्विचरमसमययोः प्रथमे समये निद्राप्रचले क्षपयति चरमसमये पञ्चविधं ज्ञानावरणं चतुर्विधं दर्शनावरणं पञ्चविधमन्तरायमिति चतुर्दश प्रकृतीर्युगपत् क्षपयित्वा अनन्तरसमये केवलज्ञानं केवलदर्शनं चोत्पादयति, आह च चूर्णिकृत्–"जं संखेज्जइमं लोभस्स खंडं तं असंखेज्जे भागे करेइ, तेवि कमेण खवेइ, तत्थ खवओ सुहुमसंपराओ, जाहे तंपि खविअं होइ ताहे खवगनियंठो लब्भइ, इत्थंतरा वीसमइ अणाभोगनिव्वत्तिएणं करणोवाएणं, जहा कोइ महासमुद्दं तरिऊण जाहे अणेण थाहो लद्धो हवइ ताहे अंतोमुहुत्तं अच्छिऊण सेसं तरइ, एवं सो अणेगभवसंचियं कम्मं खविऊण ताहे मुहुत्तंतरं आसत्थो, एत्थंतरे जाव अच्छइ ताहे नियंठो लब्भइ जाव दोहिं समएहिं सेसेहिं केवलनाणं उप्पज्जिस्सइत्ति ताहे जो एगो समओ तत्थ निद्दं पयलं च खवेइ, जो चरमसमयो तत्थ पंचविहं नाणावरणिज्जं चउव्विहं दरिसणावरणिज्जं पंचविहमंतरायं एताओ चउद्दस कम्मपगडीओ जुगवं खवित्ता अणंतं केवलनाणं दंसणं उप्पाडेइ" इति, भाष्यकारोऽप्याह–"खीणे खवगनियंठो, वीसमए मोहसागरं तरिउं। अंतोमुहुत्तमुदहिं, तरिउं थाहे जहा पुरिसो ॥ १ ॥ छउमत्थकालदुचरमसमए निद्दं खवेइ पयलं च। चरमे केवललाभो, खीणावरणंतरायस्स ॥ २ ॥ ( वि. १३३२–३ )" इह चरमे समये क्षीणावरणान्तरायस्य–क्षीणज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकस्यानन्तरसमये केवललाभ इति प्रतिपत्तव्यम्, अन्ये त्वेवमभिदधति–द्विचरमे समये क्षीणमोहो निद्रां प्रचलां च क्षपयति, नाम्नश्चेमाः प्रकृतीस्तद्यथा— देवगतिदेवानुपूर्व्यौ वैक्रियद्विकं प्रथमवर्जानि पञ्च संहननानि उदितवर्जानि पञ्च संस्थानानि आहारकनाम तीर्थकर-

नाम च यद्यस्यातीर्थकरः प्रतिपत्ता इति, अत्रार्थे च तन्मतेन तिस्रोऽन्यकर्तृका इमा गाथाः—"वीसमिऊण नियंठो दोहि
उ समएहिं केवले सेसे। पढमं निद्दं पयलं नामस्स इमाउ पयडीतो ॥ १ ॥ देवगइआणुपुव्वी वेउव्वियसंघयणपढमवज्जाइं।
अन्नयरं संठाणं तित्थयराहारनामं च ॥ २ ॥ चरमे नाणावरणं पंचविहं दंसणं चउविकप्पं । पंचविहमंतरायं खवइत्ता
केवली होइ ॥ ३ ॥" एतच्च मतमसमीचीनं, चूर्णिकृतो भाष्यकृतः सर्वेषां च कर्म्मग्रन्थकाराणामसम्मतत्वात्, केवलं
वृत्तिकृता केनाप्यभिप्रायेण लिखितमिति, सूत्रेऽप्येता गाथाः प्रवाहपतिताः, निर्युक्तिकारकृतास्त्वेता न भवन्ति, चूर्णौ
भाष्ये चाग्रहणादिति, उत्पन्नकेवलज्ञानकेवलदर्शनश्च भगवान् सर्वं वस्तु जानाति ॥ तथा चाह निर्युक्तिकारः—

**संभिन्नं पासंतो लोगमलोगं च सव्वओ सव्वं । तं नत्थि जं न पासइ भूयं भव्वं भविस्सं च ॥ १२४ ॥**

सम्—एकीभावेन भिन्नं सम्भिन्नं, यथा वहिस्तथा मध्येऽपीत्यर्थः, अथवा द्रव्यक्षेत्रकालभावलक्षणं सर्वमपि ज्ञेयं विष-
यत्वेन दर्शनीयं, तत्र सम्भिन्नमिति द्रव्यं विशेष्यं सूचितं, कालभावौ तद्विशेषकौ, कालभावौ हि द्रव्यस्य पर्यायौ, तत-
स्ताभ्यां समन्ताद्भिन्नं द्रव्यमिति सम्भिन्नग्रहणेन त्रितयमपि सूचितम्, एतत्पश्यन्—उपलभमानो लोकं—धर्माद्याधारभूतं
क्षेत्रमलोकं च—तद्विपरीतं क्षेत्रम्, अनेन क्षेत्रं प्रतिपादितम्, एतावदेव चतुर्विधं ज्ञेयं, नान्यदिति, किमेकया दिशा पश्य-
न्नित्याह—सर्वतः—सर्वासु दिक्षु, तास्वपि किं कियदपि द्रव्यादि उत नेत्याह—'सर्वं' निरवशेषं, अमुमेवार्थं स्पष्टयन्नाह—

---

१ निर्युक्तीनां सर्वासां चूर्ण्यादावग्रहात् न युक्तमिदं, क्षपकोपशमकते प्रकृते मोहमाश्रित्येति न नामविचारश्चूर्ण्यादौ, मतभेदस्तु नास-
भवीति ता गाथा वृत्तौ व्याख्याताः

तन्नास्ति किमपि ज्ञेयं भूतम्—अतीतं भवतीति भव्यं—वर्त्तमानं भविष्यच्च यन्न पश्यति केवलीति, इत्थं तावदुपोद्घातनिर्युक्तौ प्रसूतायां प्रसङ्गतो यदुक्तम् 'तपोनियमज्ञानवृक्षमारूढः केवली'ति अयमसौ केवली निदर्शितः, एतस्मात् सामायिकादिश्रुतमाचार्यपारम्पर्येणायातम्, एतस्माच्च जिनप्रवचनप्रसूतिरित्यादि, सर्वं प्रासङ्गिकं निर्युक्तिसमुत्थानप्रसङ्गेनोक्तं, साम्प्रतमपिच केयं जिनप्रवचनोत्पत्तिः? कियदभिधानं चेदं जिनप्रवचनं? को वाऽस्याभिधानविभाग? इत्येतत् प्रासङ्गिकशेषं शेषद्वारसंग्रहं चाभिधित्सुराह—

केवलस्वरूपं प्रवचनोत्पत्त्यादि १२४-५

जिणपवयणउप्पत्ती पवयणएगट्ठिया विभागो य । दारविही य नयविही वक्खाणविही य अणुओगो ॥ १२५ ॥

इह जिनप्रवचनोत्पत्तिः प्रवचनैकार्थिकानि एकार्थिकविभागश्चेति त्रितयमपि प्रसङ्गशेषं, द्वाराणि—उद्देशनिर्देशादीनि तेषां विधिः—प्ररूपणं द्वारविधिः, अयमुपोद्घातोऽभिधीयते, नयविधिस्तूपक्रमादीनां मूलानुयोगद्वाराणां चतुर्थमनुयोगद्वारं, तथा व्याख्यानस्य विधिर्व्याख्यानविधिः—शिष्याचार्यपरीक्षाभिधानम्, अनुयोगः—सूत्रस्पर्शिकनिर्युक्तिः सूत्रानुगमश्चेति समुदायार्थः । आह—चतुर्थमनुयोगद्वारं नयविधिमभिधाय पुनस्तृतीयानुयोगद्वाराख्यानुयोगाभिधानं किमर्थम्?, उच्यते, नयानुगमयोः सहचरभावप्रदर्शनार्थं, तथाहि—नयानुगमौ प्रतिसूत्रं युगपदनुगच्छतः, नयमतशून्यस्यानुगमस्याभावात्, यदि युगपन्नयानुगमौ गच्छतस्तर्ह्येतदुपन्यासोऽपि युगपदेवास्तु, किमर्थमनुयोगद्वारचतुष्टयोपन्यासे नयानामन्ते उपन्यासः?, उच्यते, युगपद्वक्तुमशक्यत्वाद्, आह च मूलटीकाकृत्—"अनुयोगद्वारचतुष्टयोपन्यासे तु नयानामन्तेऽभिधानं युगपद्वक्तुमशक्यत्वा"दिति । अपरस्त्वाह—चतुरनुयोगद्वारात्मकं शास्त्रं, ततश्चतुरनुयोगद्वारातिरिक्तस्य

व्याख्यानविधेरुपन्यासो निरर्थकः, तदयुक्तम्, अनुगमाङ्गतया निरर्थकत्वायोगात्, अनुगमाङ्गता च व्याख्याङ्गत्वादिति, तत्र जिनप्रवचनोत्पत्तिर्निर्युक्तिसमुत्थानप्रसङ्गतोऽभिहिता, अर्हद्वचनत्वात् प्रवचनस्य, आह च 'सुयमिह जिणप्पवयणं तस्सुप्पत्ती पसंगतोऽभिहिया' इति ॥ सम्प्रति प्रवचनैकार्थिकानि तद्विभागं च प्रतिपादयन्नाह-( ग्रन्थाग्रं ५००० )

एगट्ठियाणि तिन्नि उ पवयण सुत्तं तहेव अत्थो य । एक्केक्कस्स य एत्तो नामा एगट्ठिया पंच ॥ १२६ ॥

एकोऽर्थो येषां तान्येकार्थिकानि त्रीण्येव, कानि पुनस्तानीत्यत आह-प्रवचनम्-उक्तशब्दार्थं सूचनात्सूत्रं अर्यते इत्यर्थः-अभिधेयं, चः समुच्चये, अत ऊर्ध्वं एकैकस्य-प्रवचनस्य सूत्रस्य अर्थस्य च नामान्येकार्थिकानि पञ्च, इह प्रवचनं सामान्यं श्रुतज्ञानं, सूत्रार्थौ तु तद्विशेषौ, उक्तं च—"जमिह पगयं पसत्थं पहाणवयणं च पवयणं तं च । सामन्नं सुयनाणं विसेसतो सुत्तमत्थो य ॥ १ ॥ (वि. १३६७)" आह-सूत्रार्थयोः प्रवचनेन सहैकार्थता युक्ता, तयोस्तद्विषयत्वात्, सूत्रार्थौ च परस्परविभिन्नौ, तथाहि-सूत्रं व्याख्येयमर्थस्तु तद्व्याख्यानमिति, अथवा त्रयाणामप्येषां भिन्नार्थतैव युक्त्युपपन्ना, प्रत्येकमेकार्थिकविभागसद्भावात्, घटपटशकटवद्, अन्यथा एकार्थतायां सत्यां भेदेनैकार्थिकाभिधानमयुक्तं, घटकुम्भयोरिवेति, अत्रोच्यते, इह यथा मुकुलविकसितयोः पद्मविशेषयोः सङ्कोचविकाशरूपपर्यायभेदेऽपि कमलसामान्यरूपत्वेनाभेदः तथा सूत्रार्थयोरपि प्रवचनापेक्षया परस्परतश्चाभेदः, तथाहि-अविवृतं मुकुलतुल्यं सूत्रं, तदेव विवृतं प्रबोधितं विकचकल्पमर्थः, प्रवचनं तूभयमपि, यथा च तेषां कमलसङ्कोचविकाशानामेकार्थिकविभाग उपलभ्यते, कमलमरविन्दं पङ्कजमित्यादि पद्मैकार्थिकानि तथा मुकुलं वृन्तं सङ्कुचितमित्यादीनि मुकुलैकार्थिकानि तथा विकचं फुल्लं विबुद्धमित्यादीनि

विकसितैकार्थिकानि, तथा प्रवचनसूत्रार्थानामपि पद्ममुकुलविकसितकल्पानामेकार्थिकविभागो न विरुद्ध इति, अथवा अन्यथा व्याख्यायते-एकार्थिकानि त्रीण्येवाश्रित्य वक्तव्यानि, तद्यथा—प्रवचनमेकार्थिकगोचरस्तथा सूत्रमर्थश्च, शेषं पूर्ववत्, आह-यद्येवं द्वारगाथायां यदुक्तं प्रवचनैकार्थिकानि इति तद् व्याहन्यते, सूत्रार्थयोरप्येकार्थिकाभिधानात्, नैष दोषः, प्रवचनस्य सामान्यविशेषरूपतया सूत्रार्थयोरपि प्रवचनविशेषरूपत्वेन प्रवचनत्वोपपत्तेः, आह—यद्येवं तर्हि विभागश्चेति पृथग्द्वाराभिधानमनर्थकं, तदसम्यक्, विभागश्चेति किमुक्तं भवति ?-नाविशेषेण सामान्यविशेषरूपस्य प्रवचनस्य पञ्चदशैकार्थिकानीति, किं तर्हि ?-विभागश्च वक्तव्यः, विशेषगोचराभिधानपर्यायाणां सामान्यगोचराभिधानपर्यायत्वानुपपत्तेः, नहि चूतसहकारादयो वृक्षादिशब्दपर्याया भवन्ति, लोके तथा व्यवहाराभावादिति ॥ तत्र प्रवचनसूत्रयोस्तावत् पञ्च पञ्च एकार्थिकान्याह—

सुयधम्म तित्थ मग्गो पावयणं पवयणं च एगट्ठा । सुत्तं तंतं गंथो पाढो सत्थं च एगट्ठा ॥ १२७ ॥

श्रुतस्य धर्मः-स्वभावः श्रुतधर्मः, श्रुतस्य बोधस्वभावात् श्रुतस्य धर्मो बोधो बोद्धव्यः, अथवा श्रुतं च तत् धर्मश्च सुगतिधारणात् श्रुतधर्म्मः, यदिवा जीवपर्यायत्वात् श्रुतस्य श्रुतं च तत् धर्म्मः श्रुतधर्म्मः, उक्तं च—"बोहो सुयस्स धम्मो, सुयं व धम्मो स जीवपज्जातो । सुगईए संजमंमि य धरणातो वा सुयं धम्मो ॥१॥" (वि. १३७९) तथा तीर्यते संसारसमुद्रोऽनेनेति तीर्थं, तच्च सङ्घ इत्युक्तम्, इह तु तदुपयोगानन्यत्वात् प्रवचनं तीर्थमुच्यते, आह च—"तित्थंति पुव्वभणियं, संघो जो नाणचरणसंघातो । इह पवयणंपि तित्थं, तत्तोऽणत्थंतरं जेण ॥ १ ॥" (वि. १३८०) तथा मृज्यते-शोध्यतेऽनेनात्मा इति

मार्ग्गः मार्ग्गणं वा मार्ग्गः, शिवस्यान्वेषणमिति भावः, उक्तं च—"मज्जिज्जइ सोहिज्जइ, जेणत्ता पवयणं तओ मग्गो। अहवा सिवस्स मग्गो, मग्गणमन्नेसणं पंथो॥१॥"(वि.१३८१)इति, तथा प्रगतमभिविधिना जीवादिषु पदार्थेषु वचनं प्रावचनं,प्रवचनमुक्तशब्दार्थम्, उक्तानि पञ्च प्रवचनैकार्थिकानि, सम्प्रति पञ्च सूत्रैकार्थिकान्याह—'सुत्त'मित्यादि, सूचनात् सूत्रं, तन्यतेऽनेन अस्मादस्मिन्निति वा तन्त्रं ग्रथ्यतेऽनेन अस्मादस्मिन्निति वा अर्थ इति ग्रन्थः, ग्रथ्यते इति वा ग्रन्थः, पठनं पाठः पठ्यते वा तदिति पाठः, पठ्यते—व्यक्तं क्रियतेऽनेन अस्मादस्मिन्नभिधेयमिति वा पाठः, तथा शिष्यतेऽनेनास्मादस्मिन्निति वा ज्ञेयमात्मा वा इति शास्त्रम्, एकार्थिकानीति पुनरभिधानं सामान्यविशेषयोः कथञ्चिद्भेदख्यापनार्थमिति । अथ अर्थैकार्थिकानि वक्तव्यानि, तत्र अर्थो व्याख्यानमनुयोग इत्यनर्थान्तरम्, अतोऽनुयोगैकार्थिकानि विभणिषुराह—

**अणुओगो य निओगो, भास विभासा य वत्तियं चेव। एए अणुओगस्स उ, नामा एगट्ठिया पंच ॥ १२८ ॥**

सूत्रस्यार्थेन सहानुकूलं योजनमनुयोगः अथवाऽभिधेये व्यापारः सूत्रस्य योगः अनुकूलोऽनुरूपो वा योगोऽनुयोगः, यथा घटशब्देन घटस्य प्रतिपादनमिति, उक्तं च—"अनुयोजणमणुजोगो सुयस्स नियएण जमभिधेएणं । वावारो वा जोगो, जो अणुरूवोऽणुकूलो वा ॥१॥"(वि. १३८६) तथा नियतो निश्चितो वा योगः—सम्बन्धो नियोगः, यथा घटशब्देन घटस्यैव प्रतिपादनं न पटादेरिति, तथा भाषणं भाषा व्यक्तीकरणमित्यर्थः, यथा घटनात् घटः, चेष्टावानर्थो घट इति, तथा विविधा भाषा विभाषा—पर्यायशब्दैः स्वरूपकथनं यथा घटः कुटः कुम्भ इति, वार्त्तिकं त्वशेषपर्यायकथनमिति, एतान्यनुयोगस्य नामान्येकार्थिकानि पञ्च, एष गाथासमुदायार्थोऽवयवार्थं तु प्रतिद्वारं वक्ष्यति, तत्र यद्यपि

प्रवचनादीनामेकार्थिकाभिधानप्रक्रमस्तथाप्यनुयोगस्यानुयोगादीनामेकार्थिकानां भेदोपन्यासेनान्वाख्यानमर्थगरीयस्त्वख्यापनार्थम्, उक्तं च-"सुत्तहरा अत्थहरो अत्थहरा होइ तदुभयधरो उ।" इत्यादि, तत्रानुयोगाख्यप्रथमद्वारस्वरूपं व्याचिख्यासुराह-

नामं ठवणा दविए, खित्ते काले वयण-भावे य । एसो अणुओगस्सा, निक्खेवो होइ सत्तविहो ॥ १२९ ॥

नामानुयोगो यस्य जीवादेरनुयोग इति नाम क्रियते, नाम्नो वा अनुयोगो नामानुयोगो-नामव्याख्या, यदिवा नाम्नाऽनुरूपो योगो नामानुयोगः, उक्तं च-"नामस्स जोऽणुयोगो, अहवा जस्साभिहाणमणुयोगो। नामेण व जो जोग्गो जोगो नामाणुजोगो सो॥ १॥" (वि. १३८९) स्थापना-अक्षनिक्षेपादिरूपा, तत्र योऽनुयोगं कुर्वन् स्थाप्यते सोऽनुयोगानुयोगवतोरभेदोपचारात् स्थापनानुयोगः, स्थापना चासावनुयोगश्च स्थापनानुयोगः, यदिवा स्थापनाया अनुयोगो-व्याख्या स्थापनानुयोगः अथवा यः स्थापनाया अनुकूलो योगः-सम्बन्धः, किमुक्तं भवति ?-यस्य स्थापना स्थाप्यमाना देशकालाद्यपेक्षया युक्ता प्रतिभासते इति स स्थापनानुयोगः, उक्तं च-"ठवणाए जोऽणुयोगोऽणुयोग इति वा ठवेज्जए जं तु। जा वेह जस्स ठवणा जोग्गा ठवणाणुजोगो सो ॥ १ ॥" द्रव्यानुयोगो द्विधा-आगमतो नोआगमतश्च, तत्र आगमतोऽनुयोगपदार्थज्ञाता तत्र चानुपयुक्तः, 'अनुपयोगो द्रव्य'मिति वचनात्, नोआगमतस्त्रिधा, तद्यथा-ज्ञशरीरद्रव्यानुयोगो भव्यशरीरद्रव्यानुयोगस्तद्व्यतिरिक्तश्च, तत्र ज्ञशरीरभव्यशरीरे प्रसिद्धे, तद्व्यतिरिक्तस्त्वनेकधा-द्रव्यस्य द्रव्याणां द्रव्येण द्रव्यैर्द्रव्ये द्रव्येषु वा अनुयोगो द्रव्यानुयोगः, एवं क्षेत्रादिष्वपि षड्भेदयोजना कार्या, तत्र द्रव्यस्यानुयोगो

द्विधा, तद्यथा–जीवद्रव्यस्यानुयोगोऽजीवद्रव्यस्यानुयोगश्च, एकैकोऽपि चतुर्धा, तद्यथा–द्रव्यतः क्षेत्रतः कालतो भावतश्च, उक्तं च—"दव्वस्स उ अणुयोगो, जीवद्दव्वस्स वा अजीवस्स। एक्केकंमि य एत्तो, हवंति दव्वाइया चउरो ॥ १ ॥" (वि. १३९३) तत्र द्रव्यतो जीव एकं द्रव्यं क्षेत्रतोऽसङ्ख्येयप्रदेशावगाढः कालतोऽनाद्यपर्यवसितः भावतोऽनन्तज्ञानानन्तदर्शनचारित्र-देशचारित्राचारित्रागुरुलघुपर्यायवान्, एष जीवद्रव्यस्य द्रव्यादिभेदाच्चतुर्द्धाऽनुयोगः, अजीवद्रव्याणि परमाण्वादीनि, तत्राजीवद्रव्यस्य द्रव्यादिभेदाच्चतुर्द्धाऽनुयोग एवं–द्रव्यतः परमाणुरेकं द्रव्यं क्षेत्रतो एकप्रदेशावगाढः कालतो जघन्ये-नैकं समयं द्वौ वा उत्कर्षतस्त्वसङ्ख्येया उत्सर्पिण्यवसर्पिणीर्यावत् भावतस्त्वेकरस एकवर्ण एकगन्धो द्विस्पर्श इति, एतेषां स्वस्थानेऽनन्ता रसादिपर्याया एकगुणतिक्तादिभेदेन द्रष्टव्याः, एवं द्व्यणुकादीनामपि अनन्ताणुकस्कन्धावसानानां स्वरूपं द्रष्टव्यम्। उक्तो द्रव्यस्यानुयोगः, साम्प्रतं द्रव्याणामनुयोगोऽभिधीयते, सोऽपि द्विधा–जीवद्रव्याणामजीवद्र-व्याणां च, एकैकोऽपि चतुर्धा, तद्यथा–द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र अनन्तानि जीवद्रव्याणि इति द्रव्यतः, जीवद्रव्याणि सर्वलोकापन्नानीति क्षेत्रतः, अनाद्यनिधनानि जीवद्रव्याणि इति कालतः, तथा अनन्तानि परमाण्वादी-न्यजीवद्रव्याणि इति द्रव्यतः तानि समस्तलोकाश्रितानीति क्षेत्रतः तत्तत्सामग्रीवशात् तथा २ सादिपर्यवसानानि अनाद्यनिधनानि धर्मास्तिकायादिनीति वा कालतः, भावतोऽनुयोगो जीवद्रव्याणामजीवद्रव्याणां च यथा प्रज्ञापनायां, तथा च तत्र सूत्रम्—"कइविहा णं भंते! पज्जवा पन्नत्ता?, गोयमा! दुविहा पन्नत्ता, तंजहा–जीवपज्जवा य अजीव-पज्जवा य, जीवपज्जवा णं भंते! किं संखेज्जा असंखेज्जा अणंता?, गोयमा! नो संखेज्जा नो असंखेज्जा अणंता, एव-

मजीवपज्जवावि अणंता" इत्यादि, उक्तो द्रव्याणामनुयोगः, सम्प्रति द्रव्येण द्रव्यैर्वा द्रव्ये द्रव्येषु वा अनुयोगो भाव्यते, तत्र एकया खटिकया एकेन प्रलेपनैकेनाक्षादिना वा कृत्वा योऽनुयोगः क्रियते स द्रव्येणानुयोगः, यस्तु बहुभिरक्षादिभिः स द्रव्यैरनुयोगः, यस्तु द्रव्ये फलकादावुपविष्टेनानुयोगः क्रियते स द्रव्येऽनुयोगः, यस्तु बहुषु फलकेषु प्रभूतासु वा निषद्यासूपविष्टेन स द्रव्येष्वनुयोगः, तथा क्षेत्रस्यैकस्य जम्बूद्वीपादेरनुयोगो यथा जम्बूद्वीपप्रज्ञप्तिः, तस्या जम्बूद्वीपलक्षणैकक्षेत्रव्याख्यानरूपत्वात्, बहूनां क्षेत्राणामनुयोगो यथा द्वीपसागरप्रज्ञप्तिः, बहूनां द्वीपसमुद्राणां तया व्याख्यानात्, क्षेत्रेणानुयोगो यथा पृथिवीकायिकादिसङ्ख्याव्याख्यानं जम्बूद्वीपं प्रस्थकं कृत्वा, उक्तं च—"जंबुद्दीवपमाणं, पुढविजियाणं तु पत्थयं काउं। एवं मविज्जमाणा हवंति लोगा असंखेज्जा ॥ १ ॥" (वि. १४००) क्षेत्रैरनुयोगो यथा बहुद्वीपसमुद्रप्रमाणं प्रस्थकं कृत्वा पृथिवीकायादिसङ्ख्याभणनम्, उक्तं च—"खेत्तेहिं बहुदीवेहिं पुढविजियाणं तु पत्थयं काउं। एवं मविज्जमाणा हवंति लोगा असंखेज्जा ॥१॥" (१४०२) क्षेत्रेऽनुयोगस्तिर्यग्लोके भरतादौ वा क्षेत्रेष्वनुयोगोऽर्द्धतृतीयेषु द्वीपसमुद्रेषु, कालस्यानुयोगो यथा समयस्यानुयोगद्वारेषु प्ररूपणा, कालानामनुयोगः प्रभूतानां समयावलिकादीनां प्ररूपणा, कालेनानुयोगो यथा बादरवायुकायिकानां वैक्रियशरीराणि अद्धापल्योपमस्यासङ्ख्येयभागमात्रेणापह्रियन्ते, कालैरनुयोगो यथा प्रत्युत्पन्नास्त्रसकायिकाः प्रतिसमयमेकैकापहारेणापह्रियमाणा असङ्ख्येयाभिरुत्सर्प्पिण्यवसर्प्पिणीभिरपह्रियन्ते इति, कालेऽनुयोगो द्वितीयपौरुष्यां, कालेषु अनुयोगो यथा अवसर्पिण्यां तृतीयचतुर्थपञ्चमेष्वारकेषु, तद्यथा—सुषमाचरमभागे दुष्षमसुषमायां दुष्षमायां चेति, उत्सर्प्पिण्यां कालद्वये—दुष्षमसुषमायां सुषमदुष्षमायां। वचनस्यानुयोगो यथा इत्थम्भूत-

मेकवचनं द्विवचनं वहुवचनं वा, वचनानामनुयोगो यथा इत्थंभूतान्येकवचनद्विवचनवहुवचनानि, यदिवा षोडशानां
वचनानामनुयोगः, तानि च षोडश वचनान्यमूनि–“लिंगतियं वयणतियं कालतियं तह परोक्ख पच्चक्खं । उवणयऽव-
णयचउक्कं अज्झत्थं होइ सोलसमं ॥ १ ॥ अस्या अक्षरगमनिका–लिङ्गत्रिकं इयं स्त्री अयं पुरुषः इदं नपुंसकमिति,
वचनत्रिकं एकवचनं द्विवचनं वहुवचनमिति, कालत्रिकमकरोत् करोति करिष्यतीति, परोक्षवचनं यथा स इति, प्रत्यक्षवचनं
यथा अयमिति, उपनयः–स्तुतिरपनयो–निन्दा तयोर्वचनचतुष्कं, यथा–रूपवती स्त्रीत्युपनयवचनं, कुरूपा स्त्रीत्यपन-
यवचनं, रूपवती स्त्री किन्तु कुशीलेत्युपनयापनयवचनं, कुरूपा स्त्री किन्तु सुशीलेत्यपनयोपनयवचनमिति, तथा
अन्यच्चेतसि निधाय विप्रतारकवुद्ध्या अन्यद्विभणिषुरपि सहसा यच्चेतसि तदेव वक्ति यत् तत्षोडशमध्यात्मवचनं,
वचनेनानुयोगो यथा कश्चिदाचार्यः साध्व्यादिभिरभ्यर्थित एकेनापि वचनेनानुयोगं करोति, वचनैरनुयोगो यथा स एव
वहुभिर्वचनैरभ्यर्थितस्तं करोति, क्षायोपशमिके तु वचने स्थितस्यानुयोगो वचनेऽनुयोगः, वचनेष्वनुयोगो व्यक्तिवि-
वक्षया वहुषु क्षायोपशमिकेषु वचनेषु स्थितस्य, अन्ये तु प्रतिपादयन्ति–वचनेषु नास्त्यनुयोगः, वचनस्य क्षायोपशमि-
कत्वेनैकतया वहुत्वासम्भवात्, भावानुयोगो द्विधा–आगमतो नोआगमतश्च, तत्रागमतो ज्ञाता उपयुक्तः, नोआग-
मतो भावस्यानुयोगोऽन्यतमस्यौदयिकादेर्व्याख्यानं, भावानामनुयोगो नाम वहूनामौदयिकादीनां भावानां व्याख्यानं,
भावेनानुयोगः सङ्ग्रहादीनां पञ्चानामध्यवसायानामन्यतरेणाध्यवसायेन योऽनुयोगः, सङ्ग्रहादयः पञ्चामी–‘पञ्चहिं
ठाणेहिं सुयं वाएज्जा, तंजहा–संगहट्ठयाए १ उवग्गहट्ठयाए २ निज्जरट्ठयाए ३ सुअपज्जवजाएणं ४ अव्वोच्छित्तीए ५’

अस्य स्थानाङ्गसूत्रस्यायमर्थः–कथं नु नामैते शिष्याः सूत्रार्थसङ्ग्राहकाः सम्पत्स्यन्ते इति सङ्ग्रहार्थता, कथं नु नाम गीतार्था भूत्वा वस्त्राद्युत्पादनेन गच्छस्योपग्रहकरा भविष्यन्तीत्युपग्रहार्थता, ममाप्येतान् वाचयतः कर्मनिर्जरा विपुला भविष्यतीति कर्म्मनिर्जरार्थता, तथा श्रुतपर्यवजातं–श्रुतपर्यायराशिर्ममापि वृद्धिं यास्यतीति श्रुतपर्यवजातं चतुर्थं कारणं, श्रुतस्य शिष्यप्रशिष्यपरम्परागततया अव्यवच्छित्तिर्भूयादिति पञ्चममव्यवच्छित्तिः कारणं, एतैः पञ्चभिरभिप्रायैः श्रुतं सूत्रतोऽर्थतश्च वाचयेदिति, एषामेव सङ्ग्रहादिभावानां मध्यात् द्वित्रादिभिर्भावैः सर्वैर्वाऽनुयोगं कुर्वतो भावैरनुयोगः, क्षायोपशमिके भावे स्थितस्य व्याख्यां कुर्वतो भावेऽनुयोगः, भावेषु पुनर्नास्त्यनुयोगः, क्षायोपशमिकभावस्य एकत्वाद्, अथवा एकोऽपि क्षायोपशमिको भाव आचारादिशास्त्रलक्षणविषयभेदादनेकधा भिद्यते तदाऽऽचारादिशास्त्रविषयभेद-भिन्नेषु बहुषु क्षायोपशमिकेषु भावेषु बुद्ध्या व्यवस्थितस्य व्याख्यां कुर्वतो भावेष्वनुयोग इत्यप्यविरुद्धमिति, अथवा प्रतिक्षणमन्यथाऽन्यथा परिणमिते क्षायोपशमिकभावेऽपि ततः प्रतिक्षणमन्यस्मिन् अन्यस्मिन् परिणममाने क्षायोपशमिके भावेऽवस्थितस्य व्याख्यां कुर्वतो घटते भावेष्वनुयोग इति ॥ अथ तेषु द्रव्यक्षेत्रकालभावानुयोगेषु कस्य कुत्र समावेशः ?, उच्यते, इह द्रव्ये नियमाद्भावः, पर्यायरहितस्य द्रव्यस्यासम्भवात्, द्रव्यपर्यायौ च क्षेत्रकालाविनाभाविनौ, ततो द्रव्या-नुयोगे भावानुयोगस्य कालानुयोगस्य क्षेत्रानुयोगस्य चावतारो भवति, क्षेत्रे तु द्रव्यकालभावानुयोगानां भजना, तथाहि–यदि क्षेत्रं लोकरूपं विवक्ष्यते तर्हि तत्र द्रव्याणि धर्मास्तिकायादीनि सन्ति कालश्च वर्त्तनादिलक्षणः समयाव-लिकादिरूपो वा भावास्तु गुरुलघवोऽगुरुलघवो वा वर्णादिरूपाश्च, ततः क्षेत्रानुयोगे लोकक्षेत्रविषये विवक्षिते द्रव्यानुयोगः

कालानुयोगो भावानुयोगश्च यथाविवक्षं सम्भवति, अथालोकरूपस्य क्षेत्रस्यानुयोगविवक्षा तर्हि न तत्रान्यानि द्रव्याणि सन्ति, येऽप्यगुरुलघुपर्यायास्तेऽपि प्रतीता एव, अमूर्तत्वादलोकाकाशस्य, कालश्च तत्र सन्नपि वर्त्तनादिरूपो न विवक्ष्यते, व्यवहारा-भावात्, तदभावश्चानाद्यनिधनतया प्रतीतत्वात्, ततोऽलोकरूपक्षेत्रानुयोगे न द्रव्यानुयोगस्य न कालानुयोगस्य नापि भावानुयोगस्य सम्भव इति क्षेत्रानुयोगे द्रव्यकालभावानुयोगानां भजना, कालानुयोगः पुनर्द्रव्यक्षेत्रभावानुयोगेषु भजनया, कालो हि नाम द्विधा भवति—वर्त्तनादिरूपः समयावलिकादिरूपश्च, तत्र यदि वर्त्तनादिलक्षणो विवक्ष्यते ततः समस्तद्रव्यक्षेत्रभावव्यापीति द्रव्यानुयोगे क्षेत्रानुयोगे भावानुयोगे च कालानुयोगस्य सम्भवः, अथ समयावलिकादिरूपस्य विवक्षा तर्हि (सं) समयक्षेत्र एव नान्यत्रेति समयक्षेत्रगतद्रव्यक्षेत्रभावानुयोगेषु तदनुयोगस्य सम्भवो, न तद्बहिर्द्रव्यक्षेत्रभावानुयोगेष्विति, उक्तं च—“दव्वे नियमा भावो न विणा ते यावि खेत्तकालेहिं । खेत्ते तिण्हवि भयणा कालो भयणाएँ तीसुंपि ॥ १ ॥” (वि. १४०८) उक्तोऽनुयोगः, एतद्विपरीतोऽननुयोगः, साम्प्रतमनुयोगाननुयोगप्रतिपादकदृष्टान्तप्रतिपादनार्थमाह—

वच्छगगोणी खुज्जा सज्झाए चेव वहिरउल्लावो । गामेल्लए य वयणे सत्तेव य होंति भावम्मि ॥ १३० ॥

इह यथा नामादिभेदात् सप्तविधोऽनुयोगो वर्णितस्तथाऽननुयोगोऽपि यथासम्भवं वर्णयितव्यः, तत्र नामस्थापने सुगमे, द्रव्याननुयोगे तत्प्रसङ्गतो द्रव्यानुयोगे वत्सगावावुदाहरणं, क्षेत्राननुयोगानुयोगयोः कुब्जा उदाहरणं, कालाननुयोगानुयोगयोः स्वाध्यायः, वचनाननुयोगानुयोगयोरुदाहरणद्वयं, तद्यथा—वधिरोल्लापो ग्रामेयकश्च, भावे तु उदाहरणानि सप्त वक्ष्यमाणानि । तत्र वत्सगोदृष्टान्तभावना इयम्—“जइ गोदोहतो जो पाडलाए वच्छगो तं वहुलाए मुयइ वाहुलेयं वा

उपोद्घात-
निर्युक्तिः

॥१३३॥

द्रव्याद्यनु-
योगादौ
दृष्टान्ताः

वच्छगं पाडलाए मुयइ तोऽणणुयोगो दुद्धकज्जस्स य अप्पसिद्धी, जइ पुण जो जाए तं ताए चेव मुयइ तो अणुयोगो तो दुद्धकज्जस्स य निप्फत्ती, एवमिहावि जइ जीवलक्खणेणमजीवं परूवेइ अजीवलक्खणेणं वा जीवं तो अणणुओगो भवइ, ततो वितहपरूवणेण विसंवयंतेण अत्थो विसंवयइ, अत्थेण विसंवयंतेण चरणं विसंवयइ, चरणविणासे मोक्खाभावो, मोक्खाभावे दिक्खा निरत्थिगा, अह पुण जीवलक्खणेणं जीवं परूवेइ अजीवलक्खणेणं अजीवं तो अनुयोगो, ततो कज्जसिद्धी, अविगलो अत्थावगमो होइ, ततो चरणवुड्ढी ततो मोक्खो इति, उक्तो द्रव्याननुयोगानुयोगयोर्वत्सगोदृष्टान्तः। सम्प्रति क्षेत्राननुयोगानुयोगयोः कुब्जोदाहरणं भाव्यते—पइट्ठाणे नगरे सालिवाहणो राया, सो वरिसे वरिसे भरुयच्छे नयरे नहवाहणं रायाणं रोहेइ, जाहे य वरिसारत्तो पत्तो हवइ ताहे सनगरं पइ जाइ, एवं कालो वच्चइ। अन्नया तेण रोहएण गएल्लएणमत्थाणमंडवियाए निट्ठूतं, तस्स य पडिग्गहधारिणी खुज्जा, सा चिंतेइ—नूणं राया जातुकामो तेण एसा अपरिभोगा संभाविया, तीसे य राउलतो जाणसालितो परिचितो, तीए तस्स सिट्ठं, सो (तेण) पए जाणगाणि पमक्खिउं पयट्टावियाणि य, तं दट्ठूण सेसतो खंधावारो पट्ठितो, राया रहसि एक्कल्लो धूलादिभया गच्छिस्सामित्ति पयट्टो जाव सव्वो खंधावारो पट्ठितो दिट्ठो, राया चिंतेइ—न मए कस्सइ कहियं, कहमेएहिं नायं?, गविट्ठं परंपरएण जाव खुज्जत्ति, ततो पुच्छिया खुज्जा, ताए तहेवमक्खायं, एत्थ खुज्जाए अपरिभोगं खेत्तं जायंति पण्णवंतीए अणुओगो, अन्नहा पुण अणणुओगो, एवं निप्पएसमेगंतनिच्चमेकमागासं पडिवज्जावंतस्स अणणुओगो, सप्पदेसाइ पुण पडिवज्जाविंतस्स अणुयोगो। कालाननुयोगानुयोगयोः स्वाध्यायोदाहरणभावना—एगो साहू पादोसियं परियट्टंतो रहसेण कालं न याणइ, सम्मद्दिट्ठिगा य देवया तं

॥१३३॥

हियट्ठाए बोहेइ मिच्छदिट्ठिगाइ भएणं, सा तक्कस्स घडं भरेऊण महया महया सद्देण घोसेइ-महियं महियं विक्काइ इति, सो तीसे कण्णारोडगमसहंतो भणइ-अहो तक्कवेलत्ति, सा भणइ-जहा तुब्भं सज्झायवेला तहा ममवि तक्कवेलत्ति, ततो साहू उवउंजिऊण मिच्छादुक्कडंति भणइ, देवयाए अणुसासिओ-मा पुणोवि एवं काहिसि, मा मिच्छादिट्ठियाए छलिज्जिहिसि, तस्स अकाले सज्झायंतस्स अणणुयोगो, देवयाए कालं साहंतीए अणुयोगो। इदानीं वचनविषये बधिरोल्लापोदाहरणभावना—एगंमि गामे बहिरकुडुंबं परिवसइ, थेरो थेरी य ताणं पुत्तो तस्स भज्जा, सो पुत्तो हलं वाहेइ, अन्नया पंथे वच्चंतो पंथएहिं पंथे पुच्छिते भणइ—घरजायगा एए मज्झ बइल्ला, ततो खेत्तं गतो,भज्जाए तस्स भत्तमाणियं, तीसे कहेइ—जहा एए मज्झ बइल्ला सिंगिया, सा भणइ—लोणियं वा अलोणियं वा तव मायाए रद्धं, नाहं जाणामि, तीए घरे आगंतूण सासुयाए कहियं, सा कत्तंती चिट्ठइ, ततो सा भणइ—थुल्लं वा वरडं वा भवउ मे सुत्तं, थेरस्स पोत्तं होहिइ, ततो थेरो आगतो, सो किर तिलरक्खगो आसि, ततो थेरीए भणियं-जहा एवं ते वहू भणति, ततो मए भणियं-थुल्लं वा वरडं वा भवतु, थेरस्स पोत्तं होहिइत्ति, थेरो भणइ-पाउं ते जिएण एगंपि तिलं न खामि, एत्थ तेसिं तं वयणं अन्नहा कहंताणमणणुजोगो, तहेव कहंताणं पुण अणुजोगो, एवं जइ एगवयणं परूवियव्वं दुवयणं परूवेइ दुवयणे वा एगवयणं तो अणणुयोगो, अह तहेव परूवेइ तो अणुयोगो। इदानीं ग्रामेयकोदाहरणं भाव्यते-एगंमि नगरे एगा महिला, सा भत्तारे मए कट्ठाईणिवि ता विक्कीयाणि, घिच्छामोत्ति ता जीवमाणी खुड्डुगं पुत्तं घेत्तुं गामं गया, सो दारतो वड्ढंतो मायरं पुच्छइ—कहिं मम पिया ?, तीए सिट्ठं-जहा मतो इति, ततो सो पुणो पुच्छइ-केण पगारेण सो जीवियाइतो ?, सा भणइ—ओ-

लग्गाए, तो खाइं अहंपि ओलग्गामि, सा भणइ—न जाणिहिसि ओलग्गिउं, ततो पुच्छइ—कहं ओलग्गिज्जइ?, भणितो— विणयं करेज्जासि, केरिसो विणतो?, भणइ—जोक्कारो कायव्वो नीयं चंकमियव्वं छंदाणुवत्तिणा होयव्वं, ततो सो नगरं पहावितो, अंतरा अणेण वाहा मयाण गहणत्थं निलुक्का दिट्ठा, ततो सो वड्डेणं सद्देणं तेसिं जोक्कारोत्ति भणइ, तेण सद्देण मया पलाया, ततो तेहिं रुट्ठेहिं सो घेत्तुं पहतो, सब्भावो णेण कहितो, ततो तेहिं भणियं—जया एरिसं पेच्छेज्जासि तया निलुक्कंतेहिं नीयं आगंतव्वं, न य उल्लविज्जइ, सणियं वा, ततो अग्गे गच्छंतेण रयगा दिट्ठा, ततो निलुक्कंतो सणियं सणियं एइ, तेसिं च रयगाणं पोत्तगा हीरंति, ते थाणं बंधिऊण रक्खंति, सो निलुक्कंतो एइ, एस चोरोत्ति तेहिं गहितो बंधितो पिट्टितो य, सब्भावे कहिते मुक्को, तेहिं भणियं—एवं भणिज्जासि—सुद्धं नीरयं निम्मलं च भवतु, ऊसं च पडउ, ततो सो नयरसंमुहं एइ, एगत्थ बीयाणि वाविज्जंति, तेण भणियं—भट्टि! सुद्धं नीरयं भवतु, ऊसो य पडउ, ततो तेहिं किमकारणवेरिओ एवं भासइत्ति गहितो बंधितो पिट्टितो य, सब्भावे कहिते मुक्को, भणितो य—एरिसे कज्जे एवं भण्णइ—बहुं एरिसं भवतु, भंडिं भरेह एयस्स, ततो पुणो नगरसम्मुहं एति, एगत्थ मडयं नीणिज्जंतं दट्ठुं भणति—बहुं एरिसं भवतु, भंडिं भरेह एयस्स, तत्थवि गहितो पिट्टितो य, सब्भावे कहिते मुक्को, भणितो य—एरिसे कज्जे एवं वुच्चइ—एरिसेणं अच्चंतवियोगो भवतु, अन्नत्थ विवाहे भणइ—अच्चंतविओगो भवउ, तत्थवि पिट्टिओ, सब्भावे कहिए मुक्को, भणितो य—एरिसे कज्जे एवं भण्णइ—निच्चं एरिसयाणि पेच्छंतया होह, सासयं च एयं हवतु, ततो गच्छंतो एगत्थ नियलबद्धं दंडियं दट्ठूण एवं भणति—निच्चं एरिसयाणि पेच्छंतया होह, सासयं च भे एयं हवउ, तत्थवि गहितो

पिट्टितो य, सब्भावे कहिते मुक्को, भणितो य—एरिसे कज्जे एवं भणिज्जासि—एयातो मे लहुं मुक्खो हवउत्ति, ततो गच्छंतो एगत्थ केइ मित्ता संघाडयं करिंते पिच्छइ, तत्थ भणइ—एयातो मे लहुं मोक्खो भवउ, तत्थवि पिट्टिओ, सब्भावे कहिए मुक्को, गतो नगरे, तत्थ एगस्स दंडिकुलपुत्तगस्स अल्लीणो, सो सेवंतो अच्छइ, अन्नया दुब्भिक्खे तस्स कुलपुत्तस्स अंबिखल्लिया सिद्धिल्लिया, तस्स भज्जाए सो भण्णति—जाहि महाजणमज्झातो सद्दावेहि जेण भुंजइ, सीयला अपाओग्गा भविस्सइ, तेण गंतुं महायणमज्झे वड्डेणं सद्देणं भणितो—एहि एहि सीयली किर होइ अंबखल्लिया, सो लज्जितो, घरं गएण अंबाडितो, भणितो य—एरिसे कज्जे नीयमागंतूणं कण्णे कहिज्जइ, अन्नया घरं पलित्तं, तस्स भज्जाए भणितो—लहुं सद्दावेह ठक्कुरंति, ततो सो तत्थ गतो सणियं सणियं आसन्नं होऊण कण्णे कहेइ, जाव सो तत्थ गच्छा सणियं सणियं आसन्नं होऊण अक्खाउं पयट्टो ताव घरं सव्वं झामियं, तत्थवि अंबाडितो, भणितो य—एरिसे कज्जे न आगम्मइ, नवि अक्खाइज्जइ, किंतु अप्पणा चेव पाणियं वा गोमुत्तं वा आदिं काउं गोरसंपि छुब्भइ ताव जाव विज्झाइ, अन्नया तस्स दंडिपुत्तगस्स ण्हाइऊण धूविंतस्स धूमो निग्गच्छइत्ति गोमुत्तं छूढं गोमुत्ताइयं च । एवं जो अन्नंमि कहियव्वे अन्नं कहेइ तो अणणुयोगो भवति, सम्मं कहेज्जमाणे अणुयोगो' इति, द्वितीयं च वचनाननुयोगानुयोगविषयमुदाहरणं वचनानुयोगस्य गरीयस्त्वख्यापनार्थम् ॥ यदुक्तम्—'सप्तैव भवन्ति भावाननुयोगानुयोगविषयाण्युदाहरणानि' तानि प्रतिपादयति—

सावगभज्जा सत्तवईए य कोंकणगदारए नउले । कमलामेला संबस्स साहसं सेणिए कोवो ॥ १३१ ॥

प्रथममुदाहरणं श्रावकभार्या १ द्वितीयं साप्तपदिकः पुरुषः २ तृतीयं कोङ्कणदारकः ३ चतुर्थं नकुलः ४ पञ्चमं

तत्र श्रावकभार्योदाहरणमि-
कमलामेला ५ षष्ठं शांवस्य साहसं ६ सप्तमं श्रेणिकस्य षष्ठीसप्तम्योरर्थं प्रत्यभेदात् कोपः ७। तत्र श्रावकभार्योदाहरणमि-
दम्-सावगेण नियभज्जाए वयंसिया उब्भडरूवा आभरणालंकारविभूसिया दिट्ठा, अज्झोववन्नो, एयं चिय सुमरिउं
दुब्बलो भवइ, महिलाए पुच्छितो न कहेइ, निब्बंधे सिट्ठं, तीए भणियं-आणेमि, ताहे संज्ञासमए तेहिं चेव
वत्थाभरणेहिं अप्पाणं नेवत्थित्ता अंधकारे अल्लीणा संवुत्था, पच्छा वितियदिवसे अद्धिइं पगतो वयं खंडियंति, ततो
ताए भणियं-वयं न खंडियं, अहं चेवागया, साभिन्नाणं पत्तियावितो, एवं जो ससमयवत्तव्वयं परसमयवत्तव्वयं भणइ, परस-
मयवत्तव्वयं वा ससमयवत्तव्वयं, उदइयभावलक्खणेण उवसमियं भावं परूवेइ उवसमियभावलक्खणेण वा ओदइयं, ताहे
अणणुयोगो, सम्मं परूविज्जमाणे अणुयोगो। तथा सप्तभिः पदैर्व्यवहरतीति साप्तपदिकः, तदुदाहरणमिदं—एगंमि पच्चंत-
गामे एगो ओलग्गयमणूसो साहुमाहणाईणं न सुणेइ,न वा समीवमल्लियइ, नावि सेज्जं देइ, मा मम धम्मं कहेहिंति, माऽहं
धम्मं सोच्चा सड्ढओ होहामित्ति, अन्नया तं गामं साहुणो आगता, पडिस्सयं मग्गंति, ताहे गोट्ठिल्लएहिं सो न देइत्ति सोवि
एएहिं पवंचितो होउ इति तस्स घरं दंसियं, जहा एरिसो तारिसो तुब्भ भत्तो सावगोत्ति एयस्स घरं जाह, ताहे साहूणो
तं घरं गया, दिट्ठो सो, परं न चेव आढाइ, तत्थ एक्केण साहुणा भणियं—जह न चेव सो एसो, अहवा पवंचियामोत्ति,
तं सोऊण तेण ते साहूणो पुच्छिता, कहियं जहा अम्ह कहियं एरिसो तारिसो वा सावगोत्ति, सो चिंतेइ-अहो अकज्जं,
ममं ताव पवंचंतु, तो किं साहुणो पवंचंतित्ति, ताहे मा तेसिमसारया होउत्ति भणइ—देमि पडिस्सयं एकाए ववत्थाए,
जइ मम धम्मं न कहेह, साहूहिं भणियं—एवं होउत्ति, दिन्नं घरं, वरसारत्ते निवत्ते आपुच्छंति-अम्हे विहरामो, ताहे

सो भणइ—भयवं ! इत्थ न किंचि मूल-
पयट्टा साहुणो अन्नत्थ विहरिउं, तेण अणुवइया, ततो सीमापज्जंते धम्मो कहितो, मारेउकामेणं जावइएणं कालेणं
गुणं उत्तरगुणं मज्जमहुमंसविरई वा घेत्तुं तीरइ, पच्छा साहूहिं सत्तवइयं वयं दिन्नं, गया साहुणो । अन्नया सो चोरियाए
सत्त पया ओसक्किज्जंति एवइयं कालं पडिक्खिउं मारेयव्वं, संबुज्झिस्सइत्तिकाउं, सा पुरिसनेवत्थं काऊणं भाउ-
गतो, अवसउणेणं नियत्तो रत्तिं सणियं घरं एइ, तद्दिवसं च तस्स भगिणी आगतेल्लिया, इयरो य आगतो,
ज्जायाए समं नडपेक्खिया गया, चिरेण आगया, निद्दकंताओ तहेव एक्कंमि चेव सयणे सइयातो, एयंमि अंतरे तस्स भगिणीए
ततो पेच्छइ, परपुरिसोत्ति असिं करिसित्ता आहणामित्ति, वयं सुमरियं, ठितो सत्तपयंतरं, तेण सरेणं नाया—भगिणी मे
बाहा भज्जाए अक्कंतिया, तीए दुक्खाविज्जंतीए भणियं—हला अवणेहि बाहातो मे सीसं, उवणतो जहा सावगभज्जादिट्ठंते,
एस पुरिसनेवत्थिया इति, लज्जितो जातो, अहो मए मणागेण अकज्जं न कयंति, पिया से अन्नमह-
सो संबुद्धो पव्वइतो । कोंकणकदारकोदाहरणमिदम्—कोंकणगविसए एक्को दारगो, तस्स माया मता, जाव एसो जीवइ ताव
लियं न लहइ, सवत्तिपुत्तो अच्छइ इति, अन्नया सपुत्तगो कट्ठाणं गतो, ताहे अणेण चिंतियं—अन्नेण कंडेण विद्धो,
महिलं न लभामि, तो मारेमि एयमिति कंडं पक्खित्तं, आणत्तो—वच्च कंडं आणेहि, सो पहावितो, विद्धोमित्ति अणणु-
चेडेण भणियं—किं तए कंडं खित्तं ?, विद्धोमित्ति, पुणोवि खित्तं, रडंतो मारितो, पुव्वमयाणंतेण सारक्खंतस्स अणुयोगो,
योगो, मारिज्जामित्ति एवं नाए अणुयोगो, अहवा सारक्खणिज्जं मारेमित्ति अणणुयोगो, नकुलोदाहरणमिदम्—एगा चार-
एवं अन्नं परूवेयव्वं अन्नं परूवेंतस्स अणणुयोगो, जहाभूतं परूवेमाणस्स अणुयोगो ।

भडिया गब्भिणी जाया, अन्नावि नउलिया गब्भिणी चेव, तत्थ एगाए एव रत्तीए समगं ताओ पसूयातो, ततो चारभडीए चिंतियं—मम पुत्तस्स रमणतो भविस्सइ, तस्सवि नउलस्स पीहयं खीरं च देइ, अन्नया तीसे अविरइयाए कंडंतीए जत्थ मंचुल्लियाए सो दिकरओ उयारितो तत्थ सप्पेण चडित्ता खइतो मतो, नउलेणं मंचुल्लियाए ओयरंतो दिट्ठो, ततो तेण खंडाखंडीकतो, ताहे सो तेण रुहिरलित्तेण तुंडेण तीसे अविरइयाए मूलं गंतूण चाडु करेइ, ताहे नायं—एएण मम पुत्तो खइतो, मुसलेण आहणित्ता मारितो, ताहे धावंती गया पुत्तस्स मूलं, जाव सप्पं खंडाखंडीकयं पासइ, ताहे दुगुणतरं अद्धिइं पगता, तीसे अविरइयाए पुव्विं अणणुयोगो पच्छा अणुओगो, एवं जो अन्नं परूवेयव्वं अन्नं परूवेइ तस्स अणणुयोगो, जो पुण तं चेव परूवेइ तस्स अणुयोगो। कमलामेलोदाहरणं—बारवईए बलदेवपुत्तस्स निसढस्स पुत्तो सागरचंदो रूवेणमुक्किट्ठो, सव्वेसिं संबाईणं इट्ठो, तत्थ य बारवतीए वत्थव्वस्स चेव अन्नस्स रण्णो कमलामेला नाम धूया, उक्किट्ठसरीरा, सा य उग्गसेणनत्तुयस्स धणदेवस्स वरेल्लिया, इतो य नारदो सागरचंदस्स घरे समागतो, अब्भुट्ठितो य सागरचंदेण, ततो उवविट्ठं समाणं सागरचंदो नारयं पुच्छइ—भयवं! दिट्ठं किंचि अच्छेरयं?, सो भणइ—आमं दिट्ठं, कहिं?, इहेव बारवतीए कमलामेला नाम दारिगा, सागरचंदो पुच्छइ—कस्सइ सा दिण्णिया?, नारदो भणइ—आमं, ततो सो भणइ—कहं मम ताए समं संपओगो हुज्जा?, नारदो न याणामित्ति भणिय गतो, सो य सागरचंदो तं सोऊण नवि आसणे नवि सयणे धिइं लभइ, तं दारियं फलए लिहंतो नामं च गेण्हंतो अच्छइ, नारदोवि कमलामेलाए अंतियं गतो, ताए पुच्छितो—दिट्ठं किंचि अदिट्ठपुव्वमच्छेरयंति?, सो भणइ—दुवे दिट्ठाणि—रूवेण सागर-

तेण गंतुमक्खियं सागरचं-
चंदो विरूवत्तणेण धणदेवो, ततो सागरचंदे मुच्छिता धणदेवे विरत्ता, नारएण समासासिया, संबो आगतो
दस्स जहा तुमं सा इच्छतित्ति, ताहे सागरचंदस्स माया अन्ने य कुमारा आदन्ना—मरइ नूणं सागरचंदोत्ति, सागरचंदेण
जाव पेच्छइ सागरचंदं [illegible]लवमाणं ताहे अणेण पच्छतो ठाइऊण अच्छीणि दोहिवि हत्थेहिं पच्छाइयाणि, तुमं
भणियं—कमलामेला इति, संबेण भणियं—नाहं कमलामेला, किंतु अहं कमलामेलो, ततो सागरचंदेण भणियं—आमं अब्भुवगच्छावितो,
चेव ममं विमलकमलदललोललोयणिं कमलामेलं मेलेहिसि, ताहे तेहिं कुमारेहिं संबो मज्जं पायइत्ता विज्जं पाडि-
विगतमदो चिंतेइ—अहो मए आलो अब्भुवगतो, इयाणिं किं सक्का काउं ?, निव्वहियव्वंति पज्जुन्नं पन्नत्तिं कमलामेला, रेवते
हारियं मग्गइ, तेण दिन्ना, ततो कमलामेलाए विवाहदिवसे सविज्जाए पडिरूवं विउव्विऊणमवहरिया अट्टट्टहासं
उज्जाणे तीए सह विवाहं काऊणं सव्वे मिलिया उवललंता अच्छंति, विज्जापडिरूवंपि विवाहे वट्टमाणे केणवि
काऊण उप्पइयं, ततो जातो खोभो, न णज्जइ केणइ हरियत्ति, नारदो पुच्छितो भणइ—रेवइए उज्जाणे दिट्ठा, सव्वे सेसा
विज्जाहरेण अवहरिया इति, ततो सबलवाहणो निग्गतो कण्हो, संबो विज्जाहररूवं काऊण संपलग्गो जुज्झिउं, ततो संबेण
राइणो पराइया, ततो कण्हेण सद्धिं लग्गो, ततो जाहे अणेण नातो रुट्ठो तातोत्ति ततो से चलणेसु पडितो, भोगे भुंज-
भणियं—एसा अम्हेण गवक्खेणं अप्पाणं मुयंती दिट्ठा, ततो कण्हेण उग्गसेणो अणुगमितो, पच्छा इमाणि धम्मं सोऊण
माणाणि विहरंति, अन्नया भयवं अरिट्ठनेमिसामी समोसरितो, ततो सागरचंदो कमलामेला य सामिसगासे पडिमं ठाइ,
गहियाणुव्वयाणि सावगाणि संवुत्ताणि, ततो सागरचंदो अट्ठमिचउद्दसीसु सुन्नघरेसु वा सुसाणेसु वा एगराइयं

धणदेवेणं एय नाऊण तंवियातो सूइतो घडावियातो, ततो सुन्नघरे पडिमं ठियस्स वीससुवि अंगुलीनहेसु अक्खोडियातो, ततो सम्ममहियासेमाणो वेयणाभिभूतो कालगतो देवो जातो, ततो विइयदिवसे गवेसंतेहिं दिट्ठो अक्कंदो जातो, गवेसंतेहिं सूईतो दिट्ठातो, तंवकुट्टगसगासे उवलद्धं–धणदेवेण कारावियाओ, रुसिया कुमारा धणदेवं मग्गंति, दोण्हवि वलाणं युद्धं संपलग्गं, ताहे सागरचंदो देवो अंतरे ठाऊण उवसामेइ, पच्छा कमलामेला भयवतो सगासे पव्वइया, एत्तियं पसंगेण भणियं, एत्थ सागरचंदस्स संवकुमारं कमलामेलं मन्नमाणस्स अणणुयोगो, नाहं कमलामेलत्ति भणिए अणुयोगो, एवं जो विवरीयं परूवेइ तस्स अणणुयोगो, जहाभावं परूवेमाणस्स अणुयोगो। संवस्स साहसमुदाहरणं–जंववती कण्हं भणइ–एक्कावि मए पुत्तस्स अणाडिया न दिट्ठा, कण्हेण भणियं—अज्ज दाएमि, ताहे कण्हेण जंववईए आभीरीरूवं कयं, सयं आभीरो जातो, दोवि तक्कं घेत्तुं वारवइमज्झमोइण्णाणि महियं विक्किणंति, संवेण दिट्ठाणि, आभीरी भणिया—एहि महियं किणामित्ति, सा अणुगच्छइ, आभीरो मग्गेण एइ, सो एक्किलयं देउलियंमि पविसेइ, सा आभीरी भणइ–नाहं पविसामि, किंतु मोल्लं देहि, जइ इच्छा तो एत्थ चेव ट्ठितो तक्कं गेण्हाहि, सो भणइ–अवस्सं पइसियव्वं, सा नेच्छइ, ताहे हत्थे लग्गो, आभीरो उद्धाइतो, संवेण समं संपलग्गो, संवो जुद्धमहिट्ठितो, आभीरो वासुदेवो जातो, इयरीवि जंववती, ततो संबो पियरं मायरं च पासिऊण लज्जितो अंगुट्ठिं काऊण पलाइतो, विइयदिवसे मज्झाए आणिज्जंतो खीलगं घडेइ, वासुदेवेण पुच्छितो–किं एयं घडेहिसि ?, सो भणइ–जो पारियासियं वोल्लं कहेहि तस्स मुहे खोडिज्जिहिइ, एत्थ पढममणणुयोगो, नाए अणुयोगो, एवं जो विवरीयं परूवेइ तस्स अणणुयोगो, इयरस्स अणुयोगो। श्रेणिककोपोदाहरणम्—

॥ १२७ ॥

रायगिहे नयरे सेणिको राया, चेल्लणा तस्स भज्जा, सा वद्धमाणसामिमपच्छिमतित्थयरं वंदित्ता वेयालियवेलाए माहमासे नयरं पविसइ, अंतरापहे य साहू पडिमापडिवन्नतो दिट्ठो, तीए रत्तिं सुत्तियाए किहवि हत्थो लंवितो, जया सीएण गहितो तया चेतियं, हत्थो सउडिमज्झे पवेसितो, तस्स हत्थस्स तणएण सव्वं सरीरं सीएण गहियं, पच्छा ताए भणियं—स तवस्सी किं करिस्सइ संपयं ?, पच्छा सेणिएण चिंतियं—संगारदिन्नतो कोई, रुट्ठेण पभाए अभयो भणितो—सिग्घमंतेउरं पलीवेहि, सेणिको गतो सामिसगासं, अभएणं हत्थिसाला पलीविया, सेणिको सामिं पुच्छइ—किं चेल्लणा एगपत्ती अणेगपत्ती ?, सामिणा भणियं—एगपत्ती, ताहे मा डज्झिहित्ति तुरियं निग्गतो, अभयो य निप्फिडइ, सेणिएण भणियं—पलीवियं ?, अभयो भणति—आमं, सेणितो भणइ—तुमं किं न पडितो ?, भणइ—अहं सामिमूले पव्वइस्सामि, किं मम अग्गिणा ?, ताहे अभएण चिंतियं—मा विणस्सिहिइ, पच्छा भणियं—न डज्झइ, सेणियस्स चेल्लणाए पुव्विं अणणुयोगो, पुच्छिए अणुयोगो, एवं विवरीयपरूवणे अणणुयोगो, जहाभावे परूविए अणुओगो, ॥ एवं तावदनुयोगः सप्रतिपक्षः प्रपञ्चेनोक्तो, नियोगोऽपि प्राक्प्रतिपादितस्वरूपमात्रः सोदाहरणोऽनुयोगवदवसेयः, साम्प्रतं प्रागुपन्यस्तभाषादिस्वरूपप्रतिपादनार्थमाह—

कट्ठे पोत्थे चित्ते सिरिघरिए वोंड देसिए चेव । भासग विभासए वा वित्तीकरणे य आहरणा ॥ १३२ ॥

काष्ठ इति काष्ठविषयो दृष्टान्तः, यथा काष्ठे कश्चित् रूपकारः स्वल्पाकारमात्रं करोति, कश्चित् स्थूलावयवनिष्पत्तिं, कश्चित्पुनरशेषाङ्गोपाङ्गाद्यवयवनिष्पत्तिं, एवं काष्ठकल्पं सामायिकादिसूत्रं, तत्र भाषकः परिस्थूरमर्थमात्रमभिधत्ते

यथा समभावः सामायिकमिति, विभाषकस्तु तस्यैवानेकधा अर्थमभिधत्ते, यथा समभावः सामायिकं, समानां वा ज्ञानदर्शनचारित्राणां वाऽऽयः समायः समाय एव सामायिकं, स्वार्थे इकणप्रत्यय इत्यादि, तथा व्यक्तिकरणशीलो व्यक्तिकरः, यः खलु निरवशेषव्युत्पत्तिअतिचारानतिचारफलादिभेदभिन्नमर्थं भाषते स व्यक्तिकर इति भावः, स च निश्चयतः चतुर्दशपूर्वधर एव, इह भाषकादिस्वरूपान्वाख्यानात् भाषादय एव प्रतिपादिता द्रष्टव्याः, भाषादीनां तत्प्रभवत्वात्, उक्तं च– 'पढमो रूवागारं थूलावयवोवदंसणं बीओ। तइतो सव्वावयवो निद्दोसो सव्वहा कुणइ ॥ १ ॥ कट्ठसमाणं सुत्तं तदत्थरूवेगभासणं भासा। थूलट्ठाण विभासा सव्वेसिं वत्तियं नेयं ॥ २ ॥ (वि.१४२६-७) सम्प्रति पुस्तविषयो दृष्टान्तः, यथा पुस्ते कश्चिदाकारमात्रं करोति, कश्चित्परिस्थूलावयवनिष्पत्तिं, कश्चित्त्वशेषावयवनिष्पत्तिमिति, दार्ष्टान्तिकयोजना प्राग्वत्। इदानीं चित्रविषयो दृष्टान्तः, यथा चित्रकर्म्मणि कश्चिद्वर्त्तिकाभिराकारमात्रं करोति, कश्चित् हरितालादिवर्णोद्भेदं, कश्चित्त्वशेषपर्यायैर्निष्पादयति, दार्ष्टान्तिकयोजना पूर्ववत्। श्रीगृहिकोदाहरणम्–श्रीगृहं–भाण्डागारं तदस्यास्तीति 'अतोऽनेकस्वरा'दिति इकप्रत्ययः, तद्दृष्टान्तभावना इयम्–कश्चिद्रत्नानां भाजनमेव वेत्ति, इह भाजने रत्नानि सन्तीति, कश्चिज्जातिमानादि, कश्चित्पुनर्गुणानपि, एवं प्रथमद्वितीयतृतीयकल्पा भाषकादयो द्रष्टव्याः। तथा 'बोण्ड'मिति पद्मं, तद्यथा ईषद्भिन्नमर्द्धभिन्नं विकसितरूपमिति त्रिधा भवति, एवं भाषाद्यपि क्रमेण योजनीयम्। इदानीं देशिकविषयमुदाहरणं, देशनं देशः—कथनमित्यर्थः सोऽस्यास्तीति देशिकः, यथा कश्चिद्देशिकः पन्थानं पृष्टः सन् दिग्मात्रमेव कथयति, कश्चित्तद्व्यवस्थितग्रामनगरादिभेदेन, कश्चित्पुनस्तदुत्थगुणदोषभेदेन कथयति, एवं भाषादयोऽपि क्रमेण

योजनीयाः । तदेवं तावद्विभाग उक्तः, सम्प्रति द्वारविधिमवसरप्राप्तमपि विहाय व्याख्यानविधिः प्रतिपाद्यते, अथ चतुरनुयोगद्वारानधिकृत एव व्याख्यानविधिस्ततः किमर्थं प्रतिपाद्यते इति ?, उच्यते, शिष्याचार्ययोः सुखश्रवणसुख-व्याख्यानप्रवृत्त्या शास्त्रोपकारार्थम्, अथवा चतुरनुयोगद्वाराधिकृत एव व्याख्यानविधिः, अनुगमेऽन्तर्भावाद्, अन्तर्भावश्च व्याख्याङ्गत्वादित्यभिहितमेतत् प्रागपि, आह—यद्यसावनुगमाङ्गं ततः किमवतार्य द्वारविधेः प्राक् प्रतिपाद्यते ?, उच्यते, इह द्वारविधिरपि बहुवक्तव्यस्ततो मा भूदिहापि व्याख्यानविधिविपर्यय इत्यत्रैवाचार्यशिष्ययोर्गुणदोषाः प्रतिपाद्यन्ते, येनाचार्यो गुणवते शिष्यायानुयोगं करोति, शिष्योऽपि गुणवदाचार्यसन्निधावेव शृणोतीति, ननु यदि व्याख्यानविधि-रनुगमाङ्गत्वादिहावतार्य प्रोच्यते तर्हि द्वारगाथायामप्येवं कस्मान्नोपन्यस्तः ?, उच्यते, सूत्रव्याख्यानस्य गुरुत्वख्याप-नार्थं, यथा विशेषतः सूत्रव्याख्यायामाचार्यः शिष्यो वा गुणवान् अन्वेष्टव्यः, इत्यलं विस्तरेण । व्याख्यानविधिं प्रतिपादयति—

**गोणी चंदणकंथा चेडीओ सावए बहिरगोहे । टंकणओ ववहारो पडिवक्खे आयरिय—सीसे ॥ १३३ ॥**

आचार्यशिष्ययोर्योग्यायोग्यविचारे गौणी—गौस्तदुदाहरणं वक्तव्यम्, तथा चन्दनकन्था तथा चेट्यौ—जीर्णाभिनव-श्रेष्ठिपुत्रिके, तथा श्रावकः तथा बधिरगोहः—बधिरपुरुषः तथा टंकणव्यवहारः षष्ठ उदाहरणम्, एतेषु षट्सूदाहरणेषु शिष्याचार्ययोः साक्षादयोग्यत्वमभिधाय ततः प्रतिपक्षे योग्यत्वं योजनीयं, योग्यत्वं वा साक्षादभिधाय ततः प्रतिपक्षेऽ-योग्यत्वमायोज्यम्, अथवा एषां षण्णामुदाहरणानां मध्ये योग्यत्वायोग्यत्वयोः क्रमेणैकमुदाहरणमाचार्यस्य एकं शिष्य-

स्येत्येवं योजना कार्या, तत्रायं गोदृष्टान्तः-एगम्मि नयरे एगेण कस्सइ धुत्तस्स सगासे गावी रोगिया उट्ठिउंपि असमत्था निविट्ठा चेव पक्किणिया, सो तं पडिविक्किणइ, ततो कयगा भणंति-पेच्छामो से गइपयारं दुद्धं च जोएमि ता किणीहामि, सो भणइ-मए एवंविहा उवविट्ठा चेव गहिता, जइ पडिहाइ तुम्हेवि एवमेव गिण्हह, इयरे भणंति-जइ तुमं बोद्दहो ता किं अम्हेवि बोद्दहा, वयं न गेण्हामो, एवं जो आयरिओ पुच्छितो परिहारं दाउमसमत्थो भणइ-मएवि एवं सुयं, तुम्हेवि एवं सुणहत्ति, तस्स सगासे न सोयवं, संसइयपयंमि मिच्छत्तसंभवातो, जो पुण अविकलगोविक्किणगो इव अक्खेवनिण्णयपसंगपारगामी तस्स सगासे सोयवं, सीसोवि अविचारियगाही पढमगोविक्किणगोव सो य अजोग्गो, इयरो अ जोग्गोत्ति । चन्दनकन्थोदाहरणम्-बारवईए वासुदेवस्स तिन्नि भेरीओ, तंजहा-संगामिया अब्भुइया कोमुइया, तत्र प्रथमा सङ्ग्रामकाले समुपस्थिते सामन्तादीनां ज्ञापनार्थं वाद्यते, द्वितीया पुनरागन्तुके कस्मिंश्चित्प्रयोजने समुद्भूते लोकानां सामन्तादीनां च परिज्ञापनाय, तृतीया कौमुदीमहोत्सवाद्युत्सवज्ञापनार्थं, तातो तिण्णिवि गोसीसचंदणमइतो देवतापरिग्गहियातो, तस्स चउत्थी भेरी असिवप्पसमणी, तीसे उप्पत्ती कहिज्जइ-तेणं कालेणं तेणं समएणं सक्को देविंदो, सो तत्थ देवलोगे सुरमज्झे वासुदेवस्स गुणकित्तणं करेइ-अहो उत्तमपुरिसा एए अवगुणं न गिण्हंति, नीएण य जुद्धेण न जुज्झंति, तत्थ एगो देवो असद्दहंतो आगतो, वासुदेवोऽवि जिणसगासं वंदगो पट्ठितो, सो अंतरा कालसुणयरूवं मययं विउवइ दुब्भिगंधं, तस्स गंधेण सवो लोगो पराभग्गो, वासुदेवेण दिट्ठो, भणियं चऽणेण—अहो इमस्स कालसुणयस्स पंडुरा दंता मरगयभायणनिहित्तमुत्तावलीव रेहिंति, देवो चिंतेइ-सच्चं गुणग्गाही, ततो वासुदेवस्स आसरयणं

गहाय पहावितो, सो य वंदुरापालएण नातो, तेण कूवियं—जहा आसो हीरइ, ततो कुमारा रायाणो अ निग्गया, ते देवेण हयविप्पहया काऊण धाडिया, वासुदेवो निग्गतो, भणइ—कीस मम आसरयणं हरसि ?, एसो मम आसो तुब्भ न होइ, देवो भणइ-इमं जुज्झे पराजिणिऊण गिण्हाहि, वासुदेवेण भणियं—वाढं, किह जुज्झामो ? तुमं भूमीए अहं च रहेणं तो रहं गेण्ह, देवो भणइ—अलं मे रहेण, एवं आसो हत्थी पडिसिद्धो, वायाजुद्धाइयाइं सवाइं पडिसेहेइ, तो खाइं केण जुज्झेण जुज्झियवं ?, देवो भणइ— अहिट्ठाणजुद्धेण, वासुदेवेण भणितं—पराजितोऽहं, नेहि आसरयणं, नाहं नीयजुद्धेण जुज्झामि, ततो देवो तुट्ठो समाणो भणति—वरेहि वरं किं ते देमि ?, वासुदेवेण भणियं—असिवोवसमणिं भेरिं देहि, तेण दिन्ना, एसा तीसे भेरीए उप्पत्ती। ताहे सा छण्हं छण्हं मासाणंते वाइज्जइ, तत्थ जो सद्दं सुणेइ तस्स पुव्वुप्पन्ना रोगा उवसमंति, नवगावि छम्मासे न उप्पज्जंति, तत्थऽन्नया कयाइ आगंतुको वाणियगो आयातो, सो य अतीव दाहज्जरेणाभिभूतो, तं भेरीपालगं भणइ—गेण्ह तुमं सयसहस्सं मम एत्तो पलमेत्तं देहि, तेण लोभेण दिन्ना, तत्थऽन्ना चंदणथिग्गलिया दिन्ना, एवमन्नेणवि अन्नेणवि मग्गितो दिन्नं च, सा सवा चंदणकंथा जाता, सा अन्नया कयाइ असिवे वासुदेवेण तालाविया, जाव तं चेव सभं पूरेइ, तेण भणियं—जोएह मा भेरी विणासिया होज्जा, ताहे जोइया दिट्ठा कंथीकया, हा भेरी सवा विणासिया, तओ सो भेरीपालो ववरोवितो, अन्ना भेरी अट्ठमभत्तेण आराहइत्ता लद्धा, अन्नो भेरीपालो कतो, सो आयरेण रक्खइ, सो पूइतो। एवं यः शिष्यः सूत्रमर्थं वा परमतेन स्वकीयग्रन्थान्तरेण वा मिश्रयित्वा कन्थां करोति अथवा विस्मृतं सूत्रमर्थं वा सुशिक्षितः स्वयमेवाहं नान्यं कञ्चित्कदाचित्किमपि पृच्छामीत्यहंकारेण

परमतादिभिरपि मिश्रयित्वा सम्पूर्णं विदधाति सोऽनुयोगश्रवणस्य न योग्यः, एवं कन्थीकृतसूत्रार्थो गुरुरपि नानुयोगभाषणस्य योग्यः, उक्तं च–"जो सीसो सुत्तत्थं चंदणकंथं व परमयाईहिं। मीसेइ गलियमहवा सिक्खियमाणेण स न जोग्गो ॥१॥ कंथीकयसुत्तत्थो, गुरूवि जोग्गो न भासियवस। अविणासियसुत्तत्था, सीसायरिया विणिद्दिट्ठा॥२॥" (वि. १४३८-९) अत्र 'सिक्खियमाणेण' इति सुशिक्षितोऽहं स्वयमेव नान्यं पृच्छामीति मानेन, 'गलितं–विस्मृतं सम्पूर्णं करोति इत्यर्थः, शेषं सुगमम्। सम्प्रति चेटीदृष्टान्त उच्यते–वसंतपुरे नयरे जुण्णसेट्ठिधूया अभिनवसेट्ठिधूया य, तासिं परोप्परं पीई, तहवि से जुण्णसेट्ठिधूयाए अत्थि वेसो, जहा-अम्हे एएहिं उवट्टियाणि, ताओ अन्नया कयाइ मज्जिउं गयातो, तत्थ जा सा नवगस्स सेट्ठिस्स धूया सा तिलगचोद्दसगेण अलंकारेण अलंकिया, सा आभरणाणि तडे ठवित्ता ओइन्ना, जुन्नसेट्ठिधूया ताणि गहाय पहाविता, इयरा जाणइ-खेड्डुं करेइ इति, तीए जुण्णसेट्ठिधूयाए मायापिऊणं सिट्ठं, ताणि भणंति-तुण्हिका अच्छाहि, नवगसेट्ठिधूया ण्हाइत्ता निययं घरं गया, पिउमाऊणं कहियं, तेहिं मग्गिते न दिंति, अम्हें उवट्टियाणित्ति परिभूताइं, किं आभरगाणिवि अम्हाणं नत्थि ?, रायकुले ववहारो जातो, नत्थि सक्खी, तत्थ कारणिगा भणंति–चेडितो वाहिज्जंतु, वाहित्ता भणिया–जइ तुब्भच्चयं ता आविंध, ताहे सा जुण्णसेट्ठिधूया जं हत्थे तं पाए आविंधेइ, जं पाए तं हत्थे, न याणेइ, तं च से असिलिट्ठं जायं, ताहे तेहिं नायं, जहा–एतीए न होंति, ताहे इयरी भणिया–तुमं आविंध, ताए कमेण आविद्धं, सिलिट्ठं च से जायं, भणिया य–मेलेहि, ताहे तहेव निच्चं आमुंचतीए परिवाडीए मुक्कं, ताहे सो जुण्णसेट्ठी दंडितो, जहा सो एगभवियं मरणं पत्तो एवमायरिओऽवि जं अन्नत्थ तमन्नहिं

संघडेइ, अन्नवत्तव्वयातो अन्नत्थ परूवेइ, एवं सो संसारदंडेण दंडिज्जइ, तारिसस्सगासे न सोयवं, जह सा नवगसेट्ठि- धूया जसं पत्ता आविंधणसुहं च एवं जो आयरिओ न विसंवाएइ तेण अरहंताणं आणा कया भवइ, तस्स पासे सुत्तत्थाणि गहेयव्वाणि, एत्थ गाहातो—"अत्थाणत्थनिउत्ताऽऽभरणाणं जुण्णसेट्ठिधूयय। न गुरू विहिभणिए वा विवरीय- निजोजतो सीसो ॥ १ ॥ सत्थाणत्थनिउत्ता ईसरधूया सभूसणाणं वा। होइ गुरू सीसोविय विणिजोजंतो जहाभणियं ॥२॥" (वि.१४४०-१) श्रावकोदाहरणं पूर्ववत्, नवरमेवमुपसंहारः-"चिरपरिचियंपि न सरइ सुत्तत्थं सावगो सभज्जं व। जो न स जोगो सीसो गुरुत्तणं तस्स दूरेणं ॥१॥" (वि.१४४२) बधिरपुरुषोदाहरणमपि पूर्ववदेव, नवरमत्रैवमुपसंहारः-"अन्नं पुट्ठो अन्नं जो साहइ सो गुरू न बहिरोव्व। न य सीसो जो अन्नं सुणेइ अणुभासए अन्नं ॥ १ ॥" (वि. १४४३) सम्प्रति टंकणकव्यवहारोदाहरणं-उत्तरावहे टंकणानाम मेच्छा, ते सुवण्णदंताईहिं दक्खिणावहगाइं भंडाइं गेण्हंति, ते य अवरो- प्परं भासं न याणंति, पच्छा पुंजे करंति, हत्थेणं उच्छाइंति, जाव इच्छा न पूरइ न ताव अवणेंति, एवं एएसिं इच्छियपडि- च्छितो ववहारो, आयरिएणं ताव सिस्सस्स अत्थो भाणियव्वो जाव तस्स पडिपुन्नं गहणं, सीसेण य ताव पुच्छियव्वं जाव उवगयंति, एसा टंकणवणितोवमा। इत्थमुक्तेन प्रकारेण गवादिषु द्वारेषु साक्षादभिहितार्थविपर्ययः प्रतिपक्षः स आचार्य- शिष्ययोर्यथायोगं योजनीयः, स च योजित एवेति। सम्प्रति विशेषतः शिष्यदोषगुणान् प्रतिपादयति—

कस्स न होही वेसो अणब्भुवगओ य निरुवगारी य। अप्पच्छंदमईओ पत्थियओ गंतुकामो य ॥ १३४ ॥

विणओणएहिं पंजलियडेहिं छंदमणुयत्तमाणेहिं। आराहिओ गुरुजणो सुयं बहुविहं लहुं देइ ॥ १३४ ॥

आह-शिष्यदोपगुणाभिधानं किमर्थम् ?, उच्यते, कालान्तरेण तस्यैव गुरुत्वभवनादयोग्याय च गुरुपदविधाने तीर्थकराज्ञादिलोपप्रसङ्गात्, तत्र प्रथमगाथाव्याख्या-कस्य गुरोर्न भवति द्वेष्टा(ष्यः)-अप्रीतिकरः शिष्यः ?, अपि तु भवत्येव, किं सर्व एव ?, नेत्याह-अनभ्युपगतः-श्रुतसम्पदा अनुपसम्पन्नः, अनिवेदितात्मा इति भावः, उपसंपन्नोऽपि न सर्व एवाद्वेष्यो भवति, तत आह—'निरुपकारी च' निरुपकर्त्तुं शीलमस्येति निरुपकारी-गुरूणां निरुपकारकः, गुरुकृत्येष्वप्रवर्त्तक इति भावः, उपकार्यपि न स सर्व एवाद्वेष्य इत्यत आह-आत्मच्छन्दा-आत्मायत्ता मतिर्यस्य कार्येष्वसावात्मच्छन्दमतिकः-स्वाभिप्रायकार्यकारी, गुर्वायत्तमतिरपि न सर्व एवाद्वेष्यः, तत आह-'प्रस्थितो' यो योऽन्यः कोऽपि शिष्यो गन्तुमनास्तस्य द्वितीयः, तथा गन्तुकामश्च, गन्तुकामो नाम सोऽभिधीयते यः सदैव गन्तुमना व्यवतिष्ठते, वक्ति च-कोऽस्य गुरोः सन्निधानेऽवतिष्ठते ?, समर्थ्यतामेतत् श्रुतस्कन्धादि ततो यास्यामीति, तदेवंभूतः शिष्यो न योग्यः श्रवणस्य । इदानीं गुणाः प्रतिपाद्यन्ते-विनयः-अभिवन्दनादिलक्षणस्तेनावनता विनयावनतास्तैरित्थंभूतैः सद्भिः, तथा पृच्छादिषु कृताः प्राञ्जलयो यैस्ते कृतप्राञ्जलयस्तैः, तथा-छन्दो-गुर्वभिप्रायः तं इङ्गिताकारादिना विज्ञाय तदध्यवसितश्रद्धानसमर्थनकरणकारणादिना अनुवर्त्तमानैः, उक्तं च—सद्दहइ समत्थेइ य कुणइ करावेइ गुरुजणाभिमयं । छंदमणुयत्तमाणो स गुरुजणाराहणं कुणइ ॥ १ ॥" (वि. १४५३) तैरेवं आराधितो गुरुजनः श्रुतं—सूत्रार्थोभयरूपं बहुविधम्—अनेकप्रकारं लघु -शीघ्रं ददाति—प्रयच्छति ॥ सम्प्रति प्रकारान्तरेण शिष्यपरीक्षां प्रतिपादयति—

सेलघण-कुडग-चालणि-परिपूणग-हंस-महिस-मेसे य । मसग-जलूग-विराली जाहग-गो-भेरी-आहेरी ॥ १३६ ॥

'सेल'त्ति मुद्गशैलः-मुद्गप्रमाणः पाषाणविशेषः घनो-मेघः, शैलश्च घनश्च शैलघनः तदुदाहरणं प्रथमं, कुटो-घटः, चालणी प्रतीता, परिपूणकः-सुघरीचिटिकागृहं, हंसमहिषमेषमसकजलौकाविडाल्यः प्रतीताः, जाहकः-सेडुलकः, गौः भेरी आभेरी च प्रतीता। उदाहरणं च द्विधा भवति-चरितं कल्पितं च, उक्तं च-"चरियं च कप्पियं वा आहरणं दुविहमेव पन्नत्तं। अत्थस्स साहणट्ठा इंधणमिव ओयणट्ठाए॥ १॥" (पिण्डनि. ६३०) तत्थ इमं कप्पियं, तंजहा—मुग्गसेलो पुक्खलसंवट्टतो य महामेहो जंबुद्दीवपमाणो, तत्थ य नारयत्थाणीओ कलहं संजोएइ, मुग्गसेलं भणति-तुम्भ नामग्गहणे कए पुक्खलसंवट्टतो भणइ-जहा णं एगाए धाराए विराएमि-भिनद्मीति भावार्थः, सेलो उप्पासितो भणइ—जइ मे तिलतुसतिभागंपि उल्लेइ तो नामं न वहामि, पच्छा मेहस्स मूले भणइ मुग्गसेलवयणाइं सउक्करिसाइं, ततो सो कुवितो सव्वायरेण जुगप्पमाणाहिं धाराहिं वरिसितुमारद्धो, सत्तरत्ते वुट्ठे चिंतेइ-इयाणिं गतो सो वरागोत्ति ठितो, इयरो मिसिमिसंतो उज्जलतरो जातो दिप्पिउमारद्धो, भणइ-जोहारोत्ति, मेहो लज्जितो गतो, एवं च कोई सीसो मुग्गसेलसमाणो एगंपि पयं नावगाहइ, ततो अन्नो आयरिओ गज्जंतो आगतो, अहण्णं गाहेमि, पठति च गर्वाध्मातमानसः-"आचार्यस्यैव तज्जाड्यं, यच्छिष्यो नाववुध्यते। गावो गोपालकेनेव, कुतीर्थेनावतारिताः॥ १॥" ततो पढावेउमारद्धो, न सक्कितो, लज्जितो, एरिसस्स न दायव्वं, कस्मादिति चेत्, उच्यते, इह यस्मान्न वन्ध्या गौः शिरःश्रृङ्गवदनपृष्ठपुच्छोदरादौ सस्नेहं स्पृष्टा सती दुग्धप्रदायिनी भवति, तथा स्वाभाव्याद्, एवमेषोऽपि सम्यक् पाठ्यमानोऽपि पदमप्येकं नावगाहते, ततो न तस्य तावदुपकारः, आस्तां तस्योपकाराभावः प्रत्युताचार्ये सूत्रे चापकीर्त्तिरुपजायते, यथा न सम्यक्कौशल्यमाचार्यस्य व्याख्या-

याम्, इदं वाऽध्ययनं न समीचीनम्, कथमयमन्यथा नावबुध्यते इति, अपि च–तथाविधकुशिष्यपाठने तस्यावबोधाभावात् उत्तरोत्तरसूत्रार्थानवगाहने सूरेः सकलावपि शास्त्रान्तर्गतौ सूत्रार्थौ भ्रंशमाविशतः, अन्येषामपि च पटुश्रोतृणामुत्तरोत्तर-सूत्रार्थावगाहनहानिप्रसङ्गः, उक्तं च–"आयरिए सुत्तंमि य परिवाओ सुत्तअत्थपलिमंथो। अन्नेसिंपि य हाणी पुट्ठावि न दुद्धया वंझा ॥१॥" (वि.१४५७) मुद्गशैलप्रतिपक्षाद् ततो योग्यशिष्यविषयो दृष्टान्तः कृष्णभूमिप्रदेशः, तत्र हि प्रभूतमपि निपतितं जलं तत्रैवान्तः परिणमति, न पुनः किञ्चिदपि ततो बहिरपगच्छति, एवं यो विनेयः सकलसूत्रार्थग्रहणधारणे समर्थः स कृष्णभूमिप्रदेशतुल्यः, स च योग्यः, ततस्तस्मै दातव्यमिदमध्ययनमिति, उक्तं च–"वुट्ठेऽवि दोणमेहे न कण्हभोमाओ लोट्टए उदयं। गहणधरणासमत्थे, इय देयमछित्तिकारंमि ॥ १ ॥" (वि.१४५८) सम्प्रति कुटदृष्टान्तभावना—कुटा-घटाः, ते द्विविधास्तद्यथा–नवीना जीर्णाश्च, नवीना ये सम्प्रत्येवापाकतः समानीताः, जीर्णा द्विविधा–भाविता अभाविताश्च; भाविता द्विविधाः—प्रशस्तद्रव्यभाविता अप्रशस्तद्रव्यभाविताश्च, तत्र ये कर्पूरागुरुचन्दनादिभिः प्रशस्तद्रव्यैर्भावितास्ते प्रशस्तद्रव्यभाविताः, ये पुनः पलाण्डुलशुनसुरातैलादिभिर्भावितास्तेऽप्रशस्तद्रव्यभाविताः, प्रशस्ताप्रशस्तद्रव्यभाविता अपि द्विधा–वाम्या अवाम्याश्च, अभाविता नाम ये केनापि द्रव्येण न वासिताः, एवं शिष्या अपि प्रथमतो द्विधा–नवीना जीर्णाश्च, तत्र ये बालभावे वर्त्तमाना अज्ञानिनः सम्प्रत्येवावबोधयितुमारब्धास्ते नवीनाः, जीर्णा द्विविधा—भाविता अभाविताश्च, तत्राभाविता ये केनापि दर्शनेन न वासिताः, भाविता द्विविधाः–कुप्रावचनिकपार्श्वस्थादिभिः संविग्नैश्च, कुप्रावचनिकपार्श्वस्थादिभिरपि भाविता द्विविधाः—वाम्या अवाम्याश्च, संविग्नैरपि भाविता द्विधा–वाम्या अवा-

शिष्यपरीक्षायां शैलादिदृष्टान्ताः

म्याश्च, तत्र ये नवीना ये जीर्णा अभाविता ये च कुप्रावचनिकादिभाविता अपि वम्या ये च संविग्नभाविता अवाम्यास्ते सर्वेऽपि योग्याः, शेषा अयोग्याः। अथवाऽन्यथा कुटदृष्टान्तभावना—इह चत्वारः कुटास्तद्यथा—छिद्रकुटः खण्डकुटः कण्ठहीनकुटः सम्पूर्णकुटश्च, तत्र यस्य अधो बुध्ने छिद्रं स छिद्रकुटः, यस्य पुनरोष्ठपरिमण्डलाभावः स कण्ठहीनकुटः, यस्य पुनरेकपार्श्वे खण्डेन हीनता स खण्डकुटः, यः पुनः सर्वावयवसंपूर्णः स संपूर्णकुटः, एवं शिष्या अपि चत्वारो वेदितव्याः, तत्र यो व्याख्यानमण्डल्यामुपविष्टः सर्वमर्थमवबुध्यते व्याख्यानादुत्थितश्च न किमपि स्मरति स छिद्रकुटसमानो, यथा हि छिद्रकुटो यावत्तदवस्थ एव गाढमवनितलसंलग्नोऽवतिष्ठते तावन्न किमपि जलं ततः श्रवति, स्तोकं वा किञ्चिदिति, एवमेषोऽपि यावदाचार्यः पूर्वापरानुसन्धानेन सूत्रार्थमुपदिशति तावदवबुध्यते, उत्थितश्चेद्व्याख्यानमण्डल्याः तर्हि स्वयं पूर्वापरानुसन्धानविकलत्वान्न किमपि अनुस्मरति, यस्तु व्याख्यानमण्डल्यामप्युपविष्टोऽर्द्धमात्रं त्रिभागं चतुष्कं वा हीनं वा सूत्रार्थमवधारयति तथाऽवधारितं च स्मरति स खण्डकुटसमानः, यस्तु किञ्चिदूनं सूत्रार्थमवधारयति पश्चादपि च तथैव स्मृतिपथमवतारयति स कण्ठहीनकुटसमानः, यस्तु आचार्योक्तं सकलमपि सूत्रार्थं यथावदवधारयति पश्चादपि च तथैव संपूर्णं स्मरति स सम्पूर्णकुटसमानः,अत्र छिद्रकुटसमान एकान्तेनायोग्यः,शेषा यथोत्तरं प्रधानाः प्रधानतराः प्रधानतमाः। सम्प्रति चालनीदृष्टान्तभावना, चालनी लोकप्रसिद्धा यया कणिक्कादि चाल्यते, तत्र यथा चालन्यामुदकं प्रक्षिप्यमाणं तत्क्षणादेव गच्छति, न पुनः कियन्तमपि कालमवतिष्ठते, तथा यस्य सूत्रार्थः प्रदीयमानो यदैव कर्णे प्रविशति तदैव विस्मृतिपथमुपैति स चालणीसमानः, तथा च मुद्गशैलच्छिद्रकुटचालणीसमानशिष्यभेदप्रदर्शनार्थमुक्तं भाष्यकृता—"सेलेयछिड्डुचालिणि मिहोकहा सोउ उट्ठियाणं तु।

छिड्डुाह तत्थ विट्ठो सुमरिंसु सरामि नेयाणिं ॥ १ ॥ एगेण विसइ बीएण, नीइ कण्णेण चालिणी आह । धन्नोऽत्थ आह सेलो जं पविसइ नीइ वा तुब्भं ॥ २ ॥" (वि.१४६३-४) तत एषोऽपि चालनीसमानो न योग्यः । चालनीप्रतिपक्षभूतं च वंशदलनिर्मापितं तापसभाजनं, ततो हि विन्दुमात्रमपि जलं न स्रवति, उक्तं च—"तावसखउरकढिणयं चालणिपडिवक्खु न सवइ दवंपि (वि.१४६५)" ततस्तत्समानो योग्यः । सम्प्रति परिपूणकदृष्टान्तो भाव्यते, परिपूणको नाम घृतक्षीरगालनं सुगृहाभिधचटकाकुलायो वा, तेन ह्याभीर्यो घृतं गालयन्ति, ततो यथा स परिपूणकः कचवरं धारयति घृतमुञ्झति तथा शिष्योऽपि यो व्याख्यावाचनादौ दोषानभिगृह्णाति गुणांस्तु मुञ्चति स परिपूणकसमानः, स चायोग्यः, आह च चूर्णिकृत्—"वक्खाणाइसु दोसं हियर्यमि ठवेइ मुयइ गुणजालं । सो सीसो अ अजोग्गो भणितो परिपूणगसमाणो ॥१॥"(नन्दीटीप्प.) आह—सर्वज्ञमतेऽपि दोषाः सम्भवन्तीत्यश्रद्धेयमेतत्, सत्यम्, उक्तमत्र भाष्यकृता—"सव्वन्नुप्पामन्ना दोसा हु न संति जिणमए केऽवि । जं अणुवउत्तकहणं, अपत्तमासज्ज व हवंति ॥ १ ॥(वि.१४६६)" सम्प्रति हंसदृष्टान्तभावना—यथा हंसः क्षीरमुदकमिश्रितमपि उदकमपहाय क्षीरमापिवति तथा शिष्योऽपि यो गुरोरनुपयोगादिसम्भवान् दोषान् अवधूय गुणानेव केवलानादत्ते स हंससमानः, स चैकान्तेन योग्यः?, ननु हंसः क्षीरमुदकमिश्रितमपि कथं विभक्तीकरोति ?, येन क्षीरमेव केवलमापिवति, न तूदकमिति, उच्यते, जिह्वाया अम्लत्वेन कूर्चिकीभूय पृथग्भवनात्, उक्तं च—"अंबत्तणेण जीहाएँ, कूचिया होइ खीरमुदगंमि । हंसो मुत्तूण जलं आवियइ पयं तह सुसीसो ॥१॥ (वि.१४६७) मोत्तूण दढं दोसे गुरुणोऽणुवउत्तभासि याईए । गेण्हइ गुणे य जो सो जोग्गो समयत्थसारस्स ॥ २ ॥ (नन्दीटी.)" इदानीं महिषदृष्टान्तभावना—यथा महिषो निपानस्थान-

शिष्यपरीक्षायां शैलादिदृष्टान्ताः

मवासः सन् उदकमध्ये तदुदकं मुहुर्मुहुः शृङ्गाभ्यां ताडयन्नवगाहमानश्च सकलमपि कलुषीकरोति, ततो न स्वयं पातुं शक्नोति, नापि यूथं, तद्वच्छिष्योऽपि यो व्याख्यानप्रबन्धावसरेऽकाण्ड एव क्षुद्रपृच्छाभिः कलहविकथादिभिर्वा आ-त्मनः परेषां चानुयोगश्रवणविघातमाधत्ते स महिषसमानः, स चैकान्तेनायोग्यः, उक्तं च—"सयमवि न पियइ महिसो न य जूहं पिवइ लोलियं उदयं। विग्गहविकहाहिं तहा अथक्कपुच्छाहि य कुसीसो ॥ १ ॥"(वि.१४६८) मेषोदाहरणभावना—यथा मेषो वदनस्य तनुत्वात् स्वयं च निभृतात्मा गोष्पदमात्रस्थितमपि जलमकलुषीकुर्वन् पिवति तथा यः शिष्योऽपि पद-मात्रमपि विनयपुरःसरमाचार्यचित्तं प्रसादयन् पृच्छति स मेषसमानः, स चैकान्तेन योग्यः। मसकदृष्टान्तभावना—यः शिष्यो मसक इव जात्यादिकमुद्घट्टयन् गुरोर्मनसि व्यथामुत्पादयति स मसकसमानः, स चायोग्यः। जलौकादृ-ष्टान्तभावना—यथा जलौकाः शरीरमदुन्वती रुधिरमाकर्षति तथा शिष्योऽपि योऽदुन्वन् श्रुतज्ञानमापिवति स जलूका-समानः, उक्तं च—"जलुगा व तम(अ)दूमिंतो, पियइ सुसीसोऽवि सुयनाणं।"(वि.१४७०) विडालीदृष्टान्तभावना—यथा विडाली भाजनसंस्थं क्षीरं भूमौ विनिपात्य पिवति, तथा दुष्टस्वभावत्वात्, शिष्योऽपि यो विनयकरणादिभीततया न साक्षाद् गुरुसमीपे गत्वा शृणोति, किन्तु व्याख्यानादुत्थितेभ्यः केभ्यश्चित् स विडालीसमानः, स चायोग्यः। तथा जाहकः—तिर्यग्विशेषस्तदुदाहरणभावना—यथा जाहकः स्तोकं स्तोकं क्षीरं पीत्वा पार्श्वाणि लेढि, तथा शिष्योऽपि पूर्वगृहीतं सूत्र-मर्थं वा अतिपरिचितं कृत्वा अन्यत्पृच्छति स जाहकसमानः, स च योग्यः। सम्प्रति गोदृष्टान्तभावना—यथा केनापि कौटुम्बिकेन कस्मिंश्चित्पर्वणि चतुर्भ्यश्चतुर्वेदपारगामिभ्यो विप्रेभ्यो गौर्दत्ता, ततस्ते परस्परं चिन्तयामासुः—यथा इयमेका

गौश्चतुर्णामस्माकं, ततः कथं कर्त्तव्या ?, तत्रैकेनोक्तं–परिपाट्या दुह्यतामिति, तच्च समीचीनं प्रतिभातमिति सर्वैः प्रतिपन्नं, ततो यस्य प्रथमदिवसे गौरागता तेन चिन्तितं–यथाऽहमद्यैव धोक्ष्यामि, कल्ये पुनरन्यो धोक्ष्यति, ततः किं निरर्थिकाम-स्याश्चारिं वहामि ?, ततो न किञ्चिदपि तस्यै तेन दत्तं, एवं शेषैरपि, ततः सा श्वपाककुलनिपतितेव तृणसलिलादिविरहिता गतासुरभूत्, ततः समुत्थितस्तेषां धिग्जातीयानामवर्णवादो लोके, शेषगोदानादिलाभव्यवच्छेदश्च, एवं शिष्या अपि ये चिन्तयन्ति–न खलु केवलानामस्माकमाचार्यो व्याख्यानयति, किन्तु प्रतीच्छकानामपि, ततस्त एव विनयादिकं करिष्यन्ति, किमस्माकमिति, प्रतीच्छका अप्येवं चिन्तयन्ति–निजशिष्याः सर्वं करिष्यन्ति, किमस्माकं कियत्कालावस्थायिनामिति ?, ततस्तेषामेवं चिन्तयतामपान्तराल एवाचार्यो विषीदति, लोके च तेषामवर्णवादो जायते, अन्यत्रापि च गच्छान्तरे दुर्लभौ तेषां सूत्रार्थौ, ततस्ते गोप्रतिग्राहकचतुर्द्विजातय इवायोग्या द्रष्टव्याः, उक्तं च–"अन्नो दुज्झिहि कल्लं निरत्थयं से वहामि किं चारिं ? । चउचरणगवी उ मया अवन्नहाणी उ वडुयाणं ॥ १ ॥(वि.१४७३) सीसा पडिच्छगाणं भरोत्ति तेऽविय हु सीसगभरोत्ति । न करेंति सुत्तहाणी अन्नत्थवि दुल्लहं तेसिं ॥२॥"(वि.१४७५) एष एव गोदृष्टान्तः प्रतिपक्षेऽपि योजनीयः, यथा कश्चित्कौटुम्बिको धर्मश्रद्धया चतुर्भ्यः चतुर्वेदपारगामिभ्यो गां दत्तवान्, तेऽपि च पूर्ववत्परिपाट्या दोग्धुमारब्धाः, तत्र यस्य प्रथमदिवसे सा गौरागता स चिन्तितवान्–यद्यहमस्याश्चारिं न दास्यामि ततः क्षुधा धातुक्षयादेषा प्राणानपहास्यति, ततो मे लोकेषु गोहत्यावर्णवादो भविष्यति, पुनरपि चास्मभ्यं न कोऽपि गवादिकं दास्यति, अपिच–यदि मदीयचा-रिचरणेन पुष्टा सती शेषैरपि ब्राह्मणैर्धोक्ष्यते ततो मे महान् अनुग्रहो भविष्यति, अहमपिच परिपाट्या पुनरप्येनां

धोक्ष्यामि, ततोऽवश्यमस्यै दातव्या चारिरिति ददौ चारिम्, एवं शेषा अपि ददुः, ततः सर्वेऽपि चिरकालं दुग्धाभ्यवहारभाजिनो जाताः, लोके च समुच्छलितः साधुवादः, लभन्ते च प्रभूतमन्यदपि गवादिकं, एवं येऽपि विनेयाश्चिन्तयन्ति—यदि वयमाचार्यस्य न किमपि विनयादिकं विधातारस्तत एषोऽवसीदन्नवश्यमपगतासुर्भविष्यति, लोके च कुशिष्या इमे इत्यवर्णवादः, ततो गच्छान्तरेऽपि न वयमवकाशं लप्स्यामहे, अपिच—अस्माकमेष प्रव्रज्याशिक्षाव्रतारोपणादिकरणतो महोपकारी, सम्प्रति च जगति दुर्लभं श्रुतरत्नमुपयच्छन् वर्त्तते, ततोऽवश्यमेतस्य विनयादिकमस्माभिः करणीयम्, अन्यच्च—यद्यस्मदीयविनयादिसाहायकबलेन प्रतीच्छकानामप्याचार्यत उपकारः किमस्माभिर्न लब्धं ?, द्विगुणतरपुण्यलाभस्यास्माकं भावात्, प्रातीच्छिका अपि ये चिन्तयन्ति—अनुपकृतोपकारी भगवानाचार्योऽस्माकं, को नामान्यो महान्तमेवं व्याख्याप्रयासमस्मन्निमित्तं विदधाति ?, ततः किमेतेषां वयं प्रत्युपकर्त्तुं शक्ताः ?, तथापि यत्कुर्म्मः सोऽस्माकं महान् लाभ इति परस्परनिरपेक्षं विनयादिकमादधते, तेषां नावसीदत्याचार्योऽव्यवच्छिन्ना च सूत्रार्थप्रवृत्तिः समुच्छलति च ततः सर्वत्र साधुवादः गच्छान्तरे च तेषां सुलभं श्रुतज्ञानं परलोके च सुगत्यादिलाभः । भेर्युदाहरणं प्राग्वत् । सम्प्रत्याभीरीदृष्टान्तभावना, कश्चिदाभीरो निजभार्यया सह विक्रयाय घृतं गन्त्र्या गृहीत्वा पत्तनमवतीर्णः, चतुष्पथे च समागत्य वणिगापणेषु पणायितुं प्रवृत्तो, घटितश्च पणायाः सङ्कटः, ततः समारब्धे घृतमापे गन्त्र्या अधस्तादवस्थिता आभीरी घृतं भर्त्रा वारकेण समर्प्यमाणं प्रतीच्छति, ततः कथमप्यर्प्पणे ग्रहणे वाऽनुपयोगतोऽपान्तराले एव एको लघुघटरूपो वारको भूमौ निपत्य खण्डशो भग्नः, ततो घृतहानिदूनमनाः पतिरुल्लपितुं खरपरुषवाक्यानि प्रावर्त्तत—यथा हा पापीयसि !;

दुःशीले! कामविडम्बितमानसा तरुणिमाभिरमणीयं पुरुषान्तरमवलोकसे, न सम्यग्वारकमभिगृह्णासि, ततः सा खरपरुषवाक्यश्रवणतः समुद्भूतकोपावेशवशोच्छलितकम्पकम्पितपीनपयोधरा स्फुरदधरबिम्बोष्ठी दूरोत्पाटितभ्रूरेखाधनुरवष्टम्भतो नाराचश्रेणिमिव कृष्णकटाक्षसन्ततिमविरतं प्रतिक्षिपन्ती प्रत्युवाच—हा ग्रामेयकाधम! घृतघटमप्यवगणय्य विदग्धमत्तकामिनीनां मुखारविन्दान्यवलोकसे, न चैतावता अवतिष्ठसे, ततः खरपरुषवाक्यैर्मामप्यधिक्षिपसि, ततः स एवं प्रत्युक्तोऽतीव ज्वलितकोपानलो यत्किमप्यसम्बद्धं भाषितुं लग्नः, साऽप्येवं, ततः समभूत्तयोः केशाकेशि, ततो विसंस्थुलपादादिन्यासतः सकलमपि प्रायो गन्त्रीघृतं भूमौ निपतितं, तच्च किञ्चिच्छोषमुपगतं अवशेषं चावलीढं श्वभिः, गन्त्रीघृतमपि शेषीभूतमपहृतं पश्यतोहरैः, सार्थिका अपि स्वं स्वं घृतं विक्रीय स्वग्राममगमनं प्रपन्नाः, ततः प्रभूतदिवसभागातिक्रमेणापसृते युद्धे स्वास्थ्ये च लब्धे यत्किञ्चित् प्रथमतो विक्रीणयामास घृतं तद्द्रव्यमादाय तयोः स्वग्रामं गच्छतोः अपान्तरालेऽस्तं गते सहस्रभानौ सर्वतः प्रसरमभिगृह्णति तमोविताने परास्कन्दिनः समागत्य वासांसि द्रव्यं बलीवर्दौ चापहृतवन्तः, तत एवं तौ महतो दुःखस्य भाजनमजायेतां, एष दृष्टान्तोः, अयमर्थोपनयः—यो विनेयोऽन्यथा प्ररूपयन्नधीयानो वा खरपरुषवाक्यैराचार्येण शिक्षितोऽधिक्षेपपुरःसरं प्रतिवदति—यथा त्वयैवेत्थमहं शिक्षितः, किमिदानीं निन्हुषे? इत्यादि, स न केवलमात्मानं संसारे पातयति, किन्त्वाचार्यमपि खरपरुषप्रत्युच्चारणादिना तीव्रतीव्रतरकोपानलज्वालनात्, भवन्ति च कुविनेया मृदोरपि गुरोः खरपुरुषप्रत्युच्चारणादिना कोपप्रकोपकाः, उक्तं चोत्तराध्ययनेषु—'अणासवा थूलवया कुसीला, मिउंपि चंडं पकरिंति सीसा' इति, अपिच—गुरवो गुणगुरवः, ततस्ते यदि कथमपि दुष्टशैक्षशिक्षापनेन कोपमुपागमंस्त-

थापि तेषां भगवदाज्ञावर्त्तित्वादल्पपापभाजां मिथ्यादुष्कृतादिमात्रेणापि विशुद्धिरुपजायते, शिष्यस्तु भगवदाज्ञाविलोपतो गुर्वाशातनायाश्चोपचिताशुभगुरुकर्मा दीर्घतरसंसारभागी, किञ्च-एवं स वर्त्तमानो मतिमानपि श्रुतरत्नाद्बहिर्भवति, अन्यत्रापि तस्य दुर्लभश्रुतत्वात्, को हि नाम सचेतनो दीर्घतरजीविताभिलाषी सर्पमुखे स्वहस्तेन पयोबिन्दून् प्रक्षिपतीति, स एकान्तेनायोग्यः। प्रतिपक्षभावनायामपीदमेव कथानकं परिभावनीयम्, केवलमिह घृतघटे भग्ने सति द्वावपि तौ दम्पती त्वरितत्वरितं कर्प्परैर्यथाशक्ति घृतं गृहीतवन्तौ, स्तोकमेव विननाश, निन्दति चात्मानमाभीरो यथा-हा न मया घृतघटस्ते सम्यक् समर्प्पितः, आभीर्यपि वदति-समर्प्पितस्त्वया सम्यक् न मया सम्यक् गृहीतः, तत एवं तयोर्न कोपावेशदुःखं नापि घृतहानिः नापि सकाल एवान्यसार्थिकैः सह स्वग्राममभिसर्प्पतामपान्तराले तस्करावस्कन्दः, ततस्तौ सुखभाजनं जातौ, एवमिहापि कथञ्चिदनुपयोगादिनाऽन्यथारूपे व्याख्याने कृते सति पश्चादनुस्मृतयथावस्थितव्याख्यानेन सूरिणा शिष्यं पूर्वमुक्तं व्याख्यानं चिन्तयन्तं प्रति एवं वक्तव्यम्-वत्स! मैवं व्याख्यः, मया तदानीमनुपयुक्तेन व्याख्यातं, तत एवं व्याख्याहि, तत एवमुक्ते सति यो विनेयः कुलीनो विनीतात्मा स एवं प्रतिवदति-यथा भगवन्तः किमन्यथा प्ररूपयन्ति?, केवलमहं मतिदौर्बल्यादन्यथाऽवगतवानिति, स एकान्तेन योग्यः॥ तदेवमाचार्यशिष्यदोषगुणकथनलक्षणो व्याख्यानविधिः प्रतिपादितः, सम्प्रति कृतमङ्गलोपचारो व्यावर्णितप्रसङ्गविस्तरः प्रदर्शितव्याख्यानविधिरुपोद्घातं प्रतिपादयति—

उद्देसे १ निद्देसे २ य निग्गमे ३ खेत्त ४ काल ५ पुरिसे ६ य।
कारण ७ पच्चय ८ लक्खण ९ नए १० समोयारणा ११ णुमए १२ ॥ १३७ ॥

कइ २०.संतर २१ मविरहियं २२ भवा २३ गरिस २४ फासण २५ निरुत्ती २६ ॥ १३८ ॥
किं १३ कइविहं १४ कस्स १५ कहिं १६ केसु १७ कहं १८ केच्चिरं हवइ कालं १९।

उद्देशो वक्तव्यः, एवं सर्वत्र क्रिया योजनीया, उद्देशनमुद्देशः, सामान्याभिधानमित्यर्थः, यथाऽध्ययनमिति, तथा निर्देशनं निर्देशः, विशेषाभिधानमिति भावो, यथा सामायिकमिति, तथा निर्गमनं निर्गमो वक्तव्यो, यथा कुतोऽस्य सामायिकाध्ययनस्य निर्गमनमिति, तथा क्षेत्रं वक्तव्यं, कस्मिन् क्षेत्रे इदं प्रादुरभूत, कालो वक्तव्यो, यथा कस्मिन् काले इति, तथा पुरुषो वक्तव्यो, यथा कुतः पुरुषादिदं प्रवृत्तमिति, तथा कारणं वक्तव्यं—किं कारणं गौतमादयः शृण्वन्ति ?, तथा प्रत्यायतीति प्रत्ययः, अन्तर्भूतण्यर्थादल्प्रत्ययः, प्रत्ययो वक्तव्यो, यथा केन प्रत्ययेन भगवतेदमुपदिष्टं ?, को वा गणधराणां श्रवणे प्रत्ययः ? इति, तथा लक्षणं वक्तव्यं श्रद्धानादि, तथा नया—नैगमादयो वक्तव्याः, तथा तेषामेव नयानां समवतरणं वक्तव्यं, यथा क्व नयाः समवतरन्तीति, तथा च वक्ष्यति—'मूढनइयं सुयं कालियं तु न नया समोयरंति इहं' इत्यादि, तथाऽनुमतमिति कस्य व्यवहारादेः किमनुमतं सामायिकमिति वक्तव्यं, तथा च 'तवसंजमो अणुमतो' इत्यादि, तथा किं सामायिकमिति वक्तव्यं, वक्ष्यति च—'जीवो गुणपडिवन्नो' इत्यादि च, तथा कतिविधं सामायिकं इति वाच्यं, तथा चात्र वक्ष्यति—'सामाइयं च तिविहं सम्मत्त सुयं तहा चरित्तं चे'त्यादि, तथा कस्य सामायिकमिति वक्तव्यं, तथा च वक्ष्यति—'जस्स सामाणितो अप्पा, संजमे नियमे तवे' इत्यादि, तथा क्व क्षेत्रादौ सामायिकमित्यभिधेयं, तथा च वक्ष्यति—'खित्तदिसकालगइभवि' इत्यादि, तथा केसु सामायिकमिति वाच्यं, तत्र सर्वत्र द्रव्येषु, वक्ष्यति-

'सव्वगयं सम्मत्तं सुए चरित्ते य पज्जवा सव्वे' इत्यादिना, तथा कथं-केन प्रकारेण सामायिकमवाप्यते इति वाच्यं, तत्र वक्ष्यति-'माणुस्सखेत्तजाई' इत्यादि, तथा कियच्चिरं कालं यावद् भवति सामायिकमिति वक्तव्यं, तत्र वक्ष्यति-'सम्मत्तस्स सुयस्स य छावट्ठी सागरोवमाइ ठिई' इत्यादि, तथा कतीति कियन्तः प्रतिपद्यमानकाः कियन्तो वा पूर्वप्रतिपन्ना इति वक्तव्यं, तथा च वक्ष्यति—'सम्मत्तदेसविरया पलियस्स असंखभागमित्ता उ' इत्यादि, 'संतर'न्ति सहान्तरेण वर्त्तते इति सान्तरं वक्तव्यं, किमुक्तं भवति ?-किं सामायिकं सान्तरं निरन्तरं वा ?, यदि सान्तरं ततः किंप्रमाणमन्तरमिति वक्तव्यं, वक्ष्यति च-'कालमणंतं च सुए, अद्धापरियट्टओ य देसूणो' इत्यादि, 'अविरहित'मिति अविरहितं कियन्तं कालं प्रतिपद्यन्ते इति वक्तव्यं, तत्र वक्ष्यति—'सुयसम्मअगारीणं आवलियासंखभागमेत्ता उ' इत्यादि, तथा भवा इति कियतो भवान् यावत् खल्ववाप्यते सामायिकमिति प्रतिपाद्यं, तत्र वक्ष्यति—'सम्मत्तदेसविरया, पलियस्सासंखभागमेत्ताओ । अट्ठभवा उ चरित्ते' इत्यादि, आकर्षणमाकर्षः, ग्रहणमिति भावः, तत्र कियन्त आकर्षा एकस्मिन् भवे ?, कियन्तो वाऽनेकभवेष्विति वक्तव्यं, तत्र वक्ष्यति—'तिण्ह सहस्सपुहुत्तं सयप्पुहुत्तं च होइ विरईए । एगभवे आगरिसा' इत्यादि, तथा स्पर्शना वक्तव्या, यथा कियत् क्षेत्रं सामायिकवन्तः स्पृशन्तीति, तत्र वक्ष्यति-'सम्मत्तचरणसहिया सव्वं लोगं फुसे निरवसेसं' इत्यादि, तथा निश्चिता उक्तिर्निरुक्तिः वक्तव्या, सा च-'सम्मद्दिट्ठी अमोहो सोही सब्भावदंसणा बोही' इत्यादिना वक्ष्यते, एषद्वारगाथाद्वयसमासार्थः ॥ अवयवार्थं तु प्रतिद्वारं प्रपञ्चेन निर्युक्तिकृदेव वक्ष्यति, अत्र कश्चिदाह—ननु प्रथममध्ययनं सामायिकं तस्यानुयोगद्वारचतुष्टयमिति प्रतिपादयता उद्देशनिर्देशावुक्तावेव, तथा ओघनि

ष्पन्ननिक्षेपेऽध्ययनमिति निक्षिप्तं, नामनिष्पन्ननिक्षेपे सामायिकमिति, तत एवमपि तावभिहितावेव, किमर्थमनयोः पुनरभिधानमिति ?, उच्यते, एतद्द्वारद्वयोक्तयोरेव प्रागनागतग्रहणं कृतं द्रष्टव्यं, तद्ग्रहणमन्तरेण द्वारचतुष्टयाद्युपन्यासस्यैवासम्भवाद्, विषयाभावात्, अथवा प्रागभिधानमात्रमुक्तमिह त्वर्थानुगमद्वाराधिकारे विधानतो लक्षणतश्च व्याख्या क्रियते इत्यदोषः। आह—यद्येवं निर्गमो न वक्तव्यः, तस्यानुगमद्वार एव प्रतिपादितत्वात्, तथाहि—आत्मागम इति प्रागभिहितं, ततस्तीर्थकरगणधरेभ्यो निर्गतमित्यवगतमेव, सत्यमेतत्, केवलमिह तीर्थकरगणधराणामेव निर्गमोऽभिधीयते, यथा कोऽसौ तीर्थकरः ? के वा गणधरा ? इति, तत्र वक्ष्यते—भगवान् वर्द्धमानस्वामी तीर्थकरो, गौतमादयो गणधराः, यथा चैतेभ्यो विनिर्गतं तथा क्षेत्रकालपुरुषकारणप्रत्ययविशिष्टं वक्ष्यते इति फलवान् निर्गमादिद्वारकलापोपन्यासः। आह—यद्येवं लक्षणं न वक्तव्यं, यत उपक्रमद्वार एव नामद्वारे क्षायोपशमिके भावेऽवतारितं, प्रमाणद्वारे च जीवगुणप्रमाणे आगमे इति, सत्यमेतत्, केवलं तत्र निर्देशमात्रं कृतमिह तु प्रपञ्चेन व्याख्यानमित्यदोषः, अथवा तत्र श्रुतसामायिकस्यैव लक्षणमुक्तम्, इह चतुर्णामपि सामायिकानां लक्षणाभिधानमिति महान् विशेषः। अथ नयाः प्रमाणद्वार एवाभिहिताः स्वस्थाने च मूलद्वारे वक्ष्यमाणास्ततः किमिहोच्यन्ते ?, उच्यते, इह प्रमाणद्वारोक्ता एव व्याख्यायन्ते, यदिवा प्रमाणद्वाराधिकारात् तत्र प्रमाणभावमात्रमभिहितमिह तु स्वरूपावधारणमवतारो वा चिन्त्यते इत्यदोषः, एते च सर्वे एव सामायिकसमुदायार्थमात्रविषयाः, न सूत्रविनियोगिनः, मूलद्वारोपन्यस्तास्तु नयास्तत्र व्याख्यानोपयोगिन एवेति मूलद्वारवक्ष्यमाणेभ्यो भेदः। ननु प्रमाणद्वारे जीवगुणः सामायिकं ज्ञानं चेति प्रतिपादितं ततः 'किं सामायिक'-

मित्याशङ्कायां अनुपपत्तिः, सत्यमेतत्, केवलं जीवगुणत्वे ज्ञानत्वे च सत्यपि किं तज्जीव एव आहोस्विज्जीवादन्यदिति संशयस्तदपनोदार्थं इहोपन्यास इत्यदोषः। आह-नामद्वारे क्षायोपशमिकं सामायिकमुक्तं, ततस्तदावरणक्षयोपशमादवाप्यते इति गम्यत एवं, ततः किमर्थं 'कथं लभ्यते' इति द्वारमुपन्यस्तम्?, उच्यते, स एव क्षयोपशमः कथमवाप्यते इति क्षयोपशमगतशेषाङ्गलाभचिन्तनाददोषः, एवं यत् यदुपक्रमनिक्षेपद्वारद्वयाभिहितमपि पुनरभिधत्ते तत्तदनुगमद्वारावसरात् प्रपञ्चव्याख्यार्थमिति परिभावनीयम्। अपरस्त्वाह-ननूपक्रमः प्रायः शास्त्रसमुत्थापनार्थ उक्त उपोद्घातोऽप्येष शास्त्रसमुद्घातप्रयोजन एवेति कोऽनयोर्भेदः?, उच्यते, उपक्रमो ह्युद्देशमात्रनियतव्यापार उपोद्घातस्तु प्रायेण तदुद्दिष्टवस्तुप्रबोधनफलः, अर्थानुगमत्वात् इत्यलं विस्तरेण, प्रकृतं प्रस्तुमः ॥ तत्रोद्देशद्वारावयवार्थप्रतिपादनार्थमाह—

नामं ठवणा दविए खित्ते काले समासउद्देसे। उद्देसुद्देसम्मि य भावम्मि य होइ अट्ठमओ ॥ १३९ ॥

यस्य जीवादेरुद्देश इति नाम क्रियते स नाम्ना उद्देशो नामोद्देशो, यदिवा नामनामवतोरभेदोपचारात् नाम चासौ उद्देशश्च नामोद्देशः, अथवा नाम्ना उद्दिश्यते-अभिधीयते इति नामोद्देशः, यदिवा नाम्न उद्देशः-अभिधानं नामोद्देशः, तथा उद्देशः स्थाप्यमानः स्थापनोद्देशः, स्थापनाया वा उद्देशः-अभिधानं स्थापनोद्देशः, 'दविए' इति द्रव्यविषय उद्देशः द्रव्योद्देशः, स च द्विधा-आगमतो नोआगमतश्च, तत्र आगमतो ज्ञाताऽनुपयुक्तः, नोआगमतो ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदात् त्रिधा, तत्र ज्ञशरीरभव्यशरीरे प्रतीते, तद्व्यतिरिक्तस्त्रिविधस्तद्यथा—द्रव्यस्य द्रव्येण द्रव्ये वा उद्देशो द्रव्योद्देशः, तत्र द्रव्यस्योद्देशो यथा द्रव्यमिदमिति, द्रव्येण हेतुभूतेनोद्देशो यथा द्रव्यपतिरयमिति, तथा द्रव्ये उद्देशो यथा वर्त्तते राजा

सम्प्रति सिंहासने, चूते कोकिलो वने मयूर इत्यादि, एवं क्षेत्रस्य क्षेत्रेण क्षेत्रे वा उद्देशः क्षेत्रोद्देशो वक्तव्यः, तत्र क्षेत्रस्योद्देशो यथा इदं क्षेत्रमिति, क्षेत्रेणोद्देशो यथा क्षेत्री क्षेत्रपतिः, क्षेत्रे उद्देशो यथा क्षेत्रे जातं क्षेत्रजमित्यादि, तथा कालस्य कालेन काले वा उद्देशः कालोद्देशः, तत्र कालस्योद्देशो यथा अयं काल इति, कालेनोद्देशो यथा इदं कालातिक्रान्तम्, अथवा इदं कालप्राप्तमिति, काले उद्देशो यथा काले जातं काले आगतमित्यादि, समासः—सङ्क्षेपः तद्विषय उद्देशः समासोद्देशः, स च त्रिविधः-अङ्गश्रुतस्कन्धाध्ययनभेदात्, तद्यथा—अङ्गसमासोद्देशः श्रुतस्कन्धसमासोद्देशः अध्ययनसमासोद्देशश्च, तत्राङ्गसमासोद्देशो द्विधा-अङ्गसमासस्योद्देशो अङ्गसमासेन वोद्देशः, तत्राङ्गसमासस्योद्देशो यथा इदमङ्गमिति, अङ्गसमासेनोद्देशो यथा तदध्येता तदर्थज्ञो वा अङ्गीति, एवं श्रुतस्कन्धाध्ययनसमासोद्देशावपि वक्तव्यौ, तत्र श्रुतस्कन्धस्योद्देशो यथा अयं श्रुतस्कन्ध इति, श्रुतस्कन्धेन समासोद्देशो यथा अयं तदध्ययनात् तदर्थवेदनाच्च श्रुतस्कन्धीति, एवमध्ययनसमासोद्देशोऽप्युदाहर्त्तव्यः, तथा उद्देशः-अध्ययनविशेषः तस्योद्देश उद्देशोद्देशः, यथा अयमुद्देश इति, उद्देशेन वा उद्देश उद्देशोद्देशः, यथा उद्देशाध्ययनादुद्देशार्थपरिज्ञानाद्वाऽयमुद्देशवानिति, तथा भावे-भावविषयश्च भवत्युद्देशोऽष्टमकः, एषोऽपि द्विधा-भावस्योद्देशो यथा अयं भाव इति, भावेनोद्देशो यथा भावीत्यादि ॥ अथोद्देशव्याख्यानेन निर्देशमप्यतिदिशन्नाह—

एमेव य निद्देसो अट्ठविहो सोऽवि होइ नायव्वो । अविसेसियमुद्देसो विसेसिओ होइ निद्देसो ॥ १४० ॥

यथा अष्टविध उद्देश उक्तः एवमेव-तथा निर्देशोऽपि स द्वारगाथासूचितोऽष्टविधो भवति ज्ञातव्यः, सर्वथा साम्यप्रतिषेधार्थमाह-किन्तु अविशेषितः सामान्यनामस्थापनादिविषय उद्देशो, विशेषितः नामस्थापनादिगोचरस्तु भवति निर्देश

उद्देशे भेदाः (८) निर्देशोऽपि गा. १३९-४०

इति विशेषः, तत्र नामनिर्देशो यस्य निर्देश इति नाम क्रियते, नाम्नो वा निर्देशो यथाऽयं जिनभद्र इत्याद्याभिधान-विशेषभणनं, निर्देशः स्थाप्यमानः स्थापनानिर्देशः, स्थापनाया विशेषाभिधानं वा स्थापनानिर्देशो, यथेयं कामदेवस्य स्थापनेति, यत्तु सामान्येन देवताया इयं स्थापनेत्यभिधानं स स्थापनोद्देश इति, द्रव्यस्यापि त्रिविधस्य सचित्तादेर्यद्विशिष्टमभिधानं स द्रव्यनिर्देशः, तत्र सचित्तद्रव्यविशेषस्य निर्देशो यथा गौरित्यादि, अचित्तद्रव्यविशेषस्य यथा अयं दण्ड इत्यादि, मिश्रद्रव्यविशेषस्य यथाऽयं रथोऽश्वयुक्त इत्यादि, तेन सचित्तादिद्रव्यविशेषेण निर्देशो यथा गोमानित्यादि, क्षेत्रस्य निर्देशो यथा इदं भरतक्षेत्रम्, अयं मगधाजनपद इत्यादि, क्षेत्रेण निर्देशो यथाऽयं भारतः मागधः सौराष्ट्रक इत्यादि, कालस्य निर्देशो यथा अयं हेमन्तोऽयं वसन्त इत्यादि, कालेन निर्देशो यथाऽयं शारदः सांवत्सरिकः प्रावृषेण्य इत्यादि, समासनिर्देशोऽङ्गश्रुतस्कन्धाध्ययनविषयभेदात् त्रिधा, तत्राङ्गरूपसमासस्य निर्देशोऽयमाचारः इदं सूत्रकृताङ्गमित्यादि, अङ्गसमासेन निर्देशो यथा तदध्ययनात् तदर्थवेदनाद्वा अयमाचारवानाचारधर इत्यादि, श्रुतस्कन्धसमासस्य निर्देशो यथाऽयमावश्यकश्रुतस्कन्धः, श्रुतस्कन्धसमासेन निर्देशो यथाऽयमावश्यकसूत्रार्थधर इति, अध्ययनसमासस्य निर्देशो यथा–इदं सामायिकाध्यनमाचाराङ्गे प्रथममध्ययनं शस्त्रपरिज्ञा इत्यादि, अध्ययनसमासेन निर्देशो यथाऽयं सामायिकसूत्रार्थधर इत्यादि, उद्देशस्य निर्देशो यथा भगवत्यां पुद्गलोद्देशक इत्यादि, उद्देशेन निर्देशो यथाऽयं प्रथमोद्देशकसूत्रार्थधरो द्वितीयोद्देशकसूत्रार्थधर इति, भावस्य निर्देशो–भावव्यक्त्यभिधानं, यथाऽयमौदयिको भाव इति, भावेन निर्देशो यथाऽयमौदयिकभाववान् क्रोधी मानीत्यादि, इह तु समासोद्देशनिर्दे-

शाभ्यामयमधिकारः, तथाहि–अध्ययनमिति समासोद्देशः, सामायिकमिति समासनिर्देश इति ॥ इदं च सामायिकं नपुंसकं, सावद्ययोगविरमणस्य नपुंसकतया रूढत्वात्, अस्य च निर्देष्टा–उच्चारयितेति भावः त्रिविधस्तद्यथा–स्त्री पुमान् नपुंसकं च, तत्र को नयो नैगमादिः कं निर्देशमिच्छतीति प्रतिपिपादयिषुराह—

दुविहंपि नेगमनओ निद्दिट्ठं संगहो य ववहारो । निद्देसयमुज्जुसुओ उभयसरिच्छं च सद्दस्स ॥ १४१ ॥

द्विविधमपि—निर्देश्यवशान्निर्देशकवशाच्च द्विप्रकारमपि नैगमनयो निर्देशमिच्छति, नैगमो ह्यनेकगमो लोकसंव्यवहारप्रवणश्च, लोके च निर्देश्यवशान्निर्देशकवशाच्च निर्देशप्रवृत्तिरुपलब्धा, तत्र निर्देश्यवशाद्यथा—वासवदत्ता प्रियदर्शना इत्यादि, निर्देशकवशाद्यथा– मनुना प्रोक्तो मनुः अक्षपादप्रोक्तोऽक्षपाद इत्यादि, लोकोत्तरेऽपि निर्देश्यवशाद् यथा षड्जीवनिका, तत्र हि षट् जीवनिकाया निर्देश्याः, एवमाचारक्रियाभिधानादाचारः तरङ्गवतीवक्तव्यताभिधानात्तरङ्गवतीत्यादि, निर्देशकवशाज्जिनवचनं कापिलीयं नन्दसहितेत्येवमादि, एवं सावद्ययोगविरमणरूपं सामायिकं रूढितो नपुंसकमिति निर्देश्यवशान्नैगमो नपुंसकनिर्देशमेवास्य मन्यते, यथा सामायिकं नपुंसकमिति, तथा सामायिकनिर्देष्टुः स्त्रीपुन्नपुंसकलिङ्गत्वात् तत्परिणामानन्यत्वाच्च सामायिकस्यार्थरूपस्य त्रिलिङ्गताऽप्येतन्मतेनाविरुद्धा, यथा सामायिकं स्त्री सामायिकं पुरुषः सामायिकं नपुंसकमिति, उक्तं च–"तह निद्दिट्ठवसाओ नपुंसकं नेगमस्स सामइयं । थीपुंनपुंसगं वा तं चिय निद्देसगवसातो ॥१॥" (वि. १५०९) अन्यच्च–एष नैगमनय एवमभिधत्ते–यदि स्त्री स्त्रियमभिधत्ते तदा निर्देश्यस्य निर्देशकस्य च स्त्रीत्वान्निर्देशः स्त्रीलिङ्ग एव, अथ स्त्री पुरुषं निर्दिशति तदा यथाविवक्षितं निर्देशः, तथाहि–देवदत्तेन घटशब्दे

उच्चारिते निर्देशस्याभिधेयानन्यत्वविवक्षायामयं घट इति व्यपदेशः प्रवर्त्तते, निर्देशकानन्यत्वविवक्षायामयं देवदत्त इति, तथा च देवदत्ते कथञ्चित्पथः परिभ्रष्टे इतस्ततो निभाल्यमाने तच्छब्दं श्रुत्वा लोको वदति–अयं देवदत्त इति, अभिधेयानन्यत्वविवक्षायां पुरुषनिर्देशः, निर्देशकानन्यत्वविवक्षायां स्त्रीनिर्देशः, अथ स्त्री नपुंसकं निर्दिशति तदाऽत्रापि यथाविवक्षितं निर्देश इति नपुंसकनिर्देशः स्त्रीनिर्देशो वा, एवं पुरुषे नपुंसके च निर्देष्टरि भावनीयम्, आह च चूर्णिकृत्—"इत्थी इत्थिं निद्दिसइ इत्थिनिद्देसो, इत्थी पुरिसं निद्दिसइ इत्थिनिद्देसो य पुरिसनिद्देसो य, इत्थी नपुंसगं निद्दिसइ इत्थिनिद्देसो अ नपुंसगनिद्देसो अ, एवमेव पुरिसनपुंसगाणंपि संजोगो" इति, एवमिहापि निर्देष्टुः त्रिलिङ्गस्यापि सम्भवादनन्यत्वविवक्षायां त्रिलिङ्गताऽपि सामायिकस्य प्रतिपत्तव्येति, आह—द्विविधमपि नैगमनय इत्येतावत्युक्ते निर्देश्यवशान्निर्देशकवशाच्च द्विविधं निर्देशमिच्छतीति कुतोऽवसीयते ?, उच्यते, वक्ष्यति—'निद्दिट्ठं संगहो य ववहारो' इति, ततोऽर्थादत्रावसीयते निर्देश्यवशान्निर्देशकवशाच्च निर्देशस्य द्वैविध्यमिति, 'निद्दिट्ठं संगहो य ववहारो' इति निर्दिष्टं वस्त्वङ्गीकृत्य सङ्ग्रहो व्यवहारश्च, चशब्दस्य व्यवहितः सम्बन्धः, निर्देशमिच्छतीति वाक्यशेषः, इयमत्र भावना–इह वचनमर्थप्रकाशकमेवोपजायते, यथा प्रदीपः, ततो यथा प्रदीपः प्रकाश्यं प्रकाशयन्नेवात्मरूपं प्रतिपद्यमानः प्रकाश्यादात्मलाभं लभते इति व्यपदिश्यते, तथा वचनमप्यर्थं प्रतिपादयदेवात्मरूपं प्रतिपद्यमानमर्थादात्मलाभं लभते इति व्यवह्रियते, अर्थश्च सावद्ययोगविरमणरूपो नपुंसकतया प्रसिद्ध इति सामायिकस्य नपुंसकलिङ्गतामेव सङ्ग्रहव्यवहारावभ्युपगच्छतः, उक्तं च—"अत्थातोच्चिय वयणं लहइ सरूवं जहा पदीवोव। तो संगहववहारा भणंति निद्दिट्ठवसगं तं॥ १ ॥"( वि. १५११ )चूर्णिकारोऽप्याह–

"संगहववहारनयवत्तवया इत्थी इत्थिं निद्दिसइ इत्थिनिद्देसो, इत्थी पुरिसं निद्दिसइ पुरिसनिद्देसो, इत्थी नपुंसगं निद्दि-
सइ नपुंसगनिद्देसो, एवं पुरिसनपुंसगाणंपि भाणियव्वं," अथवा सामायिकं नाम सावद्ययोगविरमणरूपं, तच्च सामायिक-
वतां सत्त्वानां स्त्रीलिङ्गानां पुँल्लिङ्गानां नपुंसकलिङ्गानां च परिणामानन्यदिति तस्य स्त्र्यादिरूपतेति वाच्यवशेन त्रिलि-
ङ्गताऽपि सामायिकस्य सङ्ग्रहव्यवहारनयमतेन द्रष्टव्या, तथा 'निद्देसगमुज्जुसुतो' इति, निर्देशको–वक्ता तमङ्गीकृत्य
सामायिकनिर्देशमृजुसूत्रो मन्यते, तथाहि–स एवमभिधत्ते-वचनं वक्तुरधीनं, तद्भावभावित्वात्, ततो यदेव वक्तुर्लिङ्गं
तदेव वचनस्यापीति, यदा पुरुषो निर्देष्टा तदा सामायिकस्य पुँल्लिङ्गता यदा स्त्री तदा स्त्रीलिङ्गता, एवं नपुंसकेऽपि द्रष्ट-
व्यम्, उक्तं च–"उज्जुसुतो निद्देसगवसेण सामाइयं विणिद्दिसइ । वयणं वत्तुरहीण'मित्यादि, 'उभयसरिच्छं च
सद्दस्स ॥१॥"( वि. १५१५) इति, उभयमिह निर्देश्यं निर्देशकं च वस्त्वभिधीयते, 'सदृश'मिति समानलिङ्गम्, उभयं च तत्स-
दृशं च उभयसदृशं तदङ्गीकृत्य शब्दस्य निर्देशप्रवृत्तिरिति वाक्यशेषः, किमुक्तं भवति ?–निर्देश्यं निर्देशकं च वस्तु परस्परं
समानलिङ्गमेवाङ्गीकृत्य शब्दनयो निर्देशमभिमन्यते, नान्यथेति, इयमत्र भावना–उपयुक्तो हि निर्देश्यादभिन्न एव
भवति, तदुपयोगानन्यत्वात्, यथा अग्न्युपयोगादनन्यो माणवकोऽग्निः, ततो यदा पुमान् पुमांसमभिधत्ते तदा
पुंनिर्देश एव, एवं स्त्रियाः स्त्रियं प्रतिपादयन्त्याः स्त्रीनिर्देश एव, नपुंसकस्य नपुंसकमभिदधानस्य नपुंसकनिर्देश
एव, यदा तु पुमान् स्त्रियमभिधत्ते तदा स स्त्र्युपयोगानन्यत्वात् स्त्रीरूप एवेति निर्देश्यनिर्देशकयोः समानलिङ्गतैव,
एवं सर्वत्र संयोज्यम्, असमानलिङ्गनिर्देशस्त्ववस्त्वेव, यथा पुमान् नपुंसकं स्त्रियं चाहेति, कुत इति चेत्, उच्यते, इह

पुंसो नपुंसकं स्त्रियं वा प्रतिपादयतो नपुंसकोपयोगः स्त्र्युपयोगो वा ततो भिन्नो वा स्यादभिन्नो वा ?, यदि भिन्नस्तर्हि तस्यासाविति सम्बन्धानुपपत्तिः, तदनुपपत्तौ चोपयोगशून्यत्वात्पाषाणस्येव तस्य वचनप्रवृत्त्यसम्भवः, तथा च प्रत्यक्ष-विरोधः, अथाभिन्नः स तर्हि तदात्मक एव, तथाहि—यद्यस्मादभिन्नं तत्तन्मयमेव, यथा जीवश्चेतनामयः, पुमानपि च नपुंसकमभिदधानो नपुंसकोपयोगानन्यः, स्त्रियमभिदधानः स्त्र्युपयोगानन्य इति तन्मयः, ततः समानलिङ्गस्यैव निर्देशो न विसदृशलिङ्गस्य, उक्तं च—"सद्दो समाणलिंगं निद्देसं भणति विसरिसमवत्थुं। उवउत्तो निद्दिट्ठा निद्देसातो जतोऽनन्नो ॥१॥" ( वि. १५२३ ) एवमिहापि सामायिकस्यार्थरूपस्य रूढितो नपुंसकत्वात् स्त्रियाः पुरुषस्य नपुंसकस्य वा सामायिकं प्रति-पादयतस्तदुपयोगानन्यत्वान्नपुंसकरूपतैवेति सामायिकमिति नपुंसकनिर्देश एवेति गाथासङ्क्षेपार्थो, व्यासार्थस्तु भाष्या-दवसातव्यः, सर्वनयमतान्यपि चामूनि पृथक् पृथग्विपरीतविषयत्वान्न प्रमाणं, समुदितानि तु समस्तान्तर्बाह्यनिमित्तसा-मग्रीसापेक्षत्वात्प्रमाणमित्यलं विस्तरेण, मन्दावबोधमात्रफलत्वात् प्रस्तुतप्रयासस्य ॥ सम्प्रति निर्गमद्वारप्रतिपादनार्थमाह—

नामं ठवणा दविए खेत्ते काले तहेव भावे य। एसो उ निग्गमस्सा निक्खेवो छव्विहो होइ ॥ १४२ ॥

नामस्थापने सुप्रतीते, द्रव्यनिर्गमोऽपि द्विधा—आगमतो नोआगमतश्च, तत्रागमतः पूर्ववत्, नोआगमतस्त्रिविधो—ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदात्, तत्र ज्ञशरीरभव्यशरीरे प्राग्वत्, तद्व्यतिरिक्तोऽनेकधा, तद्यथा—द्रव्याद् द्रव्यस्य वा विनिर्गमो द्रव्यविनिर्गमः, तत्र द्रव्यात् सचित्तादचित्तान्मिश्राद्वा, द्रव्यस्य च ततः सचित्तादेः प्रत्येकं सचित्तस्याचित्तस्य मिश्रस्य वा, तत्र सचित्तात्सचित्तस्य यथा पृथिव्या अङ्कुरस्य, सचित्तान्मिश्रस्य यथा भूमेः पतङ्गस्य, सचित्तादचित्तस्य

यथा भूमेर्बाष्पस्य, तथा मिश्रात् सचित्तस्य यथा देहात्कृमेः, देहस्य मिश्रता तद्गतकेशनखाद्यवयवानामचित्तत्वात् शेषस्य तु सचित्तत्वात्, मिश्रान्मिश्रस्य यथा स्त्रीदेहाद् गर्भस्य, मिश्रादचित्तस्य यथा देहाद्विष्ठायाः, उक्तं च—"पभवो सच्चित्तातो भूमेरंकुरपयंगबप्फाई । किमिगब्भसोणियाई मीसातो थीसरीरातो ॥ १ ॥" (वि.१५३५) अचित्तात्सचित्तस्य यथा काष्ठात्कृमिकस्य, अचित्तान्मिश्रस्य यथा काष्ठाद् घुणकस्य, तस्य मिश्रता पक्षाद्यवयवानामचित्तत्वाद्, अचित्तादचित्तस्य यथा काष्ठात् घुणचूर्णस्य, अथवाऽत्र चतुर्भङ्गिका, तद्यथा—द्रव्यात् द्रव्यस्य द्रव्याणां वा द्रव्येभ्यो वा द्रव्यस्य द्रव्याणामिति, तत्र द्रव्यात् द्रव्यस्य यथा एकस्माद्रूपकात् कलान्तरप्रयुक्तादेकस्य रूपकस्य विनिर्गमः, आह च चूर्णिकृत्—"दव्वतो दव्वस्स जहा रूवातो पउत्तातो रूवतो चेव जातो" इति, द्रव्यात् द्रव्याणां वा यथा एकस्मादेव रूपकात् कलान्तरप्रयुक्तात् प्रभूतकालातिक्रमेण प्रभूतानां रूपकाणां सम्भवः, द्रव्येभ्यो द्रव्यस्य यथा प्रभूतेभ्यो रूपकेभ्यः कलान्तरप्रयुक्तेभ्यः स्वल्पदिनमध्ये एकस्य रूपकस्य सम्भवः, द्रव्येभ्यो द्रव्याणां यथा प्रभूतेभ्यो रूपकेभ्यः कलान्तरप्रयुक्तेभ्यः प्रभूतकालातिक्रमेण प्रभूतानां रूपकाणां सम्भवः, तथा क्षेत्रात् क्षेत्रस्य वा निर्गमः क्षेत्रनिर्गमः, तत्र क्षेत्राद्विनिर्गमो यथा अधोलोकक्षेत्राद्विनिर्गत्य जीवस्तिर्यग्लोके समागत इत्यादि, क्षेत्रस्य विनिर्गमो यथा राजकुलाल्लब्धममुकं क्षेत्रमिति, कालात्कालस्य वा निर्गमः कालनिर्गमः, तत्र कालान्निर्गमो यथा दुर्भिक्षान्निस्तरणं, यदिवा बालकालाद्विनिर्गतो देवदत्त इति, कालस्य विनिर्गमो यथा वसन्तस्य सम्प्रति निर्गम इति, निर्गमो नाम उत्पादः, अथवा कालो द्रव्यधर्मो वर्त्तनारूपत्वात्तस्य निर्गमो द्रव्यात् । तथा भावाद्भावस्य वा निर्गमो भावनिर्गमः, तत्र भावाद्विनिर्गमो यथा पुद्गलस्य वर्णादिविशेषात् जीवस्य वा क्रोधादिपरिणामा-

द्विनिर्गम इति, भावस्य निर्गमो यथा पुद्गलाद्वर्णादिविशेषस्य, जीवात्क्रोधादिपरिणामस्योत्पत्तिरिति, एष एव तुशब्द एव-कारार्थः निर्गमस्य निक्षेपः षड्विधो भवतीति ॥ एवं शिष्यमतिप्रकाशार्थं प्रसङ्गतोऽनेकधा निर्गम उक्तोऽत्र तु प्रशस्तभाव-निर्गममात्रेणाप्रशस्तभावापगममात्रेण चाधिकारः, यदिवा शेषैरपि द्रव्यादिभिस्तदङ्गत्वादधिकारः, तत्र द्रव्यं भगवान् वर्द्धमानस्वामी क्षेत्रं महासेनवनं कालः प्रमाणकालो भावश्च पुरुषो वर्द्धमानस्वामिरूपः, एतानि सामायिकरूपप्रशस्त-भावनिर्गमाङ्गानि, उक्तं च—"वीरो दव्वं खेत्तं महसेणवणं पमाणकालो य। भावो य भावपुरिसो समासतो निग्गमं-गाइं ॥ १ ॥ सामइयं वीरातो महसेणवणे पमाणकाले य। भावपुरिसा हि भावे विणिग्गमो वक्खमाणोऽयं ॥ २ ॥" (वि.१५४५-६) अत्र वक्ष्यमाणो भावः—सामायिकलक्षणः। एतच्च सर्वं भगवन्महावीरलक्षणद्रव्याधीनमतस्तस्यैव प्रथमतो मिथ्यात्वादिभ्यो निर्गममभिधित्सुराह— ( ग्रन्थाग्रं ६००० )

पंथं किर देसित्ता साहूणं अडवि विप्पणट्ठाणं। सम्मत्तपढमलंभो बोद्धव्वो वद्धमाणस्स ॥ १४३ ॥

पन्थानं 'किले'त्याप्तवादे देशयित्वा—कथयित्वा साधुभ्यः, सूत्रे षष्ठी प्राकृतत्वात्, 'अडवि'त्ति प्राकृतत्वादेवात्र सप्तम्या लोपः, अटव्यां पथो विप्रनष्टेभ्यः—परिभ्रष्टेभ्यः, पुनस्तेभ्य एव देशनां श्रुत्वा सम्यक्त्वं प्राप्तः, एवं सम्यक्त्वप्रथ-मलाभो बोद्धव्यो वर्द्धमानस्येति गाथाक्षरार्थः ॥ भावार्थः कथानकादवसेयः, तच्चेदम्—अवरविदेहे एगम्मि गामे बला-हितो, सो य रायाएसेण सगडाणि गहाय दारुनिमित्तं महाडविं पविट्ठो, इतो य साहुणो मग्गं पवन्ना सत्थेण समं वच्चंति, सत्थे आवासिए भिक्खं पविट्ठा, सत्थो गतो, ते मग्गतो पहाविया, अयाणंता भुल्ला, मूढदिसा पंथं अयाणंता तेण

अडविपंथेण मज्झण्हदिवसकाले तण्हाए छुहाए य पारद्धा तं देसं गया जत्थ सो सगडसंनिवेसो, सो य वलाहिओ ते पासित्ता महंतं संवेगमावन्नो भणइ—अहो इमे साहुणो अदेसिया तवस्सिणो अडविमणुपविट्ठा, तेसिं सो परमभत्तीए विउलं असणपाणं दाऊण आह–एह भगवं! जेण पंथे समवतारेमि, पुरतो संपत्थितो, ताहे तेऽवि साहुणो तस्सेव मग्गेण अणुगच्छन्ति, ततो गुरू तस्स धम्मं कहेउमारद्धो, सो तस्सुवगतो, ततो पंथं समोयारित्ता नियत्तो, ते पत्ता सदेसं, सो पुण अविरयसम्मदिट्ठी कालं काऊण सोहम्मे कप्पे पलितोवमट्ठिइतो देवो जातो ॥ एतदेवोपदर्शयन् गाथाद्वयमन्तर्भाष्यकृदाह—

अवरविदेहे गामस्स चिंतगो रायदारुवणगमणं। साहू भिक्खनिमित्तं सत्था हीणे तहिं पासे ॥ मू. भाष्यं १ ॥

दाणऽन्न पंथ नयणं, अणुकंप गुरूण कहण सम्मत्तं। सोहम्मे उववन्नो पलियाउ सुरो महिड्ढीतो ॥ मू. भा. २ ॥

अपरविदेहे ग्रामस्य चिन्तको 'रायदारुवणगमण'मिति अत्र निमित्तशब्दलोपो द्रष्टव्यो राजदारुनिमित्तं तस्य वनगमनं, सुसाधून् भिक्षानिमित्तं सार्थाद्भ्रष्टान् तत्र दृष्टवान्, ततोऽनुकम्पया–परमभक्त्या दानं अन्नपानस्य, नयनं—प्रापणं पथि, तदनन्तरं गुरोः कथनं, ततः सम्यक्त्वप्राप्तिः, तत्प्रभावान्मृत्वाऽसौ सौधर्मदेवलोके उत्पन्नः पल्योपमायुः सुरो महर्द्धिक इति ॥

लद्धूण य सम्मत्तं अणुकंपाएँ सो सुविहियाणं। भासुरवरबोंदिधरो देवो वेमाणितो जातो ॥ १४४ ॥

स ग्रामचिन्तकः सुविहितानामनुकम्पया–परमभक्त्या तेभ्यः सम्यक्त्वं लब्ध्वा च भास्वरां–दीप्तिमतीं वरां–प्रधानां बोन्दीं–तनुं धारयतीति भास्वरवरबोन्दिधरः देवो वैमानिको जात इति निर्युक्तिगाथार्थः ॥

चइऊण देवलोगा इह चेव य भारहंमि वासंमि। इक्खागकुले जातो उसभसुयसुतो मरीइत्ति ॥ १४५ ॥

ततो देवलोकात् स्वायुःक्षये च्युत्वा इहैव भारतवर्षे इक्ष्वाकुकुले जातः—उत्पन्न ऋषभसुतसुतो मरीचिः, ऋषभपौत्र इत्यर्थः ॥ यतश्चैवमतः—

इक्खागुकुले जातो इक्खागुकुलस्स होइ उप्पत्ती। कुलगरवंसे तीए भरहस्स सुओ मरीइत्ति ॥ १४६ ॥

इक्ष्वाकूणां कुलं इक्ष्वाकुकुलं तस्मिन् जातः—उत्पन्नो भरतस्य सुतो, मरीचिरिति योगः, तत्र सामान्येन ऋषभपौत्रत्वाभिधाने सतीदं विशेषाभिधानमदुष्टमेव, सामान्याभिधाने सति सर्वत्रापि विशेषाभिधानस्य दर्शनात्, स च इक्ष्वाकुकुले जातः कुलकरा वक्ष्यमाणलक्षणास्तेषां वंशः—प्रवाहस्तस्मिन्नतिक्रान्ते, यतश्चैवमत ईक्ष्वाकुकुलस्य भवति उत्पत्तिः, वाच्येति शेषः, तत्र कुलकरवंशेऽतीते इत्युक्तमतः प्रथमं कुलकराणामेवोत्पत्तिं प्रतिपिपादयिपुर्यस्मिन् काले क्षेत्रे च तत्प्रभवस्तदुपदर्शनार्थमिदमाह—

ओसप्पिणी इमीसे तइयाएँ समाएँ पच्छिमे भागे। पलितोवमट्ठभागे सेसंमि य कुलगरुप्पत्ती ॥१४७॥

अद्धभरहमज्झिल्लतिभागे गंगासिंधुमज्झंमि। एत्थ बहुमज्झदेसे उप्पन्ना कुलगरा सत्त ॥ १४८ ॥

अस्यामवसर्प्पिण्यां वर्त्तमानायां या तृतीया समा—सुषमदुष्षमाभिधाना तस्या यः पश्चिमो भागः तस्मिन्, कियन्मात्रे इत्याह—पल्योपमाष्टभागप्रमाणे शेषे तिष्ठति सति कुलकरोत्पत्तिः, अभूदिति वाक्यशेषः, कुत्रेत्यत आह—अर्द्धभरतमध्यत्रिभागे, किंविशिष्टे इत्याह—गङ्गासिन्धुमध्येऽत्र, एतस्मिन्नर्द्धभरतमध्यमत्रिभागे बहुमध्यदेशे, न तु पर्यन्तेषु,

उत्पन्नाः कुलकराः सप्त, इहार्द्धभरतं विद्याधरालयवैताढ्यपर्वतादारतः परिग्राह्यं, न तु परतो, व्याख्यानात् ॥ सम्प्रति कुलकरवक्तव्यताभिधायिकां द्वारगाथां प्रतिपादयति—

पुव्वभव १ जम्म २ नामं ३ पमाण ४ संघयणमेव ५ संठाणं ६ ।
वन्नि ७ त्थिया ८ ऽऽउ ९ भागा १० भवणोवातो ११ य नीई १२ य ॥ १४९ ॥

कुलकराणां पूर्वभवा वक्तव्याः, ततो जन्म, तदनन्तरं नामानि, ततः प्रमाणानि, तदनन्तरं संहननं वक्तव्यम्, एवशब्दः पूरणार्थः, तथा संस्थानं, ततो वर्णाः प्रतिपादयितव्याः, तदनन्तरं स्त्रियः, ततः आयुर्वक्तव्यं, ततो भागा वाच्याः—कस्मिन् वयोभागे कुलकराः संवृत्ता इति, भवनेषूपपातो वक्तव्यः, भवनग्रहणं भवनपतिनिकायेषु तेषामुपपातो नान्यत्रेति प्रदर्शनार्थं, तथा नीतिश्च या यस्य हक्कारादिलक्षणा सा तस्य वक्तव्येति गाथाक्षरार्थः ॥ अवयवार्थं तु प्रतिद्वारं भाष्यकारः स्वयमेव वक्ष्यति, तत्र प्रथमद्वारावयवार्थाभिधित्सयेदमाह—

अवरविदेहे दो वणियवयंसा माइ उज्जुगे चेव । कालगया इह भरहे हत्थी मणुओ य आयाया ॥ १५० ॥
दट्ठुं सिणेहकरणं गयमारुहणं च नामनिप्फत्ती । परिहाणि गेहि कलहो सामत्थणं विन्नवणहत्ति ॥ १५१ ॥

अपरविदेहे द्वौ वणिग्वयस्यावभूतां, तद्यथा—एको मायी अपरश्च ऋजुः, तौ च कालगताविह भरते आयातौ, मायी हस्ती इतरो मनुष्य इति, ततो दृष्ट्वा परस्परं स्नेहकरणं, ततो गजारोहणं, तदनन्तरं नामनिर्वृत्तिः, गच्छता च कालेन कल्पद्रुमाणां परिहानिः, ततः प्रभूता प्रभूततरा गृद्धिस्तदनन्तरं कलहस्ततः 'सामत्थणं'ति देशीवचनमेतत्पर्यालोचनमित्यर्थः,

ततो विज्ञापना, तदनन्तरं 'हा' इति हाकारलक्षणाया नीतेः प्रवृत्तिः, भावार्थः कथानकादवसेयः, तच्चेदम्—अवरविदेहे दो मित्ता वणिया, तत्थेगो माई, इयरो उज्जुगो, ते पुण एगओ चेव ववहरंति, तत्थ जो माई सो तं उज्जुगं अइसंधेइ, इयरो सव्वमगूढंतो सम्मं ववहरइ, दोवि पुण दाणरुई, ततो सो उज्जुगो कालं काऊण इहेव दाहिणड्ढे मिहुणगो जातो, वंको पुण तंमि चेव पएसे हत्थिरयणं, सो य सेतो वण्णेणं चउदंतो य, जाहे ते दोऽवि पडुप्पण्णसरीरगा जाया ताहे ते हिंडिउमारद्धा, तेण य हत्थिणा हिंडंतेण सो मिहुणगो दिट्ठो, दट्ठूण य से परमा पीई उप्पन्ना, तं च से अभिओगनिव्वत्तियं कम्मं उदिन्नं, ततो तेण मिहुणगं खंधे विलइयं, ततो सव्वेण लोगेण तं मिहुणगं तहारूवं दट्ठूण अम्हेहिंतो अब्भहिओ मणूसो एसो इमं च से विमलं वाहणंति से विमलवाहणत्ति नामं कयं, तेसिं च जाईसरणं जायं, ताहे कालदोसेणं इमे सत्त कप्परुक्खा परिहायंति,—'मत्तंगया य भिंगा चित्तंगा चेव तहय चित्तरसा। गेहागार अणिगणा सत्तमया कप्परुक्खत्ति ॥ १ ॥' तेसु परिहायंतेसु कसाया उप्पण्णा, अयं मम मा इत्थ कोइ अल्लियउ इति भणिउं पवत्ता, जो ममीकयमल्लियइ तेण इयरो कसाइज्जइ, ततो परोप्परमसंखडं, ताहे चिंतंति–कंचि अहिवइं ठवेमो, जो ववत्थाए ठवेइ, ताहे तेहिं सो विमलवाहणो एस अम्हेहिंतो अहितो इति अहिवई ठवितो, ताहे तेण तेसिं रुक्खा विरिक्का, भणिया य–जो तुब्भं एयं मेरं अइक्कमइ तं मम कहेज्जह जेणाहं से दंडं वत्तेमि, सोऽवि कहं जाणइ ?, भण्णइ–सो जाइस्सरो तं वणियत्तं सरेइ तेण जाणइ, ताहे तेसिं जो कोऽवि अवरज्झइ सो तस्स कहिज्जइ, ताहे सो तेसिं दंडं वत्तेइ, को पुण दंडो ?, हक्कारो, हा तुमे दुट्ठु कयंति, ताहे सो जाणइ–अहं सव्वस्सहरणो कतो, वरं हतो होंतो सीसं वा

मे वरं छिन्नं होन्तं, न य एरिसं विडंबणं पाविन्तोत्ति, एवं बहुकालं हक्कारदंडो अणुवत्तितो, तस्स य चंदजसा भज्जा, तीए समं भोगे भुञ्जंतस्स अवरं मिहुणं जायं, तस्सवि कालंतरेण अवरं, एवं ते एगवंसंमि सत्त कुलगरा उप्पन्ना, पूर्वभवाः खल्वमीषां प्रथमानुयोगतोऽवसेयाः, जन्म पुनरिहैव सर्वेषां द्रष्टव्यम् ॥ व्याख्यातं पूर्वभवजन्मरूपं द्वारद्वयं, सम्प्रति कुलकरनामप्रतिपादनार्थमाह—

पढमेत्थ विमलवाहण चक्खुम जसमं चउत्थमभिचंदे । तत्तो य पसेणइए मरुदेवे चेव नाभी य ॥ १५२ ॥

प्रथमोऽत्र विमलवाहनो द्वितीयश्चक्षुष्मान् तृतीयो यशस्वी चतुर्थोऽभिचन्द्रः पञ्चमः प्रसेनजित् षष्ठो मरुदेवः सप्तमो नाभिरिति ॥ गतं नामद्वारम्, अधुना प्रमाणद्वारावयवार्थमभिधित्सुराह—

नव धणुसयाइं पढमो अट्ठ य सत्तद्धसत्तमाइं च । छच्चेव अद्धछट्ठा, पंचसया पणवीसाओ ॥ १५३ ॥

प्रथमो विमलवाहन उच्चैस्त्वेन नव धनुःशतानि द्वितीयश्चक्षुष्मान् अष्टौ ८०० तृतीयो यशस्वी सप्त ७०० चतुर्थोऽभिचन्द्रोऽर्द्धसप्तमानि धनुःशतानि ६५० पञ्चमः प्रसेनजित् षट् ६०० षष्ठो मरुदेवोऽर्द्धषष्ठानि धनुःशतानि ५५० सप्तमो नाभिः पञ्चविंशत्यधिकानि पञ्चधनुःशतानि ५२५ ॥ गतं प्रमाणद्वारम्, अधुना संहननसंस्थानप्रतिपादनार्थमाह—

वज्जरिसभसंघयणा समचउरंसा य होंति संठाणे । वण्णंपि य वोच्छामि पत्तेयं जस्स जो आसी ॥ १५४ ॥ ॥१५४॥

सर्वे एव विमलवाहनादयो वज्रर्षभसंहननाः संस्थाने च चिन्त्यमाने समचतुरस्राश्च भवन्ति, वर्णद्वारसम्बन्धाभिधानार्थमाह—'वण्णंपी'त्यादि, वर्णमपि च वक्ष्ये प्रत्येकं च यस्य य आसीत् इति ॥ प्रतिज्ञातमेव निर्वाहयति—

चक्खुम जसमं च पसेणई य एए पियंगुवण्णाभा । अभिचंदो ससिगोरो निम्मलकणगप्पभा सेसा ॥ १५५ ॥

चक्षुष्मान् यशस्वी प्रसेनजित्, एते द्वितीयतृतीयपञ्चमाः 'प्रियङ्गुवर्णाभाः' प्रियङ्गुवर्ण इवाभा—छाया येषां ते तथा—प्रियङ्गुश्यामाः, अभिचन्द्रश्चतुर्थः कुलकरः शशिवद् गौरः, निर्मलकनकवत् प्रभा—छाया येषां ते तथा शेषा—विमलवाहन-मरुदेवनाभयः ॥ गतं वर्णद्वारं, स्त्रीद्वारप्रतिपादनार्थमाह—

चंदजस चंदकंता सुरूव पडिरूव चक्खुकंता य । सिरिकंता मरुदेवी कुलगरपत्तीण नामाइं ॥ १५६ ॥

विमलवाहनस्य पत्नी चन्द्रयशाश्चक्षुष्मतश्च चन्द्रकान्ता, यशस्विनः सुरूपा, अभिचन्द्रस्य प्रतिरूपा, प्रसेनजितश्चक्षुःकान्ता मरुदेवस्य श्रीकान्ता, नाभेर्मरुदेवी, इमानि यथाक्रमं कुलकरपत्नीनां नामानि ॥ एताश्च संहननादिभिः कुलकर-तुल्या एव द्रष्टव्याः, यत आह—

संघयणं संठाणं उच्चत्तं चेव कुलगरेहिं समं । वण्णेण एगवण्णा सव्वाओ पियंगुवण्णातो ॥ १५७ ॥

संहननं संस्थानमुच्चैस्त्वं चैव कुलकरैरात्मीयैरात्मीयैः समं—अनुरूपमासामधिकृतस्त्रीणां, नवरं प्रमाणेन ईषन्न्यूना इति सम्प्रदायः, तथा वर्णेन सर्वा अप्येकवर्णाः प्रियङ्गुवर्णा इति ॥ गतं स्त्रीद्वारम्, इदानीमायुर्द्वारमाह—

पलितोवमदसभागो पढमस्साउं ततो असंखेज्जा । ते याणुपुव्विहीणा पुव्वा नाभिस्स संखिज्जा ॥ १५८ ॥

प्रथमस्य—विमलवाहनस्यायुः पल्योपमदशभागः, तदनन्तरमन्येषां चक्षुष्मदादीनामसङ्ख्येयानि पूर्वाणीति सम्बध्यते, तान्यपि चानुपूर्व्या—क्रमेण हीनानि, नाभेस्तु सङ्ख्येयानि पूर्वाण्यायुष्कमिति, अन्ये तु व्याचक्षते—प्रथमस्य पल्योपमदश-

भाग एवायुः, ततो द्वितीयस्यासङ्ख्येयाः, पल्योपमासङ्ख्येयभागा इति वाक्यशेषः, एवं चानुपूर्व्या हीनं शेषाणामायुष्कं द्रष्टव्यं, तावद्यावत्सङ्ख्येयानि पूर्वाणि नाभेरायुष्कमित्यविरुद्धेयं व्याख्या, अपरे व्याचक्षते-प्रथमस्यायुः पल्योपमदशभागः ततोऽसङ्ख्येया इति-शेषाणां समुदितानां पल्योपमासङ्ख्येयभागाः, किमुक्तं भवति ?-द्वितीयस्य पल्योपमासङ्ख्येयभाग आयुः शेषाणां तत एवासङ्ख्येयभागोऽसङ्ख्येयभागः पात्यते तावद्यावन्नाभेरसङ्ख्येयानि पूर्वाणि, तदेतदपव्याख्यानं, कथमिति चेत्, उच्यते, इह पल्योपमाष्टभागे अशेषकुलकराणामुत्पत्तिः, 'पलिओवमट्ठभागे सेसंमि य कुलगरुप्पत्ती' इति वचनात्, तत्र पल्योपमं किलासत्कल्पनया चत्वारिंशद्भागं परिकल्प्यते, तस्याष्टमो भागः पञ्च चत्वारिंशद्भागाः, तत्रापि प्रथमस्य विमलवाहनस्यायुः पल्योपमदशभागः, ततश्चत्वारश्चत्वारिंशद्भागास्तदायुषि गताः, शेष एकः पल्योपमस्य चत्वारिंशत्तमः सङ्ख्येयो भागोऽवतिष्ठते, स च चक्षुष्मदादिगतैः पञ्चभिरसङ्ख्येयभागैर्न पूर्यते इत्यपव्याख्या, अथ अत एव नाभेरसङ्ख्येयानि पूर्वाण्यायुष्कमुक्तमिति, इदमयुक्तं तूक्तं, यतो मरुदेव्याः सङ्ख्येयानि वर्षाण्यायुः, असङ्ख्येयवर्षायुषां केवलज्ञानाभावात्, ततो नाभेः सङ्ख्येयवर्षायुष्कत्वमेव, कुलकराणां कुलकरपत्नीनां च समानायुष्कत्वात्॥ तथा चाह—

जं चेव आउयं कुलगराण तं चेव होइ तासिंपि । जं पढमगस्स आउं तावइयं होइ हत्थिस्स ॥ १५९ ॥

यदेवायुष्कं कुलकराणां प्रागुक्तं तदेव भवति तासामपि-कुलगराङ्गनानां, सङ्ख्यासाम्याच्च तदेवेत्यभिधीयते, यावता प्रत्येकं भिन्नमेव प्राणिनामायुः । तथा यत्प्रथमस्य कुलकरस्य-विमलवाहनाख्यस्यायुस्तावदेव भवति हस्तिनः, एवं शेषकुलकरहस्तिनामपि कुलकरतुल्यं द्रष्टव्यम्॥ सम्प्रति भागद्वारं वक्तव्यं, यथा कः कस्य सर्वायुष्के कुलकरकाल इति, तत्रेदमाह-

जं जस्स आउयं खलु तं दसभागे समं विभइऊणं। मज्झिल्लट्ठतिभागे कुलगरकालं वियाणाहि ॥ १६० ॥

यद्यस्य कुलकरस्यायुस्तत् खलु दशभागान् समं विभज्य मध्यमेऽष्टभागात्मके त्रिभागे कुलकरकालं विजानीहि ॥ अमुमेवार्थं प्रकटयन्नाह—

पढमो य कुमारत्ते भागो चरिमो य वुड्ढभावम्मि। ते पयणुपेज्जदोसा सव्वे देवेसु उववन्ना ॥ १६१ ॥

तेषां दशानां भागानां मध्ये प्रथमो भागः कुमारत्वे भवति, चरमो वृद्धभावे, शेषा मध्यमा अष्टौ भागाः कुलकरकाल इति। गतं भागद्वारम्, उपपातद्वारमुच्यते—ते प्रतनुप्रेमद्वेषाः, प्रेम—रागो द्वेषः प्रसिद्धः। सर्वे विमलवाहनादयो देवेषूपपन्नाः ॥ तत्र न ज्ञायते केषु देवेषूपपन्ना इत्यत आह—

दो चेव सुवण्णेसुं उयहिकुमारेसु होंति दो चेव। दो दीवकुमारेसुं एगो नागेसु उववण्णो ॥ १६२ ॥

द्वौ आद्यौ विमलवाहनचक्षुष्मदभिधानौ सुपर्णेषु देवेषूत्पन्नौ, द्वावेव च यशस्वि—अभिचन्द्राख्यावुदधिकुमारेषु भवतः, द्वौ प्रसेनजिन्मरुदेवाख्यौ द्वीपकुमारेषु, एको नाभिनामा सप्तमकुलकरो नागेषूपपन्नः ॥ सम्प्रति कुलकरस्त्रीणां हस्तिनां चोपपातमभिधित्सुराह—

हत्थी छच्चित्थीतो नागकुमारेसु होंति उववन्ना। एगा सिद्धिं पत्ता मरुदेवी नाभिणो पत्ती ॥ १६३ ॥

हस्तिनः सप्तापि षट् च स्त्रियः चन्द्रयशःप्रभृतयो नागकुमारेषूपपन्नाः, अन्ये तु प्रतिपादयन्ति—एक एव हस्ती

षट् च स्त्रियो नागेषूपपन्नाः, शेषाणामिहानभिधानमेवेति, एका सप्तमी मरुदेवी नाभेः पत्नी सिद्धिं प्राप्ताः ॥ उक्तमुपपात-द्वारम्, अधुना नीतिद्वारप्रतिपादनार्थमाह—

हक्कारे मक्कारे धिक्कारे चेव दंडनीतीओ । वोच्छं तासि विसेसं जहक्कमं आनुपुवीए ॥ १६४ ॥

हक्कारो मक्कारो धिक्कारश्चेति कुलकराणां दण्डनीतयः, ततो वक्ष्ये 'तासां' दण्डनीतीनां विशेषं यथाक्रमं, या यस्य तां तस्य वक्ष्य इति भावः, तामपि तथा वक्ष्ये आनुपूर्व्या—परिपाट्या, विमलवाहनादारभ्य क्रमेणेति यावत् ॥ प्रतिज्ञातमेव करोति—

पढमबिइयाण पढमा तइयचउत्थाण अहिणवा बिइया । पंचम छट्ठस्स य सत्तमस्स तइया अहिणवाओ ॥१६५॥

प्रथमद्वितीययोः सूत्रे द्वित्वेऽपि बहुवचनं प्राकृतत्वात् कुलकरयोः प्रथमा हक्कारलक्षणा दण्डनीतिः, तृतीयचतुर्थयोः—यशस्व्यभिचन्द्राख्ययोः कुलकरयोरभिनवा द्वितीया—मक्कारलक्षणा दण्डनीतिः, किमुक्तं भवति ?—स्वल्पापराधे प्रथमया दण्डः क्रियते, महापराधे द्वितीययेति, तथा पञ्चमषष्ठयोः सप्तमस्य च तृतीया—धिक्काराख्या अभिनवा, एषा उत्कृष्टा द्वितीया मध्यमा प्रथमा जघन्या ॥ एताश्च तिस्रोऽपि लघुमध्यमोत्कृष्टापराधेषु यथाक्रमं प्रवर्त्तिता इति ॥

सेसाउ दंडनीती माणवगनिहीउ होइ भरहस्स । उसभस्स गिहावासे असक्कतो आसि आहारो ॥ १६६ ॥

शेषा तु—चारकच्छविच्छेदलक्षणा दण्डनीतिर्भरतस्य माणवकनिधेः सकाशाद्भवति, इयमत्र भावना—कोपाविष्करणे नरे इतः स्थानान्मा यासीरित्येवं यत्परिभाषणं यश्च मण्डलिबन्धो यथा नोऽस्मात्प्रदेशाद् गन्तव्यमित्येवंरूपे द्वे दण्डनीती भगवता ऋषभस्वामिना प्रवर्त्तिते चारकच्छविच्छेदाख्ये च द्वे दण्डनीती भरतेन माणवकनिधेरिति, इदं च नीत्यु-

त्पादाभिधानमन्यास्वप्यतीतासु एष्यासु चावसर्पिणीषु अयमेव न्याय इति ख्यापनार्थं, तस्य च भरतस्य पिता ऋषभ नाथः तस्य च ऋषभनाथस्य गृहवासे आहार आसीद् असंस्कृतः—स्वभावसम्पन्नः, भगवतो हि ऋषभस्वामिनो यावद् गृह वासस्तावद्देवेन्द्रादेशाद्देवा देवकुरूत्तरकुरुक्षेत्रयोः स्वादूनि फलानि क्षीरोदसमुद्राच्च उदकमुपनीतवन्त इति ॥ अथ भरत-चक्रवर्त्तिकाले कियत्यो दण्डनीतयः प्रावर्त्तिषन्तेत्यत आह—

परिहासणा उ पढमा, मंडलिबंधो उ होइ बीया उ। चारगछविछेयाई भरहस्स चउविहा नीती ॥ मू.भा.३

भरतस्य साम्राज्यानुभवनकाले चतुर्विधा दण्डनीतिरभूत्, तद्यथा—प्रथमा स्वल्पापराधविषया परिभाषणा—प्रागुक्त-स्वरूपा भगवता आदिनाथेन प्रवर्त्तिता आसीत्, द्वितीया मण्डलिबन्धो—मण्डलिबन्धाख्या आदिनाथेनैव प्रवर्त्तिता, साऽपि किञ्चिन्महापराधविषया, तृतीया चारकलक्षणा भरतेन माणवकनिधिं परिभाव्य प्रवर्त्तिता, सा गुरुतरापराधविषया, चतुर्थी छविच्छेदादिका, आदिशब्दाच्छिरःकर्त्तनादिपरिग्रहः, सा महापराधविषया भरतेनैव माणवकनिधेः प्रवर्त्तितेति, अन्ये तु चतस्रोऽप्येता दण्डनीतयो भरतेनैवोत्पादिता इति व्याचक्षते ॥ अथ कोऽसौ भरतः?, उच्यते—ऋषभनाथपुत्रः, अथ ऋषभनाथ एव कोऽसाविति तद्वक्तव्यतामाह, अथवा प्रतिपादितः कुलकरवंशः, इदानीं प्राक्सूचित इक्ष्वाकुवंशः प्रति-पाद्यते, स च ऋषभनाथप्रभव इति तद्वक्तव्यतामाह—

नाभी विणीयभूमी मरुदेवी उत्तरा असाढा य। राया य वयरनाभो विमाण सवट्ठसिद्धातो ॥ १६७ ॥

इयं निर्युक्तिगाथा प्रभूतार्थप्रतिपादिका, अस्यां च प्रतिपदं क्रियाध्याहारः कार्यः, स चेत्थं—नाभिरिति—नाभिनाम

सू. २७

सप्तमः कुलकरो बभूव, 'विणीयभूमी' इति तस्य विनीताभूमी प्राय आसीत्, मरुदेवी च तस्य भार्या, राजा च प्राग्भवे वैरनाभः सन् प्रव्रज्यां गृहीत्वा तीर्थकरनामगोत्रं कर्म्म बद्धा मृत्वा सर्वार्थसिद्धिमवाप्य ततश्च्युत्वा तस्या मरुदेव्याः कुक्षौ तस्यां विनीतभूमौ ऋषभनाथः सञ्जातः, तस्य गर्भावतारसमये उत्तराषाढा नक्षत्रमासीत् ॥ सम्प्रति यथा भगवता सम्यक्त्वमवाप्तं, यावतो वा भवानवाप्तसम्यक्त्वः संसारं पर्यटितवान्, यथा च तेन तीर्थकरनामगोत्रं कर्म बद्धं, तदेतत्सर्वमभिधित्सुः प्रथमतो भवद्वारगाथामाह—

धण मिहुण सुर महब्बल ललियंग य वइरजंघ मिहुणे य। सोहम्म विज्ज अच्चुय चक्की सव्वट्ठ उसभे य ॥ (अव्या. हा.)

प्रथमभवे धनसार्थवाह आसीत्, द्वितीयभवे उत्तरकुरुषु मिथुनकः तृतीयभवे सौधर्म्मदेवलोके सुरः चतुर्थभवे गन्धिलावतीविजये–गन्धारविषये गन्धसमृद्धे महाबलो राजा पञ्चमे भवे ईशानदेवलोके ललिताङ्गनामा देवः षष्ठभवे महाविदेहे वज्रजङ्घः सप्तमभवे भूयोऽप्युत्तरकुरुषु मिथुनकः अष्टमभवे सौधर्म्मदेवलोके देवः नवमभवे विदेहेषु वैद्यः दशमभवे अच्युतदेवलोके देवः एकादशभवे वज्रनाभश्चक्रवर्त्ती द्वादशभवे सर्वार्थसिद्धिमहाविमाने देवः त्रयोदशभवे ऋषभनामा आदितीर्थकर इति ॥ एतानेव भवान् क्रमेण विवरीषुराह—

धणसत्थवाह घोसण जइगमणं अडवि वासठाणं च। बहु वोलीणे वासे चिंता घयदाणमासि तया ॥१६८॥

प्रथमभवे धननामा सार्थवाह आसीत्, स च वसन्तपुरं प्रति प्रस्थितो घोषणां कृतवान्, तेन सह यतीनां गमनमभूत्, अटव्यां च वर्षासु स्थानं, ततो बहुव्युत्क्रान्ते वर्षाकाले धनस्य चिन्ताऽभवत्, ततो घृतदानमासीत् तदेति गाथाक्षरार्थः ॥

भावार्थः कथानकादवसेयः, तच्चेदम्–तेणं कालेणं तेणं समएणं अवरविदेहे वासे धणो नाम सत्थवाहो होत्था, सो खितिपइट्ठियातो नगरातो वाणिज्जेण वसंतपुरं पट्ठितो घोसणं करेइ, जहा–जो मए सद्धिं जाइ तस्साहमुदंतं वहामि, तं-जहा–'खाणेण वा पाणेण वा वत्थेण वा पत्तेण वा ओसहेण वा भेसज्जेण वा अण्णेण वा जो जेण विणा विसूरइ तेणं'ति, तं च सोऊण बहवे तडियकप्पडियादयो पयट्टा, विभासा जहा नायाधम्मकहासु दावद्दवनाए, नवरं इहं तेण समं गच्छो साहूणं संपट्ठितो, को पुण कालो ?, चरमनिदाघो, सो य सत्थो जाहे अडविमज्झं संपत्तो ताहे वासारत्तो जातो, ताहे सो सत्थवाहो अतिदुग्गमा पंथत्तिकाऊण तत्थेव सत्थनिवेसं काउं वासावासं ठितो, तंमि ठिए सव्वो सत्थो ठिओ, जाहे य तेसिं तत्थट्ठियाणं भोयणं निट्ठियं ताहे ते कंदमूलफलाणि समुद्दिसिउमारद्धा, साहुणो दुहिआ जाया, जह कहवि अहा-पवत्ताणि लहंति ताहे गिण्हंति, एवं काले वच्चति थोवावसेसे वासारत्ते धणस्स चिंता जाया–को एत्थ सत्थे दुक्खि-तोत्ति ?, ताहे सरियं जहा मए समं साहुणो आगया तेसिं कंदाई न कप्पंतित्ति ते दुक्खिया महातवस्सिणो, तो तेसिं कल्लं देमि, ततो पभाए ते निमंतिया, ते भणंति–जं अम्हं कप्पियं होज्जा तं गेण्हेज्जामो, तेण पुच्छियं–भयवं ! किं पुण तुब्भं कप्पइ ?, साहूहिं भणियं–जं अम्ह निमित्तमकयमकारियमसंकप्पियमहापवत्तातो पाकातो भिक्खामित्तं, जइ वा घयं वा गुलं वा एवमाइतं कप्पइ, ततो तेण साहूण फासुयं विउलं घयदाणं दिन्नं, सो य अहाउयं पालित्ता कालमासे कालं किच्चा तेण दाणफलेण उत्तरकुराए मणूसो जातो, ततो आउक्खए सोहम्मे कप्पे देवो उववन्नो, तत्तोऽवि चविऊणं इहेव जंबुद्दीवे अवरविदेहे गंधिलावइविजए वेयड्ढपव्वए गंधारजणवए गंधसमिद्धे विज्जाहरनगरे अइबलरण्णो पत्ता, सयबलराइणो

पुत्तो महाबलो नाम राया जातो, तस्स दुवे मंती, तंजहा—संभिन्नसोतो सयंबुद्धो य, संभिन्नसोयो नत्थियवादी सयंबुद्धो य सड्ढो, तत्थ सयंबुद्धेण अमच्चेण सावगेण पियवयंसगेण नाडगपेक्खाअक्खित्तमाणसं संभिन्नसोयं वाए पराजिणिऊण संबोहितो मासावसेसाऊ बावीसदिवसे भत्तपच्चक्खाणं काउं मरिऊण ईसाणे कप्पे सिरिप्पभविमाणे ललियंगतो नाम देवो जातो, ततो आउक्खए चइऊण इहेव जंबुद्दीवे दीवे पुक्खलाइविजए लोहग्गलनगरसामी वइरजंघो नाम राया जातो, तत्थ सभारियातो पच्छिमे वए पव्वयामित्ति चिंतयंतो पुत्तेण रज्जकंखिणा वासघरे जोगधूवप्पयोगेण मारितो, मरिऊण उत्तरकुराए सभारियो मिहुणगो जातो, ततो सोहम्मे कप्पे देवो उववन्नो, ततो आउक्खए चइऊण महाविदेहवासे खितिपइट्ठिते नगरे विज्जपुत्तो आयातो, जद्दिवसं तु जातो तद्दिवसमेगाहजाया से इमे चत्तारि वयंसया अणुरत्ता अविरत्ता तंजहा— रायपुत्तो सेट्ठिपुत्तो अमच्चपुत्तो सत्थवाहपुत्तोत्ति, ते सह संवड्ढिता सह पंसुकीलिया, धणसत्थवाहजीवोऽवि महाविज्जो जातो, ते वयंसया अन्नया कयाइ तस्स विज्जस्स घरे एगतो सहिया संनिसन्ना अच्छंति, तत्थ साहू महप्पा किमिकुट्ठेण गहितो भिक्खानिमित्तमइगतो, तेहिं सप्पणयं सहासं सो विज्जो भण्णइ—तुब्भेहिं नाम सव्वो लोगो खाइयव्वो, न तुब्भेहिं तवस्सिस्स वा अणाहस्स वा किरिया कायव्वा, सो भणइ—करेमि, किं पुण मम ओसहाणि काइंवि नत्थि, ते भणंति—अम्हे मोल्लं देमो, किं ओसहं?, जाइज्जउ, सो भणइ—कंबलरयणं गोसीसचंदणं, तइयं पुण जं सयसहस्सपागतेल्लं तं ममवि अत्थि, ताहे मग्गिउं पवत्ता, आगमियं च णेहिं जहा अमुगस्स वाणियगस्स अत्थि दोऽवि एयाणि, ते गया तस्स सगासं दो लक्खाणि घेत्तुं, ततो वाणियगो ससंभंतो भणति—किं देमि?, ते भणंति—कंबलरयणं गोसीसचंदणं

च, तेण भणणइ–किं एएहिं कज्जं?, ते भणंति–साहुस्स किरिया कायव्वा, तेण भणणइ–एवं तो अलाहि मम मोल्लेणं, इहरहा च्चेव गेण्हह, करेह साहुणो किरियं, ममवि धम्मो होउत्ति, सो वाणियतो चिंतेइ–जइ ताव एएसिं बालाणं एरिसा सद्धा धम्मस्स उवरि तो किं मम मंदपुण्णस्स इहलोगपडिबद्धस्स नत्थित्ति संवेगमावन्नो तहारूवाणं थेराणं अंतिए पव्वइतो सिद्धो य। अमुमेवार्थमुपसंहरन् गाथाचतुष्टयेनाह–

धणसत्थवाह घोसण जइ गमण अडवि वासठाणं च। बहुवोलीणे वासे चिंता घयदाणमासि तया ॥ पु. १ ॥

उत्तरकुरु सोहम्मे महाविदेहे महब्बलो राया। ईसाणे ललियंगो महाविदेहे वइरजंघो ॥१६९॥

उत्तरकुरु सोहम्मे विदेह तेगिच्छियस्स तत्थ सुत्तो। रायसुयसेट्ठिमच्चासत्थाहसुया वयंसा से ॥१७०॥

वेज्जसुयस्स य गेहे किमिकुट्ठोवद्दुयं जइं दट्ठुं। बेंति य ते विज्जसुयं करेहि एयस्स तेगिच्छं ॥ १७१ ॥

तेल्लं तेगिच्छसुतो कंबलगं चंदणं च वाणियतो। दाउं अभिनिक्खंतो तेणेव भवेण अंतगडो ॥ १७२ ॥

धनभवक्षयानन्तरं उत्तरकुरुषु मिथुनको जातः, ततोऽपि मृत्वा सौधर्म्मदेवलोके देवः, तत आयुःक्षये च्युत्वा महाविदेहे महाबलो राजाऽभवत्, ततोऽपि मृत्वा ईशाने देवलोके ललिताङ्गो नाम देवस्ततोऽपि च्युत्वा महाविदेहे वज्रजङ्घः, ततोऽप्युद्धृत्योत्तरकुरुषु मिथुनको जातस्तत आयुःक्षये सौधर्मदेवलोके देवस्ततः च्युत्वा विदेहे चिकित्सकस्य सुतो जातः, तत्र 'से' तस्य राजसुतश्रेष्ठ्यमात्यसार्थवाहसुता वयस्या अभवन्, तस्य च वैद्यसुतस्य गेहे कृमिकुष्ठोपद्रुतं यतिं दृष्ट्वा ते वैद्यसुतं वदन्ति–यथा कुरु अस्य चिकित्सामिति, तत्र तैलं चिकित्सकसुतोऽदात्, कम्बलकं चन्दनं च वणिग्दत्त्वा अभिनिष्क्रान्तो–दीक्षां प्रतिपन्नवान्, तेनैव च भवेन अन्तकृत्–सिद्धो जातः ॥ कथानकशेषमुच्यते–ते विज्जसुयप्प-

भिइणो सव्वे घेत्तूण ताणि ओसहाणि गया साहुणो पासं जत्थ सो उज्जाणे पडिमं ठितो, पासंति पडिमागयं साहुं, दट्ठूणं पडिमाठियं ते वंदिऊण अणुण्णवंति–अणुजाणाह भयवं ! अम्हे तुम्हं धम्मविग्घं काउं उवट्ठिया, ताहे तेल्लेण सो साहू पढमं अब्भिंगितो, तं चेव तेल्लं रोमकूवेहिं सव्वं अइगयं, तंमि य अइगए किमिया सव्वे संखुद्धा, तेहिं चलंतेहिं तस्स साहुणो अतीव उज्जला विउला वेयणा पाउब्भूया, ताहे ते निग्गए दट्ठूण कंबलरयणेण सो साहू पाउतो, तं सीयलं तेल्लं च उण्हवीरियं, ते किमिया तत्थ लग्गा, ताहे पुव्वाणियगोकडेवरे पप्फोडियं, ते सव्वे पडिया, ततो सो साहू चंदणेण लित्तो, जातो समासत्थो, एवं तिन्नि वारे अब्भंगिऊण सो साहू तेहिं नीरोगो कतो, तंजहा—पढमं मक्खिज्जइ, ततो पाउणिज्जइ, पच्छा गोसीसचंदणेण लिंपइ, पुणो मक्खिज्जइ, एवमेयाए परिवाडीए पढममब्भंगे तयागता किमिया निग्गया बिइअब्भंगे मंसगया तईयअब्भंगे अट्ठिगया, ततो संरोहणीए ओसहीए कणगवन्नो जातो, ततो खमावेऊण ते पडिगया, पच्छा ते सड्ढा जाया, पच्छा समणा, ततो अहाउयं पालइत्ता सामण्णं तंमूलागं पंचवि जणा अच्चुए कप्पे देवा उववन्ना। ततो देवलोगातो आउक्खए चइऊण इहेव जंबुद्दीवे दीवे पुव्वविदेहे पुक्खलावइविजए पुंडरिगिणीए नयरीए वइरसेणरन्नो धारिणीए देवीए उदरे पढमो वइरनाभो नाम पुत्तो जातो, जो पुव्वभवे विज्जो आसि, अवसेसा कमेण बाहुसुबाहुपीढमहापीढा, रायसुतो बाहू सेट्ठिसुतो सुबाहू अमच्चसुतो पीढो सत्थवाहसुतो महापीढो, वयरसेणो पव्वइतो तित्थयरो जातो, इयरे संवड्ढिया पंचलक्खणे भोगे भुंजंति, जद्दिवसं वइरसेणस्स केवलनाणमुप्पन्नं तंमि दिवसे वयरनाभस्स चक्करयणं समुप्पन्नं, वयरनाभो चक्कवट्टी जातो, इयरे चत्तारि मंडलिया रायाणो, एवं सो वयरनाभो

साहुवेयावच्चप्पभावेण उइन्ने चक्कवट्टिभोगे भुंजइ, वयरनाभचक्कवट्टिस्स चउरासीइ पुव्वसयसहस्साइं सव्वाउं, तत्थ तीसं पुव्वसयसहस्साइं कुमारवासो सोलस पुव्वसयसहस्साइं मंडलिओ चउवीसं पुव्वसयसहस्साइं चक्कवट्टी चउद्दस पुव्वसयसहस्साइं सामन्नपरियायो इति, एवं चक्कवट्टिभोए भुंजंतो विहरइ, इतो य तित्थयरवयरसेणस्स समोसरणं, सो पिउपायमूलं चउहिंवि सहोअरेहिं समं पव्वइतो, तत्थ वइरनाभेण चोद्दस पुव्वा अहिज्जिया, सेसावि चउरो एक्कारसंगविऊ जाया, तत्थ बाहू तेसिं अन्नेसिं च साहूणं वेयावच्चं करेइ, जो सुबाहू सो साहुणो विस्सामेइ, एवं ते करेंते भयवं वयरनाभो अणुवूहइ—अहो सुलद्धं जम्मं सहलीकयं जीवियं जं साहूण वेयावच्चं कीरइ, परिस्संते वा साहुणो विस्सामेइ, एवं पसंसिज्जंतेसु तेसु तेसिं पच्छिमाणं दोण्हवि पीढमहापीढाणं अप्पत्तियं भवइ, अम्हे सज्झायंता न पसंसिज्जामो, जो करेइ सो पसंसिज्जइ सच्चो लोगववहारोत्ति, एवं ताभ्यां गुरुषु मात्सर्यमुद्वहद्भ्यां तथाविधतीव्रामर्षवशान्मिथ्यात्वमुपगस्य स्त्रीत्वमुपचितं, स्वल्पोऽपि दोषोऽनालोचिताप्रतिक्रान्तो महानर्थफलो भवति, महानप्यपराधः आलोचितप्रतिक्रान्तोऽकिञ्चित्करो गुणाय वा प्रभवति, तथा चात्र विषदृष्टान्तः, तथाहि—स्वल्पमपि विषं मन्त्रादिना अप्रतिहतशक्तिकं प्राणोपरमाय प्रभवति, प्रभूतमपि मन्त्रादिना प्रतिहतशक्तिकं निर्दोषं कुष्ठाद्यपगमनादिगुणाय वा जायते, एवमिहापीति, वयरनाभेण विसुद्धपरिणामेणं वीसाहिं ठाणेहिं तित्थयरनामगोत्तं कम्मं बद्धं ॥ अमुमेवार्थमुपसंहरन् गाथाचतुष्टयमाह—

पुंडरिगिणिए य चुया ततो सुया वयरसेणस्स ॥ १७२ ॥

साहुं तिगिच्छिऊणं सामन्नं देवलोगगमणं च । तेसि पिया तित्थयरो निक्खंता तेऽवि तत्थेव ॥ १७३ ॥

पढमोऽत्थ वयरनाहो बाहु सुबाहू य पीढ महपीढे ।

उपोद्घात-
निर्युक्तिः

॥१६०॥

पढमो चउदसपुव्वी सेसा एक्कारसंगवी चउरो । बीयो वेयावच्चं किइकम्मं तइयओ कासी ॥ १७४ ॥

भोगफलं बाहुबलं पसंसणा जेट्ठ इयर अचियत्तं । पढमो तित्थयरत्तं वीसहिं ठाणेहिं कासीय ॥ १७५ ॥

साधुं चिकित्सित्वा श्रामण्यं परिपाल्य पञ्चानामपि देवलोकगमनम्, अच्युतकल्पे गमनमिति भावः, ततः च्युताः पुण्डरीकिण्यां नगर्यां वज्रसेनस्य सुता अभवन्, तत्र प्रथमो वैद्यसुतजीवोऽत्र वज्रनाभोऽभूत्, शेषास्तु राजश्रेष्ठ्यमात्यसार्थवाहसुताः क्रमेण बाहुसुबाहुपीठमहापीठा बभूवुः, तेषां च पिता वज्रसेननामा तीर्थङ्करो जातः, तेऽपि वज्रनाभादयः पञ्चापि तत्रैव तीर्थकरस्य पितुः समीपे निष्क्रान्ताः, तत्र प्रथमो वज्रनाभनामा चतुर्दशपूर्वी जातः, शेषाश्चत्वारोऽप्येकादशाङ्गविदः, तेषां पञ्चानां मध्ये द्वितीयो बाहुनामा वैयावृत्त्यं—भक्तपानादिनोपष्टम्भलक्षणं भोगफलं चक्रवर्त्तिभोगफलमकार्षीत्, तृतीयः सुबाहुनामा कृतिकर्म्म—साधुविश्रामणारूपं बहुफलं बाहुबलमकार्षीत्, ततस्तयोर्बाहुसुबाह्वोर्ज्येष्ठयोर्वज्रनाभेन प्रशंसनम्, इतरयोः—कनिष्ठयोः पीठमहापीठयोरचियत्तं—गुरुषु प्रशंसां कुर्वत्सु मात्सर्यं, तत्र प्रथमो वज्रनाभनामा तीर्थकरत्वं विंशत्या स्थानैरकार्षीत् ॥ कानि पुनस्तानि विंशतिस्थानानीति तत्प्रतिपादकं गाथात्रयमाह—

अरहंतसिद्धपवयणगुरुथेरबहुस्सुएतवस्सीसुं । वच्छल्लया य एसिं अभिक्खनाणोवयोगे य ॥ १७६ ॥

दंसणविणए आवस्सए य सीलव्वए निरइयारो । खणलवतवच्चियाए वेयावच्चे समाही य ॥ १७७ ॥

अप्पुव्वनाणगहणे सुयभत्ती पवयणे पहावणया । एएहिं कारणेहिं तित्थयरत्तं लहइ जीवो ॥ १७८ ॥

भवाः गा. १७४-१७५
पीठादेः
स्त्रीत्वं

अत्र प्रथमगाथया अष्टौ कारणान्युक्तानि द्वितीयगाथया नव तृतीयगाथया त्रीणि, तत्र प्रथमगाथाव्याख्या-अशोकाद्यष्टमहाप्रातिहार्यादिरूपां पूजामर्हन्तीत्यर्हन्तः-तीर्थकराः १ अपगतसकलकर्मांशाः परमसुखिन एकान्तकृतकृत्याः सिद्धाः २ प्रवचनं—द्वादशाङ्गं तदुपयोगानन्यत्वात् सङ्घो वा प्रवचनं ३ गृणन्ति यथावस्थितं शास्त्रार्थमिति गुरवो-धर्मोपदेशादिदातारः ४ स्थविरा जातिश्रुतपर्यायभेदभिन्नाः, तत्र जातिस्थविराः षष्टिवर्षप्रमाणाः श्रुतस्थविराः समवायधराः पर्यायस्थविरा विंशतिवर्षव्रतपर्यायाः ५ बहु श्रुतं येषां ते बहुश्रुताः, तच्च बहुश्रुतमापेक्षिकं प्रतिपत्तव्यं, श्रुतं च त्रिधा-सूत्रतोऽर्थत उभयतश्च, तत्र सूत्रधरेभ्योऽर्थधराः प्रधानास्तेभ्योऽप्युभयधराः प्रधाना इति ६ तथा विचित्रमनशनादिभेदभिन्नं तपो विद्यते येषां ते तपस्विनः-सामान्यसाधवः, अर्हन्तश्च सिद्धाश्च प्रवचनं च गुरवश्च स्थविराश्च बहुश्रुताश्च तपस्विनश्च अर्हत्सिद्धप्रवचनगुरुस्थविरबहुश्रुततपस्विनः सूत्रे 'बहुस्सुए' इत्यत्र एकारः प्राकृतत्वादलाक्षणिकस्तेषु, 'एसिं'ति प्राकृतत्वात् सप्तम्यर्थे षष्ठी, भवति च प्राकृतत्वाद्विभक्तिव्यत्ययो, यदाह पाणिनिः स्वप्राकृतलक्षणे-"व्यत्ययोऽप्यासा"मिति, एतेषु सप्तसु स्थानेषु वत्सलभावो वत्सलता-अनुरागः यथावस्थितगुणोत्कीर्त्तनं तदनुरूपोपचारलक्षणः तीर्थकरनामकर्म्मबन्धकारणमिति योगः, तथा अभीक्ष्णम्-अनवरतं ज्ञानोपयोगो—ज्ञाने व्याप्रियमाणता, इदमष्टमं कारणं। द्वितीयगाथाव्याख्या-'दंसणे'त्यादि, दर्शनं-सम्यक्त्वं विनयो-ज्ञानादिविनयः, स च दशवैकालिकनिर्युक्तेरवसेयो वक्ष्यमाणो वा, दर्शनं च विनयश्च दर्शनविनयं समाहारो द्वन्द्वः तस्मिन् ९-१० आवश्यकं-अवश्यकर्त्तव्यं प्रतिक्रमणादि तस्मिन् ११ शीलानि च व्रतानि च शीलव्रतं अत्रापि समाहारद्वन्द्वः तस्मिन्, तत्र व्रतानि-मूलगुणाः शीलानि-उत्तर-

गुणाः, एतेषु निरतिचारः सन् तीर्थकरनामकर्म बध्नातीति क्रियायोगः १२-१३ एतावता पञ्च कारणान्युक्तानि, तथा क्षणलवे १४ तपसि १५ त्यागे १६ वैयावृत्त्ये १७ च समाधिस्तीर्थकरनामकर्मबन्धकारणं, तत्र क्षणलवग्रहणमशेषकालविशेषोपलक्षणं, क्षणलवादिषु कालविशेषेषु निरन्तरं संवेगभावनातो ध्यानासेवनतश्च समाधिः क्षणलवसमाधिः, तथा तपसि—बाह्याभ्यन्तरभेदभिन्ने यथाशक्ति निरन्तरं प्रवृत्तिः तपःसमाधिः, त्यागो द्विधा—द्रव्यत्यागो भावत्यागश्च, द्रव्यत्यागो नाम आहारोपधिशय्यादीनामप्रायोग्याणां परित्यागः, प्रायोग्याणां यतिजनेभ्यो दानं, भावत्यागः क्रोधादीनां विवेको ज्ञानादीनां यतिजनेभ्यो वितरणं, एतस्मिन् द्विविधेऽपि त्यागे सूत्रानतिक्रमेण यथाशक्ति निरन्तरं प्रवृत्तिस्त्यागसमाधिः, वैयावृत्त्यं दशविधं, तद्यथा—आचार्यवैयावृत्त्यं १ उपाध्यायवैयावृत्त्यं २ स्थविरवैयावृत्त्यं ३ तपस्विवैयावृत्त्यं ४ ग्लानवैयावृत्त्यं ५ शैक्षकवैयावृत्त्यं ६ साधर्मिकवैयावृत्त्यं ७ कुलवैयावृत्त्यं ८ गणवैयावृत्त्यं ९ सङ्घवैयावृत्त्यं चेति १०, एकैकं त्रयोदशविधं, तद्यथा—भक्तदानं १ पानदानं २ आसनप्रदानं ३ उपकरणप्रत्युपेक्षा ४ पादप्रमार्जनं ५ वस्त्रदानं ६ भैषजदानं ७ अध्वनि साहाय्यं ८ दुष्टस्तेनादिभ्यो रक्षणं ९ वसतौ प्रविशतां दण्डकग्रहणं १० कायिकामात्रकसमर्प्पणं ११ संज्ञामात्रकसमर्प्पणं १२ श्लेष्ममात्रकसमर्प्पण १३ मिति, एतेषु वैयावृत्त्यभेदेषु यथाशक्ति निरन्तरं प्रवृत्तिर्वैयावृत्त्यसमाधिः । तृतीयगाथाव्याख्या—'अप्पुव्वे'त्यादि, अपूर्वस्य ज्ञानस्य निरन्तरं ग्रहणमपूर्वग्रहणं १८ अष्टादशं तीर्थकरनामकर्मबन्धकारणम्, एकोनविंशतितमं श्रुतभक्तिः—श्रुतविषयं बहुमानं १९ विंशतितमं प्रवचनप्रभावना, सा च यथाशक्ति प्रवचनार्थोपदेशदानादिरूपा २० । एभिरनन्तरोक्तैः कारणैस्तीर्थकरत्वं लभते जीवः ॥

पुरिमेण पच्छिमेण य एए सव्वेऽवि फासिया ठाणा। मज्झिमएहिं जिणेहिं एक्कं दो तिन्नि सव्वे वा ॥ १७९ ॥

पूर्वेण-ऋषभनाथेन पश्चिमेन च-वर्द्धमानस्वामिना प्राग्भवे एतानि अनन्तरोक्तानि स्थानानि सर्वाण्यपि स्पृष्टानि-आसेवितानि, मध्यमैर्जिनैः-अजितस्वामिप्रभृतिभिरेकं द्वे त्रीणि सर्वाणि वा स्पृष्टानि, किमुक्तं भवति ?-केनाप्येकं केनापि द्वे केनापि त्रीणि केनापि सर्वाण्यपीति ॥ आह—

तं च कहं वेइज्जइ ? अगिलाए धम्मदेसणाईहिं। वज्झइ तं तु भयवतो, तइयभवोसक्कइत्ताणं ॥ १८० ॥

चशब्दः पुनरर्थे, तत्पुनः-तीर्थकरनामकर्म विपाकावस्थाप्राप्तं कथं वेद्यते ?, एवं शिष्येण प्रश्ने कृते सति सूरिराह-अग्लान्या-ग्लानिपरिहारेण धर्मदेशनादिभिः—अष्टमहाप्रातिहार्यादिरूपे सुरेन्द्रकृते पूजोपचारे सति सदेवमनुजासुरायां पर्षदि धर्म्मदेशनया-श्रुतचारित्ररूपधर्मप्ररूपणया, आदिशब्दाच्चतुस्त्रिंशता देहसौगन्ध्यादिभिरतिशयैः पञ्चत्रिंशता बुद्धवचनातिशेषैरित्यादिपरिग्रहः, तत्तु-तीर्थकरनामकर्म भगवतस्तीर्थकरभवात् प्राक् अवष्वष्क्य—पृष्ठतो गत्वा तृतीयभवं प्राप्य बध्यते-बन्धमायाति ॥ आह—तीर्थकरनामकर्म्मणो जघन्यत उत्कर्षतश्च बन्धस्थितिरन्तःसागरोपमकोटीकोटीप्रमाणा, ततः कथमुक्तं तीर्थकरभवात्प्राक् अवष्वष्क्य तृतीयभवे बध्यते इति ?, नैष दोषः, बध्यते इति किमुक्तं भवति ?, निकाचितावस्थीक्रियते, द्विविधो हि बन्धो-निकाचनारूपोऽनिकाचनारूपश्च, तत्रानिकाचनारूपस्तृतीयभवात् प्राक्तरामपि भवति, जघन्यतोऽप्यन्तःसागरोपमकोटीकोटीस्थितिकत्वात्, निकाचनारूपस्तु तीर्थकरभवात् प्राक् तृतीयभव एवाधिकृतवचनप्रामाण्यात्, तत्र निकाचितमवन्ध्यफलमितरत्तूभयथापि, 'बन्धा(यद्वा')ओसक्क-

इत्ताणं'ति संसारं यदिवा प्राक् बद्धां सुदीर्घां तीर्थकरनामकर्म्मणः स्थितिमवष्वष्क्य-अपवर्त्त्य, किमुक्तं भवति ?- तीर्थकरभवात् प्राक् यावत्तृतीयो भवस्तावत्प्रमाणां कृत्वेति, तीर्थकरभवात् प्राक् तृतीयभवे निकाच्यते इति, उक्तं च विशेषणवत्याम्-'कोडाकोडी अयरोवमाण तित्थयरनामकम्मठिई । वज्झइ य तं अणंतरभवंमि तइयंमि निद्दिट्ठं ॥ १ ॥ तं ठिइमोसक्केउं तइयभवो जाव अहव संसारं । तित्थयरभवातो वा ओसक्केत्तुं भवे तइए ॥ २ ॥ जं वज्झइत्ति भणियं तत्थ निकाइज्जइत्ति नियमोऽयं । तदवंझफलं नियमा भयणा अनिकाइयावत्थे ॥ ३ ॥" निकाचनारूपश्च बन्धः तृतीय-भवादारभ्य तावद्यावत्तीर्थकरभवेऽपूर्वकरणस्य सङ्ख्येयभागाः, तत ऊर्ध्वं बन्धव्यवच्छेदः, केवलिकाले तु तस्योदय इति ॥ अथ कस्यां गतौ बध्यते इत्याह—

नियमा मणुयगईए इत्थी पुरिसेयरो व सुहलेसो । आसेवियबहुलेहिं वीसाए अन्नयरएहिं ॥ १८१ ॥

नियमात्-नियमेन मनुष्यगतौ बध्यते-निकाचनरूपो बन्धः प्रारभ्यते, किंस्वरूपायां गतौ बध्नातीत्यत आह— स्त्री पुरुष इतरो वा-नपुंसकः, किं सर्व एव ?, नेत्याह—शुभा लेश्या यस्यासौ शुभलेश्यः, कैः कृत्वेत्यत आह—विंशते-रन्यतरैः स्थानैः, कथम्भूतैरित्याह-'आसेवितबहुलैः, बहुलम्—अनेकप्रकारमासेवितैरित्यर्थः, पूर्वापरपदनिपातव्यत्ययः प्राकृतशैलीवशात् ॥ कथानकशेषमुच्यते—एवं तेण वयरनाभेण तित्थगरत्तं निबद्धं, बाहुणा वेयावच्चेण भोगा निव्व-त्तिया, सुबाहुणा बाहुबलं, इयरेहिं दोहिवि इत्थीनामगोयं कम्मं, ततो पंचवि अहाउयं पालइत्ता कालं काऊण सव्वट्ठ-सिद्धिमहाविमाणे तेत्तीससागरोवमट्ठिइया देवा उववण्णा, तत्थवि अहाउयं पालइत्ता पढमं वयरनाभो चइऊण इमीसे

उस्सप्पिणीए सुसमसुसमाए वइक्कंताए सुसमाएवि वइक्कंताए सुसमदुसमाएवि तइयाए वहुवइक्कंताए चउरासीए पुव्वसय-सहस्सेसु एगूणनईए य पक्खेसु सेसेसु आसाढे बहुलचउत्थीए उत्तरासाढाजोगजुत्ते मियंके इक्खागभूमीए नाभिस्स कुलगरस्स मरुदेवाए भारियाए कुच्छिंसि गब्भत्ताए उववन्ने, सा उसहगयसीहमाईए चोद्दस सुमिणे पासित्ता पडिबुद्धा, नाभिस्स कुलगरस्स कहियं, तेण भणियं—तुब्भ पुत्तो महाकुलगरो भविस्सइ, सक्कस्स य आसणं चलिअं, सिग्घं आगमणं, भणइ—देवाणुप्पिए ! तव पुत्तो सयलमंगलालओ पढमराया पढमधम्मचक्कवट्टी भविस्सइ, केई भणंति—बत्तीसंपि इंदा आगंतूण वागरेंति, ततो मरुदेवी हट्ठतुट्ठा गब्भं वहइ । अमुमेवार्थमुपसंहरन्नाह—

उववातो सव्वट्ठे सव्वेसिं पढमतो चुतो उसभो । रिक्खेण असाढाहिं असाढबहुले चउत्थीए ॥ १८२ ॥

उपपातः सर्वेषां—वज्रनाभप्रभृतीनां सर्वार्थमहाविमाने, आयुष्कपरिक्षये सति प्रथमं च्युत ऋषभः ऋक्षेण— नक्षत्रेण आषाढाभिः, उत्तराषाढारूपे नक्षत्रे चन्द्रेण सह योगमुपागते इत्यर्थः, आषाढवहुले चतुर्थ्याम्, आषाढप्रथमपक्षचतुर्थ्यामित्यर्थः ॥ सम्प्रति तद्वक्तव्यतामभिधित्सुर्द्वारगाथामाह—

जम्मणे नाम वुड्ढी य, जाईस्सरणे इय । वीवाहे य अवच्चे, अभिसेए रज्जसंगहे ॥ १८३ ॥

'जम्मणे' इति प्रथमं जन्मविधिर्वक्तव्यः, यथा 'चेत्तबहुलट्ठमी' इत्यादि, तदनन्तरं नामविषयः, ततो भगवतो वृद्धिर्वाच्या, 'अह वड्ढइ सो भयव'मित्यादि, ततो जातिस्मरणे—जातिस्मरणविषयो विधिर्वाच्यः, 'जाइस्सरो उ भयव'मित्यादि, तदनन्तरं विवाहविषयो विधिर्वक्तव्यः, 'भोगसमत्थं नाउ'मित्यादि, 'अवच्चे' इति अपत्येषु क्रमो वाच्यः, वक्ष्यति—

'तो भरहबंभिसुंदरिबाहुबली चे'त्यादि, ततोऽभिषेके–राज्याभिषेकविषयो विधिर्वाच्यः, 'रज्जसंगहे'इति राज्यसङ्ग्रहविषयो विधिर्वक्तव्यः, तथा च वक्ष्यति–'आसा हत्थी गावो' इत्यादि ॥ एष द्वारगाथासमासार्थः, अवयवार्थं तु प्रतिद्वारं यथावसरं वक्ष्यामः, तत्र प्रथमद्वारावयवार्थमभिधित्सुराह–

चेत्तबहुलट्ठमीए जातो उसभो असाढनक्खत्ते। जम्मणमहो य सव्वो नेयव्वो जाव घोसणयं ॥ १८४ ॥

चैत्रमासस्य बहुलपक्षे अष्टम्यामाषाढनक्षत्रे–उत्तराषाढानक्षत्रे ऋषभस्वामी भगवान् जातः, तस्य च भगवत आदितीर्थकरस्य जन्ममहः सर्वोऽपि तावत् नेतव्यः–शिष्यबुद्धिं प्रापणीयो यावद् घोषणकमिति ॥ जन्ममहश्च यथा जम्बूद्वीपप्रज्ञस्यादिषु साक्षात् सूत्रतोऽभिहितस्तथा विनेयजनानुग्रहायेहापि दर्श्यते–सा मरुदेवी नवसु मासेसु बहुपडिपुण्णेसु अद्धट्ठमेसु राइंदिएसु बहुवइक्कंतेसु अड्ढरत्तकालसमयंसि चेत्तबहुलट्ठमीए उत्तरासाढाजोगजुत्ते मियंके आरोया आरोयं दारयं पसूया, जायमाणेसु य तित्थयरेसु सव्वेसुवि सव्वलोए उज्जोतो भवति, तित्थयरमायरो य पच्छन्नगब्भातो भवंति, जररुहिरकलमलाणि य न हवन्ति, ततो जाते तिलोगनाथे तेणं कालेणं तेणं समएणं अहोलोगवत्थव्वातो अट्ठ दिसाकुमारीमहत्तरिगातो सएहिं सएहिं कूडेहिं सएहिं सएहिं भवणेहिं सएहिं सएहिं पासायवडिंसएहिं पत्तेयं पत्तेयं चउहिं सामाणीयसाहस्सीहिं चउहिं महत्तरियाहिं सपरिवाराहिं० अणियाहिवईहिं सोलसहिं आयरक्खदेवसाहस्सीहिं अन्नेहिं बहूहिं वाणमंतरेहिं देवेहिं देवीहि य सद्धिं संपरिवुडातो महयाहयनट्टगीयवाइयतंतीतलतालतुडियघणमुइंगपडुप्पवाइयरवेणं दिव्वाइं भोगभोगाइं भुंजमाणीतो विहरन्ति, दिक्कुमारिका नाम दिक्कुमारभवनपतिविशेषजातीया देव्यः, सएहिं सएहिं कूडेहिं इत्यादौ तृतीया

सप्तम्यर्थे प्राकृतत्वात्, ततोऽयमर्थः—स्वकीयेषु स्वकीयेषु कूटेषु स्वकीयेषु २ भवनेषु स्वकीयेषु २ प्रासादावतंसकेषु, प्रासादावतंसका नाम प्रासादविशेषाः, 'सामाणियसाहस्सीहिं' इति समाने विभवादौ भवा सामानिकाः, अध्यात्मादित्वादिकण्, दिक्कुमारिकामहत्तरिकाः सदृशद्युतिविभवादिका देव्य इत्यर्थः तेषां सहस्राणि सामानिकसहस्राणि तैश्चतुर्भिः, प्राकृतत्वाच्च सूत्रे दीर्घत्वं स्त्रीत्वं च, 'चउहिं महत्तरियाहिं'ति महत्तरिका नाम दिक्कुमारिकातुल्यविभवा दिक्कुमारिकाणामनतिक्रमणीयवचनाः, 'महयाहये'त्यादि महता रवेणेति योगः, 'आहय'त्ति आख्यानकप्रतिबद्धानीति वृद्धाः अथवा अहतानि—अक्षतानि अव्याहतानि इति भावः नाट्यगीते प्रतीते वादितानि च तानि तन्त्री—वीणा तला—हस्ततलास्तालाः—कंसिकास्त्रुटितानि—शेषतूर्याणि वादिततन्त्रीतलतालत्रुटितानि घनो घनवत् गम्भीरध्वनिर्यो मृदङ्गो—मर्दलः पटुना—दक्षपुरुषेण प्रवादितस्ततः एतेषां पदानां द्वन्द्वस्तेषां यो रवस्तेन दिव्यान्—अतिप्रधानान् भोगार्हा ये भोगाः— शब्दादयस्ते भोगभोगास्तान्, सूत्रे नपुंसकतानिर्देशः प्राकृतत्वात्, भुञ्जाना विहरन्ति—आसते, तंजहा—"भोगङ्करा १ भोगवती २, सुभोगा ३ भोगमालिनी ४। तोयधारा ५ विचित्ता य ६, पुप्फमाला ७ अणिंदिया ८॥१॥ तते णं तासिं अहोलोगवत्थव्वाणं अट्ठण्हं दिसाकुमारिमयहरिगाणं पत्तेयं पत्तेयं आसणाणि चलंति, तते णं ताओ अहोलोगवत्थव्वातो अट्ठ दिसाकुमारिमयहरियातो पत्तेयं पत्तेयं आसणाइं चलियाइं पासंति पासित्ता ओहिं पउंजंति, भगवं तित्थयरं ओहिणा आभोएंति, आभोएत्ता हट्ठतुट्ठचित्तमाणंदिया पीइमणा परमसोमणस्सिया हरिसवसविसप्पमाणहियया वियसियवरकमलनयणा पयलियवरकडगतुडियकेउरमउडकुंडलहाररविरायंतरइयवच्छा पालंबपलंबमाणघोलंतभूसणधरा ससंभमं तुरियं चवलं सीहासणातो अब्भुट्ठंति २ पायपीढातो पच्चोरुहंति

पच्चोरुहित्ता अंजलिमउलियग्गहत्था तित्थगराभिमुहं सत्तट्ठ पयाइं अणुगच्छंति अणुगच्छित्ता एवं जहा सक्के जाव वंदित्ता नमंसित्ता अन्नमन्नं सद्दावेंति सद्दावेत्ता एवं वयासी–उप्पण्णे खलु भो जंबुद्दीवे भयवं! तित्थयरे तं जीयमेयं तीयपच्चुप्पन्नमणागयाणं अहोलोगवत्थव्वाणं अट्ठण्हं दिसाकुमारिमयहरियाणं जम्मणमहिमं करेंत्तए, तं गच्छामो णं अम्हेवि भगवतो जम्मणमहिमं करेमोत्तिकट्टु एवं वयंति वइत्ता पत्तेयं २ आभियोगे देवे सद्दावेंति, सद्दावेत्ता एवं वयासी–खिप्पामेव भो देवाणुप्पिया! अणेगखंभसयसंनिविट्ठं लीलट्ठियसालिभंजियागं ईहामिगउसभतुरगनरमगरविहगवालगकिन्नररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्तं खंभुग्गयवरवइरवेइआपरिगयाभिरामं विज्जाहरजमलजुयलजंतजुत्तंपिव अच्चीसहस्समालणीयं रूवगसहस्सकलियं भिसमाणं भिब्भिसमाणं चक्खुल्लोयणलेसं सुहफासं सस्सिरीयरूवं घंटावलिचलियमहुरमणहरसरं सुभं कंतं दरिसणिज्जं निपुणोचियमिसमिसंतमणिरयणघंटियाजालपरिक्खित्तं जोयणविच्छिन्नं दिव्वं जाणविमाणं विउवह विउवित्ता एयमाणत्तियं पच्चप्पिणह, तए णं ते आभिओगा देवा अणेगखंभसयसंनिविट्ठं जाव पच्चप्पिणंति, तए णं ताओ अहोलोगवत्थव्वाओ अट्ठ दिसाकुमारिमयहरियातो हट्ठतुट्ठा जाव हयहियया पत्तेयं पत्तेयं चउहिं सामाणियसाहस्सीहिं चउहिं मयहरियाहिं जाव अण्णेहिं बहूहिं देवेहिं देवीहि य सद्धिं संपरिवुडातो ते दिव्वे जाणविमाणे दुरूहंति, दुरुहित्ता सव्वड्ढीए सव्वजुईए सव्वबलेणं सव्वसमुदएणं सव्वायरेणं सव्वविभूईए सव्वविभूसाए सव्वसंभमेणं सव्वदिव्वतुडियसद्दनिनाएण महयाहयनट्टगीयवाइयतंतीतलतालतुडियघणमुयंगपडुप्पवाइयरवेणं ताए उक्किट्ठाए तुरियाए चवलाए चंडाए सिग्घाए जवणाए उद्धुयाए दिव्वाए देवगतीए जेणेव भगवतो तित्थयरस्स जम्मणभवणे तेणेव उवागच्छंति, उवागच्छित्ता भगवतो

तित्थयरस्स जम्मणभवणं तेहिं दिव्वेहिं जाणविमाणेहिं तिक्खुत्तो आयाहिणं पयाहिणं करेंति, करेत्ता उत्तरपुरच्छिमे
दिसीभागे ईसिं चउरंगुलमसंपत्ते धरणितले ते दिव्वे जाणविमाणे ठाविंति, ठावित्ता पत्तेयं पत्तेयं चउहिं सामाणियसाह-
स्सीहिं जाव सद्धिं संपरिवुडातो दिव्वेहिंतो जाणविमाणेहिंतो पच्चोरुहंति, पच्चोरुहित्ता जेणेव भगवं तित्थयरे तित्थयरमाया
य तेणेव उवागच्छंति २ तित्थयरं तित्थयरमायं च तिक्खुत्तो आयाहिणपयाहिणं करेंति करेत्ता पत्तेयं पत्तेयं करयलपरि-
ग्गहियं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी—नमोऽत्थु ते रयणकुच्छिधारिए! जगप्पदीवदायए चक्खुणो
य मुत्तस्स सव्वजगजीववच्छलस्स हियकरगमग्गदेसियवागद्धिविभुप्पभुस्स जिणस्स नाणिस्स नायगस्स बुद्धस्स बोहगस्स
सव्वलोगनाहस्स सव्वजगमंगलस्स निम्ममस्स पवरकुलसमुब्भवस्स जाइखत्तियस्स जंसि लोगुत्तमस्स जणणी धन्नाऽसि
पुण्णाऽसि तं कयत्थे!, अम्हे णं देवाणुप्पिये! अहोलोगवत्थव्वातो अट्ठ दिसाकुमारिमयहरिगातो भगवतो तित्थयरस्स
जम्मणमहिमं करेस्सामो, तं तुब्भेहिं न भाइयव्वंतिकट्टु उत्तरपुरच्छिमं दिसीभागं अवक्कमंति अवक्कमित्ता वेउव्वियसमु-
ग्घाएणं समोहणंति समोहणित्ता संखिज्जाइं जोयणाइं दंडं निसिरंति, तंजहा—रयणाणं १ वयराणं २ वेरुलियाणं ३
लोहियक्खाणं ४ मसारगल्लाणं ५ हंसगब्भाणं ६ पुलगाणं ७ सोगंधियाणं ८ जोइरसाणं ९ अंजणाणं १० अंजणपुल-
गाणं ११ रयणाणं १२ जायरूवाणं १३ अंकाणं १४ फलिहाणं १५ रिट्ठाणं १६ अहाबायरे पोग्गले परिसाडिंति अहाबा-
यरे २ अहासुहुमे पोग्गले परियायेंति परियाइत्ता दोच्चंपि वेउव्वियसमुग्घाएणं समोहणंति समोहणित्ता संवट्टगवाए विउव्वंति,
से जहानामए कम्मगरदारए सिया तरुणे जुगवं बलवं अप्पायंके थिरसंघयणे थिरग्गहत्थे पडिपुण्णपाणिपाए पिट्ठंतरोरुसं-

घायपरिणए घणनिचियवट्टवलियखंधे लंघणवग्गणजवणवायामसमत्थे उरस्सवलसमण्णागए तलजमलजुगलपरिघनिभ-
बाहू छेदे दक्खे कुसले मेहावी निउणसिप्पोवगए एगं महं दंडसंपुच्छणिं वा सिलागाहत्थगं वा वेणुसलाइयं वा गहाय
रायंगणं वा रायंतेउरं वा आरामं वा देउलं वा सभं वा पवं वा अतुरियमचवलमसंभंतं निरंतरं सुनिउणं सव्वतो
समंता संमज्जेज्जा, एवमेताओवि अहोलोगवत्थवातो अट्ठ दिसाकुमारिमयहरिगातो संवट्टवाए विउव्वंति, विउव्वित्ता तेणं
सिवेणं मउएणं मारुएणं अणुद्धिएणं भूमितलविमलकरणेणं सव्वोउयसुरभिकुसुमगंधाणुवासिएणं पिंडिमनीहारिमगंधुद्धुरेणं
तिरियं पवाइएणं भगवतो तित्थगरस्स जम्मणट्ठाणस्स सव्वतो समंता जोयणपरिमंडलं जं किंचि तणं वा पत्तं वा कट्ठं वा
कअवरं वा असुइमचोक्खं पूइं दुब्भिगंधं तं सव्वं आहुणिय आहुणिय एगंते एडंति, एडित्ता जेणेव भयवं तित्थयरे तित्थय-
रमाया य तेणेव उवागच्छंति उवागच्छित्ता भगवतो तित्थयरस्स तित्थगरमायाए य अदूरसामंते आगायमाणीतो चिट्ठंति,
अत्र विषमपदव्याख्या—'ओहिं पउंजंति' अवधिं प्रयुञ्जते—व्यापारयन्ति, आभोगयन्ति—परिभावयन्तीति भावः,
'हट्ठतुट्ठचित्तमाणदिया' इति हृष्टतुष्टा—अतीवतुष्टा, अथवा हृष्टा नाम विस्मयमापन्ना यथा अहो भगवान् आदितीर्थंकरः
संमुत्पन्न इति तुष्टाः—तोषं कृतवत्यः, यथा भव्यमभूत् यदादिनाथो जात इति,तोषवशादेव चित्तमानन्दितं—स्फीतीभूतं
'दुनदि समृद्धा'विति वचनात् यासां ताः चित्तानन्दिताः सुखादिदर्शनात् निष्ठान्तस्य पाक्षिकः परनिपातः मकारः प्राकृत-
त्वादलाक्षणिकः, ततः पदत्रयस्य पदद्वयपदद्वयमीलनेन कर्मधारयः, 'पीइमणा' इति प्रीतिर्मनसि भगवद्विषया यासां ताः
प्रीतिमनसः, भगवति वहुमानपरायणमानसा इति, एतदेव व्यक्तीकरोति—'परमसोमणस्सिया' इति शोभनं मनो येषां ते

सुमनसस्तेषां भावस्सौमनस्यं परमं च तत् सौमनस्यं च परमसौमनस्यं तत्सञ्जातं यासां ताः परमसोमनस्यिताः, एतदेव
व्यक्तीकरोति-'हरिसवसविसप्पमाणहियया' हर्षवशेन विसर्प्पद्-विस्तारयायि हृदयं यासां ता हर्षवशविसर्प्पद्हृदयाः,
हर्षवशादेव च विकसिते वरकमलवन्नयने यासां ता विकसितवरकमलनयनाः, हर्षवशाच्छरीरोद्धर्षे 'पयलियवरकडगतुडि-
यकेयूरमउडकुंडले'त्ति प्रचलितानि वराणि कटकानि-कलाचिकाभरणानि त्रुटितानि-बाहुरक्षिकाः केयूराणि-बाह्वाभरण-
विशेषरूपाणि मुकुटाः-शिरोभूषणानि कुण्डलानि-कर्णाभरणानि यासां ताः प्रचलितवरकटकत्रुटितकेयूरमुकुटकुण्डलाः,
तथा हारेण विराजमानमत एव रतिदं वक्षो यासां ता हारविराजमानरतिदवक्षसः, ततः पूर्वपदेन विशेषणसमासः, तथा
प्रलम्बते इति प्रलम्बः-आभरणविशेषः तं प्रलम्बमानं घोलन्ति भूषणानि च धरन्तीति प्रलम्बमानप्रलम्बघोलद्भूषणधराः,
प्रलम्बमानपदस्य विशेष्यात् परनिपातः प्राकृतत्वाद्, हर्षवशादेव 'ससम्भ्रमं' सम्भ्रमः इह विवक्षितक्रियायामादरबहु-
मानपूर्विका प्रवृत्तिः सह सम्भ्रमो यस्याभ्युत्थानस्य तत्ससम्भ्रमं, क्रियाविशेषणमेतत्, त्वरितं-शीघ्रं चपलं-सम्भ्रमवशा-
देव यथा व्याकुलं भवति, एवं च सिंहासनादभ्युत्तिष्ठन्ति, 'अञ्जलियमउलियहत्था' इति अञ्जल्या-अञ्जलिरूपतया मुकु-
लितौ हस्तौ यासां तास्तथा, 'एवं जहा सक्के' इति एवं यथा शक्रे वक्ष्यमाणं तथाऽत्र वेदितव्यम्, 'अणेगखंभसयसंनिविट्ठ'-
मिति अनेकेषु स्तम्भशतेषु निविष्टमनेकस्तम्भशतनिविष्टं 'लीलट्ठियसालभंजियाग'मिति लीलया स्थिताः लीलास्थिताः शा-
लभञ्जिकाः-पुत्तलिका यत्र तत्तथा, 'ईहामिये'त्यादि ईहामृगा-वृका व्यालाः-श्वापदभुजगा ईहामृगऋषभतुरगनरमकरवि-
हगव्यालकिन्नररुरुसरभचमरकुंजरवनलतापद्मलतानां भक्त्या-विच्छित्त्या चित्रम्-आलेखो यत्र तत्तथा, तथा स्तम्भोद्ग-

तया—स्तम्भोपरिवर्त्तिन्या वरवज्ररत्नमय्या वेदिकया परिगतं सत् यदभिरामं स्तम्भोद्गतवरवज्रवेदिकापरिगताभिरामं, तथा विद्यां धरन्तीति विद्याधराः—विशिष्टविद्याशक्तिमन्तस्तेषां यमलयुगलानि—समानशीलानि द्वन्द्वानि तेषां यन्त्राणि—प्रपञ्चविशेषाः अर्च्चिषां—मणिरत्नप्रभाज्वालानां सहस्रैर्मालनीयं—परिवारणीयं, किमुक्तं भवति ?—एवं नाम अत्यद्भुतैर्मणिरत्नप्रभाजालैराकलितमवभाति यथा नूनमिदं न स्वाभाविकं किन्तु विशिष्टविद्याशक्तिमत्पुरुषप्रपञ्चप्रभावितमिति, तथा रूपकसहस्रकलितं, तथा 'भिसमाणं' दीप्यमानं 'भिसंतं दिप्यंत'मितिवचनात्, 'भिब्भिसमाणम्'असकृत् देदीप्यमानं 'चक्खुल्लोयणलेसं'ति चक्षुः कर्तृ लोकने—अवलोकने लिसतीव दर्शनीयत्वातिशयभावात् यत्तथा शुभस्पर्शं, सश्रीकं रूपम्—आकारो यत्र तत्सश्रीकरूपं, तथा घण्टावलेः—घण्टापङ्क्तेः वातवशेन चलितायाः—कम्पितायाः मधुरः—श्रोत्रप्रियो मनोहरो—मनोनिर्वृत्तिकरः स्वरो यत्र तद् घण्टावलिचलितमधुरमनोहरस्वरं, शुभं यथोदितवास्तुलक्षणोपेतत्वात्, कान्तं कमनीयमत एव दर्शनीयं, 'निउणोवियमिसमिसंतमणिरयणघंटियाजालपरिक्खित्त'मिति निपुणमिति—निपुणक्रियमोवियत्ति—खचितानि मिसमिसंतत्ति—देदीप्यमानानि मणिरत्नानि यत्र घण्टिकाजाले तत्तथा तेन इत्थंभूतेन घण्टिकाजालेन—क्षुद्रघण्टिकासमूहेन परि सामस्त्येन क्षिप्तं यत्तत्तथा, 'सवड्ढीए' इत्यादि सर्वर्द्ध्या—परिवारादिकया सर्वद्युत्या—यथाशक्ति विस्फारितेन शरीराभरणतेजसा सर्वबलेन—समस्तानीकेन सर्वसमुदायेन—स्वस्वाभियोग्यादिसमस्तपरिवारेण सर्वादरेण समस्तेन यावच्छक्तितो बलेन सर्वविभूत्या—सर्वसम्पदा सर्वविभूषया—यावच्छक्ति स्फारोदारशृङ्गारकरणेन सर्वसम्भ्रमेण सम्भ्रमो नामात्र भगवत्समीपागमनं प्रति यावच्छक्ति त्वरिता प्रवृत्तिः 'सव्वदिव्वतुडियसद्दसंनिनाएणं'ति सर्वाणि च तानि

दिव्यतुटितानि–दिवतूर्याणि च तेषां शब्दाः सर्वदिव्यतुटितशब्दास्तेषां एकत्र मीलनेन यः सङ्गतो नितरां नादो—महान् घोषः सर्वदिव्यतुटितशब्दसन्निनादस्तेन, 'ताए उक्किट्ठाए' इत्यादि तया देवजनप्रसिद्धया उत्कृष्टया–प्रशस्तया शीघ्रसञ्चरणात् त्वरितया–शीघ्रतरमेव तया प्रदेशान्तरक्रमणात् चपलेव चपला तया–क्रोधाविष्टस्येव श्रमासंवेदनात् चण्डेव चण्डा तया शीघ्रत्वगुणयोगात् शीघ्रा तया शीघ्रया परमोत्कृष्टवेगपरिणामोपेता जवना तया वातोद्धूतस्य दिगन्तव्यापिनो रजस इव या गतिः सा उद्धूता तया, इत्थंभूतया दिव्यया देवगत्या 'आयाहिणं पयाहिणं करेंति' आ सर्वतः समन्तात् परिभ्रमतां दक्षिणमेव जन्मभवनं यथा भवति, एवं प्रदक्षिणं कुर्वन्ति, 'करयलपरिग्गहिय'मित्यादि द्वयोर्हस्तयोरन्योऽन्यान्तरिताङ्गुलिकयोः सम्पुटरूपतया यदेकत्र मीलनं सा अञ्जलिस्तां, कथंभूतामित्याह—करतलाभ्यां परिगृहीता–निष्पादिता करतलपरिगृहीता तां, तथा आवर्त्तनमावर्त्तः शिरस्यावर्त्तो यस्यां सा शिरस्यावर्त्ता 'कण्ठेकाल उरसिलोमे'त्यादिवत् अलुक्समासः तामत एव मस्तके कृत्वा नमोऽस्तु ते–तुभ्यं रत्नं भगवल्लक्षणं कुक्षौ धारयतीति रत्नकुक्षिधारिका तस्याः सम्बोधनं रत्नकुक्षिधारिके, जगतः प्रदीप इव जगत्प्रदीपस्तद्दायिके, चक्षुरिव चक्षुः, चक्षुर्भावचक्षुरित्यर्थः तस्येदं भगवद्विशेषणं, भावचक्षुः किल विवेकरूपममूर्त्तं भवति भगवांश्च साक्षान्मूर्त्त इत्यत आह–मूर्त्तस्य, तथा सर्वजगज्जीववत्सलस्य 'छज्जीवहियं जिणा बेंती'ति वचनात्, तथा हितकर्येव हितकरिका मार्गदेशिका च या वागृद्धिः—वाक्सम्पद्, पुनः कथम्भूतेत्यत आह–विभुः–व्यापिका सर्वस्वस्वभाषानुगमनेन परिणमनात् तस्याः प्रभुः–स्वामी हितकरमार्गदेशकवागृद्धिविभुप्रभुस्तस्य, पुंवद्भावः समासस्य कर्मधारयत्वात्, विभुशब्दस्य परनिपातः प्राकृतत्वात्, जिनस्य

ज्ञानिनो ज्ञानत्रयोपेतत्वात्, भाविकेवलज्ञानसम्भवाद्वा, ज्ञायकस्यापरेषां ज्ञानोत्पादकत्वात्, बुद्धस्य स्वयं बुद्धत्वाद् बोध-
कस्य सद्धर्म्मदेशनया मार्गे प्रवर्त्तकत्वात् सर्वलोकनाथस्य इन्द्रादीनामपि नमस्करणीयत्वात् सर्वजगमङ्गलस्य भुवनत्रयेऽ-
प्युपद्रवविनाशकत्वात् निर्म्ममस्य कचिदपि ममत्वाभावात्, प्रवरं यत्कुशलं-कुशलानुष्ठानजन्यं तीर्थकरनामकर्म तस्मात्
समुद्भवः—उत्पत्तिर्यस्य स प्रवरकुशलसमुद्भवस्तस्य, जात्यक्षत्रियस्य भावक्षतात्रायकत्वात्, यदसि भगवतो लोकोत्तमस्य
जननी, तत् हे कृतार्थे! धन्याऽसि-सपुण्यासि। 'वेउवियसमुग्घाएण'मित्यादि, वैक्रियसमुद्घातेन—वैक्रियकरणाय प्रयत्न-
विशेषेण समवहन्यन्ते, समवहता भवन्तीत्यर्थः, समवहताश्चात्मप्रदेशान् दूरतो विक्षिपन्ति, तथा चाह—'संखेज्जाणि
जोयणाणि दंडं निसिरंति', दण्ड इव दण्ड और्ध्वाधआयतः शरीरबाहल्यो जीवप्रदेशसमूहस्तं शरीराद्बहिः सङ्ख्येयानि
योजनानि यावत् निसृजन्ति-निष्काशयन्ति, निसृज्य तथाविधान् पुद्गलान् आददते, एतदेव दर्शयति-तद्यथा—
रत्नानां-कर्केतनादीनां वज्राणामित्यादि पाठसिद्धं यथाबादरान्—असारान् पुद्गलान् परिशातयन्ति, तथा सूक्ष्मान्—
सारान् पुद्गलान् पर्यादाय चिकीर्षितरूपनिर्म्मापणार्थं द्वितीयमपि वारं वैक्रियसमुद्घातेन समवहन्यन्ते, समवहत्य च
यथोक्तानां रत्नादीनां योग्यान् पुद्गलान् यथाबादरान् परिशातयन्ति, यथासूक्ष्मान् पर्याददते, 'से जहा नामए' इत्यादि,
सः-वक्ष्यमाणगुणो यथानामकः-अनिर्द्दिष्टनामा कश्चित् कर्म्मकरदारकः, किंविशिष्ट इत्याह-तरुणः-प्रवर्द्धमानवयाः, आह-
दारकः प्रवर्द्धमानवया एव भवति ततः किमनेन विशेषणेन?, न, आसन्नमृत्योः प्रवर्द्धमानवयस्त्वाभावात्, नहि आसन्नमृत्युः
प्रवर्द्धमानवया भवति, न च तस्य विशिष्टसामर्थ्यसम्भवः आसन्नमृत्युत्वादेव, विशिष्टसामर्थ्यप्रतिपादनार्थश्चैष आरम्भस्ततो-

ऽर्थवद्विशेषणम्, अन्ये तु व्याचक्षते—इह यद्द्रव्यं विशिष्टवर्णादिगुणोपेतमभिनवं च तत्तरुणमिति लोके प्रसिद्धं, यथा तरुणमिदमश्वत्थपत्रमिति, ततः स कर्म्मकरदारकस्तरुण इति किमुक्तं भवति?—अभिनवो विशिष्टवर्णादिगुणोपेतश्चेति, तथा युगं—सुषमदुष्षमादिः कालः स स्वेन रूपेण यस्यास्ति न दोषदुष्टः स युगवान्, कालोपद्रवरहित इत्यर्थः, बलं—सामर्थ्यं तद् यस्यास्ति स बलवान्, 'अप्पायंके' इत्यादि, अल्पशब्दोऽभाववाची अल्पः—सर्वथा अविद्यमानः आतङ्को—ज्वरादिर्यस्य सोऽल्पातङ्कः स्थिरं—दृढं प्रथममित्यर्थः संहननं यस्य स स्थिरसंहननः, तथा स्थिरौ—अग्रहस्तौ यस्य स स्थिराग्रहस्तः-प्रतिपूर्णपाणिपादः, इतरस्य सम्यक्कर्मकरत्वायोगात्, 'पिट्ठंतरोरुसंघायपरिणए' पृष्ठं अन्तरे च—पार्श्वरूपे ऊरू च सङ्घातेन—संहतत्वेन परिणतौ यस्य स पृष्ठान्तरोरुसङ्घातपरिणतः, दृढपृष्ठान्तरोरुरितिभावः, तथा घनम्—अतिशयेन निचितौ—निबिडतरचयमापन्नौ वृत्तौ वलिताविव वलितौ स्कन्धौ यस्य स निचितघनवृत्तवलितस्कन्धः, तथा लङ्घने—अतिदीर्घस्यात्युच्चस्यापि चातिक्रमणे वल्गने प्रतीते जवने—वेगे व्यायामे च समर्थो लङ्घनवल्गनजवनव्यायामसमर्थः, तथा उरसि भवमुरस्यं तच्च तद्बलं च उरस्यबलं तत्समन्वागतः—प्राप्त उरस्यबलसमन्वागतः, आन्तरोत्साहवीर्ययुक्त इति भावः, तथा तलौ—तालवृक्षौ तयोर्यमलयुगलं—समश्रेणिकं युगलं तेन परिघेण च अतिसरलतया पीवरतया च निभौ—सदृशौ बाहू यस्य स तलयमलपरिघनिभबाहुः, छेको—द्वासप्ततिकलापण्डितः दक्षः—कार्याणामविलम्बितकारी कुशलः—सम्यक्क्रियापरिज्ञानवान् मेधावी—परस्पराव्याहतपूर्वापरानुसन्धानदक्षः अत एव निपुणं यथा भवति, एवं शिल्पं—क्रियासु कौशलमुपगतः—प्राप्तो निपुणशिल्पोपगतः, 'दंडसंपुच्छणं'ति दंडपुच्छणकं शलाकाहस्तकं—सरत्पर्णादि-

शलाकासमुदायो वेणुशलाकिकां—वेणुशलाकामयीं सम्मार्जनीं, 'तेणं सिवेणं'मित्यादि, तत्कालविकुर्वितेन शिवेन कस्याप्यु-
पद्रवकारित्वाभावात्, मृदुना शरीरसुखस्पर्शहेतुत्वात् 'पिण्डिमनीहारिमगंधुद्धरेणं'ति पिण्डिमः—पिण्डितः सन् यो निर्हा-
रिमो—दूरं यावद् गमनशीलो गन्धस्तेन कृत्वा उद्धुरः—उद्धतः पिण्डिमनिर्हारिमगन्धोद्धुरस्तेन, 'जोयणपरिमंडलं जं किंचि
तणं वा'इत्यादि, योजनपरिमण्डलक्षेत्रं यावत् यत्किञ्चित् तृणं वा इत्यादि प्रतीतम्, अशुचि—अपवित्रं, एतदेव व्याचष्टे—
अचोक्षं—पूतिविरूपगन्धम्, एतदेव व्याचष्टे—दुरभिगन्धं, शेषं सुगमं । तेणं कालेणं तेणं समएणं उद्धलोगवत्थव्वालो अट्ठ
दिसाकुमारिमियहरियातो सएहिं २ तं चेव जाव विहरन्ति, तंजहा—मेहंकरा १ मेहवती २, सुमेहा ३ मेहमालिणी ४ ।
सुवच्छा ५ वच्छमित्ता ६ य, वारिसेणा ७ बलाहगा ८ ॥ १ ॥ तए णं तासिं उद्धलोगवत्थव्वाणं अट्ठण्हं दिसाकुमारिमय-
हरियाणं पत्तेयं पत्तेयं आसणाइं चलंति, एवं तं चेव भाणियव्वं, जाव अम्हे णं देवाणुप्पिए ! उद्धलोयवत्थव्वातो
अट्ठ दिसाकुमारिमियहरियातो भयवतो तित्थयरस्स जम्मणमहिमं करिस्सामो, तं तुब्भेहिं न भाइयव्वंतिकट्टु उत्तरपुरत्थिमं
दिसीभागं अवक्कमंति २ जाव दोच्चंपि वेउव्वियसमुग्घाएणं समोहणंति समोहणित्ता अब्भवद्दलए विउव्वंति, से जहा नामए
कम्मकरदारगे सिया तरुणे जाव निउणसिप्पोवगए, एगं महं दगवारगं वा दगकुंभगं वा दगथालगं वा दगकलसं वा
गहाय रायंगणं वा रायंतेउरं वा आरामं वा देउलं वा सभं वा पवं वा अतुरियमचवलमसंभंतं सुनिउणं सव्वतो समंता
आवरिसिज्जा, एवमेव तातोऽवि उद्धलोगवत्थव्वातो अट्ठदिसाकुमारिमियहरियातो अब्भवद्दलए विउव्विंति, वाः—पानीयं
तस्य दलानि वार्दलानि तान्येव वार्दलकानि मेघा इत्यर्थः, अपो बिभ्रतीति अभ्राणि—मेघास्तान्यस्मिन् सन्तीति

अभ्रादिभ्य इति मत्वर्थीयोऽकारप्रत्ययः आकाश इत्यर्थः, अभ्रे वार्दलकानि अभ्रवार्दलकानि तानि विकुर्वन्ति, आकाशे मेघान् विकुर्वन्तीत्यर्थः; अब्भवद्दले विउव्वित्ता खिप्पामेव तणतणायंति—गर्ज्जयन्तीत्यर्थः, खिप्पामेव तणतणायित्ता खिप्पामेव विज्जुयायंति—विद्युतं कुर्वन्तीत्यर्थः, विज्जुयाइत्ता भगवतो जम्मणट्ठाणस्स सव्वतो समंता जोयणपरिमंडलं नच्चोदकं नाइमट्टियं पविरलफुसियं रयरेणुविणासणं—श्लक्ष्णतरा रेणुपुद्गला रजः त एव स्थूला रेणवः रजांसि च रेणवश्च रजोरेणवस्तेषां विनाशनं रजोरेणुविनाशनं, दिव्वं सुरभिगंधोदगवासं वासंति वासित्ता निहयरयं नट्ठरयं भट्ठरयं उवसंतरयं पसंतरयं करेंति, निहतं रजो भूय उत्थानासम्भवात् यत्र तन्निहतरजः, तत्र निहतत्वं रजसः क्षणमात्रोत्थानाभावेनापि सम्भवति तत आह—'नष्टरजः' नष्टं—सर्वथा अदृश्यीभूतं रजो यत्र तन्नष्टरजः, भ्रष्टं—वातोद्धूततया योजनमात्रात् क्षेत्रात् दूरतः पलायितं रजो यस्मात् तद्भ्रष्टरजः, एतदेव एकार्थिकद्वयेन प्रकटयति—उवसंतरयं पसंतरयमिति, निहयरयं जाव पसंतरयं करेत्ता खिप्पामेव उवसमंति उवसमेत्ता तच्चंपि वेउव्वियसमुग्घाएणं समोहणइ २णित्ता पुप्फवद्दलए विउव्वंति—पुष्पवर्द्धकाणि वार्द्दलकानि पुष्पवार्द्दलकानि तानि विकुर्वन्ति, से जहा नामए कम्मगरदारए सिया तरुणे जुगवं जाव निउणसिप्पोवगए एगं महं पुप्फपडलगं वा पुप्फचंगेरियं वा पुप्फछज्जियं वा पुप्फपत्थिगं वा गहाय रायंगणं वा रायंतेउरं वा आरामं वा देउलं वा सभं वा पवं वा कयग्गहगहियकरयलपब्भट्ठविप्पमुक्केणं, इह मैथुनसंरंभे रभसवशात् यत् युवतेः केशेषु पञ्चाङ्गुलिभिर्ग्रहणं स कचग्रहस्तेन गृहीतं कचग्रहगृहीतं करतलात् विप्रमुक्तं सत् प्रभ्रष्टं करतलप्रभ्रष्टविप्रमुक्तं प्राकृतत्वात् पदव्यत्ययस्ततो विशेषणसमासः तेन, दसद्धवण्णेणं कुसुमेण पुप्फपुंजोवयारकलियं करेज्जा, एवमेव ताओवि

उद्धलोगवत्थव्वातो अट्ठ दिसाकुमारिमयहरियातो पुप्फवद्दलए विउव्वित्ता खिप्पामेव तणतणायंति खिप्पामेव विज्जुयायंति विज्जुयाइत्ता भगवतो जम्मणत्थाणस्स सव्वतो समंता जोयणपरिमंडलं जलजत्थलजभासुरप्पभूयस्स जलजं-पद्मादि स्थलजं-विचकिलादि भास्वरं—दीप्यमानं प्रभूतम्-अतिप्रचुरं ततः पदद्वयस्मीलनेन विशेषणसमासः, तस्स वेंटट्ठाइयस्स दसद्धवण्णकुसुमस्स पंचवर्णकुसुमजातस्येत्यर्थः जन्नुस्सेहपमाणमेत्तं वासं वासंति वासित्ता कालागरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धूयाभिरामं सुगंधवरगंधगंधियं गंधवट्टीभूयं सुरवराभिगमणजोग्गं करेंति करेत्ता जेणेव भयवं तित्थयरे तित्थयरमाया य तेणेव उवागच्छंति जाव परिगायमाणीओ चिट्ठंति, अत्र कालागुरुः प्रसिद्धः प्रवरः—प्रधानः कुन्दुरुक्कः—चीडा तुरुष्कं-सिल्हकं तेषां धूपस्य यो मघमघायमानो गन्धः उद्धूतः-इतस्ततो विप्रसृतस्तेनाभिरामं-रमणीयं कालागुरुप्रवरकुन्दुरुक्कतुरुष्कधूपमघमघायमानगन्धोद्धुताभिरामं, तथा शोभनो गन्धो येषां ते सुगन्धास्ते च ते वरगन्धाश्च—वासाः सुगन्धवरगन्धास्तेषां गन्धः सोऽस्यास्तीति सुगन्धवरगन्धगन्धिकं, 'अतोऽनेकस्वरा'दितीकप्रत्ययः, अत एव गन्धवर्त्तिभूतं सौरभ्यातिशयात् । तेणं कालेणं तेणं समएणं पुरच्छिमरुयगवत्थव्वातो अट्ठ दिसाकुमारिमहयरियातो सएहिं सएहिं कूडेहिं जाव विहरंति, तंजहा—नंदुत्तरा य १ नंदा २, आणंदा ३ नंदिवद्धणा ४। विजया य ५ वेजयंती ६, जयंती ७ अपराजिया ८ ॥ १ ॥ सेसं तहेव जाव तुब्भेहिं न भाइयव्वंतिकट्टु भगवतो तित्थयरस्स तित्थयरमाऊए य पुरत्थिमेणं आयंसहत्थगयातो आगायमाणीतो परिगायमाणीओ चिट्ठंति । तेणं कालेणं तेणं समएणं दाहिणरुयगवत्थव्वातो अट्ठ दिसाकुमारिमहयरियातो सएहिं सएहिं कूडेहिं तहेव जाव विहरंति, तंजहा-समाहारा १

सुप्पदिण्णा २ सुप्पबद्धा ३ जसोधरा ४ । लच्छिमती ५ चित्तगुत्ता ६ वसुन्धरा ७ सेसवती ८, तहेव जाव न भाइयव्वंतिकट्टु भगवतो तित्थयरस्स तित्थयरमाऊए य दाहिणेणं भिंगारहत्थगयाओ आगायमाणीओ परिगायमाणीओ चिट्ठंति । तेणं कालेणं तेणं समएणं पच्चत्थिमरुयगवत्थवातो अट्ठ दिसाकुमारिमहयरियातो सएहिं सएहिं कूडेहिं तहेव जाव विहरंति, तंजहा—इलादेवी १ सुरादेवी २ पुहवी ३ पउमावई ४ । एगनासा ५ नवमीया ६ भद्दा ७ सीया य ८ अट्ठमिया, तहेव जाव तुब्भेहिं न भाइयव्वंतिकट्टु भगवओ तित्थयरस्स तित्थयरमाउए य पच्चत्थिमेण तालविण्टहत्थगयाओ आगायमाणीओ परिगायमाणीओ चिट्ठंति । तेणं कालेणं तेणं समएणं उत्तरिल्लरुयगवत्थव्वातो अट्ठ दिसाकुमारिमयहरियाओ सएहिं सएहिं कूडेहिं तहेव जाव विहरंति, तंजहा—अलंबुसा १ मिस्सकेसी य २ पुंडरीका य ३ वारुणी ४ । हासा ५ सच्चप्पभा चेव ६ हिरी ७ सिरी चेव ८ उत्तरतो तहेव जाव तुब्भेहिं न भाइयव्वंतिकट्टु भयवओ तित्थयरस्स तित्थयरमाऊए य उत्तरेणं चामरहत्थगयातो आगायमाणीओ परिगायमाणीतो चिट्ठंति । तेणं कालेणं तेणं समएणं विदिसिरुयगवत्थव्वातो चत्तारि दिसाकुमारिमयहरियातो सएहिं २ कूडेहिं तहेव जाव विहरंति, तंजहा—चित्ता य १ चित्तकणगा २ सतेरा ३ सोयामणी ४, तहेव जाव न भाइयव्वंतिकट्टु भगवतो तित्थयरस्स तित्थयरमाऊए य चउसु विदिसासु दीविआहत्थगयातो आगायमाणीतो परिगायमाणीतो चिट्ठंति । तेणं कालेणं तेणं समएणं मज्झिमरुयगवत्थव्वातो चत्तारि दिसाकुमारिमयहरियातो सएहिं सएहिं कूडेहिं तहेव जाव विहरंति, तंजहा—"रूया १ रुयंसा २ सुरुया ३ रुयगावती ४, तहेव जाव तुब्भेहिं न भाइयव्वंतिकट्टु भगवतो तित्थयरस्स चउरंगुलवज्जं नाभिं

कप्पंति कप्पेत्ता वियरं खणंति खणित्ता वियरए नाभिं निहणंति निहणित्ता रयणाणं वयराण य पूरंति पूरित्ता हरियालियापेढं पबंधंति, भगवतो तित्थयरस्स जम्मणभवणस्स पुरत्थिमदाहिणुत्तरेणं ततो कयलीहरगे विउव्वेंति, तएणं तेसिं कयलीहरगाणं बहुमज्झदेसभागे तओ चाउस्सालए विउव्विंति, तए णं तेसिं चाउस्सालाणं बहुमज्झदेसभागे ततो सीहासणे विउव्वंति, तेसि णं सीहासणाणं अयमेयारूवे वण्णावासे पण्णत्ते, तंजहा—तवणिज्जमया चक्कला रययामया सीहा सोवन्निया पाया नाणामणिमयाइं पायसीसगाइं जंबूणयामयाइं गत्ताइं नाणामणिमयं विच्चासणं सिंहासणे ईहामियतुरगनरमगरविहगवालगकिन्नररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्ता ससारसारोवचियमणिरयणपायवीढा अत्थरयमउयमसूरनवत्तयकुसंतलिच्चकेसरपच्चत्थुयाभिरामा सुविरइयरइत्ताणा ओवचियखोमदुगुल्लपट्टपडिच्छायणा रत्तंसुयसंवुया सुरम्मा आईणगरूयबूरनवणीयतूलफासा पासाईया दरिसणिज्जा अभिरूवा पडिरूवा, अत्र तपनीयमयानि चक्कलानि—पादानामधो वृत्ताकारा अवयवविशेषाः, रजतमयाः सिंहा यैरुपशोभितं सत्तसिंहासनमुच्यते, सौवर्णिकाः—सुवर्णमयाः पादाः, नानामणिमयानि पादशीर्षकाणि–पादानामुपरितना अवयवविशेषाः, जाम्बूनदं—सुवर्णविशेषस्तन्मयानि गात्राणि–ईषादीनि नानामणिमयं विच्चं—वानं, 'ससारोवचिये'त्यादि सारसारैः–प्रधानप्रधानैः मणिरत्नैरुपचितेन पादपीठेन सह यानि तानि ससारसारोपचितमणिरत्नपादपीठानि, प्राकृतत्वात्पदव्यत्ययः, तथा आस्तरकम्–आच्छादकं मृदु यस्य तदास्तरकमृदु विशेषणस्य परनिपातः प्राकृतत्वात् नवा त्वच् येषां ते नवत्वचः कुशान्ता—दर्भपर्यन्ता नवत्वचश्च ते कुशान्ताश्च नवत्वक्कुशान्तास्त एव लिच्चानि–कोमलानि नमनशीलानि च केसराणि मध्ये यस्य

मसूरकस्य तन्नवत्वक्कुशान्तलिच्चकेसरं आस्तरकमृदुना मसूरकेन नवत्वक्कुशान्तलिच्चकेसरेण प्रत्यवस्तृतानि-आच्छादितानि सन्ति यानि अभिरामाणि तानि तथा, तथा सुष्ठु विरचितं रजस्त्राणं येषामुपरि तानि सुविरचितरजस्त्राणानि, तथा ओयवियं—विशिष्टपरिकर्म्मणापरिकर्म्मितं क्षौमं-दुकूलपट्टरूपं प्रतिच्छादनं येषां तानि तथा, पार्श्वतो रक्तांशुकसंवृतानि, अत एव सुरम्याणि तथा आजिनकं-चर्म्ममयं वस्त्रं एतच्च स्वभावादतिकोमलं भवति रूतं-कर्पासपक्ष्म बूरो-वनस्पति-विशेषः नवनीतं-म्रक्षणं तुलम्-अर्कतूलं तेषामिव स्पर्शो येषां तानि तथा, प्रासादीयानि मनःप्रसादहेतुत्वाद् दर्शनीयानि रूपातिशयभावात् तथा अभि-प्रतिक्षणं नवं नवमिव रूपं येषां तानि अभिरूपाणि इत्थं प्रतिरूपाणि-प्रतिविशिष्टरूपाणीति। तए णं तातो रूयगमज्झवत्थवातो चत्तारि दिसाकुमारिमयहरियातो जेणेव भगवं तित्थयरे तेणेव उवागच्छंति उवाग-च्छित्ता भयवं तित्थयरं करयलपुडेण तित्थयरमायरं च बाहाए गेण्हंति गेण्हेत्ता जेणेव दाहिणिल्ले कयलीहरए जेणेव चाउस्सालए जेणेव सीहासणे तेणेव उवागच्छंति उवागच्छित्ता भगवं तित्थयरं तित्थयरमायरं च सीहासणे निसी-यावेंति निसीयावित्ता सयपागसहस्सपागतिल्लेहिं अब्भेंगेंति अब्भंगित्ता सुरभिगंधवट्टएणं उवट्टेंति उवट्टित्ता भयवं तित्थयरं करयलपुडेणं तित्थयरमायरं च बाहाहिं गिण्हन्ति गेण्हेत्ता जेणेव पुरत्थिमिल्ले कयलीहरए जेणेव चाउस्साले जेणेव सीहासणे तेणेव उवागच्छंति उवागच्छित्ता भयवं तित्थयरं तित्थयरमायरं च सीहासणे निसीयावेंति, निसीयावित्ता तिहिं उदएहिं मज्जावेंति, तंजहा- गंधोदएणं पुप्फोदएणं सुद्धोदगेणंति, मज्जावित्ता सव्वालंकारविभूसिए करेंति करेत्ता भयवं तित्थयरं करयलपुडेणं तित्थयरमायरं च बाहाहिं गेण्हंति गिण्हित्ता जेणेव उत्तरिल्ले कयलीघरगे जेणेव चाउस्सालए

जेणेव सीहासणे तेणेव उवागच्छंति उवागच्छित्ता भयवं तित्थयरं तित्थयरमायरं च सीहासणे निसीयाविंति निसीयावित्ता अभियोगे देवे सद्दावेंति, सद्दावित्ता एवं वयासी—खिप्पामेव भो देवाणुप्पिया! चुल्लहिमवंतातो वासहरपव्वयातो गोसीसचंदणकट्ठाइं साहरह, तए णं ते आभियोगा देवा ताहिं रुयगमज्झवत्थव्वाहिं चउहिं दिसाकुमारिमयहरियाहिं एवं वुत्ता समाणा हट्ठतुट्ठा जाव हरिसवसविसप्पमाणहियया विणएण-वयणं पडिच्छित्ता खिप्पामेव चुल्लहिमवंतातो वासहरपव्वयातो गोसीसचंदनकट्ठाइं सरसाइं साहरेंति, तए णं तातो मज्झिमरुयगवत्थव्वातो चत्तारि दिसाकुमारिमयहरियातो सरगं करेंति सरगं करेत्ता अरणिं घडंति अरणिं घडेत्ता सरएणं अरणिं महंति अरणिं महित्ता अग्गिं पाडेंति अग्गिं पाडेत्ता अग्गिं संधुक्कंति अग्गिं संधुक्कित्ता गोसीसचंदणकट्ठे पक्खिवंति पक्खिवित्ता अग्गिं उज्जालेंति अग्गिं उज्जालेत्ता समिधाकट्ठाइं पक्खिवंति समिधाकट्ठाइं पक्खिवित्ता अग्गिहोमं करेंति अग्गिहोमं करेत्ता भूइकम्मं करिंति भूइकम्मं करित्ता रक्खापोट्टलियं बंधंति बंधित्ता नाणामणिरयणभत्तिचित्ते दुवे पासाणवट्टगे गहाय भगवतो तित्थयरस्स कण्णमूलंसि टिट्टियावेंति, भवउ भयवं! पव्वयाउए, तए णं ताओ रुयगमज्झवत्थव्वातो चत्तारि दिसाकुमारिमयहरियातो भगवं तित्थयरं करयलपुडेणं तित्थयरमायरं च बाहाए गेण्हंति गेण्हेत्ता जेणेव तित्थयरस्स भगवतो जम्मणभवणे तेणेव उवागच्छंति उवागच्छित्ता तित्थयरमायरं सयणिज्जंसि निसीयावेंति, भगवं तित्थयरं माऊए पासे ठवेंति ठवेत्ता आगायमाणीओ परिगायमाणीतो चिट्ठंति ॥ तेणं कालेणं तेणं समएणं सक्के नामं देविंदे देवराया वज्जपाणी पुरंदरे सतक्कऊ सहस्सक्खे मघवं पाकसासणे दाहिणड्ढलोगाहिवई बत्तीसविमाणावाससयसहस्साहिवई एरावणवाहणे सुरिंदे अर-

यंवरवत्थधरे आलइयमालमउडे नवहेमचारुचित्तचंचलकुंडलविलिहिज्जमाणगंडे भासुरबोंदी पलंबवणमाले महड्डीए महज्जुइए महाबले महायसे महाणुभावे महासुक्खे सोहम्मे कप्पे सोहम्मवडिंसए विमाणे सभाए सुहम्माए सक्कंसि सीहासणंसि से णं तत्थ बत्तीसाए विमाणावाससयसहस्साणं चउरासीए सामाणियसाहस्सीणं तित्तीसाए तायत्तीसगाणं चउण्हं लोगपालाणं अट्ठण्हं अग्गमहिसीणं सपरिवाराणं तिण्हं परिसाणं सत्तण्हं अणियाणं सत्तण्हं अणियाहिवईणं चउण्हं चउरासीणं आयरक्खदेवसाहस्सीणं अन्नेसिं च बहूणं सोहम्मकप्पवासीणं वेमाणियाणं देवाण य देवीण य आहेवच्चं पोरेवच्चं भट्टित्तं सामित्तं मयहरगत्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे महयाहयनट्टगीयवाइयतंतीतलतालतुडियघणमुइंगपडुप्पवाइयरवेणं दिव्वाइं भोगभोगाइं भुंजमाणे विहरइ । अत्र वज्जपाणी इति वज्रं पाणावस्येति वज्रपाणिः असुरादिपुरदारणात् पुरन्दरः शतं क्रतूनां–प्रतिमानामभिग्रहविशेषरूपाणां श्रमणोपासकपञ्चमप्रतिमारूपाणां वा कार्त्तिकश्रेष्ठिभवापेक्षया यस्य स शतक्रतुः, 'सहसक्खे' इति सहस्रमक्ष्णां यस्यासौ सहस्राक्षः, इन्द्रस्य हि किल मन्त्रिणां पञ्च शतानि, तदीयानां चाक्ष्णामिन्द्रप्रयोजनव्यापृततया इन्द्रसम्बन्धित्वेन विवक्षणात् सहस्राक्षत्वमिन्द्रस्य, 'मघवंति' मघा–महामेघास्ते यस्य वशे सन्ति स मघवान्, पाको नाम बलिरिपुः स शिष्यते–निराक्रियते येन स पाकशासनः, तथा अरजांसि–रजोरहितानि स्वच्छतया अम्बरवदम्बराणि वस्त्राणि धारयतीति अरजोऽम्बरवस्त्रधरः, तथा माला च मुकुटश्च मालामुकुटमालगितम्–आविद्धं मालामुकुटं येन स आलगितमालामुकुटः, तथा नवमिवात्युत्कटचारुवर्णत्वान्नवं हेम यत्र ते नवहेम्नी नवहेमभ्यां चारुचित्राभ्यां चञ्चलाभ्यां कुण्डलाभ्यां विलिख्यमानौ गण्डौ यस्य स तथा, भास्वरा बोन्दिः—तनुर्यस्यासौ भास्व-

रवोन्दिः; प्रलम्बते इति प्रलम्बा वनमाला यस्य स तथा, महर्द्धिको विमानपरिवारादिकाया ऋद्धेः अत्यद्भुतत्वात् महाद्युतिः शरीरगताभरणगतमहाद्युतिसद्भावात्, महाबलो महाशरीरप्राणसद्भावात् महायशा भुवनत्रयगतख्यातित्वात्, महानुभागः सद्भूतशापानुग्रहविषयसामर्थ्यसद्भावात्, अत एव महासौख्यः, 'आहेवच्च'मित्यादि, अधिपतेः कर्म आधिपत्यं रक्षा इत्यर्थः सा च रक्षा सामान्येनाप्यारक्षकेणेव क्रियते तत आह-पुरस्य पतिः पुरपतिः तस्य कर्म्म पौरपत्यं, सर्वेषामात्मीयानां मध्येऽग्रेसरत्वमिति भावः, तच्चाग्रेसरत्वं नायकत्वमन्तरेणापि स्वनायकनियुक्तं तथाविधगृहचिन्तकसामान्यपुरुषस्येव भवति, तत आह-'स्वामित्वं' स्वमस्यास्तीति स्वामी तद्भावः स्वामित्वं नायकत्वमित्यर्थः, तच्च नायकत्वं कदाचित्पोषकत्वमन्तरेणापि भवति यथा हरिणयूथाधिपतेर्हरिणस्य, तत आह-भर्तृत्वं-पोषकत्वमत एव महत्तरकत्वं, तदपि च महत्तरकत्वं कस्यचिदाज्ञाविकलस्यापि सम्भवति यथा कस्यद्वणिजः स्वदासदासीवर्गं प्रति, तत आह-'आणाईसरसेणावच्चं' आज्ञया ईश्वरः आज्ञेश्वरः सेनायाः पतिः सेनापतिः आज्ञेश्वरश्चासौ सेनापतिश्च तस्य कर्म आज्ञेश्वरसेनापत्यं, कारयन् अन्यैर्नियुक्तपुरुषैः पालयन् स्वयम्। तए णं तस्स सक्कस्स देविंदस्स देवरण्णो आसणं चलेइ, तए णं से सक्के जाव आसणं चलियं पासइ पासित्ता ओहिं पउंजइ, पउंजित्ता भयवं तित्थयरं आभोएइ आभोइत्ता, हट्ठतुट्ठचित्तमाणंदिए पीइमणे परमसोमणस्सिए धाराहयनीवसुरभिकुसुमचंचुमालइयऊसवियरोमकूवे वियसियवरकमलनयणे पयलियवरकडगतुडियकेऊरमउडकुंडलहारविरायंतरइयवच्छे पालंबपलंबमाणघोलंतभूसणधरे ससंभमं तुरियं चवलं सुरिंदे सीहासणातो अब्भुट्ठेइ अब्भुट्ठित्ता निउणोचियमिसमिसंतमणिरयणमंडियातो पाउयाओ ओमुयइ

ओमुइत्ता एगसाडियं उत्तरासंगं करेइ करेत्ता अंजलिमउलियहत्थे तित्थयराभिमुहे सत्तट्ठ पयाइं अणुगच्छइ अणुगच्छित्ता वामं जाणुं अंचेइ उत्पाटयतीत्यर्थः दाहिणं जाणुं धरणितलंसिनिहट्टु तिक्खुत्तो मुद्धाणं धरणितलंसि निवाडेइ निवाडेत्ता कडगतुडियथंभियातो भुयातो साहरेइ साहरित्ता करयलपरिग्गहियं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी—नमोऽत्थु णं अरहंताणं भगवंताणं, आदिगराणं तित्थयराणं जावसिद्धिगइनामधेयं ठाणं संपत्ताणं, नमोऽत्थु णं भगवतो पढमतित्थयरस्स जाव संपाविउकामस्स, वंदामि णं भगवंतं पढमतित्थयरं इहगए, पासउ मे भगवं तत्थ गए इह गयंतिकट्टु वंदइ नमंसइ वंदित्ता नमंसित्ता सीहासणवरंसि पुरत्थाभिमुहे संनिसण्णे, तएणं तस्स सक्कस्स देविंदस्स देवरण्णो अयमेयारूवे अब्भत्थिए मणोगए संकप्पे समुप्पज्जित्था—उप्पण्णे खलु भो जंबुद्दीवे दीवे भयवं पढमतित्थयरे, तं जीयमेयं तीयपच्चुप्पन्नमणागयाणं सक्काणं देविंदाणं देवराईणं तित्थगराणं जम्मणमहिमं करेत्तए, तं गच्छामि अहंपि भगवतो तित्थयरस्स जम्मणमहिमं करेमित्तिकट्टु एवं संपेहेइ संपेहित्ता हरिणेगमेसिं पायत्ताणियाहिवइं देवं सद्दावेइ सद्दावेत्ता एवं वयासी—खिप्पामेव भो देवाणुप्पिया ! मेघोघरसियगंभीरमहुरसद्दं जोयणपरिमंडलं सुघोसं सुसरं घंटं तिक्खुत्तो उल्लालेमाणे महया महया सद्देणं उग्घोसेमाणे एवं वयासी—आणवए णं भो ! सक्के देविंदे देवराया गच्छइ भो ! सक्के देविंदे देवराया जंबुद्दीवं दीवं भारहं वासं पढमतित्थयरस्स भगवतो जम्मणमहिमं करेत्तए, तं तुब्भेऽविय णं देवाणुप्पिया ! सव्विड्ढीए सव्वजुईए सव्वबलेणं सव्वसमुदएणं सव्वायरेणं सव्वविभूइए सव्वविभूसाए सव्वसंभमेणं सव्वनाडएणं सव्वोरोहेहिं सव्वपुप्फगंधमल्लालंकारविभूसाए सव्वदिव्वतुडियसंनिनाएणं महया इड्ढीए महया जुईए

महया बलेणं महया समुदएणं जाव महया पुप्फगंधमल्लालंकारविभूसाए महया वरतुडियजमगसमगपडुप्पवाइअरवेणं संखपणवपडहभेरिझल्लरिखरमुहिहुडुक्कमुरवमुइंगदुंदुभिनिग्घोसनादितरवेणं नियगपरिवारसंपरिवुडा सयाइं सयाइं जाणविमाणाइं दुरूढा समाणा अकालपरिहीणं चेव सक्कस्स देविंदस्स देवरण्णो अंतियं पादुब्भवइ, एतत्सर्वं प्रायो व्याख्यातार्थं सुगमं च, नवरं 'धाराहए'त्यादि यथा धाराहतानि नीपस्य—वृक्षविशेषस्य सुरभीणि कुसुमानि चञ्चुभिरिव मालितानि भवन्ति तद्वत् उच्छ्रायिता रोमकूपा येन स धाराहतनीपसुरभिकुसुमचञ्चुमालितोच्छ्रायितरोमकूपः, प्राकृतत्वात् पदव्यत्ययः, 'अयमेयारूवे अब्भत्थिए' इत्यादि सङ्कल्पः समुदपद्यत, किंविशिष्ट इत्याह—आत्मनि अधि अध्यात्म तत्र भव आध्यात्मिक आत्मविषय इत्यर्थः, पुनः कथंभूत इत्याह—मनोगतो—मनसि व्यवस्थितो, नाद्यापि वचसा प्रकाशितस्वरूप इत्यर्थः, 'मेघोघरसिये'त्यादि मेघस्येव ओघेन—प्रवाहेण रसितं यस्याः सा मेघौघरसिता, तथा गम्भीरतरो मधुरः शब्दो यस्याः सा तथा विशेषणसमासः, 'सुघोस'मिति सुघोषाभिधानां, 'सव्वोरोहेहिं' इति सर्वैरन्तःपुरैः, इह स्वल्पेष्वपि सर्वशब्दो दृष्टो यथा सर्वमनेन घृतं पीतमिति तत आह—'महया इड्ढीए' इत्यादि, 'महया वरतुडिय' इत्यादि, महता—स्फूर्त्तिमता वराणां—प्रधानानां तुटितानाम्—आतोद्यानां यमकसमकम्—एककालं पटुभिः पुरुषैः प्रवादितानां यो रवस्तेन, एतदेव विशेषेणाचष्टे—'संखपणवे'त्यादि शङ्खः प्रतीतः पणवो—भाण्डानां पडहः पटहः—प्रतीतः भेरी—ढक्का झल्लरी—चर्म्मावनद्धा विस्तीर्णवलयाकारा खरमुखी—काहला हुडुक्का प्रतीता महाप्रमाणो मुरुजो मर्दलः स एव लघुर्मृदङ्गः दुन्दुभिः—भेर्याकारा सङ्कटमुखी एतेषां द्वन्द्वस्तासां निर्घोषो—महान् ध्वानो नादितं च—

घण्टायामिव वादनोत्तरकालभावी सततध्वनिस्तल्लक्षणो यो रवस्तेन। तए णं से हरिणेगमेसी देवे पायत्ताणियाहिवई सक्केण देवविंदेणं देवरण्णा एवं वुत्ते समाणे हट्ठतुट्ठचित्तमाणंदिए जाव विसप्पमाणहियए करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु एवं देवो तहत्ति आणाए विणएणं वयणं पडिसुणेइ, पडिसुणित्ता सक्कस्स देविंदस्स देवरण्णो अंतियातो पडिनिक्खमइ पडिनिक्खमइत्ता जेणेव सभाए सुहम्माए मेघोघरसियगंभीरमहुरसद्दा जोयणपरिमंडला सुघोसा घंटा तेणेव उवागच्छइ उवागच्छित्ता तं मेघोघरसियं गंभीरमहुरसद्दं जोयणपरिमंडलं सुघोसं घंटं तिक्खुत्तो उल्लालेइ। तए णं मेघोघरसियमहुरसद्दाए जोयणपरिमंडलाए सुघोसाए घंटाए तिक्खुत्तो उल्लालियाए समाणीए सोहम्मे कप्पे एगूणेहिं बत्तीसाए विमाणावाससयसहस्सेहिं अण्णाइं एगूणगाइं बत्तीसं घंटासयसहस्साइं जमगसमगं कणकणारवं काउं पयत्ताइंपि होत्था। तए णं सोहम्मे कप्पे पासायविमाणनिक्खुडावडियसद्दघंटापडंसुयासयसहस्ससंकुचिए जाए यावि होत्था, तए णं तेसिं सोहम्मकप्पवासीणं बहूणं वेमाणियाणं देवाणं देवीण य एगंतरइपसत्तनिच्चपमत्तविसयसुहमुच्छियाणं सूसरघंटारसियविउलबोलतुरियचवलपडिबोहणे कए समाणे घोसणकुतूहलदिण्णकण्णएगग्गचित्तउवउत्तमाणसाणं से पायत्ताणीयाहिवई देवो तंसि घंटारवंसि निसंतपसंतंसि समाणंसि तत्थ २ तहिं २ देसे महया महया सद्देणं उग्घोसेमाणे एवं वयासी—हंदि सुणंतु भवंतो बहवे सोहम्मकप्पवासी वेमाणिया देवा देवीतो य सोहम्मकप्पवइणो इमं वयणं हियसुहत्थं—आणवइ णं भो! सक्के तं चेव जाव अंतियं पाउब्भवह, इदमपि सुगमम्, नवरं एवं देवो तहत्ति आणाए इति—हे देव!; आमन्त्रणे ओकारान्तता प्राकृतत्वात् यथा खमासमणो इति, एवं—यथैव यूयमादिशथ

तथैवाज्ञया—युष्मदादेशेन कुर्म्म इत्येवंरूपेण विनयेन, 'तिक्खुत्तो उल्लालेइ' त्रिकृत्वस्ताडयति; 'तए ण' मित्यादि, ततस्तस्यां मेघौघरसितगम्भीरमधुरशब्दायां योजनपरिमण्डलायां सुघोषायां घण्टायां त्रिकृत्व उल्लालितायां सत्यां सौधर्म्मे कल्पे 'अन्नेहिं' इत्यादौ सप्तम्यर्थे तृतीया अन्येष्वपि एकोनेषु द्वात्रिंशति विमानावासशतसहस्रेषु यान्यन्यानि एकोनानि द्वात्रिंशत् घण्टाशतसहस्राणि तानि स्वयमेव यमकसमकम्—एककालं कणकणारवं प्रवृत्तान्यप्यभवन्, दिव्यप्रभाव एषः नात्र युक्त्यन्तरमिति, ततः सौधर्म्मकल्पः प्रतिविमानप्रासादनिष्कुटेषु विमाननिष्कुटेषु च ये आपतिताः शब्दाः—शब्दवर्गणापुद्गलास्तेभ्यः समुच्छलितानि यानि घण्टाप्रतिश्रुतां शतसहस्राणि तैः सङ्कुचितोऽपि जातोऽभवत्, किमुक्तं भवति ?—प्रतिविमानं कणकणारवं कर्त्तुं प्रवृत्तासु घण्टासु ये विनिर्गताः शब्दास्तत्प्रतिघातवशतः सर्वासु दिक्षु विदिक्षु च दिव्यानुभावतः समुच्छलितैः प्रतिशब्दैः सकलोऽपि सौधर्मकल्पो वधिरित इवोपजायते इति, एतेन यदुच्यते द्वादशभ्यो योजनेभ्यः समागतः शब्दः श्रोत्रग्राह्यो भवति न परतः, ततः कथमेकत्र ताडितायां घण्टायां सकलेऽपि सौधर्म्मकल्पे शब्दश्रवणमिति तदपास्तमवगन्तव्यम्, उक्तयुक्तितः सर्वत्रापि शब्दश्रवणसम्भवात्, 'एगंतरई'त्यादि, एकान्तेन-सर्वात्मना रतौ—रमणे प्रसक्ता एकान्तरतिप्रसक्ताः, अत एव नित्यं—सर्वकालं प्रमत्ता नित्यप्रमत्ताः, कस्मादेवंभूता इति चेत् अत आह—विषयसुखेषु मूर्छिता—अध्युपपन्ना विषयसुखमूर्च्छितास्ततो विशेषणसमासस्तेषां सुस्वरघण्टारसितरूपेण विपुलेन सकलसौधर्म्मकल्पव्यापिना बोलेन त्वरितं—शीघ्रं चपले—आकुले प्रतिबोधने कृते सति घोषणे कुतूहलेन दत्तौ कर्णौ यैस्ते घोषणकुतूहलदत्तकर्णाः, एकाग्रचित्ता—घोषणावगमविषयनिक्षिप्तमानसाः, एकाग्रचित्तत्वेऽपि कदाचिदन्तरा-

अनुपयोगः स्यादत आह—उपयुक्तमानसाः—निरन्तरमवहितमनसः,ततो विशेषणसमासः पदत्रयस्य, 'निसंतपसंतंसी'ति नितरां शान्तो निशान्तः—अत्यन्तं मन्दीभूतस्ततः प्रकर्षेण—सर्वात्मना शान्तः प्रशान्तः ततः छिन्नप्ररूढ इत्यादाविव विशेषणसमासः,'हंदे'ति हन्तेति हर्षे,हर्षश्च स्वामिना आदिष्टत्वादादितीर्थकरजन्ममहिमार्थं च प्रस्थानसमारम्भात्,'हियसुहत्थं'ति हितार्थं सुखार्थं चेत्यर्थः।तए णं ते देवा देवीओ य एयमट्ठं सोच्चा हट्ठतुट्ठचित्तमाणंदिया जाव विसप्पमाणहियया अप्पेगइया वंदणवत्तियं अप्पेगइआ पूअणवत्तियं अप्पेगइया सक्कारवत्तियं अप्पेगइया सम्माणवत्तियं अप्पेगइया दंसणकोउहल्ला० अप्पेगइआ सक्कस्स वयणमणुयत्तमाणा अप्पेगइया अण्णमणुयत्तमाणा अप्पेगइया जीयमेयं एवमाइत्तिकट्टु सव्वड्ढीए जाव अकालपरिहीणमेव सक्कस्स देविंदस्स देवरण्णो अंतियं पाउब्भवंति,तए णं से सक्के देविंदे देवराया ते बहवे वेमाणिए देवे देवीओ य अकालपरिहीणं चेव अंतियं पाउब्भवमाणे पासइ पासेत्ता हट्ठतुट्ठजावविसप्पमाणहियए पालयं नाम अभियोग्गं देवं सद्दावेइ सद्दावेत्ता एवं वयासी—खिप्पामेव भो देवाणुप्पिया! अणेगखंभसयसंनिविट्ठं लीलट्ठियसालभंजियाकलियं ईहामिगउसभतुरगनरमगरविहगवालगकिन्नररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्तं खंभोग्गयवइरवेइयापरिगयाभिरामं विज्जाहरजमलजुगलजुत्तजंतंपिव अच्चीसहस्समालणीयं रूवगसहस्सकलियं भिसमाणं भिब्भिसमाणं चक्खुल्लोयणलेसं सुहफासं सस्सिरीयरूवं घंटावलिपचलियमहुरमणहरसरं सुभं कंतं दरिसणिज्जं निउणोचियमिसमिसंतमणिरयणघंटियाजालपरिक्खित्तं जोयणसयसहस्सविच्छिन्नं पंचजोयणसयोविद्धं सिग्घतुरियजइणनिवायं दिव्वं जाणविमाणं विउव्वाहि विउव्वित्ता एयमाणत्तियं पच्चप्पिणाहि, एतत्सर्वं प्राग्वत् परिभावनीयम् । तए णं से पालए देवे सक्केण देविंदेण देवरण्णा एवं वुत्ते समाणे

।सू. ३०

हट्ठतुट्ठे विसप्पमाणहियए वेउब्वियसमुग्घाएणं समोहणइ जाव दोच्चंपि वेउब्वियसमुग्घाएणं समोहणित्ता अणेगवरखंभसयसंनिविट्ठं जाव दिवं जाणविमाणं विउव्विउं पवत्ते यावि होत्था, तए णं से पालए देवे तस्स दिव्वस्स जाणविमाणस्स तिदिसिं ततो तिसोवाणपडिरूवगे विउव्वइ, तंजहा—पुरच्छिमेणं दाहिणेणं उत्तरेणं, तेसि णं तिसोवाणपडिरूवगाणं इमे एयारूवे वण्णावासे पण्णत्ते, तंजहा—वइरामया नेमा रिट्ठामया पइट्ठाणा वेरुलियमया खंभा सुवण्णरुप्पमया फलगा लोहियक्खमतीतो सूईओ वइरामया संधीओ नाणामणिमया अवलंबणा अवलंबणबाहातो य पासाइया जाव पडिरूवा, तत्र 'तिदिसिं तओ॰' इति तिस्रो दिशः समाहृतास्त्रिदिक् तस्मिन् त्रिदिशि 'ततो तिसोवाणपडिरूवा' इति एकैकस्यां दिशि एकैकभावेन प्रतिविशिष्टं रूपं येषां तानि प्रतिरूपकाणि त्रयाणां सोपानानां समाहारस्त्रिसोपानं त्रिसोपानानि च तानि प्रतिरूपकाणि चेति विशेषणसमासः, विशेषणस्य परनिपातः प्राकृतत्वात्, 'तेसि ण'मित्यादि, तेषां च त्रिसोपानप्रतिरूपकाणामयमेतद्रूपो वर्णावासो—वर्णकनिवेशः प्रज्ञप्तः, तद्यथा—वज्रमया—वज्ररत्नात्मिका नेमाः—भूमिकात ऊर्ध्वं निर्गच्छन्तः प्रदेशा रिष्ठमयानि—रिष्ठरत्नमयानि प्रतिष्ठानानि—त्रिसोपानमूलप्रदेशाः वैडूर्यमयाः स्तम्भाः सुवर्णरूप्यमयानि फलकानि—त्रिसोपानाङ्गभूतानि लोहिताक्षमय्यः सूचयः—फलकद्वयसम्बन्धविघटनाभावहेतुपादुकास्थानीयाः वज्रमया—वज्ररत्नापूरिताः सन्धयः—फलकद्वयापान्तरालप्रदेशा नानामणिमयानि अवलम्ब्यन्ते इति अवलम्बनानि—अवतरतामुत्तरतां चालम्बनहेतुभूताः अवलम्बनबाहातो विनिर्गता नागदन्तास्थानीयाः केचिदवयवाः, 'अवलंबणबाहातो य' इति अवलम्बनबाहा नाम उभयोः पार्श्वयोरवलम्बनानामाश्रयभूता भित्तयस्ता अपि नानामणिमय्यः ॥ तेसि णं तिसोवाणपडिरूवगाणं पुरतो तोरणे विउव्वइ,

पालकविमानं त्रिसोपानानि

ते णं तोरणा नानामणिमयेसु खंभेसु उव[नि]विट्ठसंनिविट्ठविविहतारारूवोवचिया विविहमुत्तंतरोविया-ईहामिगउसभतुरगनरमगरविहगवालगकिंनररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्ता खंभुग्गयवइरवेइयापरिगयाभिरामा विज्जाहरजमलजुगलजंतजुत्ताविव अच्चीसहस्समालिणीया रूवगसहस्सकलिया भिसमाणा भिब्भिसमाणा चक्खुल्लोयणलेसा सुहफासा सस्सिरीयरूवा पासाईया जाव पडिरूवा, अत्र 'उवविट्ठसंनिविट्ठा' इति उपविष्टानि सामीप्येन स्थितानि, तानि च कदाचिच्चलानि अथवा अपदपतितानि आशङ्क्येरन् तत आह—सम्यक्—निश्चलतया अपदपरिहारेण च निविष्टानि सन्निविष्टानि, ततो विशेषणसमासः, तथाविधैस्तारारूपैः—तारिकाभिरुपचितानि, तोरणेषु शोभार्थं तारका निबध्यन्ते इति प्रतीतं लोकेऽपीति, तथा'विविहमुत्तंतरोविया' इति विविधविच्छित्तिकलिता मुक्ता—मुक्ताफलानि 'अंतरे'ति अन्तराशब्दोऽगृहीतवीप्सोऽपि सामर्थ्यात् वीप्सां गमयति अन्तरा अन्तरा रोविया—आरोपिता यत्र तानि तथा, शेषं प्रागेव व्याख्यातमिति । तेसिं तोरणाणं उप्पिं अट्ठट्ठमंगलगा पन्नत्ता, तंजहा—सोत्थिय सिरिवच्छ नंदियावत्त वद्धमाणग भद्दासणग कलस मच्छ दप्पणा, सव्वरयणामया अच्छा सण्हा लण्हा घट्ठा मट्ठा नीरया निम्मला निप्पंका निक्कंकडच्छाया समिरीया सउज्जोया पासाईया दरिसणिज्जा अभिरूवा पडिरूवा, अत्र 'अच्छा' इति अच्छानि आकाशस्फटिकवत् अतीव स्वच्छानि श्लक्ष्णानि—श्लक्ष्णपुद्गलस्कन्धनिष्पन्नानि श्लक्ष्णदलनिष्पन्नपटवत्, लण्हानि—मसृणानि घुंटितपटवत्, घृष्टानीव घृष्टानि खरशानया पाषाणप्रतिमावत्, मृष्टानीव मृष्टानि सुकुमालशानया पाषाणप्रतिमेव, अत एव नीरजांसि स्वाभाविकरजोरहितत्वात् निर्म्मलानि अभ्यागन्तुकमलाभावात्, निष्पङ्कानि कलङ्कविकलानि, तथा निष्कङ्कटा—निष्कवचा

तोरणानि ध्वजादीनि च

निरावरणा निरुपघातेति भावः छाया—दीप्तिर्येषां तानि निष्कङ्कटच्छायानि सप्रभाणि—स्वरूपतः प्रभावन्ति समरीचीनि च—बहिर्विनिर्गतकिरणजालानि अत एव सोद्योतानि—बहिर्व्यवस्थितवस्तुस्तोमप्रकाशकराणि, 'पासाइया' इत्यादि पदचतुष्टयं प्राग्वत्। तेसि णं तोरणाणं उप्पिं बहवे किण्हचामरज्झया लोहियचामरज्झया नीलचामरज्झया सुक्किलचामरज्झया हालिद्दचामरज्झया अच्छा सण्हा रुप्पपट्टा वयरामयदंडा जलयामलगंधिया सुरम्मा पासाइया जाव पडिरूवा, अत्र कृष्णचामरयुक्ता ध्वजाः कृष्णचामरध्वजाः, एवं शेषपदेष्वपि भावना कार्या, 'रुप्पपट्टा' इति रूप्यो—रूप्यमयो वज्रमयस्य दण्डस्योपरि पट्टो येषां ते रूप्यपट्टाः, 'वइरदंडा' इति वज्रो—वज्ररत्नमयो दण्डो रूप्यपट्टमध्यवर्त्ती येषां ते वज्रदण्डाः, तथा जलजानामिव—जलजकुसुमानां पद्मादीनामिवामलो—निर्म्मलो यो गन्धः स विद्यते येषां ते जलजामलगन्धिकाः अत एव सुरम्याः, प्रासादीया इत्यादि प्राग्वत्। तए णं तेसि णं तोरणाणं उप्पिं बहवे छत्तातिच्छत्ते घंटाजुयले पडागाइपडागे उप्पलहत्थए कुमुदहत्थए नलिणहत्थए सुभगहत्थए सोगंधियहत्थए पुंडरीयहत्थए सयवत्तहत्थए सहस्सपत्तहत्थए सव्वरयणामए अच्छे सण्हे जाव पडिरूवे विउव्वइ, इह छत्रात् लोकप्रसिद्धादेकसङ्ख्यकात् अतिशायीनि छत्राणि उपर्यधोभावेन द्विसङ्ख्यानि त्रिसङ्ख्यानि वा छत्रातिच्छत्राणि, पताका लोकप्रसिद्धास्ताभ्योऽतिशायिन्यो दीर्घत्वेन विस्तारेण च पताकाः पताकातिपताकाः, उत्पलहस्तान्—उत्पलाख्यजलजकुसुमसमूहविशेषान्, एवं शेषपदान्यपि भावनीयानि, नवरमुत्पलं—गर्दभकं पद्मं—सूर्यविकासि कुमुदं—कैरवं नलिनम्—ईषद्रक्तं पद्मं सुभगं—पद्मविशेषः सौगन्धिकं—कल्हारं पुण्डरीकं—शताम्बुजं सहस्रपत्रशतपत्रे पत्रसङ्ख्याभेदकृतौ पद्मविशेषौ। तए णं से पालए देवे तस्स णं दिव्वस्स

जाणविमाणस्स अंतो बहुसमरमणिज्जं भूमिभागं विउव्वइ, से जहानामए आलिंगपुक्खरेइ वा मुइंगपुक्खरेइ वा सरतलेइ वा करयलेइ वा चंदमंडलेइ वा सूरमंडलेइवा आयंसमंडलेइ वा उरब्भचम्मेइ वा वराहचम्मेइ वा वगचम्मेइ वा दीवियचम्मेइ वा अणेगसंकुकीलगसहस्सवितते आवडपच्चावडसेढिपसेढिसोत्थियसोवत्थियपूसमाणगवद्धमाणगमच्छंडमारंडजारमारफुल्लावलिपउमपत्तसागरतरंगवसंतलयपउमलयभित्तिचित्तेहिं सच्छाएहिं सप्पभेहिं समिरीएहिं सउज्जोएहिं नाणाविहपंचवण्णेहिं मणीहिं उवसोभिते, तंजहा—किण्हेहिं नीलेहिं लोहिएहिं हलिद्देहिं सुक्किलेहिं, अत्र 'आलिंगपुक्खरइ वे'ति आलिङ्ग्य वाद्यते इत्यालिङ्गो—मुरजवाद्यविशेषः तस्य पुष्करं—चर्म्मपुटं तत्किलात्यन्तसममिति तेनोपमा क्रियते, इति शब्द उपमाभूतवस्तुपरिसमाप्तिद्योतकः, वाशब्दः समुच्चये, एवं शेषपदान्यपि भावनीयानि, नवरं 'वगचम्मेइ वे'ति वृकचर्म्म, द्वीपी—चित्रकः, उरभ्रादिचर्म्मविशेषणमाह—'अणेगे'त्यादि, अनेकैः शङ्कुप्रमाणैः कीलसहस्रैर्महद्भिः कीलकैस्ताडितं प्रायो मध्यक्षामं भवति, तथारूपताडासम्भवात्, ततः शङ्कुग्रहणं, विततं—विततीकृतं ताडितमिति भावः, यथा अत्यन्तं बहुसमं भवति तथा तस्यापि यानविमानस्यान्तर्बहुसमो भूमिभागः, कथम्भूत इत्याह—'नाणाविहपंचवण्णेहिं मणीहिं उवसोभिए' नानाविधा—जातिभेदान्नानाप्रकारा ये पञ्चवर्णा मणयस्तैरुपशोभितः, कथम्भूतैरित्याह—'आवडे'त्यादि, आवर्त्तादीनि मणीनां लक्षणानि, तत्रावर्त्तः प्रतीतः, एकस्यावर्त्तस्य प्रत्यभिमुख आवर्त्तः प्रत्यावर्त्तः, श्रेणिः—तथाविधबिन्दुजालादेः पङ्क्तिः तस्याश्च श्रेणेर्या विनिर्गता अन्या श्रेणिः सा प्रश्रेणिः, स्वस्तिकः प्रतीतः, सौवस्तिकपुष्पमाणवौ लक्षणविशेषौ लोकात् प्रत्येतव्यौ, वर्द्धमानकं—शरावसम्पुटं, मत्स्याण्डकमकराण्डके प्रतीते, जारमारो—लक्षणविशेषो

लोकाद्भुतरूपाः, पुष्पावलिप्रधानाः सागरतरङ्गाः वासन्तीलताः पद्मलताश्च प्रतीताः, तासां भक्त्या—विच्छित्त्या चित्रम्—आलेख्यो येषु ते आवर्तप्रत्यावर्तश्रेणिप्रश्रेणिस्वस्तिकसौवस्तिकपुष्पमाणवकवर्धमानकमत्स्याण्डकमकराण्डकजारमारपुष्पावलिपद्मपत्रसागरतरङ्गवासन्तीलतापद्मलताभक्तिचित्रास्तैः, किंभूतं भवति ?—आवर्तादिलक्षणोपेतैः, तत्थ णं जे ते किण्हा मणी तेसि णं इमेयारूवे वण्णावासे पण्णत्ते, से जहानामए जीमूतेइ वा अंजणेइ वा खंजणेइ वा कज्जलेइ वा गवलेइ वा गवलगुलियाइ वा भमरेइ वा भमरावलीइ वा भमरपत्तंगसारेइ वा जंबूफलेइ वा अद्दारिट्ठेइ वा परपुट्ठेइ वा किण्हकेसरेइ वा आगासथिग्गलेइ वा किण्हासोएइ वा किण्हकणवीरेइ वा किण्हबंधुजीवेइ वा, भवे एयारूवे ?, णो इणट्ठे समट्ठे, ते णं किण्हा मणी इत्तो इट्ठतरा चेव कंततरा चेव मणुण्णतरगा चेव मणामतरा चेव वण्णेणं पण्णत्ता, अत्र अञ्जनं—सौवीराञ्जनं रत्नविशेषो वा खञ्जनं—दीपमल्लिकामलः गवलं—महिषशृङ्गं गवलगुलिका—महिषशृङ्गस्य निबिडतरसारनिर्वर्तिता गुटिका, भ्रमरपतङ्गसारः—भ्रमरपक्षान्तर्गतो विशिष्टकालिमोपचितः प्रदेशविशेषः, आर्द्रारिष्टः—कोमलकाकः आकाशथिग्गलं—शरदि मेघविनिर्मुक्तमाकाशखण्डं, तद्धि कृष्णमतीव प्रतिभातीति तदुपादानं, केसरो—बकुलः, केसरादयः पञ्चवर्णा भवन्तीति शेषवर्णव्युदासार्थं कृष्णग्रहणम्, इह केषाञ्चिदिष्टान्यपि किञ्चिदिष्टान्याभाति ततोऽकान्तताव्यवच्छेदार्थमुक्तं—कान्ततरका एव—अतिशयेन मनोहारिकालिमोपचिततया जीमूतादेः कमनीयतरका एव, अत एव मनोज्ञतरकाः, मनोज्ञतरमपि किञ्चिन्मध्यमं भवति ततः सर्वोत्कर्षप्रतिपादनार्थमाह—मनआपतरका एव, द्रष्टॄणां मनांसि आप्नुवन्ति—आस्वादयन्तीति मनआपाः, ततः प्रकर्षविवक्षायां तरप्प्रत्ययः, प्राकृतत्वाच्च पकारस्य मकारे मणामतरा इति, तत्थ णं

जे ते नीला मणी तेसि णं मणीणं इमे एयारूवे वण्णावासे पण्णत्ते, से जहानामए भिंगेइ वा भिंगपत्तेइ वा सुएइ वा सुयपिच्छेइ वा चासेइ वा चासपिच्छेइ वा नीलीइ वा नीलभेदेइ वा नीलीगुलियाइ वा सामागेइ वा उच्चंतगेइ वा हलहरवसणेइ वा मोरग्गीवाइ वा अयसीकुसुमेइ वा अंजणकेसियाकुसुमेइ वा नीलुप्पलेइ वा नीलासोगेइ वा नीलबंधुजीवगेइ वा नीलकणवीरेइ वा, भवे एयारूवे ?, नो इणट्ठे समट्ठे, ते णं नीला मणी एत्तो इट्ठतरा चेव कंततरा चेव मणुन्नतरा चेव मणामतरा चेव वन्नेणं पन्नत्ता, अत्र भृङ्गः कीटविशेषः, पक्ष्मलं भृङ्गपत्रं–तस्यैव भृङ्गाभिधानस्य कीटविशेषस्य पक्ष्म, उच्चंतगो दन्तरागः, हलधरो–बलदेवस्तस्य वसनं हलधरवसनं, तच्च किल नीलं भवति, सदैव तथा स्वभावतया हलधरस्य नीलवस्त्रपरिधानात्, अञ्जनकेशिका–वनस्पतिविशेषः। तत्थ णं जे ते लोहिया मणी तेसि णं मणीणं इमे एयारूवे वण्णावासे पण्णत्ते से जहानामए उरब्भरुहिरेइ वा ससगरुहिरेइ वा नररुहिरेइ वा वराहरुहिरेइ वा बालिंदगोपगेइ वा बालदिवागरेइ वा संझब्भरागेइ वा गुंजद्धरागेइ वा जासुमणकुसुमेइ वा किंसुयकुसुमेइ वा पारिजातकुसुमेइ वा जायहिंगुलए वा सिलप्पवालेइ वा पवालंकुरेइ वा लोहियक्खमणीइ वा लक्खारसगेइ वा किमिरागकंबलेइ वा चीणपिट्ठरासीइ वा रत्तुप्पलेइ वा रत्तासोगेइ वा रत्तकणवीरेइ वा रत्तबंधुजीवेइ वा, भवे एयारूवे ?, नो इणट्ठे समट्ठे, ते णं लोहिया मणी एत्तो इट्ठतरा चेव कंततरा चेव मणुण्णतरा च मणामतरा चेव वण्णेणं पण्णत्ता, उरभ्रादिरुधिराणि शेषरुधिरेभ्यो लोहितवर्णोत्कटानि भवन्तीति तेषामुपादानं, बालेन्द्रगोपकः–सद्योजात इन्द्रगोपकः, स हि प्रवृद्धः सन् ईषत्पाण्डुरक्तो भवति ततो बालग्रहणं, शिलाप्रवालं–प्रवालनामा रत्नविशेषः प्रवालाङ्कुरः–तस्यैव रत्नविशेषस्याङ्कुरः। तत्थ णं जे ते हालिद्दा मणी तेसि णं मणीणं

इमे एयारूवे वण्णावासे पण्णत्ते, से जहानामए चंपेइ वा चंपगच्छल्लीइ वा हलिद्दाइ वा हलिद्दभेएइ वा हलिद्दगुलियाइ वा हरियालेइ वा हरियालभेदेइ वा हरियालगुलियाइ वा चिकुरेइ वा चिकुरंगरागेइ वा वरकणगनिघसेइ वा वरपुरिसवसणेइ वा चंपगकुसुमेइ वा कोहंडियाकुसुमेइ वा तडउडाकुसुमेइ वा घोसाडियाकुसुमेइ वा सुवण्णजूहियाकुसुमेइ वा जूहियाकुसुमेइ वा सुहिरण्णकुसुमेइ वा कोरिंटवरमल्लदामेइ वा पीयासोगेइ वा पीयकणवीरेइ वा पीयबंधुजीवेइ वा, भवे एयारूवे ?, नो इणट्ठे समट्ठे, तेणं हालिद्दा मणी एत्तो इट्ठतरगा चेव कंततरा चेव मणुण्णतरा चेव मणामतरगा चेव वण्णेणं पण्णत्ता, चम्पकः—सुवर्णचम्पको वृक्षः, चिकुरो—रागद्रव्यविशेषः, चिकुराङ्गरागः—चिकुरसंयोगनिमित्तो वस्त्रादौ रागः (ग्रन्थाग्रम् ७०००) वरकनकनिघसो—वरकनकस्य कषपट्टके रेखा वरपुरुषो—वासुदेवस्तस्य वसनं वरपुरुषवसनं, तच्च किल पीतमेव भवतीति तदुपादानं, कूष्माण्डी—पुष्पफली तडवडा—आउली सुहिरण्यको—वनस्पतिविशेषः । तत्थ णं जे ते सुकिल्ला मणी तेसि णं मणीणं इमे एयारूवे वण्णावासे वण्णत्ते, से जहानामए अंकेइ वा संखेइ वा कुंदेइ वा दएइ वा हंसावलीइ वा चंदावलीइ वा सारइयबलाहएइ वा धंतधोयरुप्पपट्टेइ वा सालिपिट्ठरासीइ वा कुमुदपुप्फरासीइ वा सुक्कच्छेवाडीइ वा पेहुणमिंजियाइ वा बिसेइ वा मुणालियाइ वा गयदंते वा लवंगदलेइ वा सेयासोगेइ वा सेयकणवीरेइ वा सियबंधुजीवेइ वा, भवे एयारूवे ?, नो इणट्ठे समट्ठे, ते णं सुकिल्ला मणी एत्तो इट्ठतरगा चेव कंततरा चेव मणुण्णतरा चेव मणामतरा चेव, अत्र अङ्को—रत्नविशेषः बलाका—बिसकण्ठिका चन्द्रावली—तडागादिषु जलमध्यप्रतिबिम्बितचन्द्रपङ्क्तिः शारदिकबलाहकः—शरत्कालभावी मेघः 'धंतधोयरुप्पपट्टेइ वे' ति ध्मातः—अग्निसम्पर्केण निर्मलीकृतो धौतो—भूतिखरण्टितहस्तसम्मार्जं-

नेनातिनिर्म्मलीकृतो यो रूप्यपट्टो—रजतपत्रकं स ध्मातधौतरजतपट्टः, 'सुक्कच्छिवाडियाइ वे' ति छेवाडी नाम वल्लादिफलिका, सा च क्वचिद्देशे शुष्का सती अतीव शुक्ला भवति ततस्तदुपादानं, 'पिहुणमिंजियाइ वे' ति पेहुणं—मयूरपिच्छं तन्मध्यवर्त्तिनी मञ्जिका सा चातिशुक्लेति तदुपन्यासः, बिसं—पद्मिनीकन्दः मृणालिका—पद्मतन्तुः लवंगदलं—लवङ्गपत्रमिति। तेसि णं मणीणं इमे एयारूवे गंधे पण्णत्ते, से जहानामए कुट्ठपुडाण वा तगरपुडाण वा चोयपुडाण वा चंपापुडाण वा दमणापुडाण वा कुंकुमपुडाण वा चंदणपुडाण वा उसीरपुडाण वा मरुयापुडाण वा जाइपुडाण वा जूहियापुडाण वा मल्लियापुडाण वा ण्हाणमल्लिकापुडाण वा पाडलिपुडाण वा पडिवायंमि उब्भिज्जमाणाण वा कोट्टिज्जमाणाण वा उक्करिज्जमाणाण वा रुच्चिज्जमाणाण वा भाएज्जमाणाण वा भंडातो भंडं साहरिज्जमाणाण वा ओराला मणुण्णा मणहरा घाणमणनिव्वुइकरा सव्वतो समंता अभिनिस्सरंति, भवे एयारूवे?, नो इणट्ठे समट्ठे, तेसिं मणीणं इट्ठतरगाए चेव गंधे पण्णत्ते, अत्र कुष्ठं—गन्धद्रव्यं प्रतीतमेव चोओ—गन्धद्रव्यविशेषः स्नानमल्लिका—मल्लिकाविशेषः, एतेषां पुटानां प्रतिवाते—आघ्रायकविवक्षितपुरुषाणां प्रत्यभिमुखं वाते वाति सति उद्भिद्यमानानाम्—उद्घाट्यमानानां 'कोट्टिज्जमाणाण वा' इति इह पुटैः परिमितानि यानि कोष्ठादीनि गन्धद्रव्याणि तान्यपि परिमेये परिमाणोपचारात् कोष्ठपुटादीनीत्युच्यन्ते तेषां कुट्ट्यमानानाम्—उदूखलेन क्षुद्यमानानां 'रुंचिज्जमाणाण वा' इति श्लक्ष्णखण्डीक्रियमाणानामेतच्च विशेषणद्वयं कुष्ठादिद्रव्याणामवसेयं, तेषामेव प्रायः कुट्टनश्लक्ष्णखण्डीकरणसम्भवात्, न तु यूथिकादीनाम्, 'उक्करिज्जमाणाणं' क्षुरिकादिभिः कुष्ठादिपुटानां कुष्ठादिगन्धद्रव्याणां वा उत्कीर्यमानानां परिभाव्य (ज्य) मानानां—पार्श्ववर्त्तिभ्यो मनाक् मनाग्दीयमानानां, तथा भाण्डादेकस्मात् स्थानाद् भाण्डं—

भाजनान्तरं संह्रियमाणानां उदाराः—स्फाराः; ते चामनोज्ञा अपि स्युः अत आह—मनोज्ञा—मनोऽनुकूलाः, तच्च मनोज्ञत्वं कुत इत्याह—मनोहरा—मनो हरन्तीति—आत्मवशं नयन्तीति मनोहरा यतस्ततो मनोज्ञाः, तदपि मनोहरत्वं कुत इत्याह—घ्राणमनोनिर्वृतिकराः। तेसिं णं मणीणं इमे एयारूवे फासे पण्णत्ते, से जहानामए आईणेइ वा रुएइ वा बूरेइ वा नवणीएइ वा हंसतूलेइ वा सिरीसकुसुमनिच्चएइ वा वालकुसुमपत्तरासीइ वा, भवे एयारूवे?, नो इणट्ठे समट्ठे, ते णं मणी एत्तो इट्ठतरा चेव कंततरा चेव मणुण्णतरा चेव मणामतरा चेव फासेणं पण्णत्ता, तए णं से आभियोगे पालए तस्स दिव्वस्स जाणविमाणस्स बहुमज्झभागे एत्थ णं पेच्छाघरमंडवं विउव्वइ, अणेगखंभसयनिविट्ठं अब्भुग्गयसुकयवरवेइयातोरणवरवेइयसालंभजियागसुसिलिट्ठविसिट्ठलट्ठसंठिअपसत्थवेरुलियविमलखंभं नाणामणिकणगरयणखचिओज्जलबहुसमसुविभत्तदेसभागं ईहामिगउसभतुरगनरमगरविहगवालगकिन्नररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्तं कंचणमणिरयणथूभियागं नाणाविहपंचवण्णघंटापडागपरिमंडियग्गसिहरं चंचलं (चवलं) मरीचिकवयं विणिम्मुयंतं लाउल्लोइयमहियं गोसीसरत्तचंदणदद्दरदिन्नपंचंगुलितलं उवचियवंदणकलसं चंदणघडसुकयतोरणपडिदुवारदेसभागं आसत्तोसत्तविउलवट्टवग्घारियमल्लदामकलावं पंचवण्णसरससुरभिमुक्कपुप्फपुंजोवयारकलियं कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धुयाभिरामं सुगंधवरगंधगंधियं गंधवट्टिभूअं दिव्वतुडियसद्दसंपणइयं अच्छं सण्हं जाव पडिरूवं, अत्र 'अब्भुग्गये'त्यादि, अभ्युद्गता—अत्युत्कटा सुकृता—सुनिष्पादिता वरवेदिका तोरणानि वरवेदिकाशालभञ्जिकाश्च यत्र तदभ्युद्गतसुकृतवरवेदिकातोरणवरवेदिकाशालभञ्जिकाकं, तथा सुश्लिष्टा विशिष्टा लष्टसंस्थिता—मनोज्ञसंस्थानाः प्रशस्ता—वास्तुलक्षणोपेता वैडूर्यविमलस्तम्भा—वैडूर्यर-

मणीनां
गन्धः
स्पर्शश्च

त्नमया विमलाः स्तम्भा यत्र तत्सुश्लिष्टविशिष्टलष्टसंस्थितप्रशस्तवैडूर्यविमलस्तम्भं, नानामणिकनकरत्नानि खचितानि यत्र स नानामणिकनकरत्नखचितः, सुखादिदर्शनान्निष्ठान्तस्य परनिपातः, नानामणिकनकरत्नखचित उज्ज्वलो-निर्म्मलो बहुसमः-अत्यन्तसमः सुविभक्तो भूमिभागो यत्र तत्तथा, 'कंचणमणिरयणथूभियाग'मिति काञ्चनमणिरत्नानां काञ्चनमणिरत्नमयी स्तूपिका यत्र यत्तथा, नानाविधाभिः-मणिरत्नप्रकाराभिः पञ्चवर्णाभिः घण्टाभिः पताकाभिश्च परि-सामस्त्येन मण्डितमग्रशिखरं यस्य तत् नानाविधपञ्चवर्णघण्टापताकापरिमण्डिताग्रशिखरं, चपलं-चञ्चलं चिकचिकायमानत्वात्, मरीचिकवचं-किरणजालपरिक्षेपं विनिर्मुञ्चत् 'लाउल्लोइयमहियं' लाइयं नाम यत् भूमेर्गोमयादिना उपलेपनम् उल्लोइयं-कुड्यानां मालस्य च सेटिकादिभिः सम्मृष्टीकरणं लाउल्लोइयाभ्यामिव महितं-पूजितं लाउल्लोइयमहियं, तथा गोशीर्षेण-गोशीर्षनामकचन्दनेन सरसरक्तचन्दनेन च दर्दरेण-बहलेन चपेटाकारेण वा दत्ताः पञ्चाङ्गुलयस्तलाः-हस्तका यत्र तत् गोशीर्षचन्दनदर्दरदत्तपञ्चाङ्गुलितलं,तथा उपचिता-निवेशिताः चन्दनकलशा-मङ्गलकलशा यत्र तदुपचितचन्दनकलशं, तथा चन्दनघटैः-चन्दनकलशैः सुकृतानि-सुष्ठु कृतानि शोभितानीति तात्पर्यार्थः यानि तोरणानि तानि चन्दनघटसुकृतानि तोरणानि प्रतिद्वारदेशभागं-द्वारदेशभागे २ यत्र तत् चन्दनघटसुकृततोरणप्रतिद्वारदेशभागं, तथा आ-अवाङ् अधोभूमौ सक्त आसक्तः भूमौलग्न इत्यर्थः ऊर्ध्वं सक्त उत्सक्तः उल्लोचतले उपरिसम्बद्ध इत्यर्थः विपुलो-विस्तीर्णः वृत्तो-वर्त्तुलः वग्घारियः-प्रलम्बितो माल्यदामकलापः-पुष्पमालासमूहो यत्र तदासक्तोत्सक्तविपुलवृत्तप्रलम्बितमाल्यदामकलापः, तथा पञ्चवर्णेन सरसेन-सार्द्रेण सुरभिणा मुक्तेन-क्षिप्तेन पुष्पपुञ्जलक्षणेनोपचारेण- पूजया कलितं पञ्चवर्णसरससुरभिमुक्तपुष्पपुञ्जोपचारकलितं,

तथा दिव्यानां त्रुटितानाम्–आतोद्यानां वेणुवीणामृदङ्गादीनां ये शब्दास्तैः सम्प्रणदितं–सम्यक् श्रोत्रमनोहारितया प्रकर्षेण नदितं–शब्दवत् दिव्यत्रुटितशब्दसम्प्रणदितं, शेषं प्राग्वत्। तस्स णं पेच्छाघरमंडवस्स बहुसमरमणिज्जं भूमिभागं विउव्वइ, तस्स वण्णतो जाव मणीणं फासो, तस्स णं पेच्छाघरमंडवस्स उल्लोयं विउव्वइ पउमलयभत्तिचित्तं अच्छं सण्हं जाव पडिरूवं, तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभागे एत्थ णं महं वयरामयं अक्खाडगं विउव्वइ, तस्स णं अक्खाडगस्स बहुमज्झदेसभागे एत्थ णं महं एगं मणिपेढियं विउव्वइ अट्ठ जोयणाइं आयामविक्खंभेणं चत्तारि जोयणाइं बाहल्लेणं सव्वमणिमयं अच्छं जाव पडिरूवं, तीसे णं मणिपेढियाए उवरिं एत्थ णं महं एगं सीहासणं विउव्वइ, तस्स णं सीहासणस्स इमे एयारूवे वण्णावासे पण्णत्ते, तंजहा–तवणिज्जमया चक्कला रयणामया सीहा सोवण्णिया पाया मणिमयाइं पायसीसगाइं जंबूणयमयाइं गत्ताइं नाणामणिमए विच्चासणं सीहासणे ईहामिग(उसभ)तुरगनरमगरविहगवालगकिन्नररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्तं ससारसारोवचियमणिरयणपायवीढे अत्थरगमदुमसूरनवत्तयकुसंतलिच्चकेसरपच्चुत्थुयाभिरामे सुविरइयरयत्ताणे ओयवियखोमदुगुल्लपट्टपडिच्छायणे रत्तंसुयसंबुए सुरम्मे आइणगरुयबूरनवणीयतूलफासे पासाईए जाव पडिरूवे, एतत् सर्वं प्राग्वत्, तस्स णं सीहासणस्स उवरिं एत्थ णं महं एगं विजयदूसं विउव्वइ, संखंककुंददगरयअमिअमहिआफेणपुंजसंनिगासं सव्वरयणामयं अच्छं सण्हं जाव पडिरूवं, विजयदूष्यं नाम वस्त्रविशेषः, कथम्भूतमित्याह–'संखंके'त्यादि, शङ्खः प्रतीतः अङ्को–रत्नविशेषः कुन्देति–कुन्दकुसुमं दकरजं–उदककणा अमृतस्य–क्षीरोदधिजलस्य मथितस्य यः फेनपुंजो–डिण्डीरोत्करस्तत्संनिकाशं–तत्समप्रभं सर्वात्मना रत्नमयं सर्वरत्नमयं। तस्स णं सीहासणस्स उवरिं विजय-

प्रेक्षागृहमण्डपः सिंहासनं च

दूसस्स य बहुमज्झदेसभागे एत्थ णं वइरामयं अंकुसं विउव्वइ, तस्सिं च णं वइरामयंसि अंकुसंसि कुंभग्गं मुत्तदामं विउव्वइ
से णं कुंभग्गे मुत्तदामे अन्नेहिं चउहिं कुंभग्गेहिं मुत्तादामेहिं तदद्धुच्चत्तपमाणेहिं सव्वतो समंता संपरिक्खित्ते, ते णं दामा
तवणिज्जलंबूसगा सुवण्णपयरगमंडिया नाणामणिरयणविविहहारद्धहारउवसोभियसमुदाया ईसिं अन्नमन्नमसंपत्ता पुव्वावर-
दाहिणुत्तरागएहिं वाएहिं मंदायं २ इज्जमाणाणं इज्जमाणाणं वइज्जमाणाणं २ पलंबमाणा णं २ पझंझमाणाणं २ ओराले णं मणु-
ण्णेणं मणहरेणं कण्णमणनिव्वुइकरेणं सद्देणं ते पएसे सव्वतो समंता आपूरेमाणा २ सिरीए अतीव उवसोभेमाणा २ चिट्ठंति,
अत्र 'अंकुसं विउव्वइ'त्ति अङ्कुशाकारं मुक्तादामावलम्बनाश्रयं विकुर्वति, तस्मिंश्च वज्रमये अङ्कुशे कुम्भाग्रं—मगधदेशप्रसिद्धकु-
म्भपरिमाणं मुक्तामयं मुक्तादामं विकुर्वति, 'ते णं दामा' इत्यादि तानि पञ्चापि दामानि तपनीयस्य—तपनीयमयो लम्बू-
सको—मण्डलविशेषरूपो भागो येषां प्रलम्बमानानां तानि तथा, तथा नानामणिरत्नानां—नानामणिरत्नमयैर्विविधैः—विचित्रै-
र्हारैरर्द्धहारैश्च उपशोभितः—सामस्त्येन शोभितः समुदायो येषां तानि तथा, तथा ईषत्—मनागन्योऽन्यं—परस्पर-
मसम्प्राप्तानि—असंलग्नानि पूर्वापरदक्षिणोत्तरागतैर्वातैर्मन्दायं मंदायमिति—मन्दकं २ मन्दं मन्दमित्यर्थः, 'एज्जमानानि'
२ 'भृशाभीक्ष्णाविच्छेदे द्विः प्राक्तमवादे'रित्यविच्छेदे द्विर्वचनं यथा पचति पचतीत्यर्थः, तथा व्येज्यमानानि, कम्प-
नवशादेव घर्षः, इतस्ततो मनाक् चलनेन प्रलम्बमानानि २, ततः परस्परसम्पर्कवशतः 'पझंझमाणा २' इति शब्दायमानानि
२, शेषं सुगमम् । तए णं से आभियोगे पालए देवे तस्स सीहासणस्स अवरुत्तरेणं उत्तरेणं उत्तरपुरत्थिमेणं एत्थ णं सक्कस्स
देविंदस्स देवरण्णो चउरासीइए सामाणियसाहस्सीणं चउरासीइसहस्साइं भद्दासणाइं विउव्वइ, तस्स णं सीहासणस्स

सू. ३१

पुरत्थिमेणं अट्ठण्हं अग्गमहिसीणं अट्ठ भद्दासणाइं विउव्वइ, तस्स णं सीहासणस्स दाहिणपुरत्थिमेणं एत्थ णं सक्कस्स देविंदस्स देवरण्णो अब्भिंतरपरिसाए दुवालसण्हं देवसाहस्सीणं दुवालस भद्दासणसाहस्सीतो विउव्वइ, तस्स णं सीहासणस्स दाहिणेणं एत्थ णं सक्कस्स मज्झिमपरिसाए चउद्दसण्हं देवसाहस्सीणं चउद्दस भद्दासणसाहस्सीतो विउव्वइ, तस्स णं सीहासणस्स दाहिणपच्चत्थिमेणं सक्कस्स बाहिरपरिसाए सोलसण्हं देवसाहस्सीणं सोलस भद्दासणसाहस्सीतो विउव्वइ, तस्स णं सीहासणस्स पच्चत्थिमेणं सत्तण्हं अणियाहिवईणं सत्त भद्दासणे विउव्वइ, तस्स णं सीहासणस्स चउद्दिसिं एत्थ णं सक्कस्स देविंदस्स देवरण्णो चउण्हं चउरासीणं आयरक्खदेवसाहस्सीणं चत्तारि चउरासीतो भद्दासणसाहस्सीतो विउव्वइ, तंजहा–पुरत्थिमेणं चउरासीइं भद्दासणसाहस्सीतो विउव्वइ, दाहिणेणं चउरासीइं भद्दासणसाहस्सीओ विउव्वइ, पच्चत्थिमेणं चउरासीइं भद्दासणसाहस्सीतो विउव्वइ, उत्तरेणं चउरासीइं भद्दासणसाहस्सीतो विउव्वइ, तस्स णं दिव्वस्स जाणविमाणस्स इमे एयारूवे वण्णावासे पण्णत्ते, से जहा नामए अचिरोग्गयस्स वा हेमंतियबालसूरियस्स खाइलिंगालाण वा रत्तिं पज्जलियाणं जासुमणवणस्स वा किंसुयवणस्स वा परिजायवणस्स वा सव्वतो समंता संकुसुमियस्स, भवे एयारूवे ?, नो इणट्ठे समट्ठे, तस्स णं दिव्वस्स जाणविमाणस्स इत्तो इट्ठतरागे चेव कंततरागे चेव मणुण्णतरागे चेव मणामतरागे चेव वण्णे पण्णत्ते, गंधो फासो य जहा मणीणं, ततो तेण से आभियोगे पालए देवे तं दिव्वं जाणविमाणं विउव्वित्ता जेणेव सक्के देविंदे देवराया तेणेव उवागच्छइ उवागच्छेत्ता सक्कं देविंदं देवरायं करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु जएणं विजएणं वद्धावेति वद्धावेत्ता तमाणत्तियं पच्च-

प्पिणइ। तए णं से सक्के देविंदे देवराया आभिओगस्स अंतिए एयमट्ठं सोच्चा हट्ठतुट्ठ जाव विसप्पमाणहियए दिव्वं जिणिंदाभिगमणजोग्गं उत्तरवेउव्वियरूवं वेउव्वित्ता अट्ठहिं अग्गमहिसीहिं सपरिवाराहिं दोहिं अणीएहिं, तंजहा—नट्टाणीएणं गंधव्वाणीएण य, सद्धिं संपरिवुडे तं दिव्वं जाणविमाणं अणुपयाहिणीकरेमाणे पुरत्थिमिल्लेणं तिसोवाणपडिरूवेणं दुरूहइ दुरूहित्ता जेणेव सीहासणे तेणेव उवागच्छइ उवागच्छित्ता सीहासणवरगते पुरत्थाभिमुहे सन्निसन्ने, तते णं तस्स सक्कस्स देविंदस्स देवरण्णो चउरासीई सामाणियसाहस्सीतो तं दिव्वं जाणविमाणं अणुपयाहिणीकरेमाणा उत्तरिल्लेणं तिसोवाणपडिरूवेणं दुरूहंति दुरूहित्ता पत्तेयं २ पुव्वन्नत्थेसु भद्दासणेसु निसीयंति, अवसेसा देवा देवीतो य तं दिव्वं जाणविमाणं अणुपयाहिणीकरेमाणा दाहिणेणं तिसोवाणपडिरूवेणं दुरूहंति, दुरूहित्ता पत्तेयं पत्तेयं पुव्वन्नत्थेसु भद्दासणेसु निसीयंति, तए णं तस्स सक्कस्स देविंदस्स देवरण्णो तं दिव्वं जाणविमाणं दुरूढस्स समाणस्स अट्ठट्ठमंगलगा पुरतो अहाणुपुव्वीए संपत्थिया, तंजहा—सोत्थियसिरिवच्छजाव दप्पणो, तयणंतरं च णं पुण्णकलसभिंगारदिव्वायवत्तपडागा सचामरा दंसणरइया आलोयदरिसणिज्जा वाउद्धुयविजयवेजयंती य ऊसिया गयणतलमणुलिहंती पुरतो अहाणुपुव्वीए संपत्थिया, अस्या व्याख्या—पूर्णकलशभृङ्गारदिव्यातपत्रपताकाः सचामराः, कथम्भूता इत्याह—दर्शनरतिकाः, पुनः किंविशिष्टा इत्याह—आलोके दर्शनीया—द्रष्टुं योग्या न पुनरत्युच्चा इत्यालोकदर्शनीयाः, तथा वातोद्धूता विजयसूचिका वैजयन्ती विजयवैजयन्ती च उत्सृता—ऊर्द्धीकृता गगनतलमनुलिखन्ती— अभिलङ्घयन्ती पुरतो यथानुपूर्व्या सम्प्रस्थिता। तयणंतरं च णं वेरुलियभिसंतविमलदंडं पलंबकोरंटमल्लदामोवसोभियं चंदमंडलनिभं समूसियं विमलमायवत्तं पवरसी-

हासणं च मणिरयणभत्तिचित्तं सपायपीढं पाउयाजोगसमाउत्तं बहुकिंकरामरपरिग्गहियं पुरतो अहाणुपुवीए संपत्थियं, एतत्पाठसिद्धं । तयणंतरं च णं वइरामयवट्टलट्ठसंठियसिलिट्ठपरिघट्ठ(मट्ठ)सुपइट्ठिए अणेग[प]वरपंचवण्णकुडभीसहस्सपरिमंडियाभिरामे वाउद्धुयविजयवेजयंतीपडागाछत्तातिच्छत्तकलिते तुंगे गगणतलमभिलंघमाणसिहरे जोयणसहस्समूसिए महइमहालए महिंदज्झए पुरतो अहाणुपुवीए संपत्थिए, अत्र वज्रमयो—वज्ररत्नात्मको वृत्तो–वर्त्तुलः लष्टसंस्थितो–मनोज्ञसंस्थानः श्लिष्टः–सुसंहतावयवः परिघृष्ट इव खरशानया पाषाणप्रतिमेव परिघृष्टः मृष्ट इव–मसृणीकृत इव सुकुमारशानया पाषाणप्रतिमावत् मृष्टः सुप्रतिष्ठितो–यत्र मुक्तस्तत्र सुनिश्चलः, तत एषां पदानां पदद्वयपदद्वयमीलनेन विशेषणसमासः, यथाऽनेकैर्वरैः–प्रधानैः पञ्चवर्णैः कुडभीसहस्रैः–लघुपताकासहस्रैः परिमण्डितः सन् अभिरामोऽनेकवरपञ्चवर्णकुडभीसहस्रपरिमण्डिताभिरामः, तथा वातोद्धूता विजयसूचकवैजयन्तीरूपाः पताकाश्छत्रातिछत्राणि च तैः कलितः, शेषं सुगमं । तयणंतरं च णं सुरूवनेवत्थहव्वपरियच्छिया सुसज्जा सव्वालंकारविभूसिया महया भडचडगरपहकरेणं पंच अणीया पंच अणीयाहिवइणो पुरतो संपत्थिया, अत्र सुरूपं नेपथ्यं हव्वं–शीघ्रं परिकक्षितं—परिगृहीतं यैस्ते तथा, सुष्ठु–अतिशयेन सज्जाः—स्वसामग्रीयुक्ततया प्रगुणीभूता महता भटचटकरपहकरेण–चटकरप्रधानभटवृन्देन, शेषं प्रतीतम् । तए णं आभियोगा देवा देवीतो य सएहिं सएहिं रूवेहिं सएहिं सएहिं विहवेहिं सएहिं २ निज्जोगेहिं पुरतो अहाणुपुवीए संपत्थिया, तयणंतरं च णं बहवे सोहम्मवासिणो देवा य देवीतो य सवड्ढीए सवज्जुईए जाव संखपणवपडहभेरिझल्लरिजावनाइयरवेणं सक्कं देविंदं देवरायं पुरतो पासतो मग्गतो अणुगच्छंति, तते णं से सक्के देविंदे देवराया पंचाणीयपरिक्खि-

त्तेणं वइरामयलट्ठसंठियजावजोयणसहस्समूसिएण महइमहालएणं महिंदज्झएणं पुरतो पकड्ढिज्जमाणेणं पकड्ढिज्जमाणेणं चउरासीए सामाणियसाहस्सीहिं जाव चउहिं चउरासीहिं आयरक्खदेवसाहस्सीहिं अन्नेहिं बहूहिं सोहम्मकप्पवासीहिं वेमाणिएहिं देवेहिं देवीहि य सद्धिं संपरिवुडे सबड्ढीए सबजुईए जाव संखपणवजावनादितरवेणं सोहम्मकप्पस्स मज्झंमज्झेणं तं दिवं देवड्ढिं दिवं देवजुइं दिवं देवाणुभावं उवदंसेमाणे पडिजागरेमाणे जेणेव सोहम्मस्स कप्पस्स उत्तरिल्ले निज्जाणमग्गे तेणेव उवागच्छइ उवागच्छित्ता जोयणसयसाहस्सिएहिं विग्गहेहिं ओवयमाणे ताए उक्किट्ठाए जाव दिव्वाए देवगतीए तिरियमसंखेज्जाणं दीवसमुद्दाणं मज्झंमज्झेणं विइवयमाणे विइवयमाणे जेणेव नंदीसरे दीवे जेणेव पुरत्थिमिल्ले रइकरपवए तेणेव उवागच्छइ उवागच्छित्ता तं दिवं देवड्ढिं जाव दिवं देवाणुभावं पडिसाहरेमाणे जेणेव जंबुद्दीवे दीवे जेणेव भारहे वासे जेणेव भगवतो आदितित्थगरस्स जम्मणभवणे तेणेव उवागच्छइ उवागच्छित्ता भगवतो आदितित्थयरस्स जम्मणभवणं तेणं दिवेणं जाणविमाणेणं तिक्खुत्तो आयाहिणपयाहिणं करेइ, करेत्ता भगवतो आदितित्थगरस्स जम्मणभवणस्स उत्तरपुरत्थिमिल्ले दिसीभागे चउरंगुलमसंपत्तं धरणितलंसि तं दिवं जाणविमाणं ठवेइ ठवित्ता अग्गमहिसीहिं दोहिं य अणीएहिं, तंजहा—गंधवाणीएण नट्टाणीएण य, सद्धिं संपरिवुडे ततो दिवातो जाणविमाणातो पुरत्थिमिल्लेणं तिसोवाणपडिरूवेणं पच्चोरुहइ, तए णं सक्कस्स देविंदस्स देवरण्णो चउरासीए सामाणियसाहस्सीतो ततो दिवातो जाणविमाणातो उत्तरिल्लेणं तिसोवाणपडिरूवेणं पच्चोरुहंति, अवसेसा देवा य देवीतो य ततो दिवातो जाणविमाणातो दाहिणिल्लेणं तिसोवाणपडिरूवेणं पच्चोरुहंति, ततेणं सक्के देविंदे देवराया चउरासीए सामाणियसाहस्सीहिं जाव चउहिं

चउरासीहिं आयरक्खदेवसाहस्सीहिं अन्नेहिं बहूहिं सोहम्मकप्पवासीहिं वेमाणिएहिं देवेहिं देवीहि य सद्धिं संपरिवुडे सवड्ढीए सवजुईए जाव संखपणवपडहभेरि जाव नादितरवेणं जेणेव भयवं तित्थयरे तित्थगरमाया य तेणेव उवागच्छइ उवागच्छित्ता आलोए पणामं करेइ करेत्ता भयवं तित्थयरं तित्थयरमायरं च तिक्खुत्तो आयाहिणपयाहिणं करेइ करेत्ता करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी–नमोऽत्थु ते रयणकुच्छिधारिए !, एवं जहा दिसाकुमारीतो जाव धन्नासि सपुण्णासि तं कयत्थे !, अहण्णं देवाणुप्पिए ! सक्के नाम देविंदे देवराया भगवतो तित्थगरस्स जम्मणमहिमं करेस्सामि, तं णं तुब्भेहिं न भाइयवंतिकट्टु ओसोयणिं दलइ २ त्ता तित्थयरपडिरूवगं विउवइ, विउवित्ता तित्थयरमाऊए पासे ठवेइ, ठवेत्ता पंच सक्के विउवइ, एगे सक्के भगवं आदितित्थयरं करयलपुडेणं गेण्हइ, एगे सक्के पिट्ठतो आयवत्तं धरेइ, दुवे सक्का उभतो पासिं चामरुक्खेवं करेंति, एगे सक्के पुरतो वज्जपाणी वहइ, 'गहियजिणिंदो एक्को दोहि उ पासेहिं चामरा गहिया । धवलायवत्तकलितो एक्को एक्को य वज्जधरो ॥१॥ तए णं से सक्के देविंदे देवराया अण्णेहि य बहूहिं भवणवइवाणमंतरजोइसवेमाणिएहिं देवेहिं देवीहि य सद्धिं संपरिवुडे सवड्ढीए सवजुईए जाव संखपणवपडह जाव नादितरवेणं ताए उक्किट्ठाए जाव दिवाए देवगईए जेणेव मंदरे पवए जेणेव पंडगवणे जेणेव अभिसेयसिला जेणेव आभिसेए सीहासणे तेणेव उवागच्छइ उवागच्छित्ता सीहासणवरगए पुरत्थाभिमुहे संनिसन्ने । तेणं कालेणं तेणं समएणं ईसाणे देविंदे देवराया सूलपाणी वसभवाहणे उत्तरड्ढलोगाहिवई अट्ठावीसविमाणसयसहस्साधिवई अरयंबरवत्थधरे एवं जहा सक्के, नवरं इमं नाणत्तं–महाघोसा घंटा लहुपरक्कमे पायत्ताणीयाहिवई, पुप्फतो विमाणकारी, दक्खिणा निज्जा-

णभूमी, उत्तरपुरत्थिमिल्ले रइकरगपव्वते, मंदरे समोसरितो जाव पज्जुवासइ, एवमवसेसावि इंदा भाणियव्वा जाव अच्चुतो, इमं नाणत्तं–चउरासीती १ असीती २ बावत्तरी य ३ सत्तरी य ४ सट्ठी ५ पण्णा ६ चत्तालीसा ७ तीसा ८ वीसा ९ दस सहस्सा १० एते सामाणिया, बत्तीस अट्ठावीसा बारस अट्ठ चउरो सयसहस्सा, पण्णा चत्तालीसा छच्च सहस्सा सहसारे, आणयपाणयकप्पे चत्तारि सया, आरणच्चुए तिण्णि सया, एए विमाणा, इमे जाणविमाणकारी–पालए १ पुप्फए २ सोमणसे ३ सिरिवच्छे ४ नंदियावत्ते ५ कामगमे ६ पीइगमे ७ मणोरमे ८ विमले ९ सव्वतोभद्दे १०, सोहम्मगाणं सणंकुमाराणं बंभलोगाणं महासुक्काणं आणय[आरण]गाणं सुघोसा घंटा हरिणेगमेसी पायत्ताणीयाहिवती उत्तरिल्ला निज्जाणभूमी दाहिणपुरत्थिमिल्ले रइकरगपव्वते, ईसाणगाणं माहिंदलंतगसहस्सार[पाणय]अच्चुयइंदाणं महाघोसा घंटा लहुपरक्कमे पायत्ताणीयाधिवती दक्खिणिल्ले निज्जाणमग्गे उत्तरपुरत्थिमिल्ले रतिकरगपव्वते, सक्कस्स अब्भिंतरपरिसाए दुवालस देवसहस्सा मज्झिमपरिसाए चोद्दस देवसहस्सा बाहिरपरिसाए सोलस देवसहस्सा, ईसाणस्स अब्भिंतरपरिसाए दस देवसहस्सा मज्झिमपरिसाए बारस देवसहस्सा बाहिरिआए परिसाए चोद्दस देवसहस्सा, सणंकुमारस्स अब्भिंतरपरिसाए अट्ठ देवसहस्सा मज्झिमिआए परिसाए दस देवसहस्सा बाहिरिआए परिसाए बारस देवसहस्सा, माहिंदस्स देविंदस्स अब्भिंतरिआए परिसाए छ देवसहस्सा मज्झिमियाए परिसाए अट्ठ देवसहस्सा बाहिरपरिसाए दस देवसहस्सा, बंभलोगस्स अब्भिंतरियाए परिसाए चत्तारि देवसहस्सा मज्झिमपरिसाए छ देवसहस्सा बाहिरपरिसाए अट्ठ देवसहस्सा, लंतगस्स अब्भिंतरपरिसाए दो देवसहस्सा मज्झिमपरिसाए चत्तारि देवसहस्सा बाहिरपरिसाए छ देवसहस्सा, महासुक्कस्स अब्भि-

तरपरिसाए एगा देवसाहस्सी मज्झिमपरिसाए दो देवसाहस्सीतो बाहिरपरिसाए चत्तारि देवसाहस्सीतो, सहस्सारस्स अब्भिंतरपरिसाए पंच देवसया मज्झिमपरिसाए एगा देवसाहस्सी बाहिरपरिसाए दो देवसाहस्सीतो, आणयपाणयेंदस्स अब्भिंतरपरिसाए अड्ढाइज्जा देवसया मज्झिमपरिसाए पंच देवसया बाहिरपरिसाए एगा देवसाहस्सी, आरणअच्चुइंदस्स अब्भिंतरपरिसाए पणवीसं देवसयं मज्झिमपरिसाए अड्ढाइज्जा देवसया बाहिरपरिसाए पंच देवसया। आयरक्खा सव्वेसिं सामाणियचउग्गुणा, जाणविमाणा सव्वेसिं जोयणसयसहस्सविच्छिण्णा उच्चत्तेण सविमाणप्पमाणा, महिंदज्झया सव्वेसिं जोयणसाहस्सिया, सक्कवज्जा मंदरे समोयरंति जाव पज्जुवासंति। तेणं कालेणं तेणं समएणं चमरे असुरिंदे असुरराया चमरचंचाए रायहाणीए सभाए सुहम्माए चमरंसि सीहासणंसि चउसट्ठीए सामाणियसाहस्सीहिं तायत्तीसाए तायत्तीसगेहिं चउहिं लोगपालेहिं पंचहिं अग्गमहिसीहिं सपरिवाराहिं तीहिं परिसाहिं सत्तहिं अणीएहिं सत्तहिं अणीआहिवईहिं चउहिं चउसट्ठीहिं आयरक्खदेवसाहस्सीहिं अन्नेहि य चमरचंचारायहाणिवत्थवेहिं बहूहिं असुरकुमारेहिं देवेहिं देवीहि य एवं जहा सक्के, नवरं इमं नाणत्तं– दुमो पायत्ताणीयाहिवई ओघस्सरा घंटा विमाणं पण्णासं जोयणसहस्साइं महिंदज्झओ पंचजोयणसया विमाणकारी आभियोगे देवे, अवसिट्ठं तं चेव जाव मंदरे समोसरइ। तेणं कालेणं तेणं समएणं बली असुरिंदे असुरराया बलिचंचाए रायहाणीए सभाए सुहम्माए बलिंसि सीहासणंसि सट्ठीए सामाणियसाहस्सीहिं तायत्तीसाए तायत्तीसगेहिं चउहिं लोगपालेहिं पंचहिं अग्गमहिसीहिं सपरिवाराहिं तीहिं परिसाहिं सत्तहिं अणिएहिं सत्तहिं अणियाहिवईहिं चउहिं सट्ठीहिं आयरक्खदेवसाहस्सीहिं, सेसं जहा चमरस्स, नवरं महादुमो पायत्ताणीयाहिवई महा-

तेणं कालेणं तेणं समएणं धरणे नागिंदे नागराया तहेव
ओघस्सरा घंटा, सेसं तं चेव मंदरे समोसरइ, पज्जुवासइ । तेणं कालेणं तेणं समएणं धरणे नागिंदे नागराया तहेव ... पायत्ताणीयाहिवई विमाणं
नाणत्तं छ सामाणियसाहस्सीते छ अग्गमहिसीतो चउग्गुणा आयरक्खा मेघस्सरा घंटा भद्दसेणो पायत्ताणीयाहिवई विमाणं
पणवीसं जोयणसहस्साइं महिंदज्झतो अड्ढाइज्जाइं सयाइं, एवं असुरिंदवज्जियाणं सव्वेसिं भवणवासिइंदाणं, नवरं इमं नाणत्तं–
असुराणं ओघस्सरा घंटा नागाणं मेघस्सरा सुवण्णाणं हंसस्सरा विज्जूणं कोंचस्सरा अग्गीणं मंजुस्सरा दिसाणं मंजुघोसा
उयहीणं सुसरा दीवाणं मधुरसरा वाऊणं मंदस्सरा थणियाणं नंदिघोसा, तथा–चउसट्ठी सट्ठी खलु छच्च सहस्सा उ असु-
रवज्जाणं, दाहिणिल्लाणं पायत्ताणियाहिवई भद्दसेणो, उत्तरिल्लाणं पायत्ताणीयाहिवई दक्खो, चमरस्स अब्भिंतरपरिसाए
चउवीसं देवसहस्सा मज्झिमियाए अट्ठावीसं देवसहस्सा बाहिरियाए बत्तीसं देवसहस्सा, बलिस्स अब्भिंतरियाए परि-
साए वीसं देवसहस्सा मज्झिमियाए चउवीसं देवसहस्सा बाहिरियाए अट्ठवीसं देवसहस्सा, धरणस्स अब्भिंतरियाए
परिसाए सट्ठी देवसहस्सा मज्झिमियाए सत्तरिं देवसहस्सा बहिरियाए असीइ देवसहस्सा, भूयाणंदस्स अब्भिंतरियाए
परिसाएं पण्णासं देवसहस्सा मज्झिमियाए सट्ठी देवसहस्सा बाहिरियाए सत्तरी देवसहस्सा, एवं जहा धरणस्स तहा
सव्वेसिं दाहिणिल्लिदाणं, जहा भूयाणंदस्स तहा सव्वेसिं उत्तरल्लिदाणं । तेणं कालेणं तेणं समएणं काले नामं पिसाइंदे पि-
सायराया चउहिं सामाणियसाहस्सीहिं चउहिं अग्गमहिसीहिं सपरिवाराहिं तीहिं परिसाहिं सत्तहिं अणीएहिं सत्तहिं
अणियाहिवईहिं सोलसहिं आयरक्खदेवसाहस्सीहिं तं चेव एवं सव्वेसिं, नवरं महिंदज्झया पणुवीसं जोयणसया, घंटा
दाहिणाणं मंजुस्सरा उत्तरिल्लाणं मंजुघोसा, पायत्ताणीयाहिवई विमाणकारी य आभियोगा देवा, सव्वेसिं अब्भिंतरपरि-

साए अट्ठ देवसहस्सा मज्झिमपरिसाए दस देवसहस्सा बाहिरियाए दुवालस देवसहस्सा, सव्वे मंदरे समोसरंति, जाव पज्जुवासंति। तेणं कालेणं तेणं समएणं जोइसिंदा जोइसरायाणो पत्तेयं पत्तेयं चउहिं सामाणियसाहस्सीहिं चउहिं अग्गमहिसीहिं तीहिं परिसाहिं सत्तहिं अणिएहिं सत्तहिं अणियाहिवईहिं सोलसहिं आयरक्खदेवसाहस्सीहिं एवं जहा वाणमंतरा एवं चंदसूरावि, नवरं दाहिणिल्लाणं चंदसूराणं सुसराओ घंटाओ, उत्तरिल्लणं सूसरनिघोसाओ घंटाओ, परिसापरिमाणं जहा वाणमंतराणं, सव्वे मंदरे समोसरंति जाव पज्जुवासंति। तेणं कालेणं तेणं समएणं अच्चुए देविंदे देवराया महं देवाहिवे आभियोगं देवं सद्दावेइ सद्दावेत्ता एवं वयासी—खिप्पामेव भो! महत्थं महग्घं महरिहं विउलं तित्थयराभिसेयं उवट्ठवेह, तए णं ते हट्ठतुट्ठजावविणएणं पडिसुणित्ता उत्तरपुरत्थिमं दिसीभागं अवक्कमंति अवक्कमित्ता वउव्वियसमुग्घाएणं समोहणइ समोहणित्ता संखिज्जाइं जोयणाइं दंडं निसरइ तंजहा—रयणाणं वयराणं जाव रिट्ठाणं, अहाबायरे पोग्गले परिसाडंति परिसाडित्ता अहासुहुमे पोग्गले परियायंति परियायित्ता दोच्चंपि वेउव्वियसमुग्घाएणं समोहणंति समोहणित्ता अट्ठसहस्सं सुवण्णमयाणं कलसाणं १, अट्ठसहस्सं रुप्पमयाणं कलसाणं २ अट्ठसहस्सं मणिमयाणं कलसाणं ३ अट्ठसहस्सं सुवण्णरुप्पमयाणं कलसाणं ४ अट्ठसहस्सं सुवण्णमणिमयाणं कलसाणं ५ अट्ठसहस्सं रुप्पमणिमयाणं कलसाणं ६ अट्ठसहस्सं सुवण्णरुप्पमणिमयाणं कलसाणं ७ अट्ठसहस्सं भोमेज्जाणं कलसाणं ८, अट्ठसहस्सं चंदणकलसाणं ९ अट्ठसहस्सं भिंगाराणं १० अट्ठसहस्सं आयंसाणं ११ अट्ठसहस्सं थालाणं १२ अट्ठसहस्सं पाईणं १३ अट्ठसहस्सं सुपइट्ठाणं १४ अट्ठसहस्सं रयणकरंडगाणं १५ अट्ठसहस्सं वातकरगाणं १६ वातकरका नाम बहिश्चित्रिता उपरि गवच्छिता मध्ये जलशून्याः करकाः, अट्ठस-

हस्सं पुप्फचंगेरीणं १७ अट्ठसहस्सं मल्लचंगेरीणं १८ अट्ठसहस्सं चुण्णचंगेरीणं १९ अट्ठसहस्सं वत्थचंगेरीणं २० अट्ठसहस्सं आभरणचंगेरीणं २१ अट्ठसहस्सं लोमहत्थगचंगेरीणं २२ अट्ठसहस्सं पुप्फपडलगाणं २३ एवं जाव अट्ठसहस्सं लोमहत्थगपडलगाणं २४ अट्ठसहस्सं सीहासणाणं २५ अट्ठसहस्सं छत्ताणं २६ अट्ठसहस्सं चामरगाणं २७ अट्ठसहस्सं तेल्लसमुग्गाणं २८ एवं जाव अट्ठसहस्सं अंजणसमुग्गाणं, एत्थ संगहणिगाहा—"तेल्ले कोट्ठ समुग्गे पत्ते चोए य तगर एला य। हरियाले हिंगुलए मणोसिला अंजणसमुग्गा ॥ १ ॥ अट्ठसहस्सं धूवकडुच्छुयाणं विउव्वइ, विउव्वित्ता साभावियवेउव्विए य कलसे जाव धूवकडुच्छुए गेण्हंति गेण्हेत्ता जेणेव खीरोदे समुद्दे तेणेव उवागच्छंति उवागच्छित्ता खीरोदगं गेण्हंति गेण्हेत्ता जाइं तत्थ उप्पलाइं पउमाइं सुभगाइं सोगंधियाइं पोंडरीयाइं महापोंडरीयाइं सयपत्ताइं सहस्सपत्ताइं ताइं गेण्हंति गेण्हेत्ता जेणेव पुक्खरोदे समुद्दे तेणेव उवागच्छंति उवागच्छित्ता पुक्खरोदगं गेण्हंति गेण्हेत्ता जाइं तत्थ उप्पलाइं जाव सहस्सपत्ताइं ताइं गिण्हंति गिण्हित्ता जेणेव समयखेत्ते जेणेव भरहेरवयवासाइं जेणेव मागहवरदामप्पभासाइं तित्थाइं तेणेव उवागच्छंति उवागच्छित्ता तित्थोदगं गेण्हंति तित्थोदगं गेण्हित्ता तित्थमट्टियं गेण्हंति गेण्हेत्ता जेणेव गंगासिंधुरत्तारत्तवतीतो य महानदीतो तेणेव उवागच्छंति उवागच्छित्ता सलिलोदगं गेण्हंति, नद्युदकं गृह्णन्तीत्यर्थः, गेण्हेत्ता उभयोतडमट्टियं गेण्हंति गेण्हेत्ता जेणेव चुल्लहिमवंतसिहरी तेणेव उवागच्छंति उवागच्छित्ता सव्वतूवरे सव्वपुप्फे सव्वगंधे सव्वमल्ले सव्वोसहिसिद्धत्थए य गेण्हंति गिण्हित्ता जेणेव पउमद्दहपुंडरीयद्दहातो तेणेव उवागच्छंति, उवागच्छित्ता दहोदयं गेण्हंति २ जाइं तत्थ उप्पलाइं जाव जाइं तत्थ सहस्सपत्ताइं ताइं गेण्हंति गेण्हेत्ता जेणेव हेम-

रोहियारोहियंससुवण्णकूलरुप्पकूलातो महानदीतो तेणेव उवागच्छंति २ सलिलोदगं
वएरण्णवयाइं वासाइं जेणेव सद्दावइवियडावइ वट्टवेयड्ढा तेणेव उवागच्छंति उवागच्छित्ता सव-
गेण्हंति २ उभतोतडमट्टियं गेण्हंति गेण्हेत्ता जेणेव महाहिमवंतरुप्पिवासहरपव्वया तेणेव उवागच्छंति २
तूवरे सव्वपुप्फे जाव सव्वोसहिसिद्धत्थए गेण्हंति गेण्हेत्ता जेणेव महापउमद्दहमहापोंडरीयद्दहा तेणेव उवागच्छंति २ दहोदगं
सव्वतूवरे जाव सव्वोसहिसिद्धत्थए गेण्हंति गेण्हेत्ता जेणेव हरिवासगरम्मगवासाइं जेणेव
गेण्हंति गेण्हेत्ता जाइं तत्थ उप्पलाइं जाव सहस्सपत्ताइं ताइं गेण्हंति गेण्हेत्ता जेणेव
हरिहरिकांतानरनारीकंतातो महानदीतो तेणेव उवागच्छंति २ सलिलोदगं गेण्हंति २ उभयतडमट्टियं गेण्हंति गिण्हेत्ता जेणेव
गंधावइमालवंतपरियाता वट्टवेयड्ढा तेणेव उवागच्छंति उवागच्छित्ता सव्वतूवरे जाव सव्वोसहिसिद्धत्थए य गेण्हंति गेण्हेत्ता
जेणेव निसढनीलवंतवासहरपव्वया तेणेव उवागच्छंति २ सव्वतूवरे जाव सव्वोसहिसिद्धत्थए गेण्हंति गेण्हेत्ता जेणेव तिगि-
च्छिद्दहकेसरिद्दहा तेणेव उवागच्छंति २ दहोदगं गेण्हंति २ जाइं तत्थ उप्पलाइं जाव सहस्सपत्ताइं ताइं गेण्हंति गेण्हे-
त्ता जेणेव पुव्वविदेहअवरविदेहवासाइं जेणेव सीयासीतोदातो महानदीओ तेणेव उवागच्छंति २ सलिलोदगं गेण्हंति २
उभयोतडमट्टियं गेण्हंति गेण्हित्ता जेणेव सव्वचक्कवट्टिविजया जेणेव सव्वमागहवरदामपभासाइं तित्थाइं तेणेव उवागच्छंति २
तित्थोदगं गिण्हंति २ तित्थमट्टियं गेण्हंति गेण्हेत्ता जेणेव सव्ववक्खारपव्वया तेणेव उवागच्छंति २ सव्वतूवरे जाव सव्वो-
सहिसिद्धत्थए गेण्हंति गिण्हित्ता जेणेव सव्वातो अंतरनदीतो तेणेव उवागच्छंति २ सलिलोदगं गेण्हंति २ उभयोतडम-
ट्टियं गेण्हंति गेण्हेत्ता जेणेव मंदरे पव्वते जेणेव भद्दसालवणे तेणेव उवागच्छंति २ सव्वतूवरे जाव सव्वोसहिसिद्धत्थए य

गेण्हंति गेण्हेत्ता जेणेव नंदणवणे तेणेव उवागच्छंति २ सवतूवरे जाव सवोसहिसिद्धत्थए सरसं च गोसीसचंदणं गेण्हंति गेण्हेत्ता जेणेव सोमणसवणे तेणेव उवागच्छंति २ सवतूवरे जाव सवोसहिसिद्धत्थए सरसं च गोसीसचंदणं दिवं च सुमणोदामं गेण्हंति गेण्हेत्ता जेणेव पंडगवणे तेणेव उवागच्छंति, उवागच्छित्ता सवतूवरे जाव सवोसहिसिद्धत्थए सरसं गोसीसचंदणं दिवं च सुमणदामं दद्दरमलए य सुगंधगंधिए गंधे गेण्हंति, इह दर्दरः—चीवरावनद्धं भाजनमुखं तेन गालितं तत्र पक्कं वा यत् मलयोद्भवतया प्रसिद्धत्वान्मलयं—श्रीखण्डं येषु तान् सुगन्धगन्धिकान्—परमगन्धिकेन गन्धकान् गन्धान् गृह्णन्ति, गेण्हेत्ता एगतो मेलंति, मेलित्ता जेणेव सामी आइतित्थयरे तेणेव उवागच्छंति उवागच्छित्ता महत्थं महग्घं महरिहं विउलं तित्थयराभिसेयं उवणेंति। तए णं से अच्चुए देविंदे देवराया दसहिं सामाणियसाहस्सीहिं तायत्तीसाए तायत्तीसगेहिं चउहिं लोगपालेहिं तीहिं परिसाहिं सत्तहिं अणीएहिं सत्तहिं अणियाहिवईहिं चत्तालीसाए आयरक्खदेवसाहस्सीहिं अन्नेहि य बहूहिं आरणअच्चुयकप्पवासीहिं वेमाणिएहिं देवेहिं सद्धिं संपरिवुडे तेहिं साभाविएहिं वेउव्विएहिं पवरकमलपइट्ठाणेहिं सुरभिवरवारिपडिपुण्णेहिं चंदणकयचच्चेहिं आविद्धकंठगुणेहिं पउमुप्पलपिहाणेहिं अट्ठसहस्सेणं सोवण्णियाणं कलसाणं १ एवं रुप्पमयाणं २ मणिमयाणं ३ सुवण्णरुप्पमयाणं ४ सुवण्णमणिमयाणं ५ रुप्पमणिमयाणं ६ सुवण्णरुप्पमणिमयाणं ७ अट्ठसहस्सेणं भोमेज्जाणं कलसाणं ८ सवोदएहिं सवमट्टियाहिं सवतूवरेहिं सवपुप्फेहिं सवगंधेहिं सवमल्लेहिं सवोसहिसिद्धत्थएहिं सविड्ढीए सवजुईए सवबलेणं सवसमुदएणं सवायरेणं सवविभूईए सवसंभमेण सवपुप्फगंधमल्लालंकारेणं सवतुडियसद्दनिनाएणं महया इड्ढीए महया जुईए महया बलेणं महया समुदएणं महया वरतुडियजम-

उपोद्धात-
निर्युक्तिः

॥१८७॥

अच्युतादिकृतोऽभिषेकः

गसमगपडुप्पवाइयरवेणं संखपणवपडहभेरिझल्लरिखरमुहिहुडुक्कमुइंगदुंदुभिनिग्घोसनाइयरवेणं महया २ तित्थयराभिसेएणं अभिसिंचंति, तए णं सामिस्स भगवतो आदितित्थयरस्स अभिसेयंसि वट्टमाणंसि सवे इंदा छत्तचामरकलसधूवकडुच्छुयपुप्फगंधमल्लालंकारहत्थगया हट्ठतुट्ठचित्तमाणंदिया जाव हरिसवसविसप्पमाणहियया वज्जसूलपाणी पुरतो चिट्ठंति, अन्ने य देवा देवीतो य कलसहत्थगया भिंगारहत्थगया चामरहत्थगया जाव मल्लालंकारहत्थगया पंजलिउडा य पुरतो चिट्ठंति, अप्पेगइया देवा आसियसम्मज्जियोवलित्तं सम्मट्ठरत्थंतरावणवीहियं करेंति, अप्पेगइया देवा मंचातिमंचकलियं करेंति, अप्पेगइया देवा नानाविहरागऊसियज्झयपडागमंडियं करेंति, अप्पेगइया गोसीससरसचंदणदद्दरदिन्नपंचंगुलितलं करेंति, अप्पेगइया उवच्चियचंदणकलसं करेंति, अप्पेगइया चंदणघडसुकयतोरणपडिदुवारदेसभागं करेंति, अप्पेगइया आसत्तोसत्तविउलवट्टवग्घारियमल्लदामकलावं करेंति, अप्पेगइया पंचवण्णसरससुरभिमुक्कपुप्फपुंजोवयारकलियं करेंति, अप्पेगइया कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धुयाभिरामं सुगंधवरगंधगंधियं गंधवट्टिभूयं करेंति, अप्पेगइया हिरण्णवासं वासेंति, अप्पेगइया सुवण्णवासं वासेंति, अप्पेगइया रयणवासं वासेंति, अप्पेगइया वइरवासं वासंति, अप्पेगइया आभरणवासं वासंति, अप्पेगइया पत्तवासं वासंति, अप्पेगइया पुप्फवासं वासंति, अप्पेगइया फलवासं वासेंति, अप्पेगइया वण्णवासं वासेंति, अप्पेगइया चुण्णवासं वासेंति, अप्पेगइया गंधवासं वासेंति, अप्पेगइया हिरण्णविहिं भायंति जाव अप्पेगइया गंधविहिं भायंति, अप्पेगइया वत्थविहिं भायंति, अप्पेगइया दुयं नट्टविहिं उवदंसंति, अप्पेगइया विलंबियं नट्टविधिं उवदंसंति, अप्पेगइया दुयविलंवियं नट्टविधिं उवदंसंति, अप्पेगइया अंचियनट्टविधिं उवदंसंति, अप्पे-

॥१८७॥

गइया रिभियं नट्टविधिं उवदंसंति, अप्पेगइया अंचियरिभियं नट्टविहिं उवदंसंति, अप्पेगइया आरभडं नट्टविहिं उवदंसंति, अप्पेगइया भसोलं नट्टविधिं उवदंसेंति, अप्पेगइया आरभडभसोलं नट्टविहिं उवदंसेंति, अप्पेगइया उप्पयनिवयं० निवउप्पयं० संकुचितपसारियं० भंताभंतं नाम नट्टविहिं उवदंसेंति, अप्पेगइया चउव्विहं वज्जं वायंति, तंजहा—ततं विततं घणं झुसिरं, अप्पेगइया चउव्विहं गेयं गायंति, तंजहा—उक्खित्तयं पावत्तयं मउयं रोइयं, अप्पेगइया चउव्विहं अभिनयं अभिणेंति—दिट्ठंतियं पाडिस्सुयं लोगमज्झवसियं सामंतोवणिवाइयं, अप्पेगइया पीणंति अप्पेगइया तंडवेंति अप्पेगइया लासेंति अप्पेगइया उच्छलंति अप्पेगइया पुच्छलंति अप्पेगइया तिवइं छिंदंति अप्पेगइया हयहेसियं करेंति अप्पेगइया हत्थिगुलुगुलाइयं करेंति अप्पेगइया रहघणघणाइयं करेंति अप्पेगइया हयहेसियं रहघणघणाइयं करेंति अप्पेगइया हत्थिगुलुगुलाइयं रहघणघणाइयं करेंति, अप्पेगइया हयहेसियं हत्थगुलुगुलाइयं रहघणघणाइयं करेंति, अप्पेगइया अप्फोडेंति अप्पेगइया वग्गंति, अप्पेगइया सीहनादं नदंति, अप्पेगइया अप्फोडंति वग्गंति सीहनादं नदंति, अप्पेगइया पायदद्दरं करेंति, अप्पेगइया भूमिचवेडं दलयंति, अप्पेगइया महया महया सद्देण रावंति, अप्पेगइया पायदद्दरगं भूमिचवेडगं महया महया सद्देण रावंति, अप्पेगइया हक्कारेंति अप्पेगइया वोक्कारेंति अप्पेगइया थेक्कारेंति, अप्पेगइया देवा हक्कारेंति वोक्कारेंति थेक्कारेंति, अप्पेगइया ओवयंति अप्पेगइया उप्पयंति अप्पेगइया परिवत्तंति अप्पेगइया ओवयंति उप्पयंति परिवत्तंति, अप्पेगइया गज्जंति अ पेगइया विज्जुयायंति अप्पेगइया वासं वासेंति, अप्पेगइया गज्जंति विज्जुयायंति वासं वासंति, अप्पेगइया देवुक्कलियं करेंति अप्पेगइया देवकहकहयं करेंति अप्पेगइया देवदुहदुहयं करेंति,

अप्पेगइया देवुक्कलियं देवकहकहयं देवदुहदुहयं करेंति, अप्पेगइया चेलुक्खेवं करेंति, अप्पेगइया चंदणकलसहत्थगया अप्पेगइया भिंगारहत्थगया, एएणं अभिलावेणं आयंसा थालपाती वायकरगा रयणकरंडगा पुप्फचंगेरी जाव लोमहत्थचंगेरी पुप्फपडलगजावलोमहत्थपडलग सीहासणछत्तचामरतेल्लसमुग्ग जाव अंजणसमुग्गयहत्थगया, अप्पेगइया धूवकडुच्छुयहत्थगया हट्ठतुट्ठचित्तमाणंदिया जाव हरिसवसविसप्पमाणहियया आधावेंति परिधावेंति, तएणं से अच्चुइंदे सपरिवारे सामिं तेणं महया तित्थगराभिसेएणं अभिसिंचइ, अभिसिंचित्ता करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु जएणं विजएणं वद्धावेइ वद्धावित्ता ताहिं इट्ठाहिं कंताहिं पियाहिं मणुण्णाहिं मणामाहिं वग्गूहिं जयजयसद्दं पउंजइ, तए णं तस्स अच्चुयस्स देविंदस्स अभियोगा सुबहुं अलंकारभंडं उवणेंति, तए णं से अच्चुए देविंदे तप्पढमयाए पम्हलसुकुमालयाए सुरभीए गंधकासाईए गायाइं लूहेइ लूहेत्ता सरसेण गोसीसचंदणेणं गायाइं अणुलिंपइ अणुलिंपित्ता नासानीसासवायवोज्झं चक्खुहरं वणफरिसजुत्तं हयलालापेलवाइतिरेगं धवलं कणगखचियंतकम्मं देवदूसजुयलं नियंसेइ नियंसित्ता कप्परुक्खगंपिव अलंकियविभूसियं करेइ करेत्ता नट्टविधिं उवदंसेइ, उवदंसित्ता अच्छेहिं सण्हेहिं रययामएहिं अच्छरसातंदुलेहिं भगवतो सामिस्स पुरतो अट्ठट्ठमंगलगे आलिहति, तंजहा—दप्पणभद्दासणवद्धमाणवरकलसमच्छसिरिवच्छा । सोत्थियनंदावत्ता लिहिया अट्ठट्ठमंगलगा ॥ १ ॥ लिहति लिहिऊण करेइ उवयारं, किं तं ?—पाडलिमल्लियचंपकअसोगपुन्नागचूतमंजरिनवमालियावउलतिलगकणवीरकुंदकुज्जयकोरंटयदमणगवरसुरभिगंधगंधियस्स कयग्गाहगहियकरयलपब्भट्ठविप्पमुक्कस्स कुसुमनिगरस्स जाणुस्सेहपमाणमेत्तं ओहनिकरं करेत्ता चंदप्पभरयणवइरवेरु-

देवकृतं नाट्यादि अलंकारारोपणादि

लियविमलदंडकंचणमणिरयणभत्तिचित्तं कालागुरुपवरकुंदुरुक्कतुरुक्कधूवगंधुत्तमाणुविद्धं धूमवट्टिं विणिम्मुयन्तं वेरुलियमयं कडुच्छुयं पग्गहित्तु धूवं पयतो दाऊण जिणवरिंदस्स सत्तट्ठ पयाइं ओसरित्ता दसंगुलिं अंजलिं करिय मत्थगंमि पयतो अट्ठसयविसुद्धगंथजुत्तेहिं महावित्तेहिं अपुणरुत्तेहिं अत्थजुत्तेहिं संथुणइ, संथुणित्ता वामं जाणुं अंचेइ अंचेत्ता दाहिण-जाणुं धरणितलंसि निवाडेइ, २ करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी—नमोऽत्थु ते सिद्ध बुद्धा! नीरय समाहिया समण समत्ता समजोगि सल्लगत्तण निब्भय नीरागदोस निम्मम निस्संग निस्सल्ला माणमूसुमूरण गुणरयण सीलसागरा अणंतमप्पमेया भवियधम्मचाउरंतचक्कवट्टी, नमोऽत्थु ते अरहतोत्तिकट्टु वंदइ नमंसइ, वंदित्ता नमंसित्ता नच्चासणे नाइदूरे सुस्सूसमाणे जाव पज्जुवासेइ, अत्र विषमपदव्याख्या—'आसियसंमज्जिए'त्यादि, आसिक्त उदकच्छटया संमार्जितः कचवरशोधनेन उपलिप्त इव गोमयादिना उपलिप्तः स एवोचितो मेरुप्रदेशः, ततो विशेषणसमासः, तथा शुचीनि—पवित्राणि संमृष्टानि कचवरापनयनेन रथ्यान्तराणीव रथ्यान्तराणि आपणवीथी इव आपणवीथयो—रथ्या-विशेषाश्च यत्र स शुचिसंमृष्टरथ्यान्तरापणवीथिकस्तं कुर्वन्तीति, अप्येकका देवा मञ्चातिमञ्चकलितं कुर्वन्तीत्यादि सुगमं प्राग्भावितं च यावद् गन्धवट्टिभूयं करेंति, अप्येकका हिरण्यवर्षं वर्षन्ति, हिरण्यवर्षं यथा भवत्येवं वर्षन्ति, हिरण्यवृष्टिं कुर्वन्तीति भावः, एवं सुवर्णरत्नवज्राभरणपत्रपुष्पफलवर्णकचूर्णगन्धवर्षपदान्यपि भावनीयानि, अप्येकका देवा हिरण्यविधिं—हिरण्यरूपं मङ्गलप्रकारं भाजयन्ति—विश्राणयन्ति, शेषदेवेभ्यो ददतीति भावः, एवं सुवर्णरत्नवज्रा-भरणपत्रपुष्पफलवर्णकचूर्णगन्धवस्त्रभाजनपदान्यपि भाव्यानि, 'अप्पेगइया दुयं नट्टविहिं'मित्यादि, इह द्वात्रिंशन्नाट्यवि-

धयः ते च राजप्रश्नीयोपाङ्गटीकायां भावितास्तेषां मध्ये कांश्चन नाट्यविधीनुपदर्शयंति, अप्येकका द्रुताद्रुतनामकं नाट्यविधिमुपदर्शयंति, एवं विलम्बित१द्रुतविलम्बित२अञ्चित ३ रिभित ४ अञ्चितरिभित ५ आरभट ६ भसोल ७ आरभटभसोल-८ पदान्यपि भावनीयानि, अप्येकका देवा उत्पातपूर्वको निपातो यत्र स उत्पात[पूर्वक]निपातः तं, तथा निपातपूर्वक उत्पातो यत्र स निपातोत्पातस्तं, सङ्कुचितप्रसारितं 'रियारिय'मिति गमनागमनं भ्रान्तसम्भ्रान्तं नाम नाट्यविधिं सामान्यतो नर्त्तविधिं द्वात्रिंशद्विध्युत्तीर्णमुपदर्शयन्ति, अप्येकका देवाश्चतुर्विधं वाद्यं वादयन्ति, तद्यथा—ततं-मृदङ्गपटहादिकं विततं-वीणादिकं घनं-कंसिकादि शुषिरं-काहलादि, अप्येकका देवाश्चतुर्विधं गेयं गायन्ति, उत्क्षिप्तं प्रथमतः समारभ्यमाणं, प्रवृत्तं उत्क्षेपावस्थातोऽतिक्रान्तं मनाग्भरेण प्रवर्त्तमानं, मन्दायमिति-मध्यभागे मूर्च्छनादिगुणोपेततया मन्दं मन्दं प्रवर्त्तमानं घोलनात्मकं, रोचितमिति पदैकदेशे पदसमुदायोपचारात् 'रोचितावसानं' रोचितं-यथोचितलक्षणोपेततया भावितमवसानं यस्य तद्रोचितावसानम्, अप्येकका देवाश्चतुर्विधं अभिनयं अभिनयन्ति, तद्यथा-दार्ष्टान्तिकं प्रतिश्रुतिकं सामान्यतो विनिपातिकं लोकमध्यावसानिकमिति, एतच्च नाट्यकुशलेभ्यो वेदितव्यम्, अप्येकका देवाः पीनयन्ति-पीनमात्मानं कुर्वन्ति, स्थूला भवन्तीति, अप्पेगइया हक्कारेंति-हक्कारं कुर्वन्ति, हक्काशब्दं कुर्वन्तीति भावः, एवं वोक्कारेंति वोक्काशब्दं कुर्वन्ति, थक्कारेंति-थक्कारे इत्येवं महान्तं शब्दं कुर्वन्ति, अप्येकका देवा देवोत्कलिका देवानां वातस्येवोत्कलिका देवोत्कलिका तां कुर्वन्ति, अप्येकका देवा देवकहकहकं, प्रभूतानां देवानां प्रमोदभरवशतः स्वेच्छावचनैर्बोलकोलाहलो देवकहकहकः तं कुर्वन्ति, अप्येकका देवा दुहुदुहुकमिति प्रकुर्वन्ति, दुहुदुहुकमित्यनुकरणवचन-

मेतत्, 'नासानीसासवायवोज्झं'ति नासिकानिःश्वासवातवाह्यं, अनेन तस्य श्लक्ष्णतामाह, 'चक्खुहरं'ति चक्षुर्हरति—आत्मवशं नयति विशिष्टरूपातिशयकलितत्वात् चक्षुर्हरं, वर्णस्पर्शयुक्तं अतिशायिना वर्णेनातिशायिना स्पर्शेन च युक्तं, 'हयलालापेलवाइरेग'मिति हयलाला—अश्वलाला तस्या अपि पेलवमतिरेकेण हयलालापेलवातिरेकं, बाहुलकादेवं समासः, विशिष्टमृदुत्वलघुत्वगुणोपेतमिति भावः, तथा कनकेन खचितानि—विच्छुरितानि अन्तकर्म्माणि—अञ्चलयोर्वानलक्षणानि यस्य तत् कनकखचितान्तकर्म, 'अच्छरसातंदुलेहिं'ति अच्छो रसो येषां ते अच्छरसाः, येषु प्रतिबिम्बमपि सङ्क्रान्तमुपलभ्यते इति, ते च ते तन्दुलाश्च अच्छरसतन्दुलाः, सूत्रे पूर्वपदस्य दीर्घान्तता प्राकृतत्वात्, 'पाडलियमल्लिये'त्यादि, पाटलीमल्लिकाचम्पकाशोकपुन्नागचूतमञ्जरीनवमालिकाबकुलतिलककणवीरकुन्दकुब्जकोरण्टकानि प्रतीतानि पत्रप्रधानो दमनकः पत्रदमनकः एवंरूपश्चासौ वरसुरभिगन्धिकश्च पाटलो यावत्पत्रदमनकं वरसुरभिगन्धिकस्तस्य ओघनिकरं—उच्चैस्त्वेन प्रवाहनिकरं, 'चंदप्पभवइरे'त्यादि, चन्द्रप्रभः—चन्द्रकान्तो वज्रवैडूर्ये प्रसिद्धे तेषां तन्मयो विमलो दण्डो यस्य स तथा तं, काञ्चनमणिरत्नैर्भक्त्या—विच्छित्त्या चित्रं यस्य स तथा तं, उत्तमेन कालागुरुप्रवरकुन्दुरुष्कतुरुष्कधूपगन्धेनानुविद्धा कालागुरुप्रवरकुन्दुरुष्कतुरुष्कधूपगन्धोत्तमानुविद्धा, उत्तमशब्दस्य परनिपातः प्राग्वत्, तां धूमवर्त्तिं विनिर्मुञ्चन्तं, 'दसंगुलं अंजलि'मिति अन्योऽन्यान्तरिता दश अङ्गुलयो यत्र सा दशाङ्गुलिस्तामञ्जलिं, 'अट्ठसयविसुद्धगंथजुत्तेहिं' विशुद्धो—निर्म्मलो लक्षणदोषरहित इति भावः यो ग्रन्थः—शब्दसन्दर्भस्तेन युक्तानि विशुद्धग्रन्थयुक्तानि अष्टशतं च तानि विशुद्धग्रन्थयुक्तानि च तैर्महावृत्तैरपुनरुक्तैरर्थसारैः, तथा नमोऽस्तु ते—तुभ्यं, सिद्धेत्यादीनि सर्वाण्यपि

पदानि, तत्र सिद्धः कृतकृत्यत्वाद्बुद्धोऽवगततत्त्वत्वात् नीरजा बध्यमानकर्म्मरहितत्वात् समाहितः परमसमाध्युपेतत्वात् श्रमणोऽनुत्तरश्रामण्यकलितत्वात् समाप्तः समाप्तवेदत्वात् समयोगी सुविशुद्धमनोवाकाययोगत्वात् शल्यकर्त्तनो मायादिशल्यकर्त्तनस्वभावत्वात् निर्भय इहलोकादिसप्तप्रकारभयरहितत्वात् नीरागद्वेषो विगतक्रोधादिकषायत्वात् निर्म्ममो-ममत्वरहितो निस्सङ्गो बाह्याभ्यंतरसङ्गरहितत्वात् निःशल्यो मायादिशल्यरहितत्वात् मानमूसुमूरणो–मानमर्द्दनः गुणा एव रत्नानि यस्यासौ गुणरत्नः शीलेन सागर इव शीलसागरः अनन्तो ज्ञेयानन्तत्वात् अप्रमेयस्तद्गुणानां परैरप्रमेयत्वात्, तथा भव्यानां धर्मेण–धर्म्मरूपेण वरेण–इतरचक्रापेक्षया प्रधानेन भावचक्रत्वात् चतुरन्तेन–चतुर्गतिकसंसारान्तकारिणा चक्रेण वर्त्तत इत्येवंशीलो भविकधर्म्मवरचतुरन्तचक्रवर्त्ती तस्य सम्बोधनं, एताश्च भाविन्योऽप्यवस्था वर्त्तमाना इवावश्यंभावितया विवक्षित्वा संस्तुताः, शेषं सुगमम्, एवं जहा अच्चुयस्स तहा जाव ईसाणस्स भाणियव्वं, एवं भवणवइवाणमंतरजोइसिया य सूरपज्जवसाणा सएण सएण परिवारेण पत्तेयं पत्तेयं अभिसिंचंति, तए णं ईसाणे देविंदे देवराया पंच ईसाणे विउव्वइ, एगे ईसाणे भयवं तित्थयरं करयलपुडेण गेण्हइ गेण्हेत्ता सीहासणवरगए पुरत्थाभिमुहे संनिसन्ने, एगे ईसाणे पिट्ठतो आयवत्तं धरेइ, दो ईसाणा उभतो पासिं चामरुक्खेवं करेंति, एगे ईसाणे पुरतो सूलपाणी चिट्ठइ, तए णं से सक्के देविंदे देवराया भगवतो आदितित्थगरस्स चउद्दिसिं चत्तारि धवलवसभे विउव्वइ सेए संखदलविमलनिम्मलदधिघणगोखीरफेणरयणिगरप्पगासे पासाइए दरसणिज्जे अभिरूवे पडिरूवे, तए णं तेसिं चउण्हं धवलवसभाणं अट्ठहिं सिंगेहिंतो अट्ठ तोयधारातो निग्गच्छंति, तए णं तातो अट्ठ तोयधारातो उड्ढं वेहासं उप्पयंति उप्पइत्ता एगतो

मिलायंति एगतो मिलायित्ता भगवतो आदितित्थगरस्स मुद्धाणंसि णिवयंति, तए णं से सक्के देविंदे देवराया चउ-रासीए सामाणियसाहस्सीहिं एयस्स तहेव अभिसेओ भाणियव्वो जाव नमोऽत्थु ते अरहतोत्तिकट्टु पंच सक्के विउव्वइ, विउव्वित्ता एगे सक्के भयवं आइतित्थयरं करयलपुडेणं गेण्हइ, एगे सक्के पिट्ठतो आयवत्तं धरेइ, दुवे सक्का उभयोपासं चामरुक्खेवं करेंति, एगे सक्के पुरतो वज्जपाणी चिट्ठइ, तए णं से सक्के चउरासीए सामाणियसाहस्सीहिं जाव अण्णेहिं भवणवइवाणमंतरजोइसवेमाणिएहिं देवेहि य देवीहि य सद्धिं संपरिवुडे सव्वड्ढीए जाव संखपणवजावनादितरवेण जेणेव भगवतो आदितित्थगरस्स जम्मणभवणे जेणेव आदितित्थगरमाया तेणेव उवागच्छइ उवागच्छित्ता भयवं तित्थयरं माऊए पासे ठवेइ २ तित्थयरपडिरूवगं पडिसाहरइ पडिसाहरेत्ता ओसोवणिं पडिसाहरइ पडिसाहरेत्ता एगं महं खोम-जुयलं कुंडलजुयलं च भगवतो तित्थगरस्स ओसीसगमूले ठवेइ ठवेत्ता एगं महं सिरिदामगंडं तवणिज्जलंबूसगं सुवण्ण-पयरगमंडियं नाणामणिरयणविविहहारद्धहारउवसोभियं समुदयं भगवतो तित्थयरस्स उल्लोयंसि निक्खिवइ, जंणं भयवं तित्थयरं अणिमिसाए दिट्ठीए देहमाणे देहमाणे सुहंसुहेणं अभिरममाणे चिट्ठइ । तए णं से सक्के देविंदे देवराया वेसमणं देवं सद्दावेइ सद्दावेत्ता एवं वयासी–खिप्पामेव भो देवाणुप्पिया! वत्तीसं हिरण्णकोडीतो वत्तीसं सुवण्णकोडीतो वत्तीसं नंदाइं वत्तीसं भद्दाइं सुभगसोभग्गरूवजोव्वणगुणलावण्णे य भगवतो तित्थगरस्स जम्मणभवणंसि साहराहि साहरित्ता एयमाणत्तियं पच्चप्पिणह, तए णं से वेसमणे देवे सक्केणं एवं वुत्ते समाणे हट्ठतुट्ठचित्तमाणंदिए करयलपरि-ग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु एवं देवो तहत्ति आणाए विणएणं वयणं पडिसुणेइ, पडिसुणेत्ता जंभए देवे

सद्दावेइ सद्दावेत्ता एवं वयासी—खिप्पामेव भो! देवाणुप्पिया! बत्तीसं हिरन्नकोडीओ जाव भगवतो तित्थगरस्स जम्मणभवणंसि साहरह साहरित्ता एयमाणत्तियं पच्चप्पिणह, तए णं ते जंभगा देवा वेसमणेणं देवेणं एवं वुत्ता समाणा हट्ठतुट्ठा जाव विसप्पमाणहियया खिप्पामेव बत्तीसं हिरन्नकोडीओ जाव सुभगसोभग्गरूवजोव्वणगुणलावण्णे य भगवतो जम्मणभवणंसि साहरिंति साहरित्ता जेणेव वेसमणे तेणेव उवागच्छंति उवागच्छित्ता तमाणत्तियं पच्चप्पिणंति, तए णं से वेसमणे देवे जेणेव सक्के देविंदे देवराया तेणेव जाव तमाणत्तियं पच्चप्पिणंति, तए णं से सक्के देविंदे देवराया आभियोगे देवे सद्दावेइ सद्दावेत्ता एवं वयासी—खिप्पामेव भो! देवाणुप्पिया! भगवतो तित्थगरस्स जम्मणट्ठाणंसि सिंघाडगतियचउम्मुहमहापथेसु महया २ सद्देणं उग्घोसेमाणे एवं वयह—हंद सुणंतु भवंतो बहवे भवणवइवाणमंतरजोइसवेमाणिया देवा देवीओ य जे णं देवाणुप्पिया! तित्थगरस्स तित्थगरमाऊए असुभं मणं पहारेइ तस्स णं अज्जगमंजरिकाविव सयधा मुद्धाणं फुट्टउत्ति घोसणं घोसेह, घोसित्ता एयमाणत्तियं पच्चप्पिणह, तए णं ते आभियोगा देवा हट्ठतुट्ठा जाव विसप्पमाणहियया करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु एवं देवो तहत्ति आणाए विणएणं वयणं पडिसुणंति पडिसुणेत्ता सक्कस्स देविंदस्स देवरण्णो अंतियातो पडिनिक्खमंति पडिनिक्खमित्ता खिप्पामेव भगवतो तित्थगरस्स जम्मणनगरंसि सिंघाडग जाव सयहा मुद्धाणं फुट्टउत्तिकट्टु घोसणं घोसंति, एयमाणत्तियं पच्चप्पिणंति, तए णं बहवे भवणवइवाणमंतरजोइसवेमाणिया देवा भगवतो तित्थगरस्स जम्मणमहिमं करेत्ता जेणेव नंदीसरे दीवे तेणेव उवागच्छंति उवागच्छित्ता ते अट्ठाहियातो महामहिमातो करेंति करेत्ता जामेव दिसिं पाउब्भूया तामेव दिसं पडिगया, एतदपि सुगमं प्रायः

क्षौमयुगलार्पणादि उत्सवान्तं

प्राग्भावितार्थं च, नवरं 'देहमाणे' इति प्रेक्षमाणः प्रेक्षमाणः 'वत्तीसं हिरण्णकोडीतो' इति घटितं हिरण्यं अघटितं सुवर्णं, नन्दानि–आसनविशेषरूपाणि; भद्राणि—भद्रासनानि, तदेवं यदुक्तम्—"जम्मणमहो य सव्वो, नेयव्वो जाव घोसणय"मिति तत् जम्बूद्वीपप्रज्ञप्त्यादिभिः सूत्रैः भावितं, 'यथागमं जन्ममहोत्सवो मया, प्रकाशितस्तीर्थकृतां परिस्फुटः । यदत्र पुण्यं भवति स्म तेन मे, जनो भवेज्जन्मनिबन्धनच्छिदे ॥ १ ॥ गतं जन्मद्वारम् । इदानीं नामद्वारं, तत्र भगवतो नामनिबन्धनं चतुर्विंशतिस्तवे वक्ष्यति—'ऊरूसु उसभलंछणमुसभं सुमिणंमि तेण उसभजिणो' इति । सम्प्रति वंशनामनिबन्धनमभिधातुकाम आह—

देसूणगं च वरिसं सक्कागमणं च वंसठवणा य । आहारमंगुलीए विहिंति देवा मणुण्णं तु ॥ १८९ ॥

देशोनं वर्षं भगवतो जातस्य यावदभूत् तावदेतावति समये शक्रस्यागमनमजायत, तेन च वंशस्थापना भगवतः कृता, एवं स भगवान् ऋषभनाथः सञ्जातः, तस्य गृहवासे आहारोऽसंस्कृत आसीत् । किञ्च—सर्वतीर्थकरा एव बालभावे वर्त्तमाना न स्तन्योपभोगं कुर्वन्ति, किन्त्वाहाराभिलाषे सति स्वामङ्गुलिं वदने प्रक्षिपन्ति, तस्यां चाङ्गुल्यामाहारं नानारससमायुक्तं मनोज्ञं देवाः स्थापयन्ति, तत आह—'आहारमंगुलीए विहिंति देवा मणुण्णं तु' । अतिक्रान्तबालभावास्तु सर्वेऽपि तीर्थकृतोऽग्निपक्वमाहारं गृह्णन्ति, भगवांस्तु ऋषभनाथो यावदद्यापि प्रव्रज्यां न प्रत्यपद्यत तावद्देवोपनीतमेवाहारमुत्तरकुरुगतकल्पद्रुमफलरूपमुपभुक्तवानिति । अभिहितमानुषङ्गिकमधुना प्रकृतमुच्यते, आह–इन्द्रेण वंशस्था-

पना कृता इत्यभिहितं, तत्र सा वंशस्थापना किं यथाकथञ्चित्कृता आहोश्वित्प्रवृत्तिनिमित्तपूर्विका ?, उच्यते, प्रवृत्तिनिमित्तपूर्विका; तथा चाह—

सक्को वंसठ्ठवणे इक्खु अगू तेण हुंति इक्खागा। जं च जहा जम्मि वए जोग्गं कासीय तं सव्वं ॥ १८९॥

कथानकशेषं—जीयमेयं तीयपच्चुप्पन्नमणागयाणं देवाणं पढमतित्थगराणं वंसठवणं करेत्तए, ततो तियसगणसंपरिवुडो सक्को आगतो, पच्छा किह रिक्कहत्थतो पविसामित्ति महंतं इक्खुलट्ठिं गहाय आगतो, इतो य नाभिकुलगरो उसभसामिणा अंकगएण अच्छइ, सक्केण य उवागएण इक्खुलट्ठीहत्थगएणं जएणं विजएणं भयवं वद्धाविओ, भयवया लट्ठीसु दिट्ठी पाडिया, ताहे सक्केण भणियं—भयवं ! इक्खू अगू ?, 'अकं भक्षणे' भक्षयसि ?, ताहे सामिणा पसत्थलक्खणधरो अलंकियविभूसितो दाहिणहत्थो पसारितो, अतीव भगवंतस्स तासु हरिसो जातो, तए णं सक्कस्स देविंदस्स देवरण्णो अयमेयारूवे संकप्पे समुप्पज्जित्था—जम्हा भयवं तित्थयरो इक्खुं अभिलसइ तम्हा इक्खागुवंसो भवउ, पुव्वया य भगवतो इक्खुरसं पिवियाइया, इक्षवश्च तदा पानीयवल्लीवत् छिन्ना विद्धा वा रसं गलन्ति स्म, तेणं गोत्तं कासवन्ति, एवं सक्को वंसं ठवेऊण गओ। पुणोवि जं जहा जंमि वए जोग्गं तं सव्वं तहेव कासी, गाथाक्षरगमनिका—शक्रो वंशस्थापने प्रकृते इक्षुमादाय समागतः, भगवता च करे प्रसारिते स प्राह—भगवन् ! इक्षुमकु—भक्षयसि ?, एवमुक्ते भगवानिक्षुयष्टिग्रहणाय हस्तं प्रसारितवान्, तेन भवन्ति इक्ष्वाकवः—इक्षुभोजिन ऋषभनाथवंशजाः, एवं यद् यस्मिन् वयसि यथा योग्यं तत्सर्वं शक्रस्तथैव कृतवान्, अत्र पश्चार्द्धे पाठान्तरं 'तालफलाहयभगिणी भविस्स पत्ती य सारवणा' तालफलेनाहतस्य

पुरुषस्य भगिनी–सहजाता ऋषभस्य पत्नी भविष्यतीति सारवणा–तस्याः सङ्गोपना, इदं च पाठान्तरं किल भगवतो नन्दा-
याश्च तुल्यवयस्त्वख्यापनाफलं, तथा चानन्तरमेव वक्ष्यति–'नंदाएँ सुमंगला सहितो' अन्ये तु प्रतिपादयन्ति–सर्वैवेयं जन्म-
द्वारवक्तव्यता, द्वारगाथाऽपि किलैवं तैः पठ्यते–'जम्मणे य विवड्ढी य जाईसरणे इय' इति ॥ सम्प्रति वृद्धिद्वारमधिकृत्याह–

अह वड्ढइ सो भयवं दियलोगचुतो य अणुवमसिरीओ । देवगणसंपरिवुडो नंदाएँ सुमंगलासहितो ॥ १८७ ॥
असियसिरओ सुनयणो बिंबोट्ठो धवलदंतपंतीओ । वरपउमगब्भगोरो फुल्लुप्पलगंधनीसासो ॥ १८८ ॥

देवलोकात्–सर्वार्थसिद्धिविमानरूपकात् च्युतः सन् अथ–जन्मानन्तरं वर्द्धते स ऋषभनाथो भगवान्, किंविशिष्टः सन्नित्याह–अनुपमश्रीकः–निरुपमदेहकान्तिकलितः, 'देवगणसंपरिवृतः' सेवागतनानाविधदेवपरिवारोपेतो नन्दया सुमङ्गलया च सहितः सन्, ते अपि वर्द्धेते इति भावः, तथा असिताः–कृष्णाः शिरोजाः–केशा यस्यासौ असितशिरोजः, शोभने नयने यस्यासौ सुनयनः, बिम्बं–गोल्हाफलं तद्वत् ओष्ठौ यस्य स बिम्बोष्ठः, धवले दन्तपङ्क्ती यस्य स धवलदन्तपङ्क्तिकः, वरपद्मगर्भ इव गौरो–निर्मलो वरपद्मगर्भगौरः, फुल्लोत्पलगन्धवन्निःश्वासो यस्य स तथा ॥ इदानीं जातिस्मरणद्वारमभिधित्सुराह–

जाईसरो उ भयवं अप्परिवडिएहिं तिहि उ नाणेहिं । कंतीए बुद्धीए य अब्भहितो तेहिं मणुएहिं ॥ १८९ ॥

जातिं स्मरतीति जातिस्मरो भगवान्, 'लिहादिभ्य' इत्यणपवादोऽच्, कथं जातिस्मर इत्याह–अप्रतिपतितैरेव त्रिभिः–मतिश्रुतावधिरूपैर्ज्ञानैः, अवधिज्ञानं हि भगवतो देवलोकिकमेवाप्रच्युतं भवति, तथा कान्त्या च बुद्ध्या च तेभ्यः-

तत्कालभाविभ्यो मिथुनकमनुष्येभ्योऽभ्यधिकः ॥ अधुना विवाहद्वारमाह—

पढमो अकालमच्चू तहिं तालफलेण दारको उ हतो । कन्ना य कुलगरेहि य सिट्ठे गहिया उसभपत्ती ॥ १९० ॥

भगवतो देशोनवर्षकाल एव किञ्चिन्मिथुनकं सञ्जातापत्यं सत् तदपत्यमिथुनकं तालवृक्षस्याधो विमुच्य रिरंसया कदलीगृहादिक्रीडागृहमगमत्, तस्माच्च तालवृक्षात् पवनप्रेरितं पक्वं तालफलमपप्तत्, तेन दारकोऽकाल एव जीविताद् व्यपरोपितः, एष प्रथमोऽवसर्पिण्यामकालमृत्युः, तदपि मिथुनकं तां दारिकां वर्द्धयित्वा प्रतनुकषायं मृत्वा सुरलोके समुत्पन्नं, सा चोद्यानदेवतेवोत्कृष्टरूपा एकाकिन्येव वने विचचार, दृष्ट्वा च तां त्रिदशवधूसमानरूपां मिथुनकनरा विस्मयोत्फुल्लनयना नाभिकुलकराय न्यवेदयन्, निवेदिते च तैः कन्या नाभिकुलकरेण ऋषभपत्नी भविष्यतीति सङ्गृहीता, भगवांश्च तेन कन्याद्वयेन सार्द्धं विहरन् यौवनमनुप्राप्तः, अत्रान्तरे देवराजस्य चिन्ता समुदपादि—यथा कृत्यमेतदतीतप्रत्युपन्नानागतानां शक्राणां प्रथमतीर्थकराणां विवाहकर्म्म क्रियत इत्येवं सञ्चिन्त्यानेकसुरवधूवृन्दसमन्वितोऽवतीर्णवान्, अवतीर्य च भगवतः स्वयमेव महता ऋद्धिसत्कारसमुदयेन वरकर्म्म—प्रचक्षणस्नानगीतवादित्रादि चकार, नन्दासुमङ्गलयोरपि शक्रमहिष्यो महता ऋद्धिसत्कारसमुदायेन विवाहकर्म्म कृतवत्यः ॥ एतदेवाह—

भोगसमत्थं नाउं वरकम्मं तस्स कासि देविंदो । दोण्हं वरमहिलाणं वहुकम्मं कासि देवीतो ॥ १९१ ॥

भोगसमर्थं भगवन्तं ज्ञात्वा तस्य—भगवतो वरकर्म्म देवेन्द्रोऽकार्षीत्, द्वयोर्वरमहिलयोः—नन्दासुमङ्गलयोर्वधूकर्म्म देव्यो—देवेन्द्रस्य अग्रमहिष्योऽकार्षुः ॥ इदानीमपत्यद्वारमाह—

छप्पुव्वसयसहस्सा पुव्विं जायस्स जिणवरिंदस्स । तो भरहबंभिसुंदरि बाहुबली चेव जायाइं ॥ १९२ ॥

जातस्य जिनवरेन्द्रस्य जन्मकालादारभ्य यावत्षट् पूर्वशतसहस्राणि-पूर्वलक्षाणि व्यतिक्रामन् तावदेतावत्यवसरे भगवतो भरतो ब्राह्मी सुन्दरी बाहुबलीति चत्वारि अपत्यानि जातानि, तत्रायं सम्प्रदायः—अनुत्तरविमानादवतीर्य सुमङ्गलाया बाहुः पीठश्च भरतब्राह्मीति मिथुनकं जातं, तथा सुबाहुर्महापीठश्च सुनन्दाया बाहुबली सुन्दरीति मिथुनकमिति ॥ अमुमेवार्थं प्रतिपादयन्नाह मूलभाष्यकारः—

देवी सुमंगलाए भरहो बंभी य मिहुणगं जायं । देवीएँ सुनंदाए बाहुबली सुंदरी चेव ॥ १ (मू. भा.) ॥

सुगमा, आह—किमेतावन्त्येव भगवतोऽपत्यानि उतान्यान्यपि ?, उच्यते—अन्यान्यपि, तथा चाह—

अउणापन्नं जुयले पुत्ताण सुमंगला पुणो पसवे । नीतीण अइक्कमणे निवेयणं उसभसामिस्स ॥ १९३ ॥

एकोनपञ्चाशतं पुत्राणां युग्मानि सुमङ्गला पुनः प्रसूतवती, अत्रान्तरे प्राग्निरूपितानां हक्कारप्रभृतीनां दण्डनीतीनां लोकाः प्रचुरतरकषायसम्भवात् अतिक्रमणं कृतवन्तः, ततश्च नीतीनामतिक्रमणे सति ते लोका अभ्यधिकज्ञानादिगुणसमन्वितं भगवंतं विज्ञाय निवेदनं—कथनं ऋषभस्वामिने—आदितीर्थकराय, सूत्रे चतुर्थ्यर्थे षष्ठी प्राकृतत्वात्, कृतवन्त इति क्रियाध्याहारः । निवेदिते सति भगवानाह—

राया करेइ दंडं सिट्ठे ते बेंति अम्हवि स होउ । मग्गह य कुलगरं सो य बेइ उसभो य भे राया ॥ १९४ ॥

नीत्यतिक्रमणकारिणां राजा—सर्वनरेश्वरः करोति दण्डं, स च राजा अमात्यारक्षकादिबलयुक्तः कृताभिषेकोऽनति-

क्रमणीयाज्ञश्च भवति, एवं भगवता शिष्टे–कथिते सति ते–मिथुनका ब्रुवते–अस्माकमपि सः–राजा भवतु, वर्त्तमानकालनिर्देशः खल्वन्यास्वप्यवसर्पिणीषु प्राय एष एव न्याय इति प्रदर्शनार्थः, सूत्रस्य त्रिकालगोचरत्वात्, अथवा प्राकृतत्वादार्षत्वाद्वा 'वेंति'त्ति उक्तवन्तः, भगवानाह–यद्येवं 'मग्गह य कुलगरं' ति मार्गयत–याचध्वं कुलकरं–नाभिकुलकरं राजानं, ततस्तैर्याचितो नाभिकुलकरो, राजानं याचितश्च सन् स 'ब्रूते' उक्तवान्–अहं महान् जातः ऋषभो भवतां राजेति, ततस्ते मिथुनका राज्याभिषेककरणार्थं उदकानयनाय पद्मिनीसरो गतवन्तः, अत्रान्तरे देवराजस्य वज्रपाणेरासनप्रकम्पो बभूव, ततोऽवधिना विज्ञाय सर्वर्द्ध्या सलोकपालः शक्रः समागत्य राज्याभिषेकं कृतवान् ॥ अमुमेवार्थमुपसंहरन् अनुक्तं च प्रतिपादयन्नाह—

आभोएउं सक्को उवागतो तस्स कुणइ अभिसेयं । मउडाइ अलंकारं नरिंदजोग्गं च से कुणइ ॥ १९५ ॥

आसनप्रकम्पानन्तरं आभोग्य–अवधिज्ञानेन सम्यग्वस्तुगतिमवगम्य शक्रो–देवराज उपागतस्तस्य–भगवतः ऋषभस्वामिनोऽभिषेकं–राज्याभिषेकं करोति, तथा मुकुटादि आदिशब्दात् कटककुण्डलकेयूरादिपरिग्रहः नरेन्द्रयोग्यं–नरेश्वरपदव्युचितमलङ्कारं 'से' तस्य भगवतः करोति, अत्रापि वर्त्तमानकालनिर्देशप्रयोजनं प्राग्वद् भावनीयं, पाठान्तरं वा "आभोएउं सक्को उवागतो तस्स कासि अभिसेयं । मउडाइ अलंकारं नरिंदजोग्गं च से कासि ॥" अत्रान्तरे ते मिथुनकपुरुषाः पद्मिनीसरसः खलु पद्मिनीपत्रैरुदकमादाय भगवतः समीपमागत्य भगवन्तं चालङ्कृतविभूषितं दृष्ट्वा विस्मयोत्फुल्लनयनाः किंकर्त्तव्यताव्याकुलीकृतचेतसः कियन्तमपि कालं स्थित्वा भगवत्पादयोस्तदुदकं निक्षिप्तवन्तः, ततस्तानेवं-

विधक्रियोपेतान् दृष्ट्वा वज्रपाणिर्देवराजोऽचिन्तयत्—अहो ! खलु विनीता एते पुरुषास्ततोऽत्र विनीता नगरी भवतु, ततो वैश्रमणं यक्षराजमाज्ञापितवान्—इह द्वादशयोजनदीर्घां नवयोजनविष्कम्भां विनीतां नाम नगरीं निष्पादयेति, स चाज्ञासमनन्तरमेव दिव्यप्राकारभवनमालोपशोभितां नगरीं चकार, एतदेवाह—

भिसिणीपत्तेहियरे उदयं घेत्तुं छुहंति पाएसु । साहु विणीया पुरिसा, विणीयनयरी अह निविट्ठा ॥ १९६ ॥

बिसिनीपत्रैः—पद्मिनीपत्रैरितरे—मिथुनकनरा उदकं गृहीत्वा छुभंति—प्रक्षिपन्ति भगवत्पादयोरुपरि, ततो देवराजोऽभिहितवान्—साधु विनीताः पुरुषा इति, ततः शक्रादेशादथ—अथानन्तरं वैश्रमणयक्षेण विनीताभिधाना नगरी निविष्टा—अन्तर्भूतण्यर्थत्वान्निवेशिता ॥ गतमभिषेकद्वारम्, इदानीं राज्यसङ्ग्रहद्वारमाह—

आसा हत्थी गावो गहियाइं रज्जसंग्गहनिमित्तं । घेत्तूण एवमाई चउविहं संगहं कुणइ ॥ १९७ ॥

अश्वा हस्तिनो गाव एतानि चतुष्पदानि तदा भगवता गृहीतानि, राज्ये—राज्यविषयः सङ्ग्रहो राज्यसङ्ग्रहः तन्निमित्तम्, अश्वादिग्रहणं चोष्ट्राद्युपलक्षणं, तथा चाह—एवमादि चतुष्पदजातमसौ भगवान् गृहीत्वा चतुर्विधं—वक्ष्यमाणलक्षणं सङ्ग्रहं करोति, वर्त्तमाननिर्देशप्रयोजनं सर्वत्रापि पूर्ववत्, पाठान्तरं वा 'चउविहं संगहं कासि' ॥ अथ कोऽसौ चतुर्विधः सङ्ग्रह इत्याह—

उग्गा भोगा रायण्ण खत्तिया संगहो भवे चउहा । आरक्खगुरुवयंसा सेसा जे खत्तिया ते उ ॥ १९८ ॥

उग्रा भोगा राजन्याः क्षत्रिया एष चतुर्द्धा भवति सङ्ग्रहः, एतेषामेव यथाक्रमं स्वरूपमाह—आरक्षका उग्रदण्डका-

रित्वादुग्राः, गुरवो-गुरुस्थानीया भगवत आदितीर्थकरस्य प्रतिपत्तिस्थानीया इति भावः भोगाः, वयस्याः-स्वामिनः समवयसो राजन्याः, शेषा उक्तव्यतिरिक्ता ये ते पुनः क्षत्रिया इति ॥ सम्प्रति विविधलोकस्थितिनिबन्धनप्रतिपादनार्थं श्लोकचतुष्टयमाह—

आहारे सिप्प कम्मे य, मामणा य विभूसणा । लेहे गणिए य रूवे य, लक्खणे माण पोयए ॥ १९९ ॥

ववहारे नीइजुद्धे य, ईसत्थे य उवासणा । तिगिच्छा अत्थसत्थे य, बंधे घाए य मारणा ॥ २०० ॥

जण्णूसवसमवाए, मंगले कोउए इय । वत्थे गंधे य मल्ले य, अलंकारे तहेव य ॥ २०१ ॥

चोलोवण विवाहे य, दत्तिया मडयपूयणा । झावणा थूभ सद्दे य, छेलावणग पुच्छणा ॥ २०२ ॥

प्रथमत आहारविषयो विधिर्वक्तव्यो, यथा कथं कल्पतरुफलाभावे पक्काहारः संवृत्त इति १ तथा शिल्पं-घटादिविषयं अभिज्ञानं तद्विषयो विधिर्वाच्यः, यथा कुतः कदा कथं कियन्ति वा शिल्पान्युपजातानीति २ तथा कर्म्म ३ मामणा ४ विभूषणा ५ लेख ६ गणित ७ रूप ८ लक्षण ९ मान १० पोत ११ व्यवहार १२ नीति १३ युद्धे १४ षुशास्त्रो १५ पासना १६ चिकित्सा १७ र्थशास्त्र १८ बन्ध १९ घात २० मारणा २१ यज्ञो २२ त्सव २३ समवाय २४ मङ्गल २५ कौतुक २६ वस्त्र २७ गन्ध २८ माल्या २९ लङ्कार ३० चूलोपनयन ३१ विवाह ३२ दत्ति ३३ मृतकपूजना ३४ ध्यापना ३५ स्तूप ३६ शब्द ३७ च्छेलावण ३८ प्रश्न ३९ विषयाश्च विधयो वक्तव्याः, एष द्वारश्लोकचतुष्टयसङ्क्षेपार्थः, अवयवार्थं तु प्रत्येकमभिधित्सुः प्रथममाहारद्वारमधिकृत्याह—

आसी य कंदहारा मूलाहारा य पत्तहारा य । पुप्फफलभोइणोऽवि य जइया किर कुलगरो उसभो ॥ २०३ ॥

यदा 'किले'ति परोक्षाप्तागमवादसंसूचकः ऋषभः कुलकरो-राजा आसीत् तदा ते मिथुनका आसन् कन्दाहाराः मूलाहाराः पत्राहाराः, पुष्पफलभोजिनोऽपि चासन् ।

आसी य इक्खुभोई इक्खागा तेण खत्तिया होंति । सणसत्तरसं धन्नं आमं ओमं च भुंजीया ॥ २०४ ॥

क्षत्रिया येन कारणेन वाहुल्येनेक्षुभोजिन आसीरन् तेन कारणेन ते क्षत्रिया इक्ष्वाकवो लोके ख्याताः, तथा सणः सप्तदशो यस्य तत्सणसप्तदशं धान्यं-शाल्यादि, तद्यथा—"सालि १ जव २ वीहि ३ कुद्दव ४ राली ५ तिल ६ मुग्ग ७ मास ८ चवले य ९ । चण १० तुवरि ११ मसूर १२ कुलत्थ १३ गोधूम १४ निप्फाव १५ अयसि १६ सणा १७ ॥१॥ आमम्-अपक्वं अवमं-न्यूनं 'भुञ्जीया' इति भुक्तवन्तः, तथापि कालदोषात् तदपि न जीर्यति, ततो भगवन्तं पृष्टवन्तः, भगवांस्त्वाह-हस्ताभ्यां घृष्ट्वा त्वचमपनीय आहारयध्वमिति ॥ अमुमेवार्थमाह—

ओमंऽपाहारेंता अजीरमाणंमि ते जिणमुवेंति । हत्थेहिं घंसिऊणं आहारेहत्ति ते भणिया ॥ २०५ ॥

अवममपि-स्तोकमप्याहारयन्तोऽजीर्यत्याहारे ते मिथुनका जिनं-प्रथमतीर्थकरमुपयान्ति-उपसर्प्पन्ति, भगवता च हस्ताभ्यां घृष्ट्वा आहारयध्वमिति भणिताः सन्तस्ते किमित्याह—

"आसीय पाणिघंसी तिम्मिय तंदुलपवालपुडभोई । हत्थयलपुडाहारा जइया किल कुलगरो उसभो ॥ २०६ ॥

आसन् पाणिभ्यां घर्षितुं शीलं येषां ते पाणिघर्षिणः, किमुक्तं भवति ?-ता एव औषध्यः शाल्यादिका हस्ताभ्यां

घर्षित्वा त्वचं चापनीय भुक्तवन्त इति, एवमपि कालदोषात् कियत्यपि काले गते ता अपि न जीर्णवन्तः, ततः पुनरपि भगवन्तमापृच्छ्य तदुपदेशात्तीमिततन्दुलप्रवालपुटभोजिनो बभूवुः, तीमितान् तन्दुलान् प्रवालपुटे–पत्रपुटे मुहूर्त्तं धृत्वा भुञ्जत इत्येवंशीलास्तीमिततन्दुलप्रवालपुटभोजिनः, तन्दुलग्रहणमशेषौषध्युपलक्षणम्, एवमपि कियति काले अतिक्रान्ते शाल्याद्यौषधयः कठिनभावतो न जीर्यन्तीति भूयोऽपि भगवन्तं पृष्ट्वा तदुपदेशेन हस्ततलपुटाहारा आसीरन्, हस्ततलपुटेषु निहित आहारो यैस्ते तथाविधाः, हस्ततलपुटेषु कियन्तमपि कालमौषधीः स्थापयित्वा भुक्तवन्त इत्यर्थः, एवमपि गच्छता कालेन कालदोषात् औषध्यः कठिनतरभावमापन्ना न जीर्यन्ति, ततो भगवदुपदेशेन कक्षासु स्वेदयित्वा भुक्तवन्तः, एतच्चानुक्तमपि व्याख्यानादवसीयते, तथा मूलटीकाकृता व्याख्यानाद्, एवंभूताश्च ते मिथुनका आसन् यदा ऋषभः कुलकरस्तदेति, तदनन्तरमभिहितप्रकारव्यादिसंयोगैराहारितवन्तः, तद्यथा—हस्ताभ्यां घृष्ट्वा पत्रपुटेषु च मुहूर्त्तं तीमित्वा, तथा हस्ताभ्यां घृष्ट्वा हस्तपुटेषु च मुहूर्त्तं धृत्वा, तथा हस्ताभ्यां घृष्ट्वा कक्षास्वेदं च कृत्वा, एते त्रयो भङ्गका द्विकसंयोगे, परिघृष्टपदं मुक्त्वा तीमित्वा हस्तपुटेषु च मुहूर्त्तं धृत्वा इत्यादिकामपि भङ्गयोजनामुपदर्शयन्ति केचित्, तच्चायुक्तं, त्वगपनयनमन्तरेण तीमितस्यापि हस्तपुटे कृतस्य सौकुमार्यानुपपत्तेः, यदिवा श्लक्ष्णत्वग्भावाददोष इति, त्रिकसंयोगेऽपि त्रयो भङ्गा हस्ताभ्यां घृष्ट्वा पत्रपुटेषु तीमित्वा हस्तपुटेषु मुहूर्त्तं धृत्वा १ हस्ताभ्यां घृष्ट्वा पत्रपुटेषु तीमित्वा कक्षासु स्वेदयित्वा २ तथा हस्ताभ्यां घृष्ट्वा हस्तपुटेषु धृत्वा कक्षासु स्वेदयित्वा ३ इति, यस्तु घृष्टपदं विहाय पत्रपुटेषु

तीमित्वा हस्तपुटेषु मुहूर्त्तं धृत्वा कक्षासु स्वेदयित्वा स प्राग्वदसमीचीनः समीचीनो वा वेदितव्यः, चतुष्कसंयोगे एक एव भङ्गः, हस्ताभ्यां घृष्ट्वा पत्रपुटेषु तीमित्वा हस्तपुटेषु धृत्वा कक्षासु स्वेदयित्वा इति ॥ अमुमेवार्थमुपसंहरन्नाह—

घंसेऊणं तिम्मण घंसणतिम्मणपवालपुडभोई । घंसणतिम्मपवाले हत्थउडे कक्खसेए य ॥ २०७ ॥

अस्या भावार्थ उक्त एव, नवरमियमुक्तार्थविषया अक्षरयोजना–घृष्ट्वा भुक्तवन्तः, तीमनं प्रवालपुटे तदनन्तरं कृत्वा भुक्तवन्त इत्यनेन प्रागभिहितप्रत्येकभङ्गकाक्षेपः कृतः, तथा हस्ताभ्यां घर्षणं कृत्वा तीमनं च प्रवालपुटे ततो भोजिन इत्यनेन समस्तद्विकसंयोगभङ्गकाक्षेपः, तथा घर्षणं हस्ताभ्यां तीमनं प्रवालपुटे तदनन्तरं मुहूर्त्तं हस्तपुटे करणं कृत्वा भुक्तवन्त इत्यनेन समस्तत्रिकसंयोगभङ्गकाक्षेपः, 'कक्खसेए य' इति अत्र चशब्दो घर्षणादिसमुच्चयार्थः, ततोऽयमर्थः—हस्ताभ्यां घर्षणे प्रवालपुटे तीमने हस्तपुटे च कियन्तं कालं धरणे तदनन्तरं च कक्षास्वेदे कृते सति भुक्तवन्तः, एतेन चतुष्कसंयोगभङ्गकोऽभिहितः ॥ अत्रान्तरे—

अगणिस्स य उट्ठाणं वणघंसा दट्ठु भीय परिकहणं । पासेसुं परिछिंदह गेण्हह पागं ततो कुणह ॥ २०८ ॥

ननु ते मिथुनकाः सर्वं तीमनादि भगवत्तीर्थकरोपदेशात्कृतवन्तः, स च भगवान् जातिस्मरः ततः किमित्यग्न्युत्पादोपदेशं न दत्तवान्?, उच्यते, तदा कालस्य एकान्तस्निग्धतया सत्यपि यत्ने वह्न्युत्पादाभावात्, भगवांस्तु विजानाति-न एकान्तस्निग्धरूक्षयोः कालयोर्वह्न्युत्पादः, किन्तु विमात्रया स्निग्धरूक्षकाले, ततो नादिष्टवानिति । ते च मिथुनका यदा चतुर्थभङ्गविकल्पितमप्याहारं कालदोषान्न जीर्णवन्तस्तदा अस्मिन् प्रस्तावे कालस्य स्निग्धरूक्षत्वाद्वने द्रुमाणां पर-

स्परसङ्घर्षात् अग्नेरुत्थानमभूत्, तत उत्थितं प्रवृद्धज्वालावलीसनाथं भूमाप्तं तृणादि दहन्तं वह्निं दृष्ट्वा अपूर्वरत्नबुद्ध्या ग्रहणं प्रति प्रवृत्तवन्तः, दह्यमानास्तु भीताः परिकथनं ऋषभाय कृतवन्तः, भीतानां परिकथनं भीतपरिकथनमिति समासो वा, ततो भगवानाह—अश्वेष्वारुह्य यावत्यग्निः प्रज्वलति तावन्तं प्रदेशं विहाय तस्य सर्वासु दिक्षु पार्श्वेषु तृणादिकं सर्वं परिच्छिन्दन्तु, एवमुक्तास्ते मिथुनका हस्तिभिरश्वैश्चारुह्यारुह्य पार्श्वेषु स्थितं सर्वं तृणादिकं किञ्चिन्मिलितं कृतवन्तः किञ्चित्सर्वथा ततोऽपनीतवन्तः, ततः स प्रवृद्धिं गच्छन्नग्निरुपशान्तः, ततः स्वामिनोक्तम्—अमुमग्निं गृह्णीत गृहीत्वा चैनं पाकं कुरुतेति, ते मिथुनका न जानन्ति, ततोऽग्निं गृहीत्वा तत्रैवौषधीः शाल्यादिकाः प्रक्षिप्तवन्तः, ताश्च दाहमापुः, पुनस्ते भगवतो हस्तिस्कन्धगतस्य न्यवेदयन्, स हि स्वयमेवौषधीर्भक्षयतीति, भगवानाह—तत्र नातिरोहितानां प्रक्षेपः क्रियते, किन्तु मृत्पिण्डमानयध्वमिति, तैरानीतो मृत्पिण्डः, ततो भगवान् हस्तिकुम्भे पिण्डं निधाय पत्रकाकारं निर्दिश्य ईदृशानि भाण्डानि कृत्वाऽत्रैवाग्नौ पक्त्वा एतेषु पाकं निवर्त्तयध्वमित्युक्तवान्, ततस्ते तथैव कृतवन्तः, इत्थं तावत् प्रथमकुम्भकारशिल्पमुत्पन्नम् ॥ अमुमेवार्थमुपसंहरन्नाह—

पक्खेवडहणमोसहि कहणं निग्गमण हत्थिसीसम्मि । पयणारंभपवित्ती ताहे कासीय ते मणुया ॥ २०९ ॥

भावार्थ उक्त एव, किन्तु क्रियाध्याहारकरणेनैवमक्षरगमनिका कार्या—यथा ते मिथुनका अग्नावौषधीनां प्रक्षेपं कृतवन्तः, ततो दहनमौषधीनामभूत्, ततो भगवते हस्तिस्कन्धारूढाय विनीताया नगर्या विनिर्गच्छते कथनं, ततो

हस्तिशिरसि कुम्भे कर्दमरूपस्य मृत्पिण्डस्य पत्रकाकारकरणं, ततस्ते मिथुनकास्तथारूपाणि भाण्डानि कृत्वा पचना-
रम्भप्रवृत्तिमकार्षुरिति ॥ गतमाहारद्वारम्, अधुना शिल्पद्वारमभिधित्सुराह—

पंचेव य सिप्पाइं घड लोहे चित्तऽणंत कासवए । एक्केक्कस्स य एत्तो वीसं वीसं भवे भेया ॥ २१० ॥

पञ्चैव मूलभूतानि शिल्पानि, तद्यथा—'घड लोहे चित्तणंतकासवए' इति तत्र घट इति कुम्भकारशिल्पस्योपलक्षणं, 'लोहे'त्ति' लोहकारशिल्पस्य 'चित्ते'ति चित्रकरशिल्पस्य, 'णन्त'मिति देशीवचनं वस्त्रवाचकं, ततोऽनेन वस्त्रशिल्पस्य ग्रहणं, 'काश्यप'इति नापितशिल्पस्य, इयमत्र भावना—वस्त्रवृक्षेषु परिहीयमानेषु भगवता वस्त्रोत्पादननिमित्तं वस्त्रशिल्पमुत्पादितं, तदनन्तरं गृहाकारेष्वपि कल्पद्रुमेषु हानिमुपगच्छत्सु गृहकरणनिमित्तं लोहकारादिशिल्पमुत्पादितं, पश्चात् प्राणिनां कालदोषान्नखरोमाण्यपि वर्द्धितुं प्रवृत्तानीति नापितशिल्पोत्पादना, गृहाण्यपि च चित्ररहितानि विशोभानि भान्तीति चित्रकरशिल्पोत्पादना, कुम्भकारशिल्पोत्पादकारणं प्रागेव भावितम्, 'एक्केक्कस्स ये'त्यादि एभ्यः पञ्चभ्य एकैकस्य विंशतिर्विंशतिर्भेदा अभूवन्निति सर्वसङ्ख्यया तदा शिल्पशतस्योत्पत्तिरभवदिति ॥ सम्प्रति कर्म्ममामणाविभूषणाद्वारप्रतिपादनार्थमाह—

कम्मं किसिवाणिज्जाइ मामणा जा परिग्गहे ममता । पुव्वं देवेहिं कया विभूसणा मंडणा गुरुणो ॥ २११ ॥

कर्म्म नाम कृषिवाणिज्यादि तच्चाग्नावुत्पन्ने सञ्जातमिति, 'मामणे'ति ममीकारार्थे देशीवचनमेतत्, ततो या परिग्रहे

ममता सा मामणा ज्ञातव्या, सा च तत्काल एव प्रवृत्तेति, तथा विभूषणा-मण्डना, सा च पूर्वं देवेन्द्रैर्गुरोः-भगवत आदितीर्थकृतः कृता, पश्चाल्लोकेऽपि प्रवृत्तेति ॥ सम्प्रति लेखगणितरूपद्वारद्वयप्रतिपादनार्थमाह—

लेहं लिवीविहाणं जिणेण बंभीऍ दाहिणकरेणं । गणियं संखाणं सुंदरीऍ वामेण उवइट्ठं ॥ २१२ ॥

लेखनं लेखो नाम सूत्रे नपुंसकता प्राकृतत्वात् लिपिविधानं, तच्च जिनेन-भगवता ऋषभस्वामिना ब्राह्म्या दक्षिणकरेण प्रदर्शितमत एव तदादित आरभ्य वाच्यते, गणितं नाम एकद्वित्र्यादिसङ्ख्यानं, तच्च भगवता सुन्दर्या वामकरेणोपदिष्टमत एव तत्पर्यन्तादारभ्य गण्यते ॥ अधुना रूपलक्षणमानरूपद्वारत्रयप्रतिपादनार्थमाह—

भरहस्स रूवकम्मं नराइलक्खणमहोइयं बलिणो । माणुम्माणवमाणंपमाणगणिमाइ वत्थूणं ॥ २१३ ॥

रूपं नाम काष्ठकर्म्म पुस्तककर्म्मेत्येवमादि, तच्च भगवता भरतस्योपदिष्टं, तथा लक्षणं नरादि-पुरुषलक्षणादि, तच्च अथ-भरतस्य काष्ठकर्म्माद्युपदेशानन्तरं भगवता बाहुबलिने उदितं-कथितं, तथा मानं नाम वस्तूनां मानोन्मानावमानप्रमाणगणितानि, तत्र मानं द्विधा-धान्यमानं रसमानं च, धान्यमानं 'दो असतीओ पसई दो पसईतो सेइया चत्तारि सेइया कुलवो चत्तारि कुलवा पत्थओ' इत्यादि, रसमानं 'चउसट्ठिया बत्तिसिया सोलसिया' इत्यादि, उन्मानं येनोन्मीयते, तच्च तुलागतं कर्षः पलमित्यादि, अवमानं येनावमीयते, तद्यथा-हस्तो दण्डो युगमित्यादि, प्रमाणं प्रतिमानं, तच्च सुवर्णपरिमाणहेतुर्गुञ्जादि, गणितं यदेकादिसङ्ख्यया परिच्छिद्यते, यत्तु गणितं तत्प्रागेव पृथग्द्वारतयाऽभिहितम्, एतत्

पञ्चप्रकारमपि मानं भगवति राज्यमनुशासति भगवदुपदेशेन प्रवृत्तमिति ॥ 'पोयए' इति द्वारगाथायां यदुक्तं तस्य संस्कारः प्रोतकमिति पोतक इति वा, तथा चाह—

मणियाई दोराइसु पोता तह सागरंमि वहणाइं । ववहारो लेहवणं कज्जपरिच्छेयणत्थं वा ॥ २१४ ॥

ये मणिकादयः आदिशव्दात् मुक्ताफलादिपरिग्रहः दवरकादिषु लोकेन प्रोताः क्रियन्ते तदेतत्प्रकर्षेण उतनं प्रोतं तदा प्रवृत्तं, अथवा पोता नाम सागरे—समुद्रे वहनानि—प्रवहणानि, तान्यपि तदैव प्रवृत्तानि, तथा व्यवहारो नाम विसंवादे सति राजकुलकरणे गत्वा निजनिजभापालेखापनलक्षणः कार्यपरिच्छेदनार्थं वा पणमुक्तिलक्षणः स उभयरूपोऽपि तदा प्रवृत्तः, कालदोषतो लोकानां प्रायः स्वस्वभावापगमाद् ॥ अधुना नीतियुद्धरूपं द्वारद्वयमभिधित्सुराह—

नीई हक्काराई सत्तविहा अहव सामभेयाई । जुद्धाइं वाहुजुद्धाइयाइं वट्टाइयाणं च ॥ २१५ ॥

नीतिर्हकारादिलक्षणा सप्तविधा, तद्यथा—हक्कारो मक्कारो धिक्कारः परिभापणा मण्डलीवन्धश्चारके प्रक्षेपो महापराधे च्छविच्छेद इति, एषा सप्तविधाऽपि नीतिस्तदा विमलवाहनकुलकरादारभ्य भरतकालं पर्यन्तं कृत्वा यथायोगं प्रवृत्ता, तथा च वक्ष्यति—'किञ्चिच्च (ञ्चीव) भरहकाले' इत्यादि, अथवा नीतिर्नाम सामभेदादिका चतुष्प्रकारा, तद्यथा—साम भेदो दण्ड उपप्रदानमिति, एषा चतुर्विधापि भगवत्काले समुत्पन्नेति, तथा युद्धानि नाम वाहुयुद्धादीनि, यदिवा वर्त्तिकादीनां यानि तान्युभयान्यपि तदा प्रवृत्तानि ॥ साम्प्रतमिषुशास्त्रोपासनारूपं द्वारद्वयमाह—

ईसत्थं धणुवेदो उवासणा मंसुकम्ममाईया । गुरुरायाईणं वा उवासणा पज्जुवासणया ॥ २१६ ॥

इषुशास्त्रं नाम धनुर्वेदः, स च तदैव राजधर्म्मे सति प्रावर्त्तत, उपासना नाम श्मश्रुकर्त्तनादिरूपं नापितकर्म्म, तदपि तदैव जातं, पूर्वं ह्यवस्थितनखलोमानस्तथा कालमाहात्म्यतः प्राणिनोऽभवन्निति, एषा च शिल्पान्तर्गततया प्रागभिहिताऽपि पुनः पृथग्द्वारतयोपन्यस्ता, भगवत्काल एव नखरोमाण्यतिरेकेण प्रवर्द्धितुं लग्नानि, न पूर्वमिति ख्यापनार्थं, यदिवा उपासना नाम गुरुराजादीनां पर्युपासना, साऽपि तदैव प्रवृत्ता ॥ अधुना चिकित्साऽर्थशास्त्रबन्धघातरूपद्वारचतुष्टयप्रतिपादनार्थमाह—

रोगहरणं चिकिच्छा अत्थागम सत्थमत्थसत्थिंत्ति । निगडाइजमो बन्धो घातो दंडादितालणया ॥ २१७ ॥

चिकित्सा नाम रोगापहारक्रिया, साऽपि तदैव भगवदुपदेशात्प्रवृत्ता, अर्थागमनिमित्तं शास्त्रं अर्थशास्त्रं, बन्धो-निगडादिभिर्यमः-संयमनं, घातो-दण्डादिभिस्ताडना, एतेऽपि अर्थशास्त्रबन्धघातास्तत्काले यथायोगं प्रवृत्ताः ॥ अधुना मारणयज्ञोत्सवरूपद्वारत्रयप्रतिपादनार्थमाह—

मारणया जीववहो जन्ना नागाइयाण पूयातो । इंदाइमहा पायं पइनियया ऊसवा होंति ॥ २१८ ॥

मारणं जीववधो-जीवस्य जीविताद् व्यपरोपणं, तच्च भरतेश्वरकाले समुत्पन्नं, यज्ञा-नागादीनां पूजाः उत्सवाः-प्रायः प्रतिनियताः, वर्षमध्ये प्रतिनियतदिवसभाविन इन्द्रादिमहाः, पूजास्त्वनियतकालभाविन्य इति पूजामहोत्सवानां प्रतिविशेषः, एतेऽपि तत्काले प्रवृत्ताः ॥ सम्प्रति समवायमङ्गलरूपद्वारद्वयमभिधित्सुराह—

समवाओ गोट्ठीणं गामाईणं व संपसारो वा । तह मंगलाइं सोत्थियसुवण्णसिद्धत्थगाईणि ॥ २१९ ॥

समवायो नाम गोष्ठिनां मेलापकः, यदिवा ग्रामादीनामादिशब्दात् खेटकर्वटनगरादिपरिग्रहः सम्-एकीभावेन किमप्युद्दिश्य एकत्र मीलनं सम्प्रसारः-समवायः, किमुक्तं भवति ?-ग्रामादिजनानां किञ्चित्प्रयोजनमुद्दिश्य यदेकत्र मीलनं स वा समवाय इति, तथा मङ्गलानि नाम स्वस्तिकसुवर्णसिद्धार्थकादीनि तानि पूर्वं देवैर्भगवतो मङ्गलबुद्ध्या प्रयुक्तानि, ततो लोकेऽपि तथा प्रवृत्तानि ॥ सम्प्रति कौतुकादिद्वारपञ्चकमाह—

पुव्वं कयाइं पहुणो सुरेहिं रक्खादिकोउयाइं च । तह वत्थगंधमल्लालंकारा केसभूसाई ॥ २२० ॥

तं दट्ठूण पवत्तोऽलंकारेउं जणोऽवि सेसोऽवि ।

पूर्वं प्रभोः- भगवतः ऋषभस्वामिनः सुरैः कृतानि कौतुकानि-रक्षादीनि, ततो लोकेऽपि तानि जातानि, तथा वस्त्रं-चीनांशुकादिभेदभिन्नं गन्धः-कुष्ठपुटादिलक्षणः माल्यं-पुष्पदाम, एतानि तदैव जातानि, अलङ्कारः-केशभूषादि तं चालङ्कारं भगवतो देवैः कृतं दृष्ट्वा अवशेषोऽपि स्वं स्वमलङ्कर्तुं प्रवृत्तः ॥ सम्प्रति चूलाद्वारमाह—

विहिणा चूलाकम्मं वालाणं चोलयं नाम ॥ २२१ ॥

चूडा नाम विधिना शुभनक्षत्रतिथिमुहूर्त्तादौ धवलमङ्गलेष्टदेवतापूजास्वजनभोजनादिलक्षणेन वालानां चूडाकर्म्म, तदपि तदा प्रवृत्तम् ॥ सम्प्रत्युपनयनद्वारमाह—

उवणयणं तु कलाणं गुरुमूले साधुणो ततो धम्मं । घेत्तुं हवंति सड्ढा केई दिक्खं पवज्जंति ॥ २२२ ॥

उपनयनं नाम तेषामेव वालानां कलानां ग्रहणाय गुरोः-कलाचार्यस्य मूले-समीपे नयनं, यदिवा धर्म्मश्रवणनिमित्तं

साधोः सकाशं नयनमुपनयनं, तस्माच्च साधोर्धर्म्मं गृहीत्वा केचित् श्राद्धां भवन्त्यपरे लघुकर्म्माणो दीक्षां प्रपद्यन्ते, एतच्चोभयमपि तदा प्रवृत्तम् ॥ अधुना विवाहद्वारं दत्तिद्वारं चाह—

दट्ठुं कयं विवाहं जिणस्स लोगोऽवि काउमारद्धो । गुरुदत्तिया य कन्ना परिणिज्जंते ततो पायं ॥ २२३ ॥

दट्ठी य दाणमुसभं दिंतं दट्ठुं जणंमिवि पवत्तं । जिणभिक्खादाणंपिय दट्ठुं भिक्खा पवत्ताओ ॥ २२४ ॥

जिनस्य–भगवत ऋषभस्वामिनो देवैः कृतं विवाहं दृष्ट्वा लोकोऽपि स्वापत्यानां विवाहं कर्तुमारब्धवान्, गतं विवाहद्वारम् । दत्तिद्वारमाह–भगवता युगलधर्म्मव्यवच्छेदाय भरतेन सह जाता ब्राह्मी बाहुबलिने दत्ता, बाहुबलिना सह जाता सुन्दरी भरतायेति दृष्ट्वा तत आरभ्य प्रायो लोकेऽपि कन्या पित्रादिना दत्ता सती परिणीयते इति प्रवृत्तम्, अथवा दत्तिर्नाम दानं, तच्च भगवन्तमृषभस्वामिनं सांवत्सरिकं दानं ददतं दृष्ट्वा लोकेऽपि प्रवृत्तं, यदिवा दत्तिर्नाम भिक्षादानं, तच्च जिनस्य भिक्षादानं प्रपौत्रेण कृतं दृष्ट्वा लोकेऽपि भिक्षा प्रवृत्ता, लोका अपि भिक्षां दातुं प्रवृत्ता इति भावः ॥ अधुना मृतकपूजाध्मापनास्तूपशब्दद्वाराण्याह—

मडयं मयस्स देहो तं मरुदेवीएँ पढमसिद्धोत्ति । देवेहि पुरा महियं झावणया अग्गिसक्कारो ॥ २२५ ॥

सो जिणदेहाईणं देवेहिं कतो चिता सथूभा य । सद्दो य रुण्णसद्दो लोगोवि ततो तहा पकतो ॥ २२६ ॥

मृतकं नाम मृतस्य देहस्तच्च मृतकं मरुदेव्याः प्रथमसिद्ध इतिकृत्वा देवैः पुरा महितं–पूजितं, तत आरभ्य लोकेऽपि मृतकपूजा प्रसिद्धिं गता, ध्मापना नामाग्निसंस्कारः, स च भगवतो निर्वाणप्राप्तस्यान्येषां च साधूनामिक्ष्वाकूणामितरेषां

च प्रथमं त्रिदशैः कृतः पश्चाल्लोकेऽपि सञ्जातः, तथा भगवद्देहादिदग्धस्थानेषु भरतेन स्तूपाः कृताः, ततो लोकेऽपि तत आरभ्य मृतकदाहस्थानेषु स्तूपाः प्रावर्त्तन्त, तथा शब्दो नाम रुदितशब्दः, स च भगवत्यपवर्गं गते भरतदुःखमसाधारणमवबुध्य तदपसरणाय शक्रेण कृतः, ततो लोकेऽपि ततः कालादारभ्य रुदितशब्दः प्रवृत्तः, तथा चाह–लोकोऽपि तथा–भरतवत् शक्रवद्वा रुदितशब्दं प्रकृतः–कर्त्तुमारब्धवान् ॥ सम्प्रति च्छेलापनकद्वारं पृच्छाद्वारं चाह—

छेलावणमुक्किट्ठाइ बालकीलावणं च सेंटाई । इंखिणियादिरुयं वा पुच्छा पुण किं कहिं कज्जं ? ॥ २२७ ॥

अहव निमित्ताईणं सुहसइयाइ सुहदुक्खपुच्छा वा । इच्चेवमाइयाए उप्पन्नं उसभकालम्मि ॥ २२८ ॥

छेलापनकमिति देशीवचनं, तच्चानेकार्थं, तथा चाह–'उक्किट्ठाइ'इत्यादि, उत्कृष्टिर्नाम हर्षवशादुत्कर्षेण नदनम्, आदिशब्दात् सिंहनादादिपरिग्रहः, यदिवा बालक्रीडापनं छेलापनकं, अथवा शेण्टितादि। तथा प्रच्छनं पृच्छा, सा इङ्खिणिकादिरुतलक्षणा, इंखिणिका हि कर्णमूले घण्टिकां चालयन्ति, ततो यक्षाः खल्वागम्य तासां कर्णेषु किमपि प्रष्टुर्विवक्षितं कथयन्ति, आदिशब्दात् इङ्खिणिकासदृशपरिग्रहः, अथवा किं कार्यं ? कथं वा कार्यमित्येवंलक्षणा या लोके प्रसिद्धा पृच्छा सा पृच्छना, यदिवा निमित्तादीनामादिशब्दात्स्वप्नफलादिपरिग्रहः पृच्छा–पृच्छना, अथवा सुखशयितादिरूपा सुखदुःखपृच्छना इत्येवं आदितया सर्वमुत्पन्नमृषभस्वामिकाले, उपलक्षणमेतत्, किञ्चिद्भरतकाले किञ्चित्कुलकरकाले च ॥ तथा चाह—

किंचिच्च भरहकाले कुलगरकालेऽवि किंचि उप्पन्नं । पहुणा उ देसियाइं सव्वकलासिप्पकम्माइं ॥ २२९ ॥

किञ्चित्–निगडादिभिर्घात इत्यादि भरतकाल उत्पन्नं, किञ्चित्–हक्कारादि कुलकरकालेऽप्युत्पन्नं, प्रभुणा तु–भगवता

ऋषभस्वामिना सर्वा गणितप्रभृतयः कलाः सर्वाणि घटशिल्पप्रभृतीनि शिल्पानि सर्वाणि च कृष्यादीनि कर्म्माणि देशितानीति ॥

**उसभचरियाहिगारे सव्वेसिं जिणवराण सामण्णं । संबोहणाइ वोत्तुं वोच्छं पत्तेयमुसभस्स ॥ २३० ॥**

इह वक्तुमिदानीमधिकृतं भगवत ऋषभस्वामिनश्चरित्रं, तत्र च ऋषभचरिताधिकारे वक्ष्यमाणं सम्बोधनादि सर्वेषामपि जिनवराणां सामान्यमतस्तथैव सामान्येनोक्त्वा पश्चात् प्रत्येकम्—एकं प्रति प्रत्येकं, नात्र प्रतिशब्दो वीप्सायां, किन्त्वाभिमुख्ये, ततोऽयमर्थः—एकस्याभिमुख्येन, कस्यैकस्येत्यत आह—ऋषभस्य, शेषं चरित्रं वक्ष्ये ॥ तत्र सम्बोधनादिद्वारप्रतिपादनार्थं द्वारगाथात्रयमाह—

**संबोहण १ परिच्चाए २, पत्तेयं उवहिम्मि य ३ । अन्नलिंगे ४ कुलिंगे य ५, गामायार ६ परीसहे ७ ॥ २३१ ॥**

**जीवोवलंभ ८ सुयलंभे ९, पच्चक्खाणे १० य संजमे ११ ।**
**छउमत्थ १२ तवोकम्मे १३, उप्पया नाण १४ संगहो १५ ॥ २३२ ॥**

**तित्थं १६ गणो १७ गणहरा १८, धम्मोवायस्स देसगा १९ ।**
**परियाय २० अंतकिरिया २१, कस्स केण तवेण वा ? ॥ २३३ ॥**

सर्व एव भगवन्तस्तीर्थकृतः स्वयंबुद्धास्तथापि कल्प इतिकृत्वा लोकान्तिकदेवाः सर्वतीर्थकृतां सम्बोधनं कुर्वन्ति, ततः प्रथमं तत्सम्बोधनं वाच्यं, तदनन्तरं परित्यागः—किं भगवन्तश्चारित्रप्रतिपत्तौ परित्यजन्तीति, तथा प्रत्येकमिति कः

छेलापनपृच्छे संबोधनादिद्वारोदेशः गा. २२७-२३

॥२०१॥

कियत्परिवारो निष्क्रान्त इति वाच्यं, तथा 'उपधा'विति उपधिविषयो विधिर्वक्तव्यः, यथा कः केनोपधिरासेवितः ? को वा विनेयानामनुज्ञातः ? इति, इह यत्साधूनां लिङ्गं यच्च गृहस्थानां तद्भगवतां तीर्थकृतामन्यलिङ्गं, कुत्सितं लिंगं कुलिंगं तापसपरिव्राजकादिलिङ्गं, तत्र भगवन्तो नान्यलिङ्गे निष्क्रान्ताः, नापि कुलिङ्गे, किन्तु तीर्थकरलिङ्गे एवेति वक्तव्यं, तथा ग्रामाचारा-विषयाः परीषहाः—क्षुत्पिपासादयः, ग्रामाचाराश्च परीषहाश्च ग्रामाचारपरीषहं तस्मिन् विधिर्वक्तव्यः, यथा कुमारप्रव्रजितैर्विषया न भुक्ताः, शेषैर्भुक्ताः, तथा परीषहाः सर्वैरेव निर्जिता इति, तथा जीवोपलम्भो—जीवग्रहणमुपलक्षणं जीवाजीवाद्युपलम्भो वक्तव्यः, तथा पूर्वभवे यस्य यावान् श्रुतलाभः स वक्तव्यः, प्रथमान्तस्याप्येकारान्तता सूत्रे प्राकृतत्वात्, तथा प्रत्याख्यानं महाव्रतरूपं वक्तव्यं, तस्य किं प्रमाणमासीदिति, तथा संयमः—सामायिकादिरूपो वक्तव्यः, कस्य किं सामायिकादि चारित्रमासीदिति, तथा छादयतीति छद्म—ज्ञानावरणीयादिघातिकर्म्मचतुष्टयं छद्मनि तिष्ठतीति छद्मस्थः, कः कियन्तं कालं छद्मस्थ आसीदिति वक्तव्यं, तथा किं कस्य तपःकर्मेति वक्तव्यं, तथा 'उप्पया नाणे'ति ज्ञानोत्पादो वक्तव्यः, कस्य कस्मिन्नहनि केवलज्ञानमुत्पन्नमिति, तथा सङ्ग्रहो वक्तव्यः, कस्य कियान् शिष्यादिसङ्ग्रहः, तथा 'तीर्थ'मिति कथं कस्य कदा तीर्थमुत्पन्नमित्यादि वक्तव्यं, तीर्थं नाम चातुर्वर्णः श्रमणसङ्घः, गणः—एकवाचनाचारक्रियास्थानां समुदायो, न कुलसमुदायः, ते च ऋषभादीनां कस्य कियन्त इति वक्तव्यं, तथा गणधराः—सूत्रकर्तारः, ते च कस्य कियन्त इति वक्तव्यं, तथा दुर्गतौ प्रपतन्तमात्मानं धारयतीति धर्म्मः तस्योपायो—द्वादशाङ्गं प्रवचनमथवा पूर्वाणि देशयन्तीति देशकाः धर्म्मोपायस्य देशका गणधरा अथवा अन्येऽपि यस्य यावन्तश्चतुर्दशपूर्वविदः, तथा पर्याय इति कः

कस्य प्रव्रज्यादिपर्यायः इत्येतद्वक्तव्यं, तथा अन्ते क्रिया अन्तक्रिया–निर्वाणलक्षणा सा कस्य केन तपसा ?, वाशब्दात् कस्मिन् वा कियत्परिवारपरिवृतस्य चेति वक्तव्यम् ॥ सम्प्रति प्रथमद्वारप्रतिपादनार्थमाह—

सव्वेऽवि सयंबुद्धा लोगंतियबोहिया य जीयंति । सव्वेसिं परिच्चाओ संवच्छरियं महादाणं ॥ २३४ ॥

रज्जाइच्चाओवि य पत्तेयं को व कित्तियसमग्गो ? । को कस्सुवही को वाऽणुण्णाओ केण सीसाणं ? ॥ २३५ ॥

(ग्रन्थाग्रं ८०००) सर्व एव तीर्थकृतः स्वयंबुद्धा वर्त्तन्ते, तथापि लोकान्तिकदेवानामियं स्थितिर्यदुत स्वयंबुद्धानपि भगवतो बोधयन्ति, ततो जीतमिति–कल्प इतिकृत्वा लोकान्तिकदेवैर्बोधिताः सन्तो निष्क्रामन्ति । व्याख्यातं सम्बोधनाद्वारम्, अधुना परित्यागद्वारं व्याख्याति–सर्वेषां भगवतां परित्यागः सांवत्सरिकं महादानं वक्ष्यमाणलक्षणम् ॥ राज्यादित्यागोऽपि च परित्यागः, व्याख्यातं परित्यागद्वारं, प्रत्येकद्वारमाह—प्रत्येकमिति क एककः को वा कियत्समग्रो निष्क्रान्तः ? । उपधिद्वारमाह–कः कस्योपधिः ? को वा केनानुज्ञातः शिष्याणामुपधिरिति ? । इदं च गाथाद्वयमपि समासव्याख्यारूपं, न च समासेनोक्तं मन्दमतयोऽवबुध्यन्ते, ततः प्रपञ्चेन विवरीषुः प्रथमद्वारमाह—

सारस्सय १ माइच्चा २ वण्ही ३ वरुणा य ४ गद्दतोया य ५ ।
तुसिया ६ अव्वाबाहा ७ अग्गिच्चा चेव ८ रिट्ठा य ९ ॥ २३६ ॥

सारस्वता मकारोऽलाक्षणिकः १ आदित्याः २ वह्नयः ३ वरुणाः ४ गर्दतोयाः ५ चः समुच्चये तुषिता ६ अव्याबाधा ७ अग्नयः ८ एत एव संज्ञान्तरतो मरुतोऽप्यभिधीयन्ते, रिष्टाश्चेति 'तात्स्थ्यात्तद्व्यपदेशः' ब्रह्मलोकस्थरिष्टप्रस्तटाधारा रिष्टा इति,

एए देवनिकाया भयवं बोहिंति जिणवरिंदं तु । सव्वजगज्जीवहियं भयवं ! तित्थं पवत्तेहि ॥ २३७ ॥

एते देवनिकायाः–सारस्वतादयः स्वयं सम्बुद्धमपि भगवन्तं जिनवरेन्द्रं कल्प इतिकृत्वा बोधयन्ति, कथमित्याह–सर्वे च ते जगज्जीवाश्च सर्वजगज्जीवास्तेभ्यो हितं हे भगवन् ! तीर्थं प्रवर्त्तयस्वेति ॥ उक्तं सम्बोधनद्वारम्, इदानीं परित्यागद्वारमाह—

संवच्छरेण होही अभिनिक्खमणं तु जिणवरिंदाणं । ता अत्थसंपयाणं पवत्तए पुव्वसूरंमि ॥ २३८ ॥

संवत्सरेण जिनवरेन्द्राणामभिनिष्क्रमणं भविष्यति, ततोऽर्थसम्प्रदानम्–अर्थस्य सम्यक्–तीर्थप्रभावनाबुद्ध्या अनुकम्पाबुद्ध्या च, न तु कीर्त्तिबुद्ध्या, संप्रदानं जनेभ्यः प्रवर्त्तते, पूर्वसूर्ये–पूर्वाह्णे इत्यर्थः ॥ कियत् प्रतिदिवसं दीयते इत्याह—

एगा हिरण्णकोडी अट्ठेव अणूणगा सयसहस्सा । सूरोदयमाईयं दिज्जइ जा पायरासाओ ॥ २३९ ॥

एका हिरण्यस्य कोटी अष्टौ चान्यूनानि–परिपूर्णानि शतसहस्राणि–लक्षाणि इति प्रतिदिवसं दीयते, कथं दीयते इत्याह–सूर्योदय आदौ यस्य दानस्य तत् सूर्योदयादि, क्रियाविशेषणमेतत्, सूर्योदयादारभ्य दीयते इति भावः, कियन्तं कालं यावदित्याह–'प्रातराशा' प्रातः अशनमाशः प्रातराशः तस्मात्, तमभिव्याप्य, प्रातर्भोजनकालं यावदिति भावः । यथा दीयते तथा प्रतिपादयन्नाह—

सिंघाडगतिगचउक्कचच्चरचउम्मुहमहापहपहेसुं । दारेसु पुरवराणं रत्थामुहमज्झकारेसु ॥ २४० ॥

श्रृङ्गाटकं नाम श्रृङ्गाटकाकृतिपथयुक्तं, त्रिकोणं स्थानं वा, त्रिकं यत्र रथ्यात्रयं मिलति, चतुष्कं–चतुष्पथसमाहारः,

चत्वरं-बहुरथ्यापातस्थानं चतुर्मुखं-यस्माच्चतसृष्वपि दिक्षु पन्थानो निस्सरन्ति, महापथो-राजपथः, शेषः सामान्यः पन्थाः पथः, तत एतेषां द्वन्द्वः, तथा पुरवराणां द्वारेषु, प्रतोलीष्वित्यर्थः, तथा रथ्याणां मुखानि-प्रवेशा मध्यकारा-मध्या एव कारशब्दस्य स्वार्थिकत्वाद्रथ्यामुखमध्यकारास्तेषु। किमित्याह—

वरवरिया घोसिज्जइ किमिच्छियं दिज्जए बहुविहीयं। सुरअसुरदेवदाणवनरिंदमहियाण निक्खमणे ॥ २४१ ॥

वरं याचध्वं वरं याचध्वमित्येवं घोषणा समयपरिभाषया वरवरिकोच्यते, सा वरवरिका पूर्वं शृङ्गाटिकादिषु घोष्यते, ततः कः किमिच्छति-यो यदिच्छति तस्य तद्दानं समयपरिभाषयैव किमिच्छकमुच्यते, किमिच्छकं यथा भवति एवं दीयते, एकमपि वस्त्वङ्गीकृत्य एतत्परिसमाप्त्या भवति अतो बहवो विधयो-मुक्ताफलप्रदानादिलक्षणा यस्मिंस्तद्बहुविधिकं, क्व इत्याह-सुरैः-वैमानिकज्योतिष्कैःअसुरैः-भवनपतिव्यन्तरैः, देवदानवनरेन्द्रैरिति इन्द्रग्रहणं प्रत्येकमभिसम्बध्यते, देवेन्द्रैः-शक्रादिभिः दानवेन्द्रैः-चमरादिभिः नरेन्द्रैः-चक्रवर्त्तिप्रभृतिभिर्म्महितानां भगवतां तीर्थकृतां निष्क्रमणे इति ॥ साम्प्रतमेकैकेन तीर्थकृता कियद्द्रव्यजातं संवत्सरेण दत्तमित्येतत्प्रतिपादयन्नाह—

तिण्णेव य कोडिसया अट्ठासीई अ होंति कोडीओ। असियं च सयसहस्सा एयं संवच्छरे दिण्णं ॥ २४२ ॥

त्रीण्येव कोटिशतानि अष्टाशीतिश्च भवन्ति कोटयः अशीतिश्च शतसहस्राणि ३८८८०००००० एतत्-एतावत्प्रमाण-मेकैकेन तीर्थकृता संवत्सरे दत्तम्, एतच्च प्रतिदिनदेयं त्रिभिः षष्ठ्यधिकैर्वासरशतैर्गुणयित्वा परिभावनीयम् ॥ प्रथमवरव-रिका समाप्ता। सम्प्रत्यधिकृतद्वारार्थानुपात्येव वस्तु प्रतिपादयन्नाह—

वीरं अरिट्ठनेमिं पासं मल्लिं च वासुपुज्जं च। एए मोत्तूण जिणे अवसेसा आसि रायाणो ॥ २४३ ॥
रायकुलेसुऽवि जाया विसुद्धवंसेसु खत्तियकुलेसुं। न य इच्छियाभिसेया कुमारवासंमि पव्वइया ॥ २४४ ॥
संती कुंथू य अरो अरहंता चेव चक्कवट्टी य। अवसेसा तित्थयरा मंडलिया आसि रायाणो ॥ २४५ ॥
वीरं-महावीरमरिष्टनेमिं पार्श्वनाथं मल्लिं वासुपूज्यं च, एतान् सर्वसङ्ख्यया पञ्च जिनान्-तीर्थकृतो मुक्त्वा अवशेषास्तीर्थकृतः-ऋषभस्वामिप्रभृतय आसन् राजानः, एते हि महावीरप्रभृतयः पञ्च तीर्थकृतो राजकुलेष्वपि विशुद्धवंशेषु क्षत्रियकुलेषु, राजकुलं हि किञ्चिदक्षत्रियकुलमपि भवति, यथा नन्दराजकुलमत उक्तं क्षत्रियकुलेषु जाता अपि, न ईप्सिताभिषेका-अभिलषितराज्याभिषेकाः, किन्तु कुमारवास एव प्रव्रजिताः-प्रव्रज्यां प्रतिपेदिरे, येऽपि च राजान ऋषभस्वामिप्रभृतयस्तेष्वपि शान्तिः कुन्थुः अर एते त्रयोऽर्हन्तश्चक्रवर्त्तिनोऽभवन्, अवशेषाः पुनस्तीर्थकरा आसन् राजानो-माण्डलिकाः स्वस्वमण्डलमात्राधिपतयः, परित्यागद्वारानुपातिता तु गाथात्रयस्यैवं परिभावनीया-उक्तलक्षणं राज्यं परित्यज्य भगवन्तः प्रव्रजिता इति ॥ गतं परित्यागद्वारम्, अधुना प्रत्येकद्वारमाह—
एगो भयवं वीरो पासो मल्ली य तिहिं तिहिं सएहिं। भयवंपि वासुपुज्जो छहिं पुरिससएहिं निक्खंतो ॥२४६॥
उग्गाणं भोगाणं रायन्नाणं च खत्तियाणं च। चउहिं सहस्सेहुसभो सेसा उ सहस्सपरिवारा ॥ २४७ ॥
एको भगवान् वीरो-वर्द्धमानस्वामी प्रव्रजितः, पार्श्वनाथो भगवांश्च मल्लिस्त्रिभिः त्रिभिः शतैः सह, भगवानपि वासुपूज्यः षड्भिः पुरुषशतैः सह निष्क्रान्तः—प्रव्रजितः। तथा उग्राणां भोजानां राजन्यानां क्षत्रियाणां च, एतेषां विशेषः प्रागे-

य चोपदर्शितः, सर्वसङ्ख्यया चतुर्भिः सहस्रैः सह भगवान् ऋषभो निष्क्रान्तः, शेषास्तु—अजितस्वामिप्रभृतयः सहस्रपरिवारा निष्क्रान्ताः ॥ सम्प्रति प्रसङ्गतोऽत्रैव द्वारे ये यस्मिन् वयसि निष्क्रान्ता इत्येतदभिधित्सुराह—

वीरो अरिट्ठनेमी पासो मल्ली य वासुपुज्जो य । पढमवए पव्वइया सेसा पुण मज्झिमवयंमि ॥ २४८ ॥

वीरो—महावीरः अरिष्ठनेमिः पार्श्वनाथो मल्लिर्वासुपूज्य इत्येते पञ्च तीर्थकृतः प्रथमवयसि—कुमारत्वलक्षणे प्रव्रजिताः, शेषाः पुनः—ऋषभस्वामिप्रभृतयो मध्यमे वयसि—यौवनलक्षणे वर्त्तमानाः प्रव्रजिताः ॥ गतं प्रत्येकद्वारमधुनोपधिद्वारमाह—

सव्वेऽवि एगदूसेण निग्गया जिणवरा चउव्वीसं । न य नाम अन्नलिंगे न य गिहिलिंगे कुलिंगे वा ॥ २४९ ॥

सर्वेऽपि भगवन्तोऽतीता अपि जिनवराः चतुर्विंशतिः-चतुर्विंशतिसङ्ख्याः, एतेन सर्वास्वप्यवसर्पिणीषूत्सर्पिणीषु च प्रत्येकं भरतक्षेत्रे चतुर्विंशतिरेव तीर्थकरा अभूवन्निति ख्यापितम्, 'एगदूष्येण' एकेन वस्त्रेण निर्गता—अभिनिष्क्रान्ताः, तद्यदि भगवन्तोऽप्येकदूष्येण निर्गता इति सोपधयोऽभवन्, किं पुनस्तन्मतानुवर्तिनः शिष्या न सोपधयः, तत्र य उपधिरासेवितो भगवद्भिः स साक्षादेवोक्तः, यः पुनर्विनेयेभ्यः स्थविरकल्पिकादिभेदभिन्नेभ्योऽनुज्ञातः स खलु ग्रन्थान्तरादवसेयः ॥ गतमुपधिद्वारम्, इदानीं लिङ्गद्वारं—तत्र सर्व एव तीर्थकृतस्तीर्थकरलिङ्ग एव निष्क्रान्ता, न तु नाम अन्यलिङ्गे—गृहिसाधुलिङ्गे कुलिङ्गे वा, अन्यलिङ्गाद्यर्थः प्रागेवाभिहितः ॥ सम्प्रति यो येन तपसा निष्क्रान्तस्तदभिधित्सुराह—

सुमइत्थ निच्चभत्तेण निग्गतो वासुपुज्ज जिण चउत्थेण । पासो मल्लीवि य अट्ठमेण सेसा उ छट्ठेणं ॥ २५० ॥

सुमतिरत्र—अस्यामवसर्पिण्यां चतुर्विंशतौ तीर्थकृत्सु मध्ये नित्यभक्तेन—अनवरतभक्तेन निर्गतः—निष्क्रान्तः, वासु-

पूज्यो जिनश्चतुर्थेन, एकेनोपवासेनेत्यर्थः, पार्श्वनाथो मल्लिरपि चाष्टमेन–त्रिभिरुपवासैः, शेषास्तु ऋषभस्वामिप्रभृतयः षष्ठेन–द्वाभ्यामुपवासाभ्यां निष्क्रान्ताः ॥ साम्प्रतमस्मिन्नेव निर्गमप्रस्तावे यो यत्र नगरे यत्र चोद्यानादौ निष्क्रान्तस्तदेतदभिधित्सुराह—

**उसभो य विणीयाए बारवईए अरिट्ठवरनेमी । अवसेसा तित्थयरा निक्खंता जम्मभूमीसु ॥ २५१ ॥**

ऋषभः–ऋषभस्वामी भगवान् विनीतायां नगर्यां निष्क्रान्तः, द्वारवत्यां अरिष्टनेमिः, अवशेषा–अजितस्वामिप्रभृतयस्तीर्थकरा निष्क्रान्ता जन्मभूमिषु, यत्र जातास्तत्र निष्क्रान्ता इति भावः ॥

**उसभो सिद्धत्थवणंमि वासुपुज्जो विहारगिहगंमि । धम्मो य वप्पगाए नीलगुहाए मुणी नाम ॥ २५२ ॥**
**आसमपयंमि पासो वीरजिणिंदो य नायसंडंमि । अवसेसा पव्वइया (निक्खंता) सहस्संबवणंमि उज्जाणे ॥२५३॥**

ऋषभः–ऋषभस्वामी सिद्धार्थवने उद्याने निष्क्रान्तः, वासुपूज्यो विहारगृहके–विहारगृहकाभिधाने उद्याने, धर्मो–धर्मस्वामी भगवान् वप्रगायां–वप्रगाभिधाने उद्याने, तथा च वक्ष्यति–'सेसाण केवलाइं जेसुज्जाणेसु पव्वइया' एवं नीलगुफायां–नीलगुफाभिधाने उद्याने मुनिनामा–मुनिसुव्रतनामा तीर्थकरो निष्क्रान्तः, तथा आश्रमपदे–आश्रमपदाभिधान उद्याने पार्श्वनाथो निष्क्रान्तः, वीरजिनेन्द्रो ज्ञातखण्डाभिधाने उद्याने, अवशेषाः–अजितस्वामिप्रभृतयस्तीर्थकराः सहस्राम्रवने निष्क्रान्ताः ॥ इदानीं प्रसङ्गत एव निर्गमनकालं प्रतिपादयन्नाह—

**पासो अरिट्ठनेमी सेज्जंसो सुमति मल्लिनामो य । पुव्वण्हे निक्खंता सेसा पुण पच्छिमण्हंमि ॥ २५४ ॥**

पार्श्वनाथोऽरिष्ठनेमिः श्रेयांसः सुमतिर्मल्लिनामा च, एते पञ्च तीर्थकृतः पूर्वाह्ने निष्क्रान्ताः, शेषाः पुनः—ऋषभस्वामिप्रभृतयः पश्चिमाह्ने ॥ सम्प्रति ग्रामाचारद्वारप्रतिपादनार्थमाह—

गामायारा विसया निसेविया ते कुमारवज्जेहिं । गामागराइएसु य केसि (सु) विहारो भवे कस्स ? ॥ २५५ ॥

ग्रामाचारा नाम विषया उच्यन्ते, ते विषया निसेविता—आसेविताः कुमारवर्जैः—कुमारभाव एव ये प्रव्रज्यां गृहीतवन्तः तान् मुक्त्वा शेषैः सर्वैस्तीर्थकृद्भिः, किमुक्तं भवति ?—वासुपूज्यमल्लिस्वामिपार्श्वनाथभगवदरिष्ठनेमिव्यतिरिक्तैः सर्वैस्तीर्थकृद्भिरासेविता विषयाः, न तु वासुपूज्यप्रभृतिभिः, तेषां कुमारभाव एव व्रतग्रहणाभ्युपगमादिति, अथवा ग्रामाचारा नाम ग्रामाकरादिषु विहारास्ते वक्तव्याः यथा कस्य भगवतः केषु ग्रामाकरादिषु विहार आसीदिति । एतदेवाह—

मगहारायगिहाइसु मुणओ खेत्तारिएसु विहरिंसु । उसभो नेमी पासो वीरो य अणारिएसुंपि ॥ २५६ ॥

मन्यन्ते स्म जगतः समस्तस्यापि त्रिकालावस्थामिति मुनयो—भगवन्तस्तीर्थकृतस्ते सर्वेऽपि मगधादिषु जनपदेषु राजगृहादिषु नगरेषु क्षेत्रार्येषु—आर्यक्षेत्रेषु विहृतवन्तः, इह आर्यक्षेत्रचिन्तायां शास्त्रान्तरेषु मगधादयो जनपदा राजगृहादीनि नगराण्युक्तानि इत्यत्रापि 'मगहारायगिहाइसु' इत्युक्तम्, अन्यथा ऋषभस्वामिन आदितीर्थकरत्वात् तदनुरोधेन नगरचिन्तायां विनीतादिष्वित्युच्येतेति, ऋषभस्वामी अरिष्ठनेमिः पार्श्वनाथो वीरश्च भगवानित्येते चत्वारस्तीर्थकृतोऽनार्येष्वपि क्षेत्रेषु विहृतवन्तः ॥ गतं ग्रामाचारद्वारम्, इदानीं परीषहद्वारमाह—

उदिता परीसहा सिं पराइया ते य जिणवरिंदेहिं । नव जीवाइपयत्थे उवलंभेऊण निक्खंता ॥ २५७ ॥

उदिताः परीषहाः—शीतोष्णादयः एषां—भगवतां तीर्थकृतां, परं ते परीषहाः सर्वैरपि जिनवरेन्द्रैः पराजिताः। गतं परीषहद्वारम्॥ अधुना जीवोपलम्भद्वारमाह—'नव जीवाइ' इत्यादि, नव जीवादीन् आदिशब्दादजीवास्रवबन्धसंवरपुण्यपापनिर्जरामोक्षपरिग्रहः पदार्थानुपलभ्य सर्वे निष्क्रान्ताः॥ गतं जीवोपलम्भद्वारम्, इदानीं श्रुतलाभादिद्वाराणि प्रतिपादयति—

पढमस्स बारसंगं सेसाणिक्कारसंगसुयलंभो। पंच जमा पढमंतिमजिणाण सेसाण चत्तारि॥ २५८॥

पच्चक्खाणमिणं संजमो य पढमंतिमाण दुविगप्पो। सेसाणं सामइतो सत्तरसंगो अ सव्वेसिं॥ २५९॥

प्रथमस्य—भगवत ऋषभस्वामिनः पूर्वभवे श्रुतलाभः परिपूर्णं द्वादशाङ्गम्, अवशेषाणाम्—अजितस्वामिप्रभृतीनामेकादशाङ्गानि, यस्य च यावान् पूर्वभवे श्रुतलाभः तस्य तावान् तीर्थकरजन्मन्यपि अनुवर्त्तते, गतं श्रुतलाभद्वारम्॥ अधुना प्रत्याख्यानद्वारमाह—प्रथमजिनस्य—ऋषभस्वामिनोऽन्तिमजिनस्य—वर्द्धमानस्वामिन इदं प्रत्याख्यानं, यदुत पञ्च यमाः—प्राणातिपातनिवृत्त्यादीनि पञ्च महाव्रतानि, शेषाणाम्—अजितस्वामिप्रभृतीनां मध्यमानां द्वाविंशतितीर्थकृतां चत्वारो यमाः, मैथुनव्रतवर्जाणि शेषाणि चत्वारि महाव्रतानीत्यर्थः, तेषां मैथुनस्य परिग्रहेऽन्तर्भावविवक्षणात्, नापरिगृहीता स्त्री परिभुज्यते इति न्यायात्, संयमोऽपि—सामायिकादिरूपः प्रथमान्तिमजिनयोर्द्विविकल्पः, इत्वरं सामायिकं छेदोपस्थापनीयं चेत्यर्थः, शेषाणां—मध्यमानां द्वाविंशतितीर्थकृतां यावत्कथिकमेवैकं सामायिकं, न शेषं छेदोपस्थापनादि, तथाकल्पत्वात्, सप्तदशाङ्गः—सप्तदशभेदः पुनः, चः पुनरर्थे, सर्वेषां तीर्थकृतामभूत्, ते च सप्तदश भेदा अमी—

"पञ्चाश्रवाद्विरमणं पञ्चेन्द्रियनिग्रहः कषायजयः। दण्डत्रयविरतिश्चेति संयमः सप्तदशभेदः ॥ १ ॥" सम्प्रति छद्मस्थतपःकर्मप्रतिपादनार्थमाह—

वाससहस्सं बारस चोद्दस अट्ठार वीस वरिसाइं। मासा छच्च तिण्णि य चउतिगदुगमेक्कगदुगं च ॥ २३० ॥
तिगदुगएक्कग सोलस वासा तिण्णि य तहेवऽहोरत्तं। मासेक्कारस नवगं चउपण्णदिणाइं चुलसीई ॥ २३१ ॥
तह बारस वरिसाइं जिणाण छउमत्थकालपरिमाणं। उग्गं च तवोकम्मं विसेसतो वद्धमाणस्स ॥ २३२ ॥

भगवत ऋषभस्वामिनः छद्मस्थकालो वर्षसहस्रम्, अजितस्वामिनो द्वादश वर्षाणि, सम्भवनाथस्य चतुर्दश वर्षाणि, अभिनन्दननाथस्याष्टादश, सुमतिस्वामिनो विंशतिवर्षाणि, पद्मप्रभस्य षण्मासाः, सुपार्श्वस्य नव, चन्द्रप्रभस्य त्रयः, सुविधिस्वामिनश्चत्वारः, शीतलस्य त्रयः, श्रेयांसस्य द्वौ, वासुपूज्यस्यैको, विमलनाथस्य द्वौ मासौ, अनन्तजिनस्य त्रीणि वर्षाणि, धर्मस्य द्वे वर्षे, शान्तिनाथस्यैकं वर्षं, कुन्थुनाथस्य षोडश वर्षाणि, अरनाथस्य त्रीण्यहोरात्राणि, मल्लिस्वामिन एकमहोरात्रं, सुव्रतस्वामिन एकादश मासाः, नमिनाथस्य मासनवकम्, अरिष्टनेमेश्चतुष्पञ्चाशद्दिनानि, भगवतः पार्श्वनाथस्य चतुरशीतिर्दिनानि, वर्द्धमानस्वामिनो द्वादश वर्षाणि, एतत् जिनानां—तीर्थकृतां छद्मस्थकालपरिमाणं, सर्वेषामपि च छद्मस्थकाले उग्रं तपःकर्म, विशेषतो वर्द्धमानस्वामिन उग्रमिति ॥ सम्प्रति ज्ञानोत्पादद्वारमाह—

फग्गुणबहुलेक्कारसि उत्तरसाढाहिं नाणमुसभस्स। पोसेक्कारसिसुद्धे रोहिणिजोगेण अजियस्स ॥ २३३ ॥
कत्तियबहुले पंचमिमिगसिरजोएण संभवजिणस्स। पोसे सुद्धचउद्दसि अभीइ अभिनंदणजिणस्स ॥ २३४ ॥

चित्ते सुद्धेक्कारसि महाहिं सुमइस्स नाणमुप्पन्नं । चेत्तस्स पुण्णिमाए पउमाभजिणस्स चित्ताहिं ॥ २६५ ॥
फग्गुणबहुले छट्ठी विसाहजोगे सुपासनामस्स । फग्गुणबहुले सत्तमि अणुराहे ससिप्पभजिणस्स ॥ २६६ ॥
कित्तियसुद्धे तइया मूले सुविहिस्स पुप्फदंतस्स । पोसे बहुलचउद्दसि पुव्वासाढाहिं सीयल[जिण]स्स ॥ २६७ ॥
पन्नरसि माहबहुले सेज्जंसजिणस्स सवणजोएण । सयभिसय वासुपुज्जे बीयाए माहसुद्धस्स ॥ २६८ ॥
पोसस्स सुद्धछट्ठी उत्तरभद्दवय विमलनामस्स । वइसाहबहुलचउद्दसि रेवइजोएण णंतस्स ॥ २६९ ॥
पोसस्स पुण्णिमाए नाणं धम्मस्स पुस्सजोएणं । पोसस्स सुद्धनवमी भरणीजोएण संतिस्स ॥ २७० ॥
चित्तस्स सुद्धतइया कत्तियजोएण नाण कुंथुस्स । कत्तियसुद्धे बारसि अरस्स नाणं तु रेवईहिं ॥ २७१ ॥
मगसिरसुद्धएक्कारसीएँ मल्लिस्स अस्सिणीजोए । फग्गुणबहुले बारसि सवणेणं सुव्वयजिणस्स ॥ २७२ ॥
मगसिरसुद्धेक्कारसि अस्सिणिजोएण नमिजिणिंदस्स । आसोयऽमावसाए नेमिजिणिंदस्स चित्ताहिं ॥ २७३ ॥
चित्ते बहुलचउत्थी विसाहजोएण पासनामस्स । वइसाहसुद्धदसमी हत्थुत्तरजोगि वीरस्स ॥ २७४ ॥

एता द्वादशापि गाथा निगदसिद्धाः ॥ सम्प्रति कस्य कस्मिन् दिवसभागे ज्ञानमुत्पन्नमिति प्रतिपादयति—

तेवीसाए नाणं उप्पन्नं जिणवराण पुव्वण्हे । वीरस्स पच्छिमण्हे पमाणपत्ताए चरमाए ॥ २७५ ॥

त्रयोविंशति( तेः ) जिनवराणां तीर्थकृतां ज्ञानमुत्पन्नं पूर्वाह्णे, सूरोद्गमनमुहूर्त्ते इत्यर्थः, तथा चोक्तं चूर्णौ—"तेवीसाए तित्थगराणं सूरुग्गमणमुहुत्ते एगराइयाए पडिमाए नाणमुप्पन्न"मिति, वीरस्य भगवतः—अपश्चिमतीर्थकृतः पश्चिमाह्ने,

तत्रापि प्रमाणप्राप्तायां चरमायां पौरुष्यामिति, अन्ये त्वभिदधति–द्वाविंशतेः पूर्वाह्णे ज्ञानमुत्पन्नं मल्लिस्वामिमहावीरयोः पुनरपराह्णे इति ॥ साम्प्रतमधिकृतद्वार एव येषु क्षेत्रेषूत्पन्नं तदभिधानार्थमाह—

उसभस्स पुरिमताले वीरस्सुज्जुवालियानदीतीरे । सेसाण केवलाइं जेसुज्जाणेसु पव्वइया ॥ २७६ ॥

ऋषभस्य–भगवतः आदितीर्थकरस्य विनीतायाः प्रत्यासन्नं यत्पुरिमतालं नगरं तत्र ज्ञानमुत्पन्नं, तत्रापि शकटमुखे उद्याने न्यग्रोधपादपस्याधो निविष्टस्य सूर्योद्गमनवेलायां, वीरस्य भगवत ऋजुवालिकानदीतीरे, तत्र गृहपतिश्यामाकखले शालतरोरधःस्थितस्य, शेषाणां तु तीर्थकृतां केवलज्ञानानि येषूद्यानेषु प्रव्रजितास्तत्रोत्पन्नानि ॥ साम्प्रतं यस्य येन तपसा समुत्पन्नं तस्य तत्तपः प्रतिपादयन्नाह—

अट्ठमभत्तंतंमी पासोसहमल्लिरिट्ठनेमीणं । वसुपुज्जस्स चउत्थेण छट्ठभत्तेण सेसाणं ॥ २७७ ॥

पार्श्वनाथऋषभस्वामिमल्लिनाथारिष्टनेमीनामष्टमभक्तान्ते–उपवासत्रयपर्यन्ते केवलज्ञानमुदपादि, वासुपूज्यस्य पुनर्भगवतश्चतुर्थेन, शेषाणां षष्ठभक्तेन ॥ गतं ज्ञानोत्पादद्वारम्, सम्प्रति सङ्ग्रहद्वारं विवरीषुः प्रथमतो यतिसङ्ग्रहपरिमाणमाह—

चुलसीइं च सहस्सा एगं च दुवे य तिण्णि लक्खाइं । तिण्णि य वीसहियाइं तीसहियाइं च तिन्नेव ॥ २७८ ॥
तिन्नि य अड्ढाइज्जा दुवे य एगं च सयसहस्साइं । चुलसीइं च सहस्सा बिसत्तरिं अट्ठसट्ठिं च ॥ २७९ ॥
छावट्ठिं चोवट्ठिं बासट्ठिं सट्ठिमेव पन्नासा । चत्ता तीसा वीसा अट्ठारस सोलस सहस्सा ॥ २८० ॥
चोद्दस य सहस्साइं जिणाण जइसीससंगहपमाणं । अज्जासंगहमाणं उसभाईणं अतो वोच्छं ॥ २८१ ॥

भगवत ऋषभस्वामिनश्चतुरशीतिसहस्राणि श्रमणानाम्, एकं लक्षमजितस्य द्वे लक्षे सम्भवनाथस्य त्रीणि लक्षाण्यभिनन्दनस्य सुमतेः त्रीणि लक्षाणि विंशतिसहस्राभ्यधिकानि पद्मप्रभस्य त्रीणि त्रिंशत्सहस्राधिकानि सुपार्श्वस्य त्रीणि लक्षाणि चन्द्रप्रभस्य अर्द्धतृतीयानि लक्षाणि सुविधेर्द्वे लक्षे शीतलस्य एकं लक्षं श्रेयांसस्य चतुरशीतिः श्रमणानां सहस्राणि वासुपूज्यस्य द्वासप्ततिः सहस्राणि विमलस्य अष्टषष्टिः सहस्राणि अनन्तजिनस्य षट्षष्टिः सहस्राणि धर्म्मनाथस्य चतुःषष्टिः सहस्राणि शान्तिनाथस्य द्वाषष्टिः सहस्राणि कुन्थुनाथस्य षष्टिः सहस्राणि अरनाथस्य पञ्चाशत्सहस्राणि मल्लिनाथस्य चत्वारिंशत्सहस्राणि मुनिसुव्रतस्वामिनस्त्रिंशत्सहस्राणि नमिस्वामिनो विंशतिसहस्राणि अरिष्टनेमेरष्टादश सहस्राणि पार्श्वनाथस्य षोडश सहस्राणि भगवतो महावीरस्य चतुर्दश सहस्राणि, एतद्यतिशिष्यसङ्ग्रहप्रमाणं जिनानाम्–ऋषभादीनां यथाक्रममवसातव्यं, तच्च तथैव भावितम् ॥ अत ऊर्ध्वमार्यासङ्ग्रहप्रमाणमृषभादीनां जिनानां क्रमेण वक्ष्ये ॥ प्रतिज्ञातमेव निर्वाहयति–

तिण्णेव य लक्खाइं तिन्नि य तीसाइं तिन्नि छत्तीसा । तीसा य छच्च पंच य तीसा चउरो य वीसाइं ॥२८२॥
चत्तारि य तीसाइं असीउत्तर तिण्णि तिण्णिमित्तो य । वीसुत्तरं छलहियं तिसहस्सऽहियं च लक्खं च ॥२८३॥
लक्खं अट्ठसयाणि य बासट्ठिसहस्स चउसय समग्गा । एगट्ठी छच्च सया सट्ठिसहस्सा सया छच्च ॥ २८४ ॥
सट्ठि पणपन्न पन्नेगचत्त चत्ता तहऽट्ठतीसं च । छत्तीसं च सहस्सा अज्जाणं संगहो एसो ॥ २८५ ॥

भगवत आदितीर्थकरस्यार्यिकाणां त्रीणि लक्षा अजितस्वामिनस्त्रीणि लक्षाणि त्रिंशानि–त्रिंशत्सहस्राभ्यधिकानि सम्भवनाथस्य त्रीणि लक्षाणि षट्त्रिंशत्सहस्राभ्यधिकानि अभिनन्दनस्य लक्षाणि षट् त्रिंशानि–त्रिंशत्सहस्राभ्यधिकानि

सुमतिनाथस्य पञ्च लक्षाणि त्रिंशत्सहस्राधिकानि पद्मप्रभस्य चत्वारि लक्षाणि विंशतिसहस्राधिकानि सुपार्श्वस्य चत्वारि लक्षाणि त्रिंशत्सहस्राभ्यधिकानि चन्द्रप्रभस्वामिनस्त्रीणि लक्षाणि अशीतिसहस्रोत्तराणि सुविधिस्वामिनस्त्रीणि परिपूर्णानि लक्षाणि, 'तिन्निमित्तो य'इति त्रिलक्षमात्रमार्यासङ्ग्रह इति गम्यते इत्यर्थः, शीतलनाथस्य विंशत्युत्तरं—विंशतिसहस्राधिकं लक्षं श्रेयांसस्य षट्सहस्राधिकं लक्षं वासुपूज्यस्य त्रिसहस्राधिकं लक्षं विमलनाथस्य परिपूर्णं लक्षम् अनन्तजितो लक्षमेकमष्टौ च शतानि धर्म्मनाथस्य द्वाषष्टिसहस्राणि चतुःशताभ्यधिकानि शान्तिनाथस्य एकषष्टिः सहस्राणि षट् शतानि कुन्थुनाथस्य षष्टिः सहस्राणि षट् शतानि अरनाथस्य षष्टिः सहस्राणि मल्लिस्वामिनः पञ्चपञ्चाशत्सहस्राणि मुनिसुव्रतस्वामिनः पञ्चाशत्सहस्राणि नमिनाथस्य एकचत्वारिंशत्सहस्राणि अरिष्टनेमेश्चत्वारिंशत्सहस्राणि पार्श्वनाथस्याष्टात्रिंशत्सहस्राणि भगवतो वर्द्धमानस्वामिनः षट्त्रिंशत्सहस्राणि, एवं ऋषभादीनां जिनानां यथाक्रममार्यिकासङ्ग्रहः ॥

पढमाणुयोगसिद्धो पत्तेयं सावयाइयाणं च । नेओ सव्वजिणाणं सीसाणं संगहो कमसो ॥ २८६ ॥

श्रावकादीनामादिशब्दात् श्राविकाचतुर्दशपूर्वधरादिपरिग्रहः, शिष्याणां सङ्ग्रहः क्रमशो—यथाक्रमं सर्वजिनानां प्रथमानुयोगसिद्धः—प्रथमानुयोगप्रतीतो ज्ञेयः, तत्र ऋषभस्वामिअरिष्टनेमिमल्लीपार्श्वनाथवर्द्धमानस्वामिनां यथासम्प्रदायमुपदर्श्यते—भगवत आदितीर्थकृत ऋषभसेनप्रमुखाणि चतुरशीतिश्रमणसहस्राणि ब्राह्मीसुन्दरीप्रभृतीनि त्रीण्यार्यिकाणां लक्षाणि श्रेयांसप्रभृतीनि त्रीणि श्रमणोपासकलक्षाणि पञ्चसहस्राभ्यधिकानि सुभद्राप्रमुखानि पञ्च श्रमणोपासिकाशतसहस्राणि चतुष्पञ्चाशत्सहस्राभ्यधिकानि चत्वारिंशत्सहस्राणि सप्तशताभ्यधिकानि चतुर्दशपूर्विणां नव सहस्राण्यवधिज्ञानिनां

केवलज्ञानिनां विंशतिसहस्राणि २००००, विंशतिसहस्राणि षट्शताभ्यधिकानि २०६०० वैक्रियलब्धिमतां, द्वादश सहस्राणि षट् शतानि पञ्चाशदधिकानि १२६५० विपुलमतीनां, द्वादश सहस्राणि षट् शतानि पञ्चाशदधिकानि १२६५० वादिनां, द्वाविंशतिसहस्राणि नव शतानि २२९०० अनुत्तरोपपातिनां, विंशतिः श्रमणसहस्राणि सिद्धानि २०००० चत्वारिंशदार्यिकासहस्राणि सिद्धानि ४०००० सर्वसङ्ख्यया षष्टिरन्तेवासिसहस्राणि सिद्धानि ६००००। भगवतोऽरिष्टनेमेर्वरदत्तप्रमुखाण्यष्टादश श्रमणसहस्राणि १८००० यक्षिणीप्रमुखाणि चत्वारिंशदार्यिकासहस्राणि ४०००० नन्दप्रमुखानां श्रमणोपासकानामेकं शतसहस्रमेकोनसप्ततिश्च सहस्राणि १६९००० महासुव्रताप्रमुखाणां श्रमणोपासिकानां त्रीणि लक्षाणि षट्त्रिंशत्सहस्राणि ३३६०० चत्वारि शतानि ४०० चतुर्दशपूर्विणां पञ्चदश शतानि १५०० अवधिज्ञानिनां पञ्चदश शतानि १५०० केवलज्ञानिनां पञ्चदश शतानि वैक्रियलब्धिमतां १५०० दश शतानि १००० विपुलमतीनां अष्टादश शतानि १८०० वादिनां षोडश शतानि १६०० अनुत्तरोपपातिनां। भगवतः पार्श्वनाथस्य आर्यदिन्नप्रमुखाणि षोडश श्रमणसहस्राणि १६००० पुष्पचूलाप्रमुखाण्यष्टात्रिंशदार्यिकासहस्राणि ३८००० सुनन्दाप्रमुखाणामेकं लक्षं चतुःषष्टिसहस्राणि श्रमणोपासकानां १६४००० नन्दिनीप्रमुखाणां श्रमणोपासिकानां त्रीणि लक्षाणि सप्तविंशतिः सहस्राणि ३२७००० अर्द्धचतुर्थानि शतानि ३५० चतुर्दशपूर्विणां चतुर्दश शतानि १४०० अवधिज्ञानिनां दश शतानि केवलज्ञानिनामेकादश शतानि ११०० वैक्रियलब्धिमतामर्द्धाष्टमानि शतानि ७५० विपुलमतीनां षट् शतानि ६०० वादिनां द्वादश शतानि १२०० अनुत्तरोपपातिनां। श्रमणस्य भगवतो महावीरस्य इन्द्रभूतिप्रमुखाणि चतुर्दश श्रमणसहस्राणि १४००० आर्यचन्दना-

प्रमुखाणि षट्त्रिंशदार्यिकासहस्राणि ३६००० शङ्खप्रमुखाणां श्रमणोपासकानामेकं लक्षं एकोनषष्टिः सहस्राणि १५९००० सुलसारेवतीप्रमुखाणां श्रमणोपासिकानां त्रीणि शतसहस्राणि अष्टादश सहस्राणि ३१८००० त्रीणि शतानि चतुर्दशपूर्विणां ३०० त्रयोदश शतानि १३०० अवधिज्ञानिनां सप्त शतानि ७०० केवलज्ञानिनां सप्त शतानि ७०० वैक्रियलब्धिमतां पञ्च शतानि ५०० विपुलमतीनां चत्वारि शतानि ४०० वादिनामष्टौ शतानि ८०० अनुत्तरोपपातिनाम् ॥ गतं सङ्ग्रहद्वारम्, अधुना तीर्थद्वारमाह—

तित्थं चाउव्वण्णो संघो सो पढमए समोसरणे । उप्पण्णो उ जिणाणं वीरजिणिंदस्स बीयंमि ॥ २८७ ॥

तीर्थं नाम प्रवचनं, तच्च निराधारं न भवतीति चतुर्वर्णः सङ्घ उच्यते, स जिनानाम्-ऋषभादीनां प्रथम एव समवसरणे उत्पन्नः, वीरजिनेन्द्रस्य पुनर्द्वितीये समवसरणे, मध्यमायां पुरि, यत्र हि केवलज्ञानमुत्पन्नं तत्र तथाकल्पत्वात्समवसरणमभूत् यावता न तत्र सङ्घो जातः ॥ गतं तीर्थद्वारम्, अधुना गणद्वारमाह—

चुलसीइ पंचणउई बिउत्तरं सोलसुत्तरसयं च । सत्तहियं पणनउई तेणउइं अट्ठसीई य ॥ २८८ ॥
एक्कासीइ छावत्तरी य छावट्ठि सत्तवन्ना य । पन्ना तेयालीसा छत्तीसा चेव पणतीसा ॥ २८९ ॥
तेतीसऽट्ठावीसा अट्ठारस चेव तहय सत्तरस । एक्कारसदसनवगं गणाण माणं जिणिंदाणं ॥ २९० ॥

भगवत आदितीर्थकरस्य चतुरशीतिर्गणा, गणो नामेह एकवाचनाचारक्रियास्थानां समुदायो, न कुलसमुदाय इति पूर्वसूरयः, अजितस्वामिनः पञ्चनवतिर्गणाः सम्भवनाथस्य द्व्युत्तरं शतम् अभिनन्दनस्य षोडशोत्तरं शतं सुमतिनाथस्य

परिपूर्णं शतं पद्मप्रभस्य सप्ताधिकं शतं सुपार्श्वस्य पञ्चनवतिः चन्द्रप्रभस्य त्रिनवतिः सुविधिस्वामिनोऽष्टाशीतिः शीतलस्य एकाशीतिः श्रेयांसस्य षट्सप्ततिः वासुपूज्यस्य षट्षष्टिः विमलस्य सप्तपञ्चाशत् अनन्तजितः पञ्चाशत् धर्म्मस्य त्रिचत्वारिंशत् शान्तिनाथस्य षट्त्रिंशत् कुन्थुनाथस्य पञ्चत्रिंशत् अरजिनस्य त्रयस्त्रिंशत् मल्लिस्वामिनोऽष्टाविंशतिः मुनिसुव्रतस्वामिनोऽष्टादश नमिनाथस्य सप्तदश अरिष्टनेमेरेकादश पार्श्वनाथस्य दश वर्द्धमानस्वामिनो नव, एतत् जिनेन्द्राणाम्–ऋषभादीनां जिनानां यथाक्रमं गणानां मानं–परिमाणं ॥ सम्प्रति गणधरप्रतिपादनार्थमाह—

एक्कारस उ गणहरा वीरजिणिंदस्स सेसयाणं तु । जावइया जस्स गणा तावइया गणधरा तस्स ॥ २९१ ॥

गणधरा नाम मूलसूत्रकर्त्तारः, ते च वीरजिनस्य एकादश, गणास्तु नव, द्वयोर्युगलयोरेकैकवाचनाचारक्रियास्थत्वात्, शेषाणां तु जिनवरेन्द्राणां यस्य यावन्तो गणास्तस्य तावन्तो गणधराः, प्रतिगणधरं भिन्नभिन्नवाचनाचारक्रियास्थत्वात् ॥ गतं गणधरद्वारम्, इदानीं धर्मोपायस्य देशका इत्येतद्व्याचिख्यासुराह—

धम्मोवाओ पवयणमहवा पुव्वाइं देसया तस्स । सव्वजिणाण गणहरा चोद्दसपुव्वी उ ते तस्स ॥ २९२ ॥

धर्म्मोपायो नाम प्रवचनं, तदन्तरेण धर्म्मस्यासम्भवात्, अथवा पूर्वाणि, तस्य–धर्म्मोपायस्य देशकाः सर्वजिनानां गणधराः, तेषां मूलसूत्रकर्तृत्वात्, अथवा ये यस्य तीर्थकृतश्चतुर्दशपूर्विणस्ते धर्मोपायस्य देशकाः, परिपूर्णश्रुततया तेषां यथावस्थितवस्तुदेशकत्वात् ॥

सामाइयाइया वा वयजीवनिकायभावणा पढमं । एसो धम्मोवादो जिणेहिं सव्वेहिं उवइट्ठो ॥ २९३ ॥

वाशब्दः प्रकारान्तरताद्योतनार्थः, अथवा या प्रथमं व्रतजीवनिकायभावना महाव्रतविषयषड्जीवनिकाययथावस्थितप- रिज्ञानसम्यक्श्रद्धानसंरक्षणाध्यवसायरूपा भावना सामायिकादिका-रागद्वेषपरिहारेण समभावादिका एष धर्म्मोपायः, तमन्तरेण सम्यक्चारित्ररूपधर्म्मासम्भवात्, इत्थंभूतश्च धर्म्मोपायो जिनैः सर्वैरप्युपदिष्टः, ततो धर्म्मोपायस्य देशकास्त एव जिना इति ॥ उक्तं धर्म्मोपायदेशकद्वारम्, अधुना पर्यायद्वारमाह—

उसभस्स पुव्वलक्खं पुव्वंगूणमजियस्स तं चेव । चउरंगूणं लक्खं पुणो पुणो जाव सुविहित्ति ॥ २९४ ॥
पणुवीसं तु सहस्सा पुव्वाणं सीयलस्स परियायो । लक्खाइं एक्कवीसं सिज्जंसजिणस्स वासाणं ॥ २९५ ॥
चउप्पन्नं पन्नारस तत्तो अद्धट्ठमाइं लक्खाइं । अड्ढाइज्जाइं तत्तो वाससहस्साइं पणुवीसं ॥ २९६ ॥
तेवीसं च सहस्सा सयाणि अद्धट्ठमाणि य हवंति । एगवीसं च सहस्सा वाससऊणा य पणपन्नं ॥ २९७ ॥
अद्धट्ठमा सहस्सा अड्ढाइज्जाइ सत्त य सयाइं । सयरी बिचत्तवासा दिक्खाकालो जिणिंदाणं ॥ २९८ ॥

ऋषभस्य भगवतः श्रमणपर्याय एकं पूर्वलक्षम्, अजितस्वामिनस्तदेव एकं पूर्वलक्षमेकेन पूर्वाङ्गेन न्यूनं, पूर्वाङ्गं नाम चतुरशीतिवर्षलक्षाणि, अत ऊर्द्धं चतुरङ्गोनं पूर्वलक्षं पुनः पुनस्तावद्वक्तव्यं यावत्सुविधिः, तद्यथा-सम्भवनाथस्य व्रतपर्यायः एकं पूर्वलक्षं चतुर्भिरङ्गैरूनं, अभिनन्दनस्य एकं पूर्वलक्षमष्टभिः पूर्वाङ्गैरूनं, सुमतिनाथस्य एकं पूर्वल- द्वादशभिः पूर्वाङ्गैरूनं, पद्मप्रभस्य एकं पूर्वलक्षं षोडशभिः पूर्वाङ्गैर्हीनं, सुपार्श्वस्यैकं पूर्वलक्षं विंशत्या पूर्वाङ्गैर्हीनं, चन्द्रप्र- भस्य एकं पूर्वलक्षं चतुर्विंशत्या पूर्वाङ्गैर्हीनं, सुविधिनाथस्य एकं पूर्वलक्षमष्टाविंशत्या पूर्वाङ्गैर्हीनम्, पञ्चविंशतिः पूर्वाणां

सहस्राणि शीतलस्य पर्यायो—व्रतपर्यायः श्रेयांसजिनस्य वर्षाणां लक्षाण्येकविंशतिः वासुपूज्यस्य चतुष्पञ्चाशद्वर्षलक्षाणि विमलनाथस्य पञ्चदश वर्षलक्षाणि ततोऽनन्तरमनन्तजितोऽर्द्धाष्टमानि—सार्द्धानि सप्त वर्षलक्षाणि व्रतपर्यायः धर्म्मनाथस्यार्द्धतृतीयानि वर्षशतसहस्राणि शान्तिनाथस्य पञ्चविंशतिर्वर्षसहस्राणि कुन्थुनाथस्य त्रयोविंशतिर्वर्षसहस्राणि शतानि चार्द्धाष्टमानि अरस्वामिन एकविंशतिर्वर्षसहस्राणि मल्लिनाथस्य वर्षशतोनानि पञ्चपञ्चाशद्वर्षसहस्राणि मुनिसुव्रतस्वामिनोऽर्द्धाष्टमानि वर्षसहस्राणि नमिनाथस्यार्द्धतृतीयानि वर्षशतानि ( सहस्राणि ) अरिष्टनेमेः सप्त शतानि पार्श्वनाथस्य सप्ततिर्वर्षाणां वर्द्धमानस्वामिनो द्वाचत्वारिंशत्, एष यथाक्रमं जिनेन्द्राणां—ऋषभादीनां दीक्षाकालो—व्रतपर्यायः ॥

साम्प्रतमस्मिन्नेव पर्यायद्वारे भगवतां वैविक्त्येन कुमारादिपर्यायान् प्रतिपादयन्नाह—

उसभस्स कुमारत्तं पुव्वाणं वीसई सयसहस्सा । तेवट्ठी रज्जंमि उ अणुपालेऊण निक्खंतो ॥ २९९ ॥

अजियस्स कुमारत्तं अट्ठारस पुव्वसयसहस्साइं । तेवण्णं रज्जंमी पुव्वंगं चेव बोद्धव्वं ॥ ३०० ॥

पन्नरस सयसहस्सा कुमारवासो उ संभवजिणस्स । चोयालीसं रज्जे चउरंगं चेव बोद्धव्वं ॥ ३०१ ॥

अद्धत्तेरस लक्खा पुव्वाणऽभिणंदणे कुमारत्तं । छत्तीसा अद्धं चिय अट्ठंगा चेव रज्जंमि ॥ ३०२ ॥

सुमइस्स कुमारत्तं हवंति दस पुव्वसयसहस्साइं । अउणत्तीसं रज्जे बारस अंगाइं बोद्धव्वा ॥ ३०३ ॥

पउमस्स कुमारत्तं पुव्वाणद्धट्ठमा सयसहस्सा । अद्धं च एक्कवीसा सोलस अंगा य रज्जंमि ॥ ३०४ ॥

पुव्वसयसहस्साइं पंच सुपासे कुमारवासो उ । चउदस पुण रज्जंमी वीसं अंगा य बोद्धव्वा ॥ ३०५ ॥

अद्धं छच्चिय रज्जे चउवीसंगा य बोद्धव्वा ॥ ३०६ ॥
अड्ढाइज्जा लक्खा कुमारवासो उ ससिपहे होइ । तावइयं रज्जंमी अट्ठावीसं च पुव्वंगा ॥ ३०७ ॥
पण्णं पुव्वसहस्सा कुमारवासो उ पुप्फदंतस्स । तावइयं परियाओ पन्नासं चेव रज्जंमि ॥ ३०८ ॥
पणुवीससहस्साइं पुव्वाणं सीयले कुमारत्तं । तावइयं परियायो वायालीसं च रज्जंमि ॥ ३०९ ॥
वासाण कुमारत्तं एगवीसं लक्ख होइ सेज्जंसे । चउपन्न सयसहस्सा परियाओ होइ वसुपुज्जे ॥ ३१० ॥
गिहवासे अट्ठारस वासाणं सयसहस्स नियमेणं । चउपन्न सयसहस्सा परियायो होइ विमलस्स ॥ ३११ ॥
पन्नरस सयसहस्सा कुमारवासो उ तीसई रज्जे । पन्नरस सयसहस्सा परियायो होइ (विमलस्स)
पन्नरस सयसहस्सा कुमारवासो उ तीसई रज्जे । पन्नरस सयसहस्सा परियायो रज्जंमि य होंति पन्नरस ॥ ३१२ ॥
अद्धट्ठमलक्खाइं वासाणमणंतई कुमारत्ते । तावइयं परियाओ रज्जे पुण होंति पंचेव ॥ ३१३ ॥
धम्मस्स कुमारत्तं वासाणऽड्ढाइयाइं लक्खाइं । तावइयं परियाओ रज्जे पुण होंति पंचेव ॥ ३१४ ॥
संतिस्स कुमारत्ते मंडलिचक्किपरियाय चउसुंपि । पत्तेयं पत्तेयं वाससहस्साइं पणवीसं ॥ ३१५ ॥
एमेव य कुंथुस्सवि चउसुवि ठाणेसु होंति पत्तेयं । तेवीससहस्साइं वरिसाणऽद्धट्ठम सया य ॥ ३१६ ॥
एमेव अरजिणिंदस्स चउसुवि ठाणेसु होंति पत्तेयं । एगवीस सहस्साइं वासाणं हुंति नायव्वा ॥ ३१७ ॥
मल्लिस्सवि वाससयं गिहवासे सेसयं तु परियायो । चउपण्णसहस्साइं नव चेव सयाइं पुण्णाइं ॥ ३१८ ॥
अद्धट्ठमा सहस्सा कुमारवासो उ सुव्वयजिणस्स । तावइयं परियाओ पन्नरस सहस्स रज्जंमि ॥ ३१९ ॥
नमिणो कुमारवासो वाससहस्साइं दोन्नि अद्धं च । तावइयं परियाओ पंच सहस्साइं रज्जंमि ॥

तिन्नेव य वाससया कुमारवासो अरिट्ठनेमिस्स । सत्त य वाससयाइं सामण्णे होइ परियाओ ॥ ३२० ॥
पासस्स कुमारत्तं तीसं परियाउ सत्तरी होइ । तीसा य वद्धमाणे बायालीसा य परियाओ ॥ ३२१ ॥

ऋषभस्य कुमारत्वं पूर्वाणाम्—उक्तस्वरूपाणां विंशतिः शतसहस्राणि—लक्षाणि, त्रिषष्टिं पूर्वलक्षाणि राज्येऽनुपाल्य—गमयित्वा पश्चान्निष्क्रान्तः, तत एकं पूर्वलक्षं शेषं व्रतपर्यायः । अजितस्य भगवतोऽष्टादश पूर्वशतसहस्राणि कुमारत्वं, त्रिपञ्चाशत्पूर्वशतसहस्राण्येकं च पूर्वाङ्गं बोद्धव्यं राज्ये, शेषमेकपूर्वाङ्गोनपूर्वलक्षं व्रतपर्यायः । सम्भवजिनस्य कुमारवासः पञ्चदश पूर्वाणां शतसहस्राणि चतुश्चत्वारिंशत्पूर्वशतसहस्राणि 'चउरंगं चेवे'ति चतुर्णामङ्गानां समाहारश्चतुरङ्गं, चत्वारि च पूर्वाङ्गानि इत्यर्थः, राज्ये बोद्धव्यानि, शेषमेकं पूर्वलक्षं चतुर्भिः पूर्वाङ्गैरूनं व्रतपर्यायः । अभिनन्दने—षष्ठीसप्तम्योरर्थं प्रत्यभेदात् अभिनन्दनस्य कुमारत्वमर्द्धत्रयोदशानि—सार्द्धानि द्वादश पूर्वाणां लक्षाणि, षट्त्रिंशत्पूर्वलक्षाणि एकं चार्द्धलक्षमष्टौ च पूर्वाङ्गाणि राज्ये, शेषमेकं पूर्वलक्षमष्टभिः पूर्वाङ्गैरूनं व्रतपर्यायः । सुमतेः कुमारत्वं दश पूर्वशतसहस्राणि, एकोनत्रिंशत्पूर्वलक्षाणि द्वादश च पूर्वाङ्गानि भवन्ति बोद्धव्यानि राज्ये, शेषमेकं पूर्वलक्षं द्वादशभिः पूर्वाङ्गैरूनं व्रतपर्यायः । पद्मस्य—पद्मप्रभस्य कुमारत्वमर्द्धाष्टमानि पूर्वाणां शतसहस्राणि, एकविंशतिः पूर्वलक्षाणि अर्द्धं च पूर्वलक्षस्य तथा षोडश पूर्वाङ्गाणि राज्ये, शेषं त्वेकं पूर्वलक्षं षोडशपूर्वाङ्गोनं व्रतपर्यायः । सुपार्श्वे षष्ठीसप्तम्योरभेदात् सुपार्श्वनाथस्य भगवतः पञ्च पूर्वशतसहस्राणि कुमारत्वं, चतुर्दश पूर्वलक्षाणि विंशतिश्चाङ्गानि राज्ये बोद्धव्यानि, शेषं विंशत्या पूर्वाङ्गैरूनं पूर्वलक्षमेकं व्रतपर्यायः ॥ शशिप्रभे—चन्द्रप्रभस्य अर्धतृतीयलक्षपूर्वाणि कुमारवासो भवति, अर्धं षडेव च पूर्वलक्षाणि चतुर्विंशतिरङ्गानि च

बोद्धव्यानि राज्ये, शेषं पुनरेकं पूर्वलक्षं चतुर्विंशतिपूर्वाङ्गहीनं व्रतपर्यायः, पञ्चाशत्पूर्वसहस्राणि कुमारवासः। पुष्पदन्तस्य— सुविधिस्वामिनः तावदेव—पञ्चाशदेव पूर्वसहस्राणीत्यर्थः अष्टाविंशतिश्च पूर्वाङ्गानि राज्ये, शेषमेकं पूर्वलक्षमष्टाविंशतिपूर्वाङ्गहीनं व्रतपर्यायः। पञ्चविंशतिः पूर्वाणां सहस्राणि शीतलस्य कुमारत्वं, तावदेव—पञ्चविंशतिः पूर्वसहस्राणि पर्यायो—व्रतपर्यायः, पञ्चाशत्पूर्वसहस्राणि राज्ये। श्रेयांसस्य कुमारत्वमेकविंशतिर्वर्षाणां लक्षाणि भवन्ति, तावदेव—एकविंशतिः वर्षाणां लक्षाणि व्रतपर्यायः, द्वाचत्वारिंशद्वर्षलक्षाणि राज्ये। वासुपूज्यस्य गृहवासे—कुमारत्वलक्षणे नियमेन वर्षाणामष्टादश शतसहस्राणि, व्रतपर्यायः पुनश्चतुष्पञ्चाशद्वर्षाणां शतसहस्राणि, राज्यानभ्युपगमाच्च राज्यपर्यायाभावः। विमलस्य कुमारवासः पञ्चदश वर्षाणां शतसहस्राणि, त्रिंशद्वर्षलक्षाणि राज्ये, पञ्चदश वर्षशतसहस्राणि पर्यायो—व्रतपर्याय इति। अनन्तजितः कुमारत्वे वर्षाणामर्द्धाष्टमानि लक्षाणि, तावदेव—अर्द्धाष्टमानि वर्षलक्षाणि पर्यायो—व्रतपर्यायः, पञ्चदश वर्षलक्षाणि राज्ये। धर्म्मस्य तीर्थकृतः कुमारत्वमर्द्धतृतीयानि वर्षाणां लक्षाणि, अर्द्धतृतीयान्येव च वर्षलक्षाणि व्रतपर्यायः, पञ्च वर्षलक्षाणि पुनर्भवन्ति राज्ये। शान्तेः—शान्तिनाथस्य चतुर्ष्वपि—कुमारत्वमण्डलिचक्रिपर्यायेषु—मण्डलिचक्रिग्रहणं भावप्रधानं कुमारत्वमण्डलित्वचक्रित्वव्रतपर्यायरूपेषु स्थानेषु प्रत्येकं २ वर्षसहस्राणि पञ्चविंशतिरवगन्तव्यानि, पञ्चविंशतिर्वर्षसहस्राणि कुमारत्वं, पञ्चविंशतिर्वर्षसहस्राणि मण्डलिकत्वं, पञ्चविंशतिर्वर्षसहस्राणि चक्रवर्त्तिपदं, पञ्चविंशतिर्वर्षसहस्राणि व्रतपर्यायः। एवमेव—शान्तिनाथस्येव कुन्थुनाथस्यापि चतुर्ष्वपि स्थानेषु—कुमारत्वमण्डलित्वचक्रित्वव्रतपर्यायरूपेषु प्रत्येकं भवन्ति त्रयोविंशतिर्वर्षसहस्राणि अर्द्धाष्टमानि च वर्षाणां शतानि। एवमेव—कुन्थुनाथस्येव अरजिनेन्द्रस्यापि

चतुर्ष्वपि स्थानेषु–कुमारत्वमण्डलित्वचक्रवर्त्तिपदव्रतपर्यायरूपेषु प्रत्येकमेकविंशतिर्वर्षाणां सहस्राणि भवन्ति ज्ञातव्यानि । मल्लिनाथस्यापि गृहवासे वर्षशतं, शेषं तु सर्वमायुर्व्रतपर्यायः, तत्कियदिति चेत् अत आह—चतुष्पञ्चाशद्वर्षाणां सहस्राणि नव च परिपूर्णानि शतानि । अर्द्धाष्टमानि वर्षाणां सहस्राणि कुमारवासः सुव्रतजिनस्य, तावदेव–अर्द्धाष्टमान्येव वर्षसहस्राणि पर्यायो–व्रतपर्यायः, पञ्चदश वर्षसहस्राणि राज्ये । नमेर्भगवतः कुमारवासो द्वे वर्षसहस्रे अर्द्धं च–पञ्च वर्षशतानीत्यर्थः, तावत्कं–अर्द्धतृतीयान्येव वर्षसहस्राणि व्रतपर्यायः, पञ्च वर्षसहस्राणि राज्ये । अरिष्ठनेमेस्त्रीणि वर्षशतानि कुमारवासः, राज्यानभ्युपगमात् राज्यपर्यायाभावः, सप्त वर्षशतानि भवति श्रामण्यः पर्यायः । पार्श्वनाथस्य कुमारत्वं त्रिंशद्वर्षाणि, व्रतपर्यायः पुनर्भवति सप्ततिर्वर्षाणि, वर्द्धमाने–वर्द्धमानस्वामिनो गृहवासस्त्रिंशद्वर्षाणि, व्रतपर्यायः द्विचत्वारिंशद्वर्षाणि ॥ सम्प्रति केवलिपर्यायो वक्तव्यः, स च श्रामण्यपर्यायात् छद्मस्थपर्यायापगमे स्वयमेव ज्ञेय इति पूर्वोक्तमेव श्रामण्यपर्यायं स्मारयति—

उसभस्स पुव्वलक्खं पुव्वंगूणमजियस्स तं चेव । चउरंगूणं लक्खं पुणो पुणो जाव सुविहित्ति ॥ ३२२ ॥

अस्या व्याख्या पूर्ववत्,

सेसाणं परियातो कुमारवासेण सहियतो भणितो । पत्तेयंपिय पुव्वं सीसाणमणुग्गहट्ठाए ॥ ३२३ ॥

शेषाणां–शीतलस्वामिप्रभृतीनां पर्यायः पूर्वं कुमारवासेन सह भणितः, प्रत्येकमपि च, किमर्थमुभयथापि भणित इति चेत् अत आह—शिष्याणामनुग्रहाय, यतो मन्दमतीनामपि शिष्याणां बुद्धौ सम्यक् प्रतिस्फलति ॥

छउमत्थकालमेत्तं सोहेउं सेसओ उ जिणकालो । सव्वाउयंपि एत्तो उसभाईणं निसामेह ॥ ३२४ ॥

यथोदितरूपात् श्रामण्यकालात् छद्मस्थकालमात्रं प्रागुक्तस्वरूपं शोधयित्वा—अपनीय शेषः श्रामण्यपर्यायकालः स ऋषभादीनां जिनकालोऽवसातव्यः, कुमारादिपर्यायकालमीलने च सर्वायुःकालपरिमाणं भवति, तत्साक्षान्निर्दिदिक्षुराह—'सव्वाउयंपी'त्यादि, अतः—कुमारादिपर्यायभणनानन्तरं सर्वायुरपि यथाक्रममृषभादीनां भण्यमानं निशमयत—आकर्णयत ॥ तदेवाह—

चउरासीई बिसत्तरि सट्ठी पण्णासमेव लक्खाइं । चत्ता तीसा वीसा दस दो एगं च पुव्वाणं ॥ ३२५ ॥

चउरासीई बिसत्तरी य सट्ठी य होइ वासाणं । तीसा य दस य एगं च एवमेए सयसहस्सा ॥ ३२६ ॥

पंचाणउइ सहस्सा चउरासीइं च पंचवण्णा य । तीसा य दस य एगं सयं च बावत्तरी चेव ॥ ३२७ ॥

भगवत आदितीर्थकरस्य सर्वायुश्चतुरशीतिः पूर्वाणां लक्षाणि अजितस्वामिनो द्वासप्ततिः पूर्वलक्षाणि सम्भवनाथस्य षष्टिः पूर्वलक्षाणि अभिनन्दनस्य पञ्चाशत्पूर्वलक्षाणि सुमतेश्चत्वारिंशत् पद्मप्रभस्य त्रिंशत् सुपार्श्वनाथस्य विंशतिः चन्द्रप्रभस्य दश पूर्वलक्षाणि सुविधेर्द्वे पूर्वलक्षे शीतलस्यैकं पूर्वलक्षं, श्रेयांसस्य चतुरशीतिर्वर्षशतसहस्राणि वासुपूज्यस्य द्विसप्ततिर्वर्षलक्षाणि विमलस्य षष्टिर्वर्षलक्षाणि अनन्तजितस्त्रिंशद्वर्षलक्षाणि धर्मस्य दश वर्षलक्षाणि शान्तिनाथस्यैकं वर्षलक्षं, कुन्थुनाथस्य पञ्चनवतिर्वर्षसहस्राणि अरनाथस्य चतुरशीतिर्वर्षसहस्राणि मल्लिनाथस्वामिनः पञ्चपञ्चाशद्वर्षसहस्राणि मुनिसुव्रतस्य त्रिंशद्वर्षसहस्राणि नमिनाथस्य दश वर्षसहस्राणि अरिष्टनेमेरेकं वर्षसहस्रं, पार्श्वनाथस्यैकं वर्षशतं वर्द्धमानस्वामिनो द्वास-

प्रतिवर्षाणि ॥ गतं पर्यायद्वारम्, अधुना अन्तक्रियाद्वारावसरः, स चान्तक्रिया निर्वाणलक्षणा, सा कस्य केन तपसा क्व वा जाता कियत्परिवृतस्य चेत्येतदभिधित्सुराह—

निव्वाणमंतकिरिया सा चोद्दसमेण पढमनाहस्स । सेसाण मासिएणं वीरजिणिंदस्स छट्ठेणं ॥ ३२८ ॥

सा च निर्वाणलक्षणा अन्तक्रिया प्रथमनाथस्य—आदितीर्थकृतश्चतुर्दशकेन—षड्भिरुपवासैरभूत्, शेषाणाम्—अजितस्वामिप्रभृतीनां पार्श्वनाथपर्यन्तानां द्वाविंशतेस्तीर्थकृतां मासिकेन तपसा, मासोपवासेनेत्यर्थः, अन्तक्रियाऽभवत्, भगवतो वीरजिनेन्द्रस्य पुनः षष्ठेन—द्वाभ्यामुपवासाभ्याम् ॥

अट्ठावय—चंपु—ज्जेंत—पावा—सम्मेयसेलसिहरेसु । उसभ वसुपुज्ज नेमी वीरो सेसा य सिद्धिगया ॥ ३२९ ॥

अष्टापदचम्पोज्जयन्तपापासम्मेतशैलशिखरेषु यथाक्रममृषभो वासुपूज्योऽरिष्ठनेमिर्वीरो भगवान् शेषाश्च तीर्थकृतः सिद्धिं गताः, अष्टापदे ऋषभस्वामी सिद्धिमगमत्, चम्पायां वासुपूज्यः उज्जयन्तेऽरिष्ठनेमिः भगवान् महावीरः पापायां शेषा अजितस्वामिप्रभृतयः सम्मेतशैलशिखरे इति ॥

एगो भयवं वीरो तेत्तीसाए सह निव्वुओ पासो । छत्तीसेहिं पंचहिं सएहिं नेमी उ सिद्धिगतो ॥ ३३० ॥
पंचहिं समणसएहिं मल्ली संती उ नवसएहिं तु । अट्ठसएणं धम्मो सएहिं छहिं वासुपुज्जजिणो ॥ ३३१ ॥
सत्तसहस्साणंतइजिणस्स विमलस्स छस्सहस्साइं । पंच सयाइं सुपासे पउमाभे तिण्णि अट्ठ सया ॥ ३३२ ॥
दसहिं सहस्सेहुसभे सेसा उ सहस्सपरिवुडा सिद्धा । कालाइ जं न भणियं पढमणुयोगाओ तं नेयं ॥ ३३३ ॥

मे भाउगेहिं अणुट्ठियं, अहमवि तमणुट्ठामित्ति चिंतिऊण भणियं चऽणेण–धिसि धिसि पुरिसत्तणं ते अहम्मजुज्झपवत्तस्स, अलं मे भोगेहिं, गेण्हाहि रज्जं, पव्वयामित्ति मुक्कदंडो पव्वइओ, भरहेण बाहुबलिस्स पुत्तो रज्जे ठविओ, बाहुबली विचिं-तेइ–तायसमीवे भाउणो मे लहुतरा समुप्पण्णणाणातिसया ते किह निरतिसओ पेच्छामि ?, एत्थेव ताव अच्छामि जाव केवलनाणं समुप्पज्जति, एवं सो पडिमं ठिओ ठिओ माणपव्वयसिहरे, जाणइ सामी तहवि न पट्ठवेइ, अमूढलक्खा तित्थ-यरा, ताहे संवच्छरं अच्छइ काउस्सग्गेण, वल्लीवितार्णेणं वेढिओ पाया य वम्मीयनिग्गएहिं भुयंगेहिं, पुण्णे य संवच्छरे भगवं बंभिसुंदरीओ पट्ठवेइ, पुव्विं नेव पट्ठविया जेण तया सम्मं न पडिवज्जइत्ति, ताहिं सो मग्गंतीहिं वल्लीतण-वेढिओ दिट्ठो परूढेणं महल्लेणं गवेणंति, तं दट्ठूण वंदिओ, इमं च भणिओ–न किर हत्थीविलग्गस्स केवलनाणं समुप्प-ज्जइत्ति भणिऊणं गयाओ, ताहे चिंतियाइओ–कहिं एत्थ हत्थी ?, ताओ य अलियं न भणन्ति, ततो चिंतें-तेण णायं–जहा माणहत्थित्ति, को य मम माणो?, वच्चामि भगवंतं वंदामि ते य साहुणोत्ति, पादे उक्खित्ते केवल-नाणं समुप्पण्णं, ताहे गंतूण केवलीपरिसाए ठिओ। ताहे भरहोवि रज्जं भुंजइ, मिरीइवि सामाइयादि एक्कारस अंगाणि अहिज्जितो ॥ साम्प्रतमभिहितार्थोपसंहारायेदं गाथासप्तकमाह—

बाहुबलिकोवकरणं निवेअणं चक्कि देवया कहणं। नाहम्मेणं जुज्झे दिक्खा पडिमा पइन्ना य ॥ ३४९ ॥

पढमं दिट्ठीजुद्धं वायाजुद्धं तहेव बाहाहिं। मुट्ठीहि अ दंडेहि अ सव्वत्थवि जिप्पए भरहो ॥ ३२ भा. ॥

सो एव जिप्पमाणो विहुरो अह नरवई विचिंतेइ। किं मन्ने एस चक्की ? जह दाणिं दुब्बलो अहयं ! ॥३३भा. ॥

संवच्छरेण धूअं अमूढलक्खो उ पेसए अरहा। हत्थीओओ अरत्ति अ वुत्ते चिंता पए नाणं ॥ ३४ भा. ॥
उप्पन्ननाणरयणो तिन्नपइण्णो जिणस्स पयमूले। गंतुं तित्थं नमिउं केवलिपरिसाइ आसीणो ॥ ३५ भा. ॥
काऊण एगछत्तं, भरहोऽवि अ भुंजए विउलभोए। मरिईवि सामिपासे विहरइ तवसंजमसमग्गो ॥ ३६भा. ॥
सामाइअमाईअं इक्कारसमा उ जाव अंगाओ। उज्जुत्तो भत्तिगओ अहिज्जिओ सो गुरुसगासे ॥ ३७ भा. ॥

आसामभिहितार्थानामसम्मोहार्थमक्षरगमनिका प्रदर्श्यते, भरतसंदेशाकर्णने सति बाहुबलिनः कोपकरणं, तन्निवेदनं चक्रवर्त्तिभरताय दूतेन कृतं, 'देवय'त्ति युद्धे जीयमानेन भरतेन किमयं चक्रवर्त्ती न त्वहमिति चिन्तिते देवता आगतेति, 'कहणं'ति बाहुबलिना परिणामदारुणान् भोगान् पर्यालोच्य कथनं कृतम्-अलं मे राज्येनेति, तथा चाह-नाधर्म्मेण युध्य इति, दीक्षा तेन गृहीता, अनुत्पन्नज्ञानः कथमहं ज्यायान् लघीयसो द्रक्ष्यामीत्यभिसन्धाय प्रतिमा अङ्गीकृता, प्रतिज्ञा च कृता-नास्मादनुत्पन्नज्ञानो यास्यामीति निर्युक्तिगाथा। शेषास्तु भाष्यगाथाः, तयोश्च भरतबाहुबलिनोः प्रथमं दृष्टियुद्धं पुनर्वाग्युद्धं तथैव बाहुभ्यां मुष्टिभिश्च दण्डैश्च, सर्वत्रापि-सर्वेषु युद्धेषु जीयते भरतः, स एवं जीयमानो विधुरोऽथ नरपतिर्विचिन्तितवान्-किं मन्ये एष चक्रवर्त्ती? यत इदानीं दुर्बलोऽहमिति, कायोत्सर्गावस्थिते भगवति बाहुबलिनि संवत्सरेण धूतां अमूढलक्षस्तु प्रेपितवानर्हन्-आदितीर्थकरः, हस्तिनः अवतरत इति चोक्ते चिन्ता तस्य जाता, यामीति सम्प्रधार्य 'पद' इति पदोत्क्षेपे ज्ञानमुत्पन्नमिति। उत्पन्नज्ञानरत्नस्तीर्णप्रतिज्ञो जिनस्य पादमूले गत्वा केवलिपर्षदं गत्वा तीर्थंनत्वा आसीनः। अत्रान्तरे कृत्वा एकच्छत्रं, भुवनमिति वाक्यशेषः, भरतोऽपि च भुङ्क्ते विपुलभोगान्,

बाहुबलिनो दीक्षा केवलं च

मरीचिरपि स्वामिपार्श्वे विहरति तपःसंयमसमग्रः, स च सामायिकादिकं एकादशमङ्गं यावत् उद्युक्तः क्रियायां भक्तिगतो भगवति श्रुते वा अधीतवान् स गुरुसकाश इत्युपन्यस्तगाथार्थः ॥

अह अन्नया कयाइ गिम्हे उण्हेण परिगयसरीरो । अण्हाणएण चइओ इमं कुलिंगं विचिंतेइ ॥ ३५० ॥

गमनिका–'अथे'त्यानन्तर्ये कदाचिद्–एकस्मिन् काले ग्रीष्मे उष्णेन परिगतशरीरः अस्नानेनेति–अस्नानपरीषहेण त्याजितः संयमात् एतत्कुलिङ्गं–वक्ष्यमाणं विचिन्तयतीति गाथार्थः ॥

मेरुगिरीसमभारे न हुवि समत्थो मुहुत्तमवि वोढुं । सामन्नए गुणे गुणरहिओ संसारमणुकंखी ॥ ३५१ ॥

गाथागमनिका–मेरुगिरिसमो भारो येषां ते तथाविधास्तान् नैव समर्थो मुहूर्त्तमपि वोढुं, कान् ?–श्रमणानामेते श्रामणाः, के ते ?–गुणाः–विशिष्टक्षान्त्यादयस्तान्, कुतो ?, यतो धृत्यादिगुणरहितोऽहं संसारानुकाङ्क्षीति गाथार्थः ॥ ततश्च किं मम युज्यते ?, गृहस्थत्वं तावदनुचितं, श्रमणगुणानुपालनमप्यशक्यम्,

एवमणुचिंतयंतस्स तस्स निअगा मई समुप्पन्ना । लद्धो मए उवाओ जाया मे सासया बुद्धी ॥ ३५२ ॥

'एव'मुक्तेन प्रकारेणानुचिन्तयतस्तस्य निजा मतिः समुत्पन्ना, न परोपदेशेन, स ह्येवं चिन्तयामास–लब्धो मया वर्त्तमानकालोचितः खलूपायो, जाता मम शाश्वता बुद्धिः, 'शाश्वते' त्याकालिकी, प्रायो निरवद्यजीविकाहेतुत्वादिति गाथार्थः ॥ यदुक्तमिदं कुलिङ्गं अचिन्तयत् तत्प्रदर्शनायाह—

समणा तिदंडविरया भगवंतो निहुअसंकुइअअंगा । अजिइंदिअदंडस्स उ होउ तिदंडं महं चिंधं ॥ ३५३ ॥

गाथागमनिका–श्रमणा मनोवाक्कायलक्षणत्रिदण्डविरताः ऐश्वर्यादिभगयोगाद्भगवन्तः निभृतानि–अन्तःकरणान्यशुभव्यापारपरित्यागात् सङ्कुचितानि–अशुभकायव्यापारपरित्यागादङ्गानि येषां ते तथोच्यन्ते, अहं तु नैवंविधो, यतः 'अजितेन्द्रिये'त्यादि न जितानि इन्द्रियाणि–चक्षुरादीनि दण्डाश्च–मनोवाक्कायलक्षणा येन स तथोच्यते, तस्याजितेन्द्रियदण्डस्य तु त्रिदण्डं मम चिन्हं अविस्मरणार्थमिति गाथार्थः ॥ तथा—

लोइंदियमुंडा संजया उ अहयं खुरेण ससिहो अ । थूलगपाणिवहाओ वेरमणं मे सया होउ ॥ ३५४ ॥

गाथागमनिका–मुण्डो हि द्विधा भवति—द्रव्यतो भावतश्च, तत्रैते श्रमणा द्रव्यभावमुण्डाः, कथं? लोचेनेन्द्रियैश्च मुण्डाः संयतास्तु, अहं पुनर्नेन्द्रियमुण्डः यतः अतोऽलं द्रव्यमुण्डतया, तस्मादहं क्षुरेण मुण्डः सशिखश्च भवामि, तथा सर्वप्राणिवधविरताः श्रमणा वर्त्तन्ते, अहं तु नैवंविधो यतः अतः स्थूलप्राणातिपाताद्विरमणं मे सदा भवत्विति गाथार्थः ।

निक्किंचणा य समणा अकिंचणा मज्झ किंचणं होउ । सीलसुगंधा समणा अहयं सीलेण दुग्गंधो ॥ ३५५ ॥

गाथागमनिका–निर्गतं किञ्चनं–हिरण्यादि येभ्यस्ते निष्किञ्चनाश्च श्रमणाः, तथाऽविद्यमानं किञ्चन–अल्पमपि येषां तेषां अकिञ्चना जिनकल्पिकादयः, अहं तु नैवंविधो यतोऽतो मार्गाविस्मृत्यर्थं मम किञ्चनं भवतु, पवित्रिकादि, तथा शीलेन शोभनो गन्धो येषां ते तथाविधाः श्रमणाः अहं तु शीलेन दुर्गन्धः अतो गन्धचन्दनग्रहणं मे युक्तमिति गाथार्थः ॥ तथा—

ववगयमोहा समणा मोहच्छन्नस्स छत्तयं होउ । अणुवाणहा य समणा मज्झं तु उवाणहे हुन्तु ॥ ३५६ ॥

गाथागमनिका—व्यपगतो मोहो येषां ते व्यपगतमोहाः श्रमणाः, अहं तु नेत्थं यतः अतो मोहाच्छादितस्य छत्रकं भवतु, अनुपानत्काश्च श्रमणाः मम चोपानहौ भवत इति गाथार्थः ॥ तथा—

सुक्कंबरा य समणा निरंबरा मज्झ धाउरत्ताइं । हुंतु इमे वत्थाइं अरिहो मि कसायकलुसमई ॥ ३५७ ॥

गाथागमनिका—शुक्लान्यम्बराणि येषां ते शुक्लाम्बराः श्रमणाः, तथा निर्गतमम्बरं येषां ते निरम्बराः—जिनकल्पिकादयः, 'मज्झं'ति मम च, एते श्रमणा इत्यनेन तत्कालोत्पन्नतापसश्रमणव्युदासः, धातुरक्तानि भवन्तु मम वस्त्राणि, किमिति ?, अर्होऽस्मि योग्योऽस्मि तेषामेव, कषायैः कलुषा मतिर्यस्य सोऽहं कषायकलुषमतिरिति गाथार्थः ॥

वज्जंतऽवज्जभीरू बहुजीवसमाउलं जलारंभं । होउ मम परिमिएणं जलेण ण्हाणं च पिअणं च ॥ ३५८ ॥

गाथागमनिका—वर्जयन्त्यवद्यभीरवो बहुजीवसमाकुलं जलारम्भं, तत्रैव वनस्पतेरवस्थानात्, अवद्यं—पापं, अहं तु नेत्थं यतः अतो भवतु मे परिमितेन जलेन स्नानं च पानं चेति गाथार्थः ॥

एवं सो रुइयमई निअगमइविगप्पिअं इमं लिंगं । तद्धिअहेउसुजुत्तं पारिवज्जं तओ कासी ॥ ३५९ ॥

स्थूलमृषावादादिनिवृत्तः, एवमसौ रुचिता मतिर्यस्य असौ रुचितमतिः, अतो निजमत्या विकल्पितं निजमतिविकल्पितम्, इदं लिङ्गं विशिष्टं, तस्य हितास्तद्धिताः तद्धिताश्च हेतवश्चेति समासः तैः सुष्ठु युक्तं श्लिष्टमित्यर्थः परिव्राजानामिदं पारिव्राजं प्रवर्त्तयति, शास्त्रकारवचनात् वर्त्तमाननिर्देशोऽप्यविरुद्ध एव, पाठान्तरं वा 'पारिवज्जं ततो कासित्ति' पारिव्राजं ततः कृतवानिति गाथार्थः ॥ भगवता च सह विजहार, तं च साधुमध्ये विजातीयं दृष्ट्वा कौतुकाल्लोकः पृष्टवान्, तथा चाह—

अह तं पागडरूवं दट्ठुं पुच्छेइ बहुजणो धम्मं । कहइ जईणं तो सो विआलणे तस्स परिकहणा ॥ ३८८ ॥

अथ तं प्रकटरूपं विजातीयत्वात् दृष्ट्वा पृच्छति बहुजनो धर्म्मं, कथयति यतीनां सम्बन्धिभूतं क्षान्त्यादिलक्षणं ततोऽसाविति, लोका भणन्ति-यद्ययं श्रेष्ठो भवता किं नाङ्गीकृत इति विचारणे, तस्य परिः-समन्तात् कथना परिकथना-श्रमणाः त्रिदण्डविरता इत्यादिलक्षणा, पृच्छतीति त्रिकालगोचरसूत्रप्रदर्शनार्थत्वादेवं निर्देशः, पाठान्तरं वा 'अह तं पागडरूवं दट्ठुं पुच्छिंसु बहुजणो धम्मं । कहती सुजतीणं सो वियालणे तस्स परिकहणा ॥ प्रवर्त्तत इति गाथार्थः,

धम्मकहाअक्खित्ते उवट्ठिए देइ भगवओ सीसे । गामनगरागराई विहरइ सो सामिणा सद्धिं ॥ ३६० ॥

धर्म्मकथाक्षिप्तान् उपस्थितान् ददाति भगवतः शिष्यान्, ग्रामनगरादीन् विहरति स स्वामिना सार्द्धं, भावार्थः सुगमः ॥ इत्थं निर्देशप्रयोजनं पूर्ववद्, ग्रन्थकारवचनत्वाद्वा अदोष इति गाथार्थः ॥ अन्यदा भगवान् विहरमाणो अष्टापदमनुप्राप्तवान्, तत्र च समवसृतः, भरतोऽपि भ्रातृप्रव्रज्याकर्णनात् सञ्जातमनस्तापोऽधृतिं चक्रे, कदाचिद्भोगादीन् दीयमानान् पुनरपि गृह्णन्तीत्यालोच्य भगवत्समीपं चागम्य निमन्त्रयंश्च तान् भोगैर्निराकृतश्चिन्तयामास-एतेषामेवेदानीं परित्यक्तसङ्गानां आहारदानेऽपि तावद्धर्म्मानुष्ठानं करोमीति पञ्चभिः शकटशतैर्विचित्रमाहारमानाय्योपनिमन्त्र्याधाकर्म्माहृतं च न कल्पते यतीनामिति प्रतिषिद्धेऽकृतकारितेनान्येन निमन्त्रितवान्, राजपिण्डोऽप्यकल्पनीय इति प्रतिषिद्धः, सर्वप्रकारैरहं भगवता परित्यक्त इति सुतरामुन्माथितो बभूव, तमुन्माथितं विज्ञाय देवराट्

तच्छोकोपशान्तये भगवन्तमवग्रहं पप्रच्छ–कतिविधः अवग्रह इति, भगवानाह–पञ्चविधोऽवग्रहः, तद्यथा–देवेन्द्रावग्रहो राजावग्रहो गृहपत्यवग्रहः सागारिकावग्रहः साधर्म्मिकावग्रहश्च, तत्र देवेन्द्रः–सौधर्म्माधिपतिः, राजा भरताधिपो गृह्यते, गृहपतिः–माण्डलिको राजा, सागारिकः–शय्यातरः, साधर्म्मिकः संयत इति, एतेषां चोत्तरोत्तरेण पूर्वः पूर्वो बाधितो द्रष्टव्य इति, यथा राजावग्रहेण देवेन्द्रावग्रहो बाधित इत्यादि प्ररूपिते देवराडाह–भगवन्! य एते श्रमणा मदीयावग्रहे विचरन्ति तेषां मयाऽवग्रहोऽनुज्ञात इत्येवमभिधायाभिवन्द्य च भगवन्तं तस्थौ, भरतोऽचिन्तयद्–अहमपि स्वकीयमवग्रहमनुजानामीत्येतावताऽपि नः कृतार्थता भवतु, भगवत्समीपेऽनुज्ञातावग्रहः शक्रं पृष्टवान्–भक्तपानमिदमानीतम्, अनेन किं कार्यमिति, देवराडाह–गुणोत्तरान् पूजयस्व, सोऽचिन्तयत्–के मम साधुव्यतिरेकेण जात्यादिभिरुत्तराः?, पर्यालोचयता ज्ञातं–श्रावका विरताविरतत्वाद् गुणोत्तराः, तेभ्यो दत्तमिति, पुनर्भरतो देवेन्द्ररूपं भास्वरमाकृतिमत् दृष्ट्वा पृष्टवान्–किं यूयमेवंभूतेन रूपेण देवलोके तिष्ठतेति? उत नेति, देवराट् आह–नेति, तन्मानुषैर्द्रष्टुमपि न पार्यते, भास्वरत्वात्, पुनरप्याह भरतः–तस्याकृतिमात्रेणास्माकं कौतुकं तन्निदर्शयतां, देवराज आह–त्वमुत्तमपुरुष इतिकृत्वैकमङ्गावयवं दर्शयामीत्यभिधाय योग्यालङ्कारविभूषितामङ्गुलीमत्यन्तभास्वरामदर्शयत्, दृष्ट्वा च तां भरतोऽतीव मुमुदे, शक्राङ्गुलीं च स्थापयित्वा महिमाष्टाह्निकां चक्रे, ततः प्रभृति शक्रोत्सवः प्रवृत्त इति, भरतश्च श्रावकानाहूयोक्तवान्–भवद्भिः प्रतिदिनं मदीयं भोक्तव्यं १ कृष्यादि च न कार्यं २ स्वाध्यायपरैरासितव्यं ३ भुक्ते च मदीयगृहद्वारासन्नव्यवस्थितैर्वक्तव्यम्–जितो भवान् वर्द्धते भयं तस्मान्मा हन मा हनेति ४, ते तथैव कृतवन्तः, भरतश्च रतिसा-

गस्यवगाढत्वात् प्रमत्तत्वात् तच्छब्दाकर्णनोत्तरकालमेव केनाहं जित इति ?, आ ज्ञातं–कषायैः, तेभ्य एव वर्द्धते भय-मित्यालोचनापूर्वकं संवेगं यातवानिति, अत्रान्तरे लोकबाहुल्यात् सूपकाराः पाकं कर्त्तुमशक्नुवन्तो भरताय निवेदि-तवन्तः–नेह ज्ञायते कः श्रावकः ? को वा नेतीति, लोकस्य प्रचुरत्वात्, आह भरतः–पृच्छापूर्वकं देयमिति, ततस्तान् पृष्टवन्तस्ते–को भवान् ?, श्रावकः, श्रावकाणां कति व्रतानि ?, स आह–श्रावकाणां न सन्ति व्रतानि, किन्तु अस्माकं पञ्चाणुव्रतानि, कति ? शिक्षाव्रतानि, ते उक्तवन्तः–सप्त शिक्षाव्रतानि, य एवंभूतास्ते राज्ञो निवेदिताः, स च काकणी-रत्नेन तान् लाञ्छितवान्, पुनः षण्मासेन योग्या भवन्ति तानपि लाञ्छितवान्, षण्मासकालाननुयोगं कृतवान्, एवं ब्राह्मणाः सञ्जाता इति, ते च स्वसुतान् साधुभ्यो दत्तवन्तः, ते च प्रव्रज्यां चक्रुः, परीषहभीरवस्तु श्रावका एवासन्निति। इयं च भरतराज्यस्थितिः, आदित्ययशसस्तु काकणीरत्नं नासीत्, सुवर्णमयानि यज्ञोपवीतानि कृतवान्, महायशःप्रभृतयस्तु केचन रूप्यमयानि केचन विचित्रपट्टसूत्रमयानीत्येवं यज्ञोपवीतप्रसिद्धिः॥ अमुमेवार्थं समोसरणेत्यादिगाथया प्रतिपादयति—

समुसरण भत्त उग्गह अंगुलि झय सक्क सावया अहिया।
जेया वड्ढइ कागिणिलंछण अणुसज्जणा अट्ठ॥ ३६२॥

समवसरणं भगवतोऽष्टापदे खल्वासीत्, भक्तं भरतेनानीतं, तदग्रहणोन्माथिते सति भरते देवेशो भगवन्तमवग्रहं पृष्टवान्, भगवांश्च तस्मै प्रतिपादितवान्, 'अंगुलिय'त्ति भरतनृपतिना देवलोकनिवासिरूपपृच्छायां कृतायामिन्द्रेणा-ङ्गुलिर्दर्शिता, तत एवारभ्य ध्वजोत्सवः प्रवृत्तः, 'सक्क'त्ति भरतनृपतिना किमनेनाहारेण कार्यमिति पृष्टः शक्रोऽभिहित-

वान्–त्वदधिकेभ्यो दीयतामिति, पर्यालोचयता ज्ञातं–श्रावका अधिका इति, 'जेया वड्ढई'ति प्राकृतशैल्या जितो भवान् वर्द्धते भयं भुक्तोत्तरकालं च ते उक्तवन्तः, 'कागणिलंछणत्ति' प्रचुरत्वात् काकणीरत्नेन लाञ्छनं–चिह्नं तेपां कृतमासीत्, 'अणुसज्जणा अट्ठ'त्ति अष्टौ पुरुपान् यावदयं धर्म्मः प्रवृत्तः, अष्टौ वा तीर्थंकरान् यावदिति गाथार्थः ॥ तत ऊर्ध्वं मिथ्यात्वमुपगता इति ।

राया आइच्चजसे महाजसे अइबले अ बलभद्दे । बलविरिअ कत्तविरिए जलविरिए दंडविरिए अ ॥ ३६३ ॥

भावार्थः सुगम एव, इति गाथार्थः ॥

एएहिं अद्धभरहं सयलं भुत्तं सिरेण धरिओ अ । पवरो जिणिंदमउडो सेसेहिं न चाइओ वोढुं ॥ ३६४ ॥

एभिरर्द्धभरतं सकलं भुक्तं, शिरसा धृतश्च, कोऽसावित्याह–प्रवरो जिनेन्द्रमुकुटो देवेन्द्रोपनीतः, शेपैर्नरपतिभिर्न शकितो वोढुं, महाप्रमाणत्वादिति गाथार्थः ॥

अस्सावगपडिसेहो छट्ठे छट्ठे अ मासि अणुओगो । कालेण य मिच्छत्तं जिणंतरे साहुवुच्छेओ ॥ ३६५ ॥

अश्रावकाणां प्रतिपेधः कृतः, ऊर्ध्वमपि पष्ठे पष्ठे मासेऽनुयोगो बभूव, अनुयोगः—परीक्षा, कालेन गच्छता मिथ्यात्वमुपगताः, कदा ?, नवमजिनान्तरे, किमिति ?, यतस्तत्र साधुव्यवच्छेद आसीदिति गाथार्थः ॥ साम्प्रतमनुक्तार्थप्रतिपादनपरां सङ्ग्रहगाथामाह—

दाणं च माहणाणं वेए कासी अ पुच्छ निव्वाणं । कुंडा थूभ जिणघरे कविलो भरहस्स दिक्खा य ॥ ३६६ ॥

दानं च माहनानां लोको दातुं प्रवृत्तो, भरतपूजितत्वात्, 'वेदे कासी यत्ति' आर्यान् वेदान् कृतवांश्च भरत एव, तत्स्वाध्यायनिमित्तमिति, तीर्थकरस्तुतिरूपान् श्रावकधर्म्मप्रतिपादकांश्च, अनार्यास्तु पश्चात्सुलसयाज्ञवल्कादिभिः कृता इति, 'पुच्छ'त्ति भरतो भगवन्तमष्टापदसमसृतमेवं पृष्टवान्-यादृग्भूता यूयमेवंविधाः तीर्थकृतः कियन्तः खल्विह भविष्यन्तीत्यादि, 'निव्वाण'त्ति भगवानष्टापदे निर्वाणं प्राप्तो, देवैरग्निकुण्डानि कृतानि, स्तूपाः कृताः, जिनगृहं भरतश्चकार, कपिलो मरीचिसकाशे निष्क्रान्तः, भरतस्य दीक्षा च संवृत्तेति समुदायार्थः ॥ अवयवार्थ उच्यते-आद्यावयवद्वयं व्याख्यातमेव, पृच्छावयवार्थ पुणरवियेत्यादिनाऽऽह—

पुणरवि अ समोसरणे पुच्छीअ जिणं तु चक्किणो भरहे । अप्पुट्ठो अ दसारे तित्थयरो को इहं भरहे ? ॥ ३६७ ॥

पुनरपि च समवसरणे पृष्टवांश्च जिनं तु चक्रवर्त्ती भरतः, चक्रवर्त्तिन इत्युपलक्षणं तीर्थकृतश्चेति, भरतविशेषणं वा, चक्री भारतांस्तीर्थकरादीन् पृष्टवान्, पाठान्तरं वा 'पुच्छी य जिणे य चक्किणो भरहे' पृष्टवान् जिनांश्चक्रवर्त्तिनश्च भरतः, चशब्दस्य व्यवहितः सम्बन्धः, भगवानपि तान् कथितवान्, तथा अपृष्टश्च दशारान्, तथा तीर्थकरः क इह भरतेऽस्यां परिषदीति पृष्टवान्, भगवानपि मरीचिं कथितवानिति गाथाक्षरार्थः ॥ तथा चाह निर्युक्तिकारः—



जिण-चक्कि-दसाराणं वण्ण-पमाणाइं नामगुत्ताइं । आउपुरमाइ पिअरो परिआय गइं च साहीअ ॥ ३६८ ॥

जिनचक्रिदशाराणां- जिनचक्रवर्त्तिवासुदेवानामित्यर्थः वर्णप्रमाणानि, तथा नामगोत्राणि, तथा आयुःपुराणि माता-

पितरौ यथासम्भवं पर्यायं गतिं च, चशब्दाज्जिनानामन्तराणि च पृष्टवानिति द्वारगाथासमासार्थः, अवयवार्थं तु वक्ष्यामः ॥
तत्र प्रश्नावयवमधिकृत्य तावदाह भाष्यकारः—
जारिसया लोअगुरू भरहे वासम्मि केवली तुम्हे। एरिसया कइ अन्ने ताया! होहिंति तित्थयरा ? ॥३८ भा.॥
याद्दशा लोकगुरवो भारते वर्षे केवलिनो यूयमीद्दशाः कियन्तोऽन्येऽत्रैव तात ! भविष्यन्ति तीर्थकरा इति गाथार्थः ॥
अह भणइ जिणवरिंदो भरहे वासम्मि जारिसो उ अहं। एरिसया तेवीसं अन्ने होहिंति तित्थयरा ॥ ३६९ ॥
निगदसिद्धा ॥ ते चैते—

होहिइ अजिओ संभव अभिनंदण सुमइ सुप्पह सुपासो।
ससि पुप्फदंत सीअल सिज्जंसो वासुपुज्जो अ ॥ ३७० ॥

विमलमणंतइ धम्मो सन्ती कुंथू अरो अ मल्ली अ। मुणिसुव्वय नमि नेमी पासो तह वद्धमाणो अ ॥ ३७१ ॥
भावार्थः सुगम एव।
अह भणइ नरवरिंदो भरहे वासम्मि जारिसो उ अहं। तारिसया कइ अन्ने ताया होहिंति रायाणो ? ॥३७२॥
अथ भणति नरवरेन्द्रो भरतः—भारते वर्षे याद्दशस्त्वहं ताद्दशाः कत्यन्ये तात ! भविष्यन्ति राजान इति गाथार्थः ॥
अह भणइ जिणवरिंदो जारिसओ तं नरिंदसद्दूलो। तारिसया उ इगारस अन्ने होहिंति रायाणो ॥ ३७३ ॥

अथ भणति जिनवरेन्द्रो यादृशस्त्वं नरेन्द्रशार्दूलः, शार्दूलः-सिंहपर्यायः, ईदृशा एकादश अन्ये भविष्यन्ति राजानः ॥ ते चैते—

होही सगरो मघवं सणंकुमारो य रायसद्दूलो । संती कुंथू य अरो हवइ सुभूमो य कोरव्वो ॥ ३७४ ॥
नवमो य महापउमो हरिसेणो चेव रायसद्दूलो । जयनामो अ नरवई बारसमो बंभदत्तो अ ॥ ३७५ ॥

गाथाद्वयं निगदसिद्धमेव ॥ यदुक्तमपृष्टश्च दशारान् कथितवान्, तदभिधित्सयाऽऽह भाष्यकारः—

होहिंति वासुदेवा नव अन्ने नील-पीअकोसिज्जा । हलमुसलचक्कजोही सतालगरुलज्झया दो दो ॥ ३९ भा. ॥

भविष्यन्ति वासुदेवा नव, नव बलदेवाश्चानुक्ता अप्यत्र तत्सहचरत्वात् द्रष्टव्याः, यतो वक्ष्यति 'सतालगरुलद्धया दो दो', ते च सर्वे बलदेवा वासुदेवा यथासङ्ख्यं नीलानि पीतानि च कौशेयानि वस्त्राणि येषां ते तथाविधाः, यथासङ्ख्यमेव हलमुशलचक्रयोधिनः, हलमुशलयोधिनो बलदेवाः, चक्रयोधिनो वासुदेवा इति, सह तालगरुडध्वजाभ्यां वर्त्तन्त इति सतालगरुडध्वजाः, एते च भवन्तो युगपद् द्वौ द्वौ भविष्यतः बलदेववासुदेवाविति गाथार्थः ॥ वासुदेवानामभिधानप्रतिपादनायाह—

तिविट्ठो य दुविट्ठो य सयंभु पुरिसुत्तमे पुरिससीहे । तह पुरिसपुंडरीए दत्ते नारायणे कण्हे ॥ ४० भा. ॥



निगदसिद्धा ॥ अधुना बलदेवानामभिधानप्रतिपादनायाह—

अयले विजए भद्दे, सुप्पभे य सुदंसणे । आणंदे नंदणे पउमे, रामे यावि अपच्छिमे ॥ ४१ भा. ॥

निगदसिद्धा ॥ वासुदेवशत्रुप्रतिपादनायाह—

आसग्गीवे तारय मेरय महुकेढवे निसुंभे य । बलि पल्हाए तह रावणे य नवमे जरासिंधू ॥ ४२ भा. ॥

निगदसिद्धा एव ॥

एए खलु पडिसत्तू कित्तीपुरिसाण वासुदेवाणं । सव्वेऽवि चक्कजोही सव्वेऽवि हया सचक्केहिं ॥ ४३ भा. ॥

गमनिका—एते खलु प्रतिशत्रवः, एत एव, खलुशब्दस्यावधारणार्थत्वात्, नान्ये, कीर्त्तिपुरुषाणां—वासुदेवानां, सर्वे च चक्रयोधिनः, सर्वे च हताः स्वचक्रैरिति, यतस्तान्येव चक्राणि वासुदेवव्यापत्तये क्षिप्तानि तैः पुण्योदयाद्वासुदेवं प्रणम्य तानेव व्यापादयन्तीति गाथार्थः ॥ एवं तावत्प्रागुपन्यस्तगाथायां वर्णादिद्वारोपन्यासं परित्यज्य असम्मोहार्थमुत्क्रमेण जिनादीनां नामद्वारमुक्तम्, पारभविकं चैषां वर्णनाममातापितृपुरादिकं प्रथमानुयोगतोऽवसेयम्, इह विस्तरभयान्नोक्तमिति । साम्प्रतं तीर्थकरवर्णप्रतिपादनायाह—

पउमाभ वासुपुज्जो रत्ता ससिपुप्फदंत ससिगोरा । सुव्वयनेमी काला पासो मल्ली पियंगाभा ॥ ३७६ ॥

वरकणगतवियगोरा सोलस तित्थंकरा मुणेयव्वा । एसो वण्णविभागो चउवीसाए जिणवराणं ॥ ३७७ ॥

गाथाद्वयं सूत्रसिद्धम् ॥ साम्प्रतं तीर्थकराणामेव प्रमाणाभिधित्सयाह—

पंचेव अद्धपंचम चत्तारऽद्धुट्ठ तह तिगं चेव । अड्ढाइज्जा दुन्नि य दिवड्ढमेगं धणुसयं च ॥ ३७८ ॥

नउइ असीइ सत्तरि सट्ठी पन्नास होइ नायव्वा । पणयाल चत्त पणतीस तीस पणवीस वीसा य ॥३७९॥

पन्नरस दस धणूणि य नव पासो सत्तरयणिओ वीरो। नामा पुव्वुत्ता खलु तित्थयराणं मुणेयव्वा ॥ ३८० ॥

एतास्तिस्रोऽपि पाठसिद्धा एव ॥ साम्प्रतं भगवतामेव गोत्राणि प्रतिपादयन्नाह—

मुणिसुव्वओ य अरिहा अरिट्ठनेमी य गोयमसगुत्ता । सेसा तित्थयरा खलु कासवगुत्ता मुणेयव्वा ॥ ३८१ ॥

निगदसिद्धा ॥ आयुष्कानि प्राक् प्रतिपादितान्येवेति न तन्यन्ते, भगवतामेव पुरप्रतिपादनाय गाथात्रितयमाह—

इक्खागभूमी उज्झा सावत्थी विणीअ कोसलपुरं च । कोसंबी वाणारसि चंदाणण तह य कायंदी ॥ ३८२ ॥

भद्दिलपुरं सीहपुरं चंपा कंपिल्ल उज्झ रयणपुरं । तिन्नेव गयपुरम्मी मिहिला तह चेव रायगिहं ॥ ३८३ ॥

मिहिला सोरियनयरं वाणारसि तह य होइ कुंडपुरं । उसभाईण जिणाणं जम्मणभूमी जहासंखं ॥ ३८४ ॥

निगदसिद्धाः ॥ भगवतामेव मातृप्रतिपादनायाह—

मरुदेवि विजया सेणा सिद्धत्था मंगला सुसीमा य । पुहवी लक्खण रामा नंदा विण्हू जया सामा ॥ ३८५ ॥

सुजसा सुव्वय अइरा, सिरिदेवी य पभावई । पउमावई य वप्पा, सिव वम्मा तिसलया इअ ॥ ३८६ ॥

गाथाद्वयं निगदसिद्धमेव ॥ भगवतामेव पितृप्रतिपादनायाह—

नाभी जिअसत्तू अ, जिआरी संवरे इअ । मेहे धरे पइट्ठे अ, महासेणे अ खत्तिए ॥ ३८७ ॥

सूरे सुदंसणे कुंभे सुमित्त विजए समुद्दविजए अ । राया य अस्ससेणे सिद्धत्थेवि अ खत्तिए ॥ ३८८ ॥

निगदसिद्धा ॥ पर्यायो–गृहस्थादिपर्यायो भगवतामुक्त एव तथैव द्रष्टव्यः। साम्प्रतं भगवतामेव गतिप्रतिपादनायाह—

सव्वेऽवि गया मुक्खं जाइ-जरा-मरणबंधणविमुक्का । तित्थयरा भगवंतो सासयसुक्खं निराबाहं ॥ ३८९ ॥

निगदसिद्धा ॥ एवं तावत् तीर्थकरानङ्गीकृत्य प्रतिद्वारगाथा व्याख्याता, इदानीं चक्रवर्त्तिनोऽङ्गीकृत्य व्याख्यायते, एतेषामपि पूर्वभववक्तव्यतानिबद्धं च्यवनादि प्रथमानुयोगादवसेयम्, साम्प्रतं चक्रवर्त्तिवर्णप्रमाणप्रतिपादनायाह—

सव्वेऽवि एगवन्ना निम्मलकणगप्पभा मुणेअव्वा । छक्खंडभरहसामी तेसिं पमाणं अओ वुच्छं ॥ ३९१ ॥

पंचसय अद्धपंचम बायालीसा य अद्धधणुअं च । इगुआलधणुस्सद्धं च चउत्थे पंचमे सत्त ॥ ३९२ ॥

पणतीसा तीसा पुण अट्ठावीसा य वीसइ धणूणि । पन्नरस बारसेव य अपच्छिमो सत्त य धणूणि ॥३९३॥

निगदसिद्धाः ॥ नामानि प्राक् प्रतिपादितान्येव, साम्प्रतं चक्रवर्त्तिगोत्रप्रतिपादनायाह—

कासवगुत्ता सव्वे चउदसरयणाहिवा समक्खाया । देविंदवंदिएहिं जिणेहिं जिअरागदोसेहिं ॥ ३९४ ॥

सूत्रसिद्धा ॥ साम्प्रतं चक्रवर्त्त्यायुष्कप्रतिपादनायाह—

चउरासीई बावत्तरी अ पुव्वाण सयसहस्साइं । पंच य तिन्नि य एगं च सयसहस्सा उ वासाणं ॥ ३९५ ॥

पंचाणउइ सहस्सा चउरासीई अ अट्ठमे सट्ठी । तीसा य दस य तिन्नि य अपच्छिमे सत्त वाससया ॥३९६॥

गाथाद्वयं पठितसिद्धम् ॥ इदानीं चक्रवर्त्तिनां पुरप्रतिपादनायाह—

जम्मण विणीअ उज्झा सावत्थी पंच हत्थिणपुरम्मि । वाराणसि कंपिल्ले रायगिहे चेव कंपिल्ले ॥ ३९७ ॥

निगदसिद्धा एव ॥ साम्प्रतं चक्रवर्तिमातृप्रतिपादनायाह—

सुमंगला जसवई भद्दा सहदेवि अइर सिरिदेवी । तारा जाला मेरा य वप्पगा तहय चुल्लणी अ ॥ ३९८ ॥

निगदसिद्धा ॥ साम्प्रतं चक्रवर्त्तिपितृप्रतिपादनायाह—

उसभे सुमित्तविजए समुद्दविजए अ अस्ससेणे य । तह वीससेण सूरे सुदंसणे कत्तविरिए अ ॥ ३९९ ॥

पउमुत्तरे महाहरी विजए राया तहेव बंभे य । ओसप्पिणी इमीसे पिउनामा चक्कवट्टीणं ॥ ४०० ॥

गाथाद्वयं निगदसिद्धं ॥ पर्यायः केषाञ्चित्प्रथमानुयोगतोऽवसेयः, केषांचित्प्रव्रज्याऽभावान्न विद्यते एवेति ॥ साम्प्रतं चक्रवर्त्तिगतिप्रतिपादनायाह—

अट्ठेव गया मुक्खं सुहुमो बंभो य सत्तमिं पुढविं । मघवं—सणंकुमारा सणंकुमारं गया कप्पं ॥ ४०१ ॥

निगदसिद्धा ॥ एवं तावच्चक्रवर्त्तिनोऽप्यधिकृत्य व्याख्याता प्रतिद्वारगाथा, इदानीं वासुदेवबलदेवाङ्गीकरणतो व्याख्यायते, एतेषामपि च पूर्वभववक्तव्यतानिबद्धं च्यवनादि प्रथमानुयोगत एवावसेयं, साम्प्रतं वासुदेवादीनां वर्णप्रमाणप्रतिपादनायाह—

वण्णेण वासुदेवा सव्वे नीला बला य सुक्किलया । एएसि देहमाणं वुच्छामि अहाणुपुव्वीए ॥ ४०२ ॥

पढमो धणूणऽसीई सत्तरि सट्ठी य पन्न पणयाला । अउणत्तीसं च धणू छव्वीसा सोलस दसेव ॥ ४०३ ॥

गाथाद्वयं निगदसिद्धम् ॥ नामानि प्रागभिहितान्येव, साम्प्रतं वासुदेवानां गोत्रप्रतिपादनायाह—

बलदेव—वासुदेवा अट्ठेव हवंति गोअमसगुत्ता । नारायण—पउमा पुण कासवगुत्ता मुणेअव्वा ॥ ४०४ ॥

निगदसिद्धा ॥ वासुदेवबलदेवानां यथोपन्यासमायुःप्रतिपादनायाह—

चउरासीइ बिसत्तरि सट्ठी तीसा य दस य लक्खाइं । पन्नट्ठिसहस्साइं छप्पन्ना बारसेगं च ॥ ४०५ ॥

पंचासीई पन्नत्तरी अ पन्नट्ठि पंचवन्ना य । सत्तरस सयसहस्सा पंचमए आउअं होइ ॥ ४०६ ॥

पंचासीइ सहस्सा पन्नट्ठी चेव तह य पन्नरस । बारस सयाइँ आउं बलदेवाणं जहासंखं ॥ ४०७ ॥

निगदसिद्धाः ॥ साम्प्रतमसीपामेव पुराणि प्रतिपाद्यन्ते, तत्र

पोअण बारवइतिगं अस्सपुरं तह य होइ चक्कपुरं । बाणारसि रायगिहं अपच्छिमो जाउ महुराए ॥ ४०८ ॥

निगदसिद्धा ॥ एतेषां मातृपितृप्रतिपादनायाह—

मिगावई उमा चेव, पुहवी सीआ य अम्मया । लच्छिमई सेसमई, केगई देवई इअ ॥ ४०९ ॥

भद्दा सुभद्द सुप्पभ सुदंसणा विजय वेजयंती अ । तह य जयंती अपराजिआ य तह रोहिणी चेव ॥ ४१० ॥

हवइ पयावइ बंभो रुद्दो सोमो सिवो महसिवो य । अग्गिसीहे अ दसरहे नवमे भणिए अ वसुदेवे ॥ ४११ ॥

निगदसिद्धाः ॥ एतेषामेव पर्यायवक्तव्यतामभिधित्सुराह—

परिआओ पवज्जाऽभावाओ नत्थि वासुदेवाणं । होइ बलाणं सो पुण पढमणुओगाओ नायव्वो ॥ ४१२ ॥

निगदसिद्धैव ॥ एतेषामेव गतिप्रतिपादनायाह—

एगो अ सत्तमाए पंच य छट्ठीइ पंचमी एगो । एगो अ चउत्थीए कण्हो पुण तच्चपुढवीए ॥ ४१३ ॥

धम्मजिणाओ संती तिहि उ तिचउभागपलियऊणेहिं । अयरेहिं समुप्पन्नो पलियद्धेणं तु कुंथुजिणो ॥ १३ ॥
पलियचउब्भाएणं कोडीसहस्सूणएण वासाणं । कुंथूओ अरनामा कोडिसहस्सेण मल्लिजिणो ॥ १४ ॥
मल्लिजिणाओ मुणिसुव्वओवि चउप्पन्न वासलक्खेहिं । सुव्वयनामाउ नमी लक्खेहिं छहि उ उप्पन्नो ॥ १५ ॥
पंचहिं लक्खेहिं तओ अरिट्ठनेमी जिणो समुप्पन्नो । तेसीई सहस्सेहिं सएहिं अद्धट्ठमेहिं च ॥ १६ ॥
नेमीओ पासजिणो पासजिणाओ य होइ वीरजिणो । अड्ढाइज्जसएहिं गएहिं चरिमो समुप्पन्नो ॥ १७ ॥

उसभा कोडिलक्ख ५०, अजियाओ कोडिलक्ख ३०, संभवा कोडिलक्ख १०, अभिनंदणा कोडिलक्ख ९, सुमति-ओ कोडीणउईसहस्सेहिं ९०, पउमप्पभा कोडीण नवसहस्सेहिं ९ सुपासा कोडीनवसएहिं ९००, चंदप्पभा कोडीओ णवती ९०, पुप्फदंता कोडीउ णवहि उ ९, सीयला कोडी १ उणा १०० सागर० ६६२६००० वरिसाइं, सेज्जंसा सागरो-पम ५४, वासुपुज्जा तीस सागराइं ३० विमला सागरोवमाइं ९, अणंता सागरोवमाइं ४, धम्मा सागरोवमाइं ३ ऊणाइं पलियचउब्भागेहिं ¾, संतिओ पलियद्धं, कुंथुओ पलियचउब्भाओ ¼ ऊणाओ वासकोडीसहस्सेणं १, अरा वासकोडी सहस्सं १, मल्लिओ वरिसलक्खचउप्पन्ना ५४, मुणिसुव्वया वरिसलक्ख ६, नमीओ वरिसलक्ख ५, अरिट्ठनेमिओ वरिससहस्स ८३७५०, पासा वाससयाइं २५० वद्धमाणो जिणंतराइं ॥ साम्प्रतं चक्रवर्त्तिनोऽधिकृत्य जिनान्तराण्येव प्रतिपाद्यन्ते, तत्र—

## इयमत्र स्थापना—

| | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| उसभो | अजिओ | संभव | अभिनंदण | सुमति | पद्म | सुपास | ससि | पुष्पदंत | सीयल | सेज्जंस | वासुपुज्ज | विमल | अणंत | धम्म | | | संति |
| भरहो | सगरो | | | | | | | | | | | | | | मघवं | सणंकुमार | संती |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | तिविट्ठू | दुविट्ठू | सयंभू | पुरिसोत्त | पुरिससिं | ० | ० | ० |
| ५०० धनूंषि | ४५० | ४०० | ३५० | ३०० | २५० | २०० | १५० | १०० | ९० | ८० | ७० | ६० | ५० | ४५ | ४२॥ | ४१॥ | ४० |
| ८४००००० पूर्वलक्षाः | ७२००००० | ६०००००० | ५०००००० | ४०००००० | ३०००००० | २०००००० | १०००००० | २००००० | १००००० | ८४००००० वर्षलक्षाः | ७२००००० | ६०००००० | ३०००००० | १०००००० | ५००००० | ३००००० | १००००० |

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| कुंथु | अरो | | | | मल्लि | मुनिसुव्व | | णमि | | णेमि | | पासो | वद्धमाण |
| कुंथु | अरो | ० | सुभूमो | ० | ० | पउमो | ० | हरिसेण | जयनामो | ० | बंभदत्त | ० | ० |
| ० | ० | पुरुषपुंडरी | ० | दत्तो | ० | ० | नारायण | ० | ० | कण्ह | ० | ० | ० |
| ३५ | ३० | २९ | २८ | २६ | २५ | २० | १६ | १५ | १२ | १० | ७ | ९ हस्ताः | ७ हस्ताः |
| ९५००० | ८४००० | ६५००० | ६० ०० | ५६००० | ५५००० | ३०००० | १२००० | १०००० | ३००० | १००० | ७०० | १०० वर्षाणि | ७२ |

उसभे भरहो अजिए सगरो मघवं सणंकुमारो अ । धम्मस्स य संतिस्स य जिणंतरे चक्कवट्टिदुगं ॥ ४१६ ॥
संती कुंथू अ अरो अरिहंता चेव चक्कवट्टीआ । अरमल्लिअंतरे पुण हवइ सुभूमो अ कोरव्वो ॥ ४१७ ॥
मुणिसुव्वए नमिम्मि य हुंति दुवे पउमनाभ–हरिसेणा । नमि–नेमिसु जयनामा अरिट्ठ–पासंतरे बंभो ॥४१८॥

इह चासम्मोहार्थं सर्वेषामेव चक्रवर्त्तिवासुदेवानां यो यस्मिन् कालेऽन्तरे वा चक्रवर्त्ती वासुदेवो वा भविष्यति बभूव वा तस्यानन्तरव्यावर्णितप्रमाणायुःसमन्वितस्य सुखपरिज्ञानार्थमयं प्रतिपादनोपायः—

बत्तीसं घरयाइं काउं तिरियायताहिं रेहाहिं । उड्ढाययाहिं काउं पंच घराइं तओ पढमे ॥ १ ॥
पन्नरस जिण निरंतर सुन्नदुगं तिजिण सुन्नयतिगं च ।
दो जिण सुन्न जिणिंदो सुन्न जिणो सुन्न दोण्णि जिणा ॥ २ ॥
बितीयपंतिठवणा—दो चक्कि सुन्न तेरस पण चक्की सुन्न चक्कि दो सुन्ना ।
चक्की सुन्न दु चक्की सुन्नं चक्की दु सुन्नं च ॥ ३ ॥
ततियपंतिठवणा—दस सुन्न पंच केसव पण सुन्नं केसि सुन्न केसी य ।
दो सुन्न केसवोऽवि य सुन्नदुगं केसव तिसुन्नं ॥ ४ ॥

प्रमाणान्यायूंषि चामीषां प्रतिपादितान्येव, तानि पुनर्यथाक्रममूर्ध्वायतरेखाऽधो गृहद्वये स्थापनीयानीति । तत्रेयं स्थापना साम्प्रतं प्रदर्श्यते ॥ उक्तसम्बन्धगाथात्रयगमनिका–ऋषभे तीर्थकरे भरतश्चक्रवर्त्ती, तथा अजिते तीर्थकरे सगरश्चक्र-

वर्त्ती भविष्यति, एवं तीर्थकरोक्तानुवादः, सर्वत्र भविष्यत्कालानुरूपः क्रियाध्याहारः कार्यः, त्रिकालगोचरसूत्रप्रदर्शनार्थो वा भूतेनापि न दुष्यति, तथा चावोचत्–'मघवंसणंकुमारा सणंकुमारं गया कप्प'मित्यादि, एवं सर्वत्र संयोज्यमिति, मघवा सनत्कुमारश्च एतच्चक्रवर्त्तिद्वयं धर्म्मश्च शान्तिश्च अनयोरन्तरं जिनान्तरं तस्मिन् जिनान्तरे उक्तलक्षणं चक्रवर्त्ति-द्वयं भविष्यत्यभवद्वेति गाथार्थः। द्वितीयगाथागमनिका–शान्तिः कुन्थुश्च अरः एते त्रयोऽप्यशोकाद्यष्टमहाप्रातिहार्यादि-रूपां पूजामर्हंतीत्यर्हन्तश्चैव चक्रवर्त्तिनश्च, तथा अरमल्ल्यन्तरे तु भवति सुभूमश्च कौरव्यः, तुशब्दोऽन्तरविशेषणे, नान्तर-मात्रे, किन्तु पुरुषपुण्डरीकदत्तवासुदेवद्वयमध्य इति गाथार्थः। तृतीयगाथागमनिका–मुनिसुव्रते तीर्थकरे नमौ च भवतः द्वौ, कौ द्वौ ?—पद्मनामहरिसेनौ, 'नमिनेमिसु जयणामो अरिट्ठपासंतरे बंभो'त्ति नमिश्च नेमिश्च नमिनेमी, अन्तरग्रहण-मभिसम्बध्यते, ततश्च नमिनेम्यन्तरे जयनामा अभवत्, अरिष्ठग्रहणादरिष्ठनेमिः पार्श्वेति पार्श्वस्वामी, अनयोरन्तरे ब्रह्मदत्तो भविष्यत्यभवद्वेति गाथार्थः॥ इदानीं वासुदेवो यो यत्तीर्थकरकालेऽन्तरे वा खल्वासीदसौ प्रतिपाद्यते—

पंचऽरहंते वंदंति केसवा पंच आणुपुवीए। सिज्जंस तिविट्ठाई धम्म पुरिससीहपेरंता॥ ४१९॥

अरमल्लिअंतरे दुन्नि केसवा पुरिस–पुंडरिअदत्ता। मुणिसुव्वय–नमिअंतरे नारायण कण्ह नेमिम्मि॥४२०॥

गमनिका–पञ्चार्हतो वन्दन्ते केशवाः, एतदुक्तं भवति—पञ्च केशवा अर्हतो वन्दन्ते, वन्दन्त इत्येतेषां सम्यक्त्वख्या-पनार्थमिति, कियन्तोऽर्हन्तः ? किमेकः द्वौ वा त्रयो वा, नेत्याह–पञ्च, पञ्चेति पञ्चैव, किं यथाकथञ्चिदित्याह–'आनु-पूर्व्या' परिपाट्या, 'सेजंस तिविट्ठाइ धम्म पुरिससीहपेरंता' श्रेयांसादीन् तिपृष्ठादयः धर्म्मपर्यन्तान् पुरुषसिंहपर्यन्ता इति,

वन्दंत इति शास्त्रकारवचनत्वाद्वर्त्तमाननिर्देशः, पाठान्तरं वा 'पंचऽरहंते वंदिंसु केसवे'त्यादि, गाथार्थः। द्वितीयगाथा-गमनिका—अरश्च मल्लिश्च अरमल्ली तयोरन्तरम्—अपान्तरालं तस्मिन् द्वौ केशवौ भविष्यतः, कौ द्वावित्याह—पुरुषपुण्डरीकदत्तौ, 'मुणिसुवयणमिअंतरे नारायणो' मुनिसुव्रतश्च नमिश्च मुनिसुव्रतनमी तयोरन्तरं २ तस्मिन् नारायणो नाम वासुदेवो भविष्यत्यभवद्वा, तथा 'कण्हो य नेमिम्मि'त्ति कृष्णाभिधानश्च नवमो वासुदेवो नेमितीर्थकरे भविष्यति बभूव वेति गाथार्थः। एवं तावच्चक्रवर्त्तिनो वासुदेवाश्च यो यज्जिनकालेऽन्तरे वा स उक्तः, साम्प्रतं चक्रवर्त्तिवासुदेवा-न्तराणि प्रतिपादयन्नाह—

चक्किदुगं हरिपणगं पणगं चक्कीण केसवो चक्की। केसव चक्की केशव दु चक्कि केसी अ चक्की अ ॥ ४२१ ॥

गमनिका—प्रथममुक्तलक्षणकाले चक्रवर्त्तिद्वयं भविष्यत्यभवद्वा, ततस्त्रिपृष्ठादिहरिपञ्चकं, पुनः पञ्चकं मघवादीनां चक्रवर्त्तिनां, पुनः पुरुषपुण्डरीकः केशवः, सुभूमाभिधानश्चक्रवर्त्ती, पुनर्दत्ताभिधानः केशवः, पुनः पद्मनामा चक्रवर्त्त्येव, पुनर्नारायणाभिधानः केशवः, पुनः हरिसेनजयनामानौ द्वौ चक्रवर्त्तिनौ, पुनः कृष्णनामा केशवः, पुनः ब्रह्मदत्ताभिधा-नश्चक्रवर्त्तीति, क्रियायोगः सर्वत्र प्रथमपदवद् वक्तव्य इति गाथार्थः॥ उक्तमानुषङ्गिकं प्रकृतं प्रस्तुमः, तत्र यदुक्तम्—'तित्थगरो को इहं भरहे'त्ति, तद् व्याचिख्यासयाऽऽह—

अह भणइ नरवरिंदो ताय! इमीसित्तिआइ परिसाए।
अन्नोऽवि कोऽवि होही भरहे वासम्मि तित्थयरो?॥ ४४॥ (मू० भा०)

गमनिका—अत्रान्तरे अथ भणति नरवरेन्द्रः—तात ! अस्याः एतावत्याः परिषदः अन्योऽपि कश्चिद्भविष्यति तीर्थकरः अस्मिन् भारते वर्षे, भावार्थस्तु सुगम एवेति गाथार्थः ॥

तत्थ मरीई नामा आइपरिव्वायगो उसभनत्ता । सज्झायज्झाणजुओ एगंते झायइ महप्पा ॥ ४२२ ॥

तत्र भगवतः प्रत्यासन्ने भूभागे मरीचिनामा आदौ परिव्राजकः आदिपरिव्राजकः प्रवर्त्तकत्वात्, ऋषभनप्ता पौत्रक इत्यर्थः, स्वाध्याय एव ध्यानं २ तेन युक्तः एकान्ते ध्यायति महात्मेति गाथार्थः ॥

तं दाएइ जिणिंदो एव नरिंदेण पुच्छिओ संतो । धम्मवरचक्कवट्टी अपच्छिमो वीरनामुत्ति ॥ ४२३ ॥

गमनिका—भरतपृष्टो भगवान् 'तं' मरीचिं दर्शयति जिनेन्द्रः एवं नरेन्द्रेण पृष्टः सन्, धर्म्मवरचक्रवर्त्ती अपश्चिमो वीरनामा भविष्यतीति गाथार्थः ॥

तथा—आइगरु दसाराणं तिविट्ठु नामेण पोअणाहिवई । पियमित्तचक्कवट्टी मूआइ विदेहवासम्मि ॥ ४२४ ॥

गमनिका—आदिकरो दसाराणं ( दशाराणां ) त्रिपृष्ठनामा पोतना नाम नगरी तस्या अधिपतिर्भविष्यतीति क्रिया, तथा प्रियमित्रनामा चक्रवर्त्ती मूकायां नगर्यां 'विदेहवासंमि'त्ति महाविदेहे भविष्यतीति गाथार्थः ॥

तं वयणं सोऊणं राया अंचिअतणूरुहसरीरो । अभिवंदिऊण पिअरं मरीइमभिवंदओ जाइ ॥ ४२५ ॥

गमनिका—तद्वचनं तीर्थकरवदनविनिर्गतं श्रुत्वा राजा अञ्चितानि तनूरुहाणि शरीरे यस्य स तथाविधः, अभिवन्द्य पितरं तीर्थकरं मरीचिं अभिवन्दको याति, पाठान्तरं वा 'मिरीइं अभिवंदिउं जाइ'त्ति, मरीचिं याति, किमर्थम् ?—

'अभिवंदिउं' अभिवन्दनायेत्यर्थः, यातीति वर्त्तमानकालनिर्देशस्त्रिकालगोचरसूत्रप्रदर्शनार्थ इति गाथार्थः ॥

सो विणएण उवगओ काऊण पयाहिणं च तिक्खुत्तो। वंदइ अभित्थुणंतो इमाहिं महुराहिं वग्गूहिं ॥४२६॥

स भरतः विनयेन करणभूतेन मरीचिसकाशमुपगतः सन् कृत्वा प्रदक्षिणां च 'तिक्खुत्तो'त्ति त्रिकृत्वः, तिस्रो वारा इत्यर्थः, वन्दते, अभिष्टुतवान्, एताभिर्मधुराभिर्वल्गुभिर्वाग्भिरिति गाथार्थः ॥

लाभा हु ते सुलद्धा जंऽसि तुमं धम्मचक्कवट्टीणं। होहिसि दसचउदसमो अपच्छिमो वीरनामुत्ति ॥४२७॥

'लाभा' अभ्युदयप्राप्तिविशेषाः, हुकारो निपातः स चैवकारार्थः तस्य च व्यवहितः सम्बन्धः, 'ते' तव सुलब्धा एव, यस्मात् त्वं धर्म्मचक्रवर्त्तिनां भविष्यसि दशचतुर्दशः, चतुर्विंशतितम इत्यर्थः, अपश्चिमो वीरनामेति गाथार्थः ॥ तथा आइगरो दसाराणं ( ४२४ ) गाथा पूर्ववत् नेया। एकान्तसम्यग्दर्शनानुरञ्जितहृदयो भावितीर्थकरभक्त्या च तमभिवन्दनायोद्यतो भरत एवाह—

नावि अ ते पारिवज्जं वंदामि अहं इमं च ते जम्मं। जं होहिसि तित्थयरो अपच्छिमो तेण वंदामि ॥४२८॥

गमनिका—नापि च परिव्राजामिदं पारिव्राज्यं वंदामि अहं, इदं च ते जन्म, किन्तु यद् भविष्यसि तीर्थकरः अपश्चिमस्तेन वंदामीति गाथार्थः ॥

एव ण्हं थोऊणं काऊण पयाहिणं च तिक्खुत्तो। आपुच्छिऊण पियरं विणीअणगरिं अह पविट्ठो ॥ ४२९ ॥

गमनिका-एवं स्तुत्वा, णहमिति निपातः पूरणार्थो वर्त्तते, कृत्वा प्रदक्षिणां च त्रिकृत्वः, आपृच्छ्य पितरं-ऋषभदेवं विनीतनगरीम्-अयोध्यामथ-अनन्तरं प्रविष्टो भरत इति गाथार्थः ॥ अत्रान्तरे—

तव्वयणं सोऊणं तिवइं अप्फोडिऊण तिक्खुत्तो । अब्भहिअजायहरिसो तत्थ मरीई इमं भणइ ॥ ४३० ॥

गमनिका-तस्य भरतस्य वचनं तद्वचनं श्रुत्वा, तत्र मरीचिः इदं भणतीति योगः, कथमित्यत आह-त्रिपदीं दत्त्वा रङ्गमध्यगतमल्लवत्, तथा आस्फोट्य त्रिकृत्वः, तिस्रो वारा इत्यर्थः, किंविशिष्टः संस्तत आह-अभ्यधिको जातो हर्षो यस्येति समासः, तत्र स्थाने मरीचिरिदं-वक्ष्यमाणं भणति, वर्त्तमाननिर्देशप्रयोजनं प्राग्वदिति गाथार्थः ॥

जइ वासुदेव पढमो मूआइ विदेह चक्कवट्टित्तं । चरिमो तित्थयराणं होउ अलं इत्तिअं मज्झ ॥ ४३१ ॥

गमनिका-यदि वासुदेवः प्रथमोऽहं, मूकायां विदेहे चक्रवर्त्तित्वं प्राप्स्यामि,तथा चरमः-पश्चिमः तीर्थकराणां भविष्यामि, एवं तर्हि भवतु एतावन्मम, एतावतैव कृतार्थ इत्यर्थः, अलं पर्याप्तमन्येनेति,पाठान्तरं वा 'अहो मए एत्तियं लद्धं'ति गाथार्थः ॥

अहयं च दसाराणं पिया य मे चक्कवट्टिवंसस्स । अज्जो तित्थयराणं अहो कुलं उत्तमं मज्झ ॥ ४३२ ॥

गमनिका-अहमेव, चशब्दस्यैवकारार्थत्वात्, किं ?—दसाराणं, प्रथमो भविष्यामीति वाक्यशेषः, पिता च 'मे' मम चक्रवर्त्तिवंशस्य, प्रथम इति क्रियाध्याहारः, तथा 'आर्यकः' पितामहः स तीर्थकराणां प्रथमः, यत एवमत अहो-विस्मये कुलमुत्तमं ममेति गाथार्थः ॥ पृच्छाद्वारं गतम्, इदानीं निर्वाणद्वारावयवार्थाभिधित्सयाऽऽह—

अह भगवं भवमहणो पुव्वाणमणूणयं सयसहस्सं । अणुपुव्वि विहरिऊणं पत्तो अट्ठावयं सेलं ॥ ४३३ ॥

गमनिका—अथ भगवान् भवमथनः पूर्वाणामन्यूनं शतसहस्रं आनुपूर्व्या विहृत्य प्राप्तोऽष्टापदं शैलं, भावार्थः सुगम एवेति गाथार्थः ॥

अट्ठावयम्मि सेले चउदसभत्तेण सो महरिसीणं । दसहिं सहस्सेहिं समं निव्वाणमणुत्तरं पत्तो ॥ ४३४ ॥

गमनिका—अष्टापदशैले चतुर्दशभक्तेन स महर्षीणां दशभिः सहस्रैः समं निर्वाणमनुत्तरं प्राप्तः, अस्या अपि भावार्थः सुगम एव, नवरं चतुर्दशभक्तं–षड्रात्रोपवासः ॥ भगवन्तं चाष्टापदप्राप्तमपवर्गजिगमिषुं श्रुत्वा भरतो दुःखसन्तप्तमानसः पद्भ्यामेवाष्टापदं ययौ, देवा अपि भगवन्तं मोक्षजिगमिषुं ज्ञात्वाऽष्टापदशैलं दिव्यविमानारूढाः खल्वागतवन्तः, उक्तं च भगवति मोक्षगमनायोद्यते, "जाव य देवावासो जाव य अट्ठावओ नगवरिंदो । देवेहि य देवीहि य अविरहियं संचरंतेहिं ॥ १ ॥" तत्र भगवान् त्रिदशनरेन्द्रैः स्तूयमानो मोक्षं गत इति गाथार्थः ॥ साम्प्रतं निर्वाणगमनविधिप्रतिपादनाय एतां द्वारगाथामाह—

निव्वाणं चिइगागिई जिणस्स इक्खाग–सेसगाणं च । सकहा थूभ जिणघरे जायग तेणाऽहिअग्गित्ति ॥ ४३५ ॥

व्याख्या—निर्वाणमिति भगवान् दशसहस्रपरिवारो निर्वाणं प्राप्तः, अत्रान्तरे च देवाः सर्व एवाष्टापदमागताः, 'चितकाकृति'रिति ते तिस्रश्चिताः वृत्तत्र्यस्रचतुरस्राकृतीः कृतवन्त इति, एकां पूर्वेण अपरां दक्षिणेन तृतीयामपरेणेति, तत्र च पूर्वा तीर्थकृतः दक्षिणा इक्ष्वाकूणां अपरा शेषाणामिति, ततः अग्निकुमारा वदनैः खल्वग्निं प्रक्षिप्तवन्तः, तत एव निबन्धनाल्लोके 'अग्निमुखा वै देवा' इति प्रसिद्धं, वायुकुमारास्तु वातं मुक्तवन्त इति, मांसशोणिते च ध्यामिते सति मेघकु-

माराः सुरभिणा क्षीरोदजलेन निर्वापितवन्तः, 'सकथे'ति सकथा हनुमोच्यते, तत्र दक्षिणां हनुमां भगवतः सम्बन्धिनीं शक्रो जग्राह, वामामीशानः, अधस्त्यदक्षिणां पुनश्चमरः, अधस्त्योत्तरां तु वलिः, शेषास्तु त्रिदशाः शेषाङ्गानि गृहीतवन्तः, नरेश्वरादयस्तु भस्म गृहीतवन्तः, शेषा लोकास्तु तद्भस्मना पौण्ड्राणि चक्रुः, तत एव च प्रसिद्धिमुपगतानि, 'स्तूपानि जिनगृहं चे'ति भरतो भगवन्तमुद्दिश्य वर्द्धकीरत्नेन योजनायामं त्रिगव्यूतोच्छ्रितं सिंहनिषद्यायतनं कारितवान्, निजवर्ण-प्रमाणयुक्ताश्चतुर्विंशतिं जीवाभिगमोक्तपरिवारयुक्ताः तीर्थकरप्रतिमाः तथा भ्रातृशतप्रतिमा आत्मप्रतिमां च स्तूपशतं च, मा कश्चिदाक्रमणं करिष्यतीति, तत्रैकं भगवतः शेषानेकोनशतस्य भ्रातॄणामिति, तथा लोहमयान् यन्त्रपुरुषांस्तद्द्वारपालांश्च चकार, दण्डकरत्नेनाष्टापदं च सर्वत्र छिन्नवान्, योजने योजने तु अष्टौ पदानि च कृतवान्, सगरसुतैस्तु वंशानुरागाद्यथा परिखां कृत्वा गङ्गाऽवतारिता तथा ग्रन्थान्तरतो विज्ञेयमिति । याचकास्तेनाहिताग्नयः इत्यस्य व्याख्या—देवैर्भगवत्सकथादौ गृहीते सति श्रावका देवानतिशयभक्त्या याचितवन्तः, देवा अपि तेषां प्रचुरत्वान्महता यत्नेन याचनाभिद्रुता आहुः—अहो ! याचका इति, तत एव याचका रूढाः, ततः अग्निं गृहीत्वा स्वगृहेषु स्थापितवन्तस्तेन कारणेनाहिताग्नयः इति तत एव च प्रसिद्धाः, तेषां चाग्नीनां परस्परतः कुण्डसङ्क्रान्तावयं विधिः—भगवतः सम्बन्धिभूतः ( अग्निः ) सर्वकुण्डेषु सञ्चरति, इक्ष्वाकुकुण्डाग्निः शेषकुण्डाग्नौ सञ्चरति, न भगवत्कुण्डाग्नाविति, शेषानगारकुण्डाग्निस्तु नान्यत्र सङ्क्रमत इति गाथार्थः ॥ साम्प्रतमभिहितद्वारगाथायाः द्वारद्वयव्याचिख्यासया मूलभाष्यकार आह—

थूभसय भाउआणं चउवीसं चेव जिणघरे कासी। सव्वजिणाणं पडिमा वण्णपमाणेहिं निअएहिं ॥४५॥ (मू॰ भा॰)

स्तूपशतं भ्रातॄणां भरतः कारितवानिति, तथा चतुर्विंशतिञ्चैव जिनगृहे-जिनायतने 'कासि'त्ति कृतवान्, का इत्याह—सर्वजिनानां प्रतिमाः, वर्णप्रमाणैर्निजैः, आत्मीयैरिति गाथार्थः ॥ साम्प्रतं भरतवक्तव्यतानिर्बद्धां सङ्ग्रहगाथां प्रतिपादयन्नाह—

आयंसघरपवेसो भरहे पडणं च अंगुलीअस्स । सेसाणं उम्मुअणं संवेगो नाण दिक्खा य ॥ ४३६ ॥

अस्या भावार्थः कथानकादवसेयः, तच्चेदम्—भगवतो निव्वाणं गयस्स आययणं काराविय़ं, भरहो अवज्झमागओ, कालेण य अप्पसोगो जाओ, ताहे पुणरवि भोगे भुंजिउं पवत्तो, एवं तस्स पंच पुव्वसयसहस्सा अतिक्कंता भोगे भुंजंतस्स, अह अन्नया कयाइ सव्वालंकारभूसिओ आदंसघरमतिगतो, तत्थ य सव्वंगिओ पुरिसो दीसइ, तस्स एवं पेच्छमाणस्स अंगुलेज्जयं पडियं, तं च तेण न नायं पडियं, एवं तस्स पलोयंतस्स जाहे अंगुली दिट्ठिंमि पडिया ताहे असोभंतिया दिट्ठा, ततो कडगंपि अवणेइ, एवं एक्केक्कमवणेंतेण सव्वमाभरणमवणीयं, ताहे अप्पाणं उच्चियपउमं व पउमसरमसोभंतं पेच्छिय संवेगावण्णो परिचिंतिउं पयत्तो—आगंतुगदव्वेहिं विभूसियं मे सरीरगंति, न सहावसुंदरं, एवं चिंतेंतस्स अपुव्वकरणज्झाणमुवट्ठियस्स केवलनाणं समुप्पन्नंति । सक्के देविंदे देवराया आगओ भणति—दव्वलिंगं पडिवज्ज जाहे निक्खमणमहिमं करेमि, ततो तेण पंचमुट्ठिओ लोओ कओ, देवरायाए रओहरणपडिग्गहादि उवकरणमुवणीयं, दसहिं रायसहस्सेहिं समं पव्वइओ, सेसा णव चक्किणो सहस्सपरिवारा निक्खंता, सक्केणं वंदिओ, ताहे भगवं पुव्वसयसहस्सं केवलिपरियागं पाउणित्ता परिनिव्वुडो य, आइच्चजसो सक्केणाभिसित्तो, एवमट्ठ पुरिसजुगाणि अभिसित्तानि, उक्तो भावार्थः,

साम्प्रतमक्षरगमनिका, आदर्शकगृहे प्रवेशः, कस्य ?–'भरहे'त्ति भरतस्य, प्राकृतशैल्या षष्ठ्यर्थे सप्तमी, तथा पतनं चाङ्गुलीयस्य बभूव, शेषाणां तु कटकादीनां मोचनमनुष्ठितं, ततः संवेगः सञ्जातः, तदुत्तरकालं ज्ञानमुत्पन्नमिति, दीक्षा च तेन गृहीता, आदिशब्दान्निवृत्तश्चेत्यक्षरार्थः ॥ उक्तमानुषङ्गिकमिदानीं प्रकृतां मरीचिवक्तव्यतां 'पृच्छतां कथयती'त्यादिना प्रतिपादयति, तत्र—

पुच्छंताण कहेई उवट्ठिए देइ साहुणो सीसे । गेलन्नेऽपडियरणं कविला ! इत्थंपि इहयंपि ॥ ४३७ ॥

गमनिका—पृच्छतां कथयति, उपस्थितान् ददाति साधुभ्यः शिष्यान्, ग्लानत्वेऽप्रतिजागरणं, कपिल ! अत्रापि इहापि । भावार्थः–स हि प्राग्वर्णितस्वरूपो मरीचिर्भगवति निर्वृत्ते साधुभिः सह विहरन् पृच्छतां लोकानां कथयति धर्म्मं जिनप्रणीतमेव, धर्म्माक्षिप्तांश्च प्राणिनः उपस्थितान् ददाति साधुभ्यः शिष्यानिति, अन्यदा स ग्लानः संवृत्तः, साधवोऽप्यसंयतत्वान्न प्रतिजाग्रति, स चिन्तयति–निष्ठितार्थाः खल्वेते, नासंयतस्य कुर्वन्ति, नापि ममैतान् कारयितुं युज्यते, तस्मात्कंचन प्रतिजागरकं दीक्षयामीति, अपगतरोगस्य च कपिलो नाम राजपुत्रो धर्म्मशुश्रूषया तदन्तिकमागत इति, कथिते साधुधर्म्मे स आह–यद्ययं मार्गः किमिति भवतैतदङ्गीकृतं ?, मरीचिराह–पापोऽहं 'लोए इंदिये'त्यादि विभाषा पूर्ववत्, कपिलोऽपि कर्म्मोदयात् साधुधर्म्मानभिमुखः खल्वाह–तथापि किं भवद्दर्शने नास्त्येव धर्म्म इति ?, मरीचिरपि प्रचुरकर्म्मा खल्वयं न तीर्थंकरोक्तं प्रतिपद्यते, वरं मे सहायः संवृत्त इति सञ्चिन्त्याह–'कपिला एत्थंपि'त्ति अपिशब्दस्यैवकारार्थत्वान्निरुपचरितः खल्वत्रैव–साधुमार्गे, 'इहइंपि'त्ति स्वल्पस्त्वत्रापि विद्यत इति गाथार्थः ॥ स ह्येतमाकर्ण्य तत्सकाश एव प्रव्रजितः,

मरीचिनाऽप्यनेन दुर्वचनेन संसारोऽभिनिर्वर्त्तितः, त्रिपदीकाले च नीचैर्गोत्रंकर्म्म बद्धमिति, अमुमेवार्थं प्रतिपादयन्नाह—

दुब्भासिएण इक्केण मरीई दुक्खसागरं पत्तो। भमिओ कोडाकोडिं सागरसरिनामधिज्जाणं ॥ ४३८ ॥

तंमूलं संसारो नीआगुत्तं च कासि तिवइम्मि। अपडिक्कंतो बंभे कविलो अंतद्धिओ कहए ॥ ४३९ ॥

प्रथमगाथागमनिका—दुर्भाषितेन एकेन उक्तलक्षणेन मरीचिर्दुःखसागरं प्राप्तः, भ्रान्तः कोटीकोटीनां, केषामित्याह—'सागरसरिनामधेज्जाणं'ति सागरसदृशनामधेयानां, सागरोपमाणामिति गाथार्थः॥ द्वितीयगाथागमनिका—'तन्मूलं' दुर्भाषितमूलं संसारः सञ्जातः, तथा स एव नीचैर्गोत्रं च 'कृतवान्' निष्पादितवान् त्रिपद्यां—प्राग्वर्णितस्वरूपायामिति, 'अपडिक्कंतो बंभे'त्ति स मरीचिश्चतुरशीतिपूर्वशतसहस्राणि सर्वायुष्कमनुपाल्य तस्मात् दुर्भाषिताद् गर्वाच्चाप्रतिक्रान्तः-अनिवृत्तः ब्रह्मलोके दशसागरोपमस्थितिर्देवः सञ्जात इति॥ कपिलोऽपि ग्रन्थार्थपरिज्ञानशून्य एव तद्दर्शितक्रियारतो विजहार, आसुरिनामा च शिष्योऽनेन प्रव्राजित इति, तस्य स्वमाचारमात्रं दिदेश, एवमन्यानपि शिष्यान् स गृहीत्वा शिष्यप्रवचनानुरागतत्परो मृत्वा ब्रह्मलोक एवोत्पन्नः, स उत्पत्तिसमनन्तरमेवावधिं प्रयुक्तवान्, किं मया हुतं वेष्टं वा दानं वा दत्तं येनैषा दिव्या देवर्द्धिः प्राप्तेति, स्वं पूर्वभवं विज्ञाय चिन्तयामास—मम शिष्यो न किञ्चिद्वेत्ति, तत्तस्योपदिशामि तत्त्वमिति, तस्मै आकाशस्थपञ्चवर्णमण्डलकस्थः तत्त्वं जगाद, आह च—'कपिलो अंतद्धिओ कहए' कपिलः अन्तर्हितः कथितवान्, किं?, अव्यक्ताद् व्यक्तं प्रभवति, ततः षष्टितन्त्रं जातं, तथा चाहुस्तन्मतानुसारिणः—"प्रकृते-

महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः । तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानी ॥ १ ॥" त्यादि, अलं विस्तरेण, प्रकृतं प्रस्तुम इति गाथार्थः ॥

इक्खागेसु मरीई चउरासीई अ बंभलोअम्मि । कोसिअ कुल्लागम्मी असीइमाउं च संसारो ॥ ४४० ॥

गमनिका—इक्ष्वाकुषु मरीचिरासीत्, चतुरशीतिं च पूर्वशतसहस्राण्यायुष्कं पालयित्वा 'बंभलोयंमि' ब्रह्मलोके कल्पे देवः संवृत्तः, ततश्चायुष्कक्षयात् च्युत्वा 'कोसिय कोल्लाएसु'(यंमी) त्ति कोल्लाकसन्निवेशे कौशिको नाम ब्राह्मणो बभूव, 'असीतिमाउं च संसार'त्ति स च तत्राशीतिपूर्वशतसहस्राण्यायुष्कमनुपाल्य 'संसार'त्ति तिर्यङ्नरनारकामरभवानुभूतिलक्षणे संसारे पर्यटित इति गाथार्थः ॥ संसारे कियन्तमपि कालमटित्वा स्थूणायां नगर्यां जात इति, अमुमेवार्थं 'थूणा ये'त्यादिना प्रतिपादयति—

थूणाई पूसमित्तो आउं बावत्तरिं च सोहम्मे । चेइअ अग्गिज्जोओ चोवट्ठी चेव ईसाणे ॥ ४४१ ॥

स्थूणायां नगर्यां पुष्पमित्रो नाम ब्राह्मणः सञ्जातः, 'आउं बावत्तरिं च सोहम्मे'त्ति तस्यायुष्कं द्विसप्ततिपूर्वशतसहस्राण्यासीत्, परिव्राजकदर्शने च प्रव्रज्यां गृहीत्वा तां पालयित्वा कियन्तमपि कालं स्थित्वा सौधर्म्मे कल्पेऽजघन्योत्कृष्टस्थितिः समुत्पन्न इति । 'चेइय अग्गिज्जोतो चोयट्ठीसाणकप्पंमि'(चेव ईसाणे)त्ति सौधर्म्माच्च्युतः चैत्यसन्निवेशे अग्निद्योतो ब्राह्मणः सञ्जातः, तत्र चतुःषष्टिपूर्वशतसहस्राण्यायुष्कमासीत्, परिव्राट् सञ्जातो, मृत्वा चेशाने देवोऽजघन्योत्कृष्टस्थितिः संवृत्त इति गाथार्थः ॥

मंदिरे अग्गिभूई छप्पन्नाउं सणंकुमारम्मि । सेअवि भारद्दाओ चोआलीसं च माहिंदे ॥ ४४२ ॥

गमनिका—ईशानाच्च्युतो 'मन्दिर' इति मन्दिरसन्निवेशे अग्निभूतिनामा ब्राह्मणो बभूव, तत्र षट्पञ्चाशत् पूर्वशत-

सहस्राणि जीवितमासीत्, परिव्राजकश्च वभूव, मृत्वा 'सणंकुमारंमि'त्ति सनत्कुमारे कल्पे विमध्यस्थितिर्देवः समुत्पन्न इति, 'सेतवि भारद्दाए चोयालीसं च माहिंदि'त्ति सनत्कुमाराच्च्युतः श्वेताम्ब्यां नगर्यां भारद्वाजो नाम ब्राह्मण उत्पन्न इति, तत्र च चतुश्चत्वारिंशत्पूर्वशतसहस्राणि जीवितमासीत्, परिव्राजकश्चाभवत्, मृत्वा च माहेन्द्रे कल्पेऽजघन्योत्कृष्ट-स्थितिर्देवो वभूवेति गाथार्थः ॥

संसरिय थावरो रायगिहे चउतीस वंभलोगम्मि । छस्सुवि पारिवज्जं भमिओ तत्तो अ संसारे ॥ ४४३ ॥

गमनिका—माहेन्द्राच्च्युतः संसृत्य कियन्तमपि कालं संसारे स्थावरो नाम ब्राह्मणो राजगृहे समुत्पन्न इति, तत्र च चतुस्त्रिंशत्पूर्वशतसहस्राण्यायुष्कं, परिव्राजक आसीत्, मृत्वा ब्रह्मलोकेऽजघन्योत्कृष्टस्थितिर्देवः सञ्जातः, एवं षट्स्वपि वारासु परिव्राजकत्वमधिकृत्य दिवमवाप्तवान्, 'भमिओ तत्तो य संसारे' ततः ब्रह्मलोकाच्च्युत्वा भ्रान्तः संसारे प्रभूतं कालमिति गाथार्थः ॥

रायगिह विस्सनंदी विसाहभूई अ तस्स जुवराया । जुवरण्णो विस्सभूई विसाहनंदी अ इअरस्स ॥ ४४४ ॥

रायगिह विस्सभूई विसाहभूइसुअ खत्तिए कोडी । वाससहस्सं दिक्खा संभूअजइस्स पासम्मि ॥ ४४५ ॥

भावार्थः खल्वस्य गाथाद्वयस्य कथानकादवसेयः, तच्चेदम्—रायगिहे नगरे विस्सनंदी राया, तस्स भाया विसाहभूती, सो य जुवराया, तस्स जुवरण्णो धारिणीए देवीए विस्सभूती नाम पुत्तो जातो, रण्णोऽवि पुत्तो विसाहनंदित्ति, तस्स विस्सभूतिस्स वासकोडी आउं, तत्थ पुप्फकरंडकं नाम उज्जाणं, तत्थ सो विस्सभूती अंतेउरवरगतो सच्छंदसुहं पवियरइ,

ततो जा सा विसाहनंदिस्स माया तीसे दासचेडीओ पुप्फकरंडए उज्जाणे पत्ताणि पुप्फाणि य आ(वि)णेंति, प्रेच्छंति य विस्सभूतिं कीडंतं, तासिं अमरिसो जाओ, ताहे साहंति जहा एवं कुमारो ललइ, किं अम्ह रज्जेण वा बलेण वा?, जइ विसाहनंदी न भुंजइ एवंविहे भोए, अम्ह नामं चेव, रज्जं पुण जुवरन्नो पुत्तस्स जस्सेरिसं ललियं, सा तासिं अंतिए सोउं देवी ईसाए कोवघरं पविट्ठा, जइ ताव रायाणए जीवंतए एसा अवत्था?, जाहे राया मतो भविस्सइ ताहे इत्थ अम्हे को गणेहिति?, राया गमेइ, सा पसायं न गिण्हइ, किं मे रज्जेणं तुमे वत्ति?, पच्छा तेण अमच्चस्स सिट्ठं, ताहे अमच्चोऽवि तं गमेति, तहवि न ठाइ, ताहे सो अमच्चो भणइ रायं—मा देवीए वयणातिक्कमो कीरउ, मा मारेहिति अप्पाणं, राया भणति—को उवाओ होज्जा?, ण य अम्हं वंसे अन्नंमि अतिगते उज्जाणे अण्णो अतीति, तत्थ वसंतमासं ठिओ मासग्गेसु अच्छइ, अमच्चो भणइ—उवाओ कज्जउ, जहा अमुगो पच्चंतराया ओवट्टो, अणज्जंता पुरिसा कूडलेहे उवणेंतु, एवमेतेण कयकेण ते कूडलेहा रन्ना उवठविया, ताहे राया जत्तं गिण्हेइ, तं विस्सभूतिणा सुयं, ताहे भणति—मए जीवमाणे तुब्भे किं निग्गच्छह?, ताहे सो गओ, ताहे चेव इमो अइयओ, सो गओ तं पच्चंतं जाव न किंचि पेच्छइ उड्डमरेंतं, ताहे आहिंडित्ता जाहे नत्थि कोइ अतिक्कमइ ताहे पुणरवि पुप्फकरंडयं उज्जाणमागओ, तत्थ दारवाला दंडगहिअग्गहत्था भणंति—मा अईह सामी!, किं निमित्तं?, एत्थ विसाहनंदी कुमारो रमइ, ततो एवं सोऊणं कुविओ विस्सभूती, तेण नायं—कयकेण अहं निग्गच्छाविओत्ति, तत्थ कविट्ठलता अणेगफलभरसमोसया, सा मुट्ठिप्पहारेण आहया, ताहे तेहिं कविट्ठेहिं भूमी अच्छुया, ते भणाति—एवं अहं तुज्झं सीसाणि पाडिंतो जइ अहं महल्लपिउणो गोरवं न करेंतो, अहं भे छम्मेण नीणिओ

राया संतेउरपरियणो जुवराया य निग्गओ, भोगा अवमाणमूलत्ति अज्जसंभूयाणं थेराणं अंतिए पव्वइओ, तं पव्वइयं सोउं ताहे तम्हा अंलाहि भोगेहिं, तओ निग्गओ, ते तं खमावेंति,णेव तेसिं सो पसत्तिं गेण्हइ, ततो बहूहिं छट्ठट्ठमादिएहिं अप्पाणं भावेमाणो विहरति, एवं सो विहरमाणो महुरनगरिं गओ।

इओ य विसाहनंदी कुमारो तत्थ महुराए पिउच्छाए रन्नो अग्गमहिसीए धूया लद्धेल्लिया, तत्थ गतो, तत्थ से रायमग्गे आवासो दिन्नो, सो य विस्सभूती अणगारो मासखमणपारणगे हिंडंतो तं पएसमागतो जत्थ ठाणे विसाहनंदीकुमारो अच्छइ, ताहे तस्स पुरिसेहिं कुमारो भण्णइ–सामि ! तुब्भे एयं न याणह ?, सो भणति–न याणामि, तेहिं भण्णइ–एस सो विस्सभूतीकुमारो, ततो तस्स तं दट्ठूण रोसो जाओ, इत्थंतरे सूइयाए गावीए पणोल्लिओ पडिओ, ताहे तेहिं उक्कुट्ठिकलयलो कओ, इमं चऽणेहिं भणियं–तं बलं तुज्झ कविट्ठपाडणं च कहिं गयं ?, ताहे तेण तत्तो पलोइयं, दिट्ठो यऽणेण सो पावो, ताहे अमरिसेणं तं गाविं अग्गसिंगेहिं गहाय उड्ढमुव्वहइ, सुदुब्बलस्सावि सिंघस्स किं सियालेहिं बलं लंघिज्जइ ?, ताहे चेव नियत्तो, इमो दुरप्पा अज्जवि मम रोसं वहइ, ताहे सो नियाणं करेइ–'जइ इमस्स तवनियमबंभचेरस्स फलमत्थि तो आगमेस्साणं अपरिमियबलो भवामि' तत्थ सो अणालोइयपडिक्कंतो महासुक्के उववण्णो, तत्थुक्कोसट्ठितीओ देवो जातो, ततो चइऊण पोयणपुरे नगरे पुत्तो पयावइस्स मिगावईए देवीए कुच्छिंसि उववण्णो, तस्स कहं पयावती नामं ?, तस्स पुव्विं रिउपडिसत्तुत्तिनामं होत्था, तस्स य भद्दाए देवीए अयले नामं कुमारे होत्था, तस्स य अयलस्स भगिणी मियावती नाम दारिया, अतीव रूववती, सा य उम्मुक्कबालभावा सव्वालंकारविभूसिया पिउपायवंदिया गया, तेण सा

उच्छंगे निवेसिया, सो तीसे रूवे जोवणे य अंगफासे य मुच्छिओ, तं विसज्जेत्ता पउरजणवयं वाहरइ, ताहे भणइ–जं एत्थ रयणं उप्पज्जइ तं कस्स ?, ते भणंति–तुब्भं, एवं तिन्नि वारा साहिते सा चेडी उवट्ठि(ढवि)या, ताहे लज्जिया निग्गया, तेसिं सव्वेसिं कूवमाणाणं गंधव्वेण विवाहेण सयमेव विवाहिया, उप्पाइयाऽणेणं भारिया सा, भद्दा पुत्तेण अयलेण समं दक्खिणापहे माहिस्सिरिं पुरिं निवेसेइ, महंतीए इसरीएत्ति माहेस्सरी, अयले मायं ठवेऊण पिउमूलमागओ, ताहे लोएण पयावती नामं कयं, पया अणेण पडिवण्णा पयावतित्ति, वेदेऽप्युक्तम्–"प्रजापतिः स्वां दुहितरमकामयत" ताहे महासुक्काओ चइऊणं तीए मियावतीए कुच्छिंसि उववण्णो, सत्त सुविणा दिट्ठा, सुमिणपाढगेहिं पढमवासुदेवो आइट्ठो, कालेण जातो, तिण्णि य से पिट्ठिकरंडका तेण से तिविट्ठू नामं कयं, मायाए पडिमक्खिओ उण्हतेल्लेणंति, जोव्वणगमणुप्पत्तो । इओ य महामंडलिओ आसग्गीवो राया, सो निमित्तियं पुच्छइ–कतो मम भयंति ?, तेण भणियं–जो चंडमेहदूयं आधरिसेहित्ति, अवरं ते य महाबलवगं सीहं मारेहिति, ततो ते भयंति, तेण सुयं, जहा पयावतिपुत्ता महाबलवगा, ताहे तत्थ दूयं पेसेइ, तत्थ य अंतेपुरे पेच्छणयं वट्टइ, तत्थ य दूओ पविट्ठो, राया उट्ठिओ, पेच्छणयं भग्गं, कुमारा पेच्छणगेण अक्खित्ता भणंति–को एस ?, तेहिं भणियं–जहा आसग्गीवरण्णो दूओ, ते भणंति–जाहे स वच्चेज्जा ताहे कहेज्जह, सो राइणा पूएऊण विसज्जिओ, पधाविओ अप्पणो विसयस्स, कहियं कुमाराणं, तेहिं गंतूण अद्धप्पहे हओ, तस्स जे सहाया ते सव्वेवि दिसोदिसिं पलाया, रण्णा सुयं–जहा आहरिसिओ दूओ, संभंतेणं नियत्तिओ, ताहे रण्णा विउणतिउणं दाऊण मा हु रण्णो साहिज्जसु जं कुमारेहिं कयं, तेण भणियं–न साहेमि, ताहे जे ते पुरओ गया तेहिं सिट्ठं

जहा आधरिसिओ दूओ, ताहे सो राया कुविओ, तेण दूएण नायं-जहा रन्नो पुवं कहिएल्लयं, जहावत्तं सिट्ठं, ततो अस्स-
ग्गीवेण अन्नो दूओ पेसिओ, वच्च पयावइं गंतूण भणाहि-मम सालिं रक्खाहि कसिज्जमाणं, गतो दूओ, रन्ना कुमारा
उवलद्धा-किह अकाले मच्चू खवलिओ ?, तेण अम्ह अवारए चेव जत्ता आणत्ता, राया पहाविओ, ते भणंति-अम्हे
वच्चामो, ते रुंभंता मड्डाए गता, गंतूणं खेत्तए भणंति-किह अन्ने रायाणो रक्खियाइया?, ते भणंति-आसहत्थिरहपुरिसपा-
गारं काऊणं, केच्चिरं?, जाव करिसणं पविट्ठं, तिवट्ठू भणति-को एच्चिरमच्छइ?, मम तं पएसं दरिसेह, तेहिं कहियं-एयाए
गुहाए, ताहे कुमारो रहेण तं गुहं पविट्ठो, लोगेण दोहिवि पासेहिं कलयलो कओ, सीहोऽविय असंभंतो निग्गओ,
कुमारो चिंतेइ-एस पादेहिं अहं रधेण, विसरिसं जुद्धं, असिखेडगहत्थो रहाओ उइन्नो, ताहे पुणोऽवि चिंतेइ-एस
दाढाणखायुधो अहमसिखेडगेण, एवमवि असमंजसं, तंपिऽणेण असिखेडगं छड्डियं, सीहस्स अमरिसो जाओ-एगं ता
रहेण गुहमतिगतो एगागी, वितियं भूमिं ओइण्णो, ततियं आयुधाणि विमुक्काणि, अज्ज णं विणिवाएमित्ति महया अव-
तालिएणं वयणे उक्कंदं काऊण संपत्तो, ताहे कुमारेण एगेण हत्थेण उवरिल्लो उट्ठो एगेणं हेट्ठिल्लो गहिओ, तओ तेण जुन्न-
पडगोविव दुहा काऊण मुक्को, ताहे लोगेण कलयलो कओ, अहासन्निहियाए देवयाए आभरणवत्थकुसुमवरिसं वरिसियं,
ताहे सीहो तेण अमरिसेण फुरफुरेंतो अच्छइ, एवं नाम अहं कुमारएण जुद्धेण मारिओत्ति, तं च किर कालं भगवओ
गोयमसामी रहसारही आसि, तेण भणति-मा तुमं अमरिसं वहाहि, एस नरसीहो तुमं मियाधिराओ, ता जति सीहो
सीहेण मारिओ को एत्थ अवमाणो ?, ताणि सो वयणाणि मधुमिव पिवति, सो मरित्ता नरए उववण्णो, सो कुमारो

तं चम्मं गहाय नगरस्स पहाविओ, ते य गामेल्लए भणइ–गच्छह भो! तस्स घोडयग्गीवस्स कहेह, जहा अच्छसु वीसत्थो, तेहिं गंतूण सिट्ठं, रुट्ठो, दूयं विसज्जेइ–एए पुत्ते तुमं मम ओलग्गाए पट्ठवेहि, तुमं महल्लो, जाहे पेच्छामि सक्कारेमि रज्जाणि य देमि, तेण भणियं–अच्छंतु कुमारा, सयं चेव णं ओलग्गामित्ति, ताहे सो भणति–किं न पेसेसि?, पेसेहि आउ जुज्झसज्जो निग्गच्छेति, सो दूओ तेहिं आधरिसित्ता धाडिओ, ताहे सो आसग्गीवो सव्वबलेण उवट्ठिओ, इयरेऽवि देसंते ठिया, सुबहुं कालं जुज्झिऊण हयगयरहनरादिक्खयं च पिच्छिऊण कुमारेण दूओ पेसिओ, जहाऽहं च तुमं च दोन्निवि जुद्धं संपलग्गामो, किं च बहुएण अकारिजणेण मारिएण?, एवं होउत्ति, बिइयदिवसे रहेहिं संपलग्गा, जाहे आउहाणि खीणाणि ताहे चक्कं मुयइ, तं तिविट्ठुस्स तुंबगउरे पडियं, तेणेव सीसं छिन्नं, देवेहिं च घुट्ठं जहेस तिविट्ठू पढमो वासुदेवो उप्पन्नोत्ति, ता सव्वे रायाणो पणिवायमुवगया, ओवतियं अद्धभरहं, कोडियसिला दंडबाहाहिं धारिया, एयं रहावत्तपव्वयसमीवे जुद्धमासि, एवं परिहायमाणे बले कण्हेण किर जण्णुगाणि जाव किहवि पाविया, तिविट्ठू चुलसीतिं वाससयसहस्साइं सव्वाउयं पालइत्ता कालमासे कालं काऊण सत्तमाए पुढवीए अप्पतिट्ठाणे नरए तेत्तीसं सागरोवमट्ठितीओ नेरइओ उववन्नो। अयमासां भावार्थः, अक्षरार्थस्त्वभिधीयते–राजगृहे नगरे विश्वनन्दिनाम राजा अभूत्, विशाखभूतिश्च तस्य युवराजः, तस्य धारिणीदेव्या विश्वभूतिनाम पुत्र आसीत्, विशाखनन्दिश्चेतरस्य, राज्ञ इत्यर्थः, तत्रेत्थमधिकृतो मरीचिजीवः 'रायगिह विस्सभूइत्ति' राजगृहे नगरे विश्वभूतिर्नाम विशाखभूतिसुतः क्षत्रियोऽभवत्, तत्र च वर्षकोटी आयुष्कमासीत्, तस्मिंश्च भवे वर्षसहस्रं दीक्षा–प्रव्रज्या कृता, सम्भूतयतेः पार्श्वे ॥ तत्रैव—

गुत्तासिओ महुराए सनिआणो मासिएण भत्तेण । महसुक्के उववन्नो तओ चुओ पोअणपुरम्मि ॥ ४४६ ॥
पुत्तो पयावइस्सा मिगावई[दे॒वि]कुच्छिसंभवो भयवं । नामेण तिविठ्ठुत्ति आई आसी दसाराणं ॥ ४४७ ॥
गाहागमनिका—पारणकप्रविष्टो गोत्रासितो मथुरायां निदानं चकार, मृत्वा च सनिदानोऽनालोचिताप्रतिक्रान्तः अन्ते मासिकेन भक्तेन महाशुक्रे कल्पे उपपन्न उत्कृष्टस्थितिर्देव इति, ततो महाशुक्रात् च्युतः, पोत्तनपुरे नगरे पुत्रः प्रजापते राज्ञः मृगावतीदेवीकुक्षिसम्भूतो, नाम्ना त्रिपृष्ठः, आदिः—प्रथम आसीत् दसाराणां ॥ तत्र वासुदेवत्वं च चतुरशीति-( ग्रंथाग्रं० ९६०० ) वर्षशतसहस्राणि पालयित्वा अधः सप्तमनरकपृथिव्यामप्रतिष्ठाने नरके त्रयस्त्रिंशत्सागरोपमस्थितिर्नारकः सञ्जात इति, अमुमेवार्थं प्रतिपादयन्नाह—
चुलसीइमप्पइट्ठे सीहो नरएसु तिरिअमणुएसु । पियमित्तचक्कवट्टी मुया विदेहाइ चुलसीइ ॥ ४४८ ॥
गाहागमनिका—चतुरशीतिवर्षशतसहस्राणि वासुदेवभवे खल्वायुष्कमासीत् , तमनुभूय अप्रतिष्ठाने नरके समुत्पन्नः, तस्मादप्युद्वृत्य सिंहो बभूव, मृत्वा च पुनरपि नरक एवोत्पन्न इति, 'तिरियमणुएसु'त्ति पुनः कतिचिद्भवग्रहणानि तिर्यङ्मनुष्येषूत्पद्य 'पियमित्तचक्कवट्टी मुया विदेहाए चुलसीति'त्ति अपरविदेहे मूकायां राजधान्यां धनञ्जयनृपतेर्धारणिदेव्याः प्रियमित्राभिधानश्चक्रवर्त्ती समुत्पन्नः, तत्र चतुरशीतिपूर्वसहस्राण्यायुष्कमासीदिति गाथार्थः ॥
पुत्तो धणंजयस्सा पुट्टिल परियाउ कोडि सव्वट्ठे । नंदण छत्तग्गाए पणवीसाउं सयसहस्सा ॥ ४४९ ॥
तत्रासौ प्रियमित्रः पुत्रो धनञ्जयस्य धारणिदेव्याश्च भूत्वा चक्रवर्त्तिभोगान् भुक्त्वा कथञ्चित् सञ्जातसंवेगः सन् पोट्टिल'इति प्रौष्ठिलाचार्यसमीपे प्रव्रजितः, 'परियाओ कोडि सव्वट्ठे'त्ति प्रव्रज्यापर्यायो वर्षकोटिर्बभूव-मृत्वा महा-

शुक्रे कल्पे सर्वार्थविमाने सप्तदशसागरोपमस्थितिर्देवोऽभवत्, 'णंदण छत्तग्गाए पणवीसाउं सयसहस्से'ति सर्वार्थसिद्धाच्च्युत्वा छत्रायां नगर्यां जितशत्रुनृपतेर्भद्रादेव्या नन्दनो नामकुमार उत्पन्न इति, पञ्चविंशतिवर्षशतसहस्राण्यायुष्कमासीदिति गाथार्थः ॥ तत्र च बाल एव राज्यं चकार, चतुर्विंशतिवर्षशतसहस्राणि राज्यं कृत्वा ततः—

पव्वज्ज पुट्टिले सयसहस्स सव्वत्थ मासभत्तेणं । पुप्फुत्तरे उववन्नो तओ चुओ माहणकुलम्मि ॥ ४५० ॥

गाहागमनिका–राज्यं विहाय प्रव्रज्यां कृतवान् 'पोट्टिल'त्ति प्रोष्ठिलाचार्यान्तिके, 'सयसहस्स'त्ति वर्षशतसहस्रं यावदिति, कथं ?– 'सर्वत्र मासभक्तेने'ति अनवरतमासोपवासेनेति, अस्मिन् भवे विंशतिभिः कारणैस्तीर्थकरनामगोत्रं कर्म्म निकाचयित्वा मासिकया सँलेखनयाऽऽत्मानं क्षपयित्वा षष्टिं भक्तानि विहाय आलोचितप्रतिक्रान्तो मृत्वा 'पुप्फुत्तरे उववन्नो' त्ति प्राणतकल्पेषु पुष्पोत्तरावतंसके विंशतिसागरोपमस्थितिर्देव उत्पन्न इति, 'ततो चुतो माहणकुलंमि'त्ति ततः—पुष्पोत्तरात् च्युतो ब्राह्मणकुण्डग्रामे नगरे सोमिलस्य ब्राह्मणस्य देवानन्दायाः पत्न्याः कुक्षौ समुत्पन्न इति गाथार्थः ॥

कानि पुनस्तानि विंशतिकारणानि यैस्तीर्थकरनामगोत्रं कर्म्म तेनोपनिबद्धमित्यत आह—

अरिहंता० ॥ ४५१ ॥ दंसण० ॥ ४५२ ॥ अप्पुव्व० ॥ ४५३ ॥ पढम० ॥ ४२४ ॥ तंच० ॥४५५॥ नियमा० ॥४५६॥

एता ऋषभदेवाधिकारे व्याख्यातत्वान्न विव्रियन्ते ॥

माहणकुंडग्गामे कोडालसगुत्तमाहणो अत्थि । तस्स घरे उववन्नो देवाणंदाइ कुच्छिंसि ॥ ४५७ ॥

अस्या व्याख्या–पुष्पोत्तराच्च्युतो ब्राह्मणकुण्डग्रामे नगरे कोडालसगोत्रो ब्राह्मणः सोमिलाभिधानोऽस्ति, तस्य गृहे उत्पन्नः देवानन्दायाः कुक्षाविति गाथार्थः ॥

ॐ नमो वीतरागाय.

साम्प्रतं वर्द्धमानस्वामिवक्तव्यतानिवद्धां द्वारगाथामाह—

सुमिणऽवहार १ मभिग्गह २ जम्मण ३ मभिसेय ४ वुड्ढि ५ सरणं ६ च ।
भेसण ७ विवाह ८ ऽवच्चे ९ दाणे १० संवोह ११ निक्खमणे १२ ॥ ४५८ ॥

प्रथमं स्वप्ना वक्तव्याः, यान् तीर्थकरजनन्यः पश्यन्ति, यथा च देवानन्दया प्रविशन्तो निष्क्रामन्तश्च दृष्टाः, त्रिशलया च प्रविशन्त इति, 'अवहार'त्ति अपहरणमपहारः स वक्तव्यो, यथा भगवान् अपहृत इति, 'अभिग्गहो'त्ति अभिग्रहो वक्तव्यो, यथा भगवता गर्भस्थेन गृहीतः, 'जम्मण'त्ति जन्मविधिर्वक्तव्यः, 'अभिसेय'त्ति अभिषेको वाच्यः, यथा विवुधनाथाः कुर्वन्ति, 'वुड्ढि'त्ति वृद्धिर्वक्तव्या भगवतो, यथाऽसौ वृद्धिं जगाम, 'सरणं'ति जातिस्मरणं वक्तव्यं, 'भेसण'त्ति यथा देवेन भेषितस्तथा वक्तव्यं, तथा विवाहविधिर्वाच्यः, 'अवच्च'त्ति अपत्यं वक्तव्यं, 'दाण'त्ति निष्क्रमणकाले दानं वक्तव्यं, 'संवोह'त्ति सम्बोधनविधिर्वक्तव्यो, यथा लोकान्तिकैः सम्बोधितः, 'णिक्खमणे'त्ति निष्क्रमणे च यो विधिरसौ वक्तव्यः ॥ अवयवार्थं तु भाष्यकार एव वक्ष्यति, तत्र स्वप्नद्वारमभिधीयते—"भयवं तिनाणोवगए चुए, सो चइस्सामित्ति जाणइ, चयमाणे न जाणइ, समयस्स छद्मस्थोपयोगाविषयत्वात्, चुएमित्ति जाणइ, जंरयणिं देवाणंदाए कुच्छिंसि गब्भत्ताए उववन्ने तं रयणिं सा सयणिज्जंसि सुत्तजागरा इमे चोद्दस महासुमिणे पासइ, तथा चाह—

गय १ वसह २ सीह ३ अभिसेय ४ दाम ५ ससि ६ दिणयरं ७ झयं ८ कुंभं ९।
पउमसर १० सागर ११ विमाणभवण १२ रयणुच्चय १३ सिहिं १४ च ४६ ॥ भा०

गजं वृषभं सिंहं अभिषेकं, स चाभिषेकः श्रियः परिगृह्यते, दाम–पुष्पदाम रत्नविचित्रं, शशिनं दिनकरं ध्वजं कुम्भं पद्मसरः, पद्मभूषितं सरः पद्मसर इति समासः, सागरं च, तथा विमानं च तद्भवनं च विमानभवनं, वैमानिक–देवनिवास इत्यर्थः, अथवा सर्वतीर्थकरविषया सामान्येयं गाथा, ततोऽयमर्थः–वैमानिकप्रच्युतमातरो विमानं पश्यन्ति, अधोलोकोद्वृत्तमातरो भवनं, न तूभयमिति ॥

एएं चोद्दस सुमिणे पासइ सा माहणी सुहपसुत्ता । जंरयणिं उववन्नो कुच्छिंसि महायसो वीरो ॥४७॥ भा०

एतान् चतुर्दश महास्वप्नान् पश्यति सा ब्राह्मणी सुखप्रसुप्ता यस्यां रजन्यामुपपन्नः कुक्षौ महायशा वीरः, पश्यतीति वर्त्तमाननिर्देशः पूर्ववत्, पाठान्तरं वा 'एए चोद्दस सुमिणे पेच्छिय सा माहणी', ततश्च दृष्टवतीति गाथार्थः ॥ तए णं सा पासित्ता पडिबुद्धा हट्ठतुट्ठा उसभदत्तस्स माहणस्स कहेइ, से य एवं वयासी–उराला णं तुमे देवाणुप्पिए! सुमिणा दिट्ठा, तं अत्थलाभो देवाणुप्पिए! भोगलाभो देवाणुप्पिए! पुत्तलाभो देवाणुप्पिए! सोक्खलाभो देवाणुप्पिए!, एवं खलु तुमं देवाणुप्पिए! नवण्हं मासाणं अद्धट्ठमाणं राइंदियाणं वइक्कंताणं सुकुमालपाणिपायं अहीणपडिपुण्णपंचेंदियसरीरं सवलक्खणोववेयं दारयं पयाहिसि, से य उम्मुक्कबालभावे सवविज्जाठाणपरिनिट्ठिए भविस्सइ, तए णं सा देवानंदा एयमट्ठं सोच्चा हट्ठतुट्ठा एवं वयासी–एवमेवं देवाणुप्पिया! अवितहमेयं देवाणुप्पिया! जहेयं तुब्भे वयह इति । गतं स्वप्नद्वारम्,

अधुनाऽपहारद्वारमभिधीयते—'तेणं कालेणं तेणं समएणं सक्के नामं देविंदे देवराया वज्जपाणी सोहम्मे कप्पे सोहम्मवडिंसए विमाणे सभाए सुहम्माए सक्कंसि सीहासणंसि सुहनिसन्ने दिव्वाइं भोगाइं भुंजमाणे इमं जंबुद्दीवं दीवं कहंचि आभोएइ, तत्थ समणं भयवं महावीरं देवाणंदाए कुच्छिंसि गब्भत्ताए वक्कंतं पासित्ता हट्ठतुट्ठे हरिसवसविसप्पमाणहियए सीहासणाओ अब्भुट्ठेइ, अब्भुट्ठेत्ता पायपीढातो पच्चोरुहइ, पच्चोरुहित्ता नाणामणिरयणमंडियातो पाउयातो ओमुयइ, ओमुइत्ता एगसाडियं उत्तरासंगं करेइ, करित्ता तित्थयराभिमुहे सत्तट्ठ पयाइं अणुगच्छइ, अणुगच्छित्ता वामं जाणुं अंचेइ, उत्पाटयतीत्यर्थः, दाहिणं जाणुं धरणितलंसि निहट्टु तिक्खुत्तो मुद्धाणं धरणितलंसि निवाडेइ, निवाडित्ता पच्चुन्नमइ, ततो करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी—नमोत्थु णं अरहंताणं भगवंताणं आइगराणं जाव सिद्धिगइनामधेयं ठाणं संपत्ताणं, नमोत्थु णं समणस्स भगवतो महावीरस्स (आइगरस्स) तित्थगरस्स जाव सिद्धिगइनामधेयं ठाणं संपाविउकामस्स, वंदामि णं भगवंतं तत्थ गयं इहगतेत्तिकट्टु वंदइ नमंसइ, वंदित्ता नमंसित्ता सीहासणवरंसि पुरत्थाभिमुहे संनिसण्णे। तए णं सक्कस्स देविंदस्स देवरन्नो अयमेयारूवे संकप्पे समुप्पण्णे—उप्पण्णे खलु समणे भयवं महावीरे देवाणंदाए माहणीए कुच्छिंसि, तन्न एयं भूयं वा भवइ वा भविस्सइ वा जण्णं अरहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा अंतकुलेसु वा पंतकुलेसु वा तुच्छकुलेसु वा दरिद्दकुलेसु वा भिक्खागकुलेसु वा आयाइंसु वा आयायंति वा आयाइस्संति वा, एवं खलु अरहंता वा जाव वासुदेवा उग्गकुलेसु वा भोगकुलेसु वा रायन्नकुलेसु वा इक्खागुकुलेसु वा अन्नयरेसु वा तहप्पगारेसु विसुद्धजाइएसु कुलेसु महंतं रज्जसिरिं कारेमाणेसु गब्भं वक्कमिंसु वा वक्कमंति वा वक्कमिस्संति वा,

अत्थि पुण एस भावे लोगच्छेरयभूए अणंताहिं उस्सप्पिणिओसप्पिणीहिं वइक्कंताहिं समुप्पज्जइ, जहा नीयागोयस्स कम्मस्स उदएणं अरहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा अंतकुलेसु जाव भिक्खागकुलेसु वा आयाइंसु वा आयायंति वा आयाइस्संति वा, नो चेव णं जोणीतो निक्खमिंसु वा निक्खमंति वा निक्खमिस्संति वा, तं जीयमेयं तीतपच्चुप्पन्नअणागयाणं सक्काणं देविंदाणं देवराईणं अरहंते भगवंते तहप्पगारेहिंतो अंताइकुलेहिंतो तहप्पगारेसु उग्गकुलेसु जाव विसुद्धजाइएसु कुलेसु साहरावेत्तए, तं सेयं खलु समणं भयवं महावीरं चरमतित्थयरं माहणकुंडग्गामातो नगरातो खत्तियकुंडग्गामे नयरे सिद्धत्थस्स खत्तियस्स कासवगोत्तस्स भारियाए तिसलाए खत्तियाणीए वासिट्ठगोत्ताए कुच्छिंसि गब्भत्ताए साहरावेत्तए, जेऽविय णं से तिसलाए गब्भे तं देवानंदाए कुच्छिंसि, एवं संपेहित्ता हरिणेगमेसिं पायत्ताणियाहिवइं देवं सद्दावेइ, सद्दावित्ता एवं वयासी—एवं खलु समणं भयवं महावीरं देवानंदाकुच्छीतो तिसलाए कुच्छिंसि साहरह, तए णं से हरिणेगमेसी पायत्ताणीयाहिवंइ एयमट्ठं हट्ठतुट्ठे विणएणं सम्मं पडिसुणित्ता उत्तरपुरच्छिमं दिसिभागमवक्कम्म एक्कंपि दोच्चंपि वेउव्वियसमुग्घाएण समोहणित्ता उत्तरवेउव्वियं रूवं विउव्वइ, विउव्वित्ता तुरियाए गईए जेणेव देवाणंदा तेणेव उवागच्छइ, उवागच्छित्ता आलोए भगवतो महावीरस्स पणामं करेइ, करित्ता अणुजाणउ मं भयवंतिकट्टु देवाणंदाए सपरियणाए ओसोयणिं दलेइ २ त्ता दिव्वेण पभावेणं करयलपुडेहिं अव्वावाहं गेण्हइ गेण्हेत्ता वासीईए राइंदिएसु वइक्कंतेसु तेसीइमे राइंदिए वट्टमाणे जे से वासाणं तच्चे मासे पंचमे पक्खे आसोयबहुलतेरसी तंमि देवाणंदाए माहणीए कुच्छीतो तिसलाए खत्तियाणीए कुच्छिंसि अव्वावाहं साहरइ, जे से तिसलाए गब्भे तं देवाणंदाए कुच्छिंसि साहरइ, साहरइत्ता सट्ठाणे गतो

सक्कस्स कहेइ। भयवंपि तिनाणोवगए साहरिज्जिसामीति जाणइ, साहरिज्जमाणे जाणइ, संहरणस्यानेकसामायिकतया छद्मस्थोपयोगविषयत्वात्, साहरिएमित्ति जाणइ, जंरयणिं च णं भयवं देवाणंदाए कुच्छीतो तिसलाए कुच्छिंसि साहरिए तंरयणिं सा देवाणंदा ते सुमिणे तिसलाए हडे पासित्ताणं पडिवुद्धा, तिसलावि य णं मणोरमंसि सयणिज्जंसि सुत्तजागरा ते चोद्दस महासुमिणे पासित्ताणं पडिवुद्धा, ततो सिद्धत्थस्स साहइ, सोऽवि साभाविएणं वुद्धिपगरिसेणं तेसिं सुमिणाणं अत्थं परिभावइत्ता एवं वयासी–उराला णं तुमए देवाणुप्पिए! सुमिणा दिट्ठा, तं अम्हं कुलकरं कित्तिकरं सुकुमालपाणि-पायं अहीणपडिपुन्नपंचिंदियसरीरं दारगं पयाहिसि, ततो तिसला एवं वुत्ता समाणा हट्ठतुट्ठा तं वयणं सम्मं पडिसुणइ, तए णं सिद्धत्थे खत्तिए पच्चूसकालसमए सुमिणपाढए सद्दावित्ता आपुच्छइत्ति, तेवि सुमिणसत्थत्थं परिभाविऊण भणंति–

चाउरंतचक्कवट्टी राया वा भविस्सइ, जिणे वा तेलोक्कनायए धम्मवरचक्कवट्टी वा ॥ अमुमेवार्थं सङ्ग्रहाह—

अह दिवसे वासीइ वसइ तहिं माहणीइ कुच्छिंसि। चिंतेइ सुहम्मवई साहरिउं जे जिणं कालो ॥ ४८ ॥ भा०

अथ दिवसान् द्व्यशीतिं वसति तस्यां ब्राह्मण्याः कुक्षौ, 'अथ' अनन्तरमेतावत्सु दिवसेष्वतिक्रान्तेषु चिन्तयति सौधर्म्मपतिः संहर्त्तुं, जे इति निपातः पादपूरणार्थः, तथा चाह वररुचिः स्वप्राकृतलक्षणे–'इजेराः पादपूरणे' इति, जिनं कालो वर्त्तते ॥ किमिति संह्रियते इत्याह—

अरहंत चक्कवट्टी वलदेवा चेव वासुदेवा य। एए उत्तिमपुरिसा न हु तुच्छकुलेसु जायन्ति ॥ ४९ ॥ भा०

सुगमा। नवरं तुच्छकुलेषु–असारकुलेषु ॥ पुनः केषु कुलेषु जायन्त इत्याह—

उग्गकुलभोगखत्तियकुलेसु इक्खागनायकोरवे । हरिवंसे य विसाले जायंति तहिं पुरिससीहा ॥ ५० ॥ भा०

उग्रकुलेषु भोगकुलेषु क्षत्रियकुलेषु इक्ष्वाकुकुलेषु ज्ञातकुलेषु कौरव्यकुलेषु हरिवंशे च विशाले आयान्ति—आगच्छन्ति उत्पद्यन्ते तत्र—उग्रकुलादौ पुरुषसिंहाः—तीर्थंकरादयः ॥ यस्मादेवं तस्माद्भुवनगुरुभक्त्या चोदितो देवराजो हरिणेगमेषिमभिहितवान्—एष भरतक्षेत्रचरमतीर्थंकृत् प्रागुपात्तकर्मशेषपरिणतिवशात्तुच्छकुले जातस्तदयमितः संहृत्य क्षत्रिये स्थाप्यतामिति, स हि तदादेशात्तथैव चक्रे ॥ अमुमेवार्थं भाष्यकार एवाह—

अह भणइ णेगमेसिं देविंदो एस इत्थ तित्थयरो । लोगुत्तमो महप्पा उववन्नो माहणकुलम्मि ॥ ५१ ॥ भा०

अथानन्तरं भणति 'णेगमेसिं' हरिणेगमेषिं देवेन्द्रः—'एषः' भगवान् 'अत्र' ब्राह्मणकुले लोकोत्तमो महात्मा उत्पन्नः ॥ इदं चासाधु, ततश्चेदं कुरु—

खत्तियकुंडग्गामे सिद्धत्थो नाम खत्तिओ अत्थि । सिद्धत्थभारियाए साहर तिसलाए कुच्छिंसि ॥ ५२ ॥ भा०

क्षत्रियकुण्डग्रामे सिद्धार्थो नाम क्षत्रियोऽस्ति, तत्र सिद्धार्थभार्यायाः संहर त्रिशलायाः कुक्षौ ॥

बाढंति भाणिऊणं वासारत्तस्स पंचमे पक्खे । साहरइ पुव्वरत्ते हत्थुत्तरतेरसीदिवसे ॥ ५३ ॥ भा०

स हरिणैगमैषिः वाढमित्यभिधाय—अत्यर्थं करोम्यादेशं, शिरसि स्वाम्यादेशः इति उक्त्वा, वर्षारात्रस्य पञ्चमे पक्षे मासद्वये अतिक्रान्ते (संहरति) अश्वयुग्बहुलत्रयोदश्यां पूर्वरात्रे—प्रथमप्रहरद्वयान्ते हस्तोत्तरायाम्—उत्तरायामुत्तरफाल्गुनीनक्षत्रे त्रयोदशीदिवसे ।

गय सीह वसह अभिसेय दाम ससि दिणयरं झयं कुंभं । पउमसर सागर विमाणभवण रयणुच्चय सिहिं च ॥५४॥
एए चोद्दस सुमिणे पासइ सा माहणी पडिनियत्ते । जंरयणिं अवहरितो कुच्छीउ महायसो वीरो ॥५५॥भा०॥

इदं गाथाद्वयं पूर्ववत्, नवरं इदं नानात्वं–पश्यति सा ब्राह्मणी प्रतिनिवृत्तान् यस्यां रजन्यामपहृतः कुक्षितो महायशा वीरः ॥

गयसीहवसहअभिसेयदामससिदिणयरं झयं कुंभं । पउमसर सागर विमाणभवण रयणुच्चय सिहिं च ॥५६॥
एए चोद्दस सुमिणे पासइ सा तिसलया सुहपसुत्ता । जंरयणिं साहरिओ कुच्छिंसि महायसो वीरो ॥ ५७ ॥

गाथाद्वयमपि सुगमं, गतमपहारद्वारम्, अधुनाऽभिग्रहद्वारम्–ततो णं सा तिसला ण्हाया कयकोउयमंगलोवयारा तं गब्भं नातिउण्हेहिं नाइसीएहिं नातितित्तेहिं नातिकडुएहिं नातिकसाएहिं नातिअंबिलेहिं नाइमहुरेहिं जं तस्स गब्भस्स हियं पत्थं तं देसे काले य आहारमाहारेमाणी विवित्तमउएसु सयणासणेसु सुहंसुहेण चिट्ठइ, जंरयणिं भयवं तिसलाए गब्भे साहरिते तं रयणिं सक्कवयणेणं तिरियजंभगा देवा विविहाइं मणिनिहाणाइं सिद्धत्थरायभवणंसि साहरंति, तं च नायकुलं हिरण्णेणं सुवण्णेणं धन्नेणं रज्जेणं बलेणं वाहणेणं कोट्ठागारेणं पुरेणं अंतेउरेणं जणवयपुत्तेहिं पसूहिं सावइज्जेण य अतीव २ अभिवड्ढइ, सिद्धत्थरायस्सविय सामंतरायाणो सव्वे वसमागया, तते णं भगवतो अम्मापिऊणमयमेयारूवे संकप्पे जाते–जप्पभिइं च णं अम्हं एस दारए कुच्छिंसि समागए तप्पभिइं च णं अम्हे हिरण्णेण वड्ढामो जाव सावइज्जेण वड्ढामो, तं जया णं अम्हं एस दारए जाते भविस्सइ तया एयस्स एयाणुरूवं गोण्णं नामधेज्जं करिस्सामो वद्धमाण इति, एवं ते मणोरहसहस्साइं

पकरेंति । भयवंपि माऊए अणुकंपाए निच्चलं अच्छइ, तए णं सा तिसला किं मे गब्भे हडे ? किं मे गब्भे मए ? जं एस मे गब्भे पुव्विं एजइ इयाणिं नो एजइत्तिकट्टु ओहयमणसंकप्पा चिंतासोगसागरसंपविट्ठा करयलपल्हत्थियमुही अट्टज्झाणोवगया भूमिगयदिट्ठीया झियाइ, तंपि य सिद्धत्थरायभवणं उवरयमुइंगतंतीतलतालनाडइज्जं जायं, ततो भगवया चिंतितं–किं मुइंगादिसद्दो न सुम्मइ ?, ततो ओहिणा नायवुत्तंतेण अंगुट्ठेगदेसो चालिओ, ततो सा तिसला हट्ठतुट्ठा जाया, सिद्धत्थरायभवणंपि पमुइयपक्कीलियं विहरइ, ततो भयवं चिंतेइ–ममं गब्भत्थेऽवि माउपितूणमेवं पडिबंधो तो जइ उम्मुक्कबालभावो देवदाणवपरियरिओ पव्वज्जं गिण्हिस्सामि ततो महंतमट्टज्झाणमेयासिं भविस्सइत्ति चिंतिऊण माउपिऊणमणुकंपाए सत्तमे मासे गब्भत्थो चेव अभिग्गहं गेण्हइ–'जाव एयाणि जीवंति ताव नाहं समणो भवामि' ॥ एतदेवाह—

**तिहिं नाणेहिं समग्गो देवीतिसलाए सो य कुच्छिसि । अह वसइ सन्निगब्भो छम्मासे अद्धमासं च ॥ ५८ ॥**
**अह सत्तमम्मि मासे गब्भत्थो चेवऽभिग्गहं गेण्हे । नाहं समणो होहं अम्मापियरंमि जीवंते ॥ ५९ ॥ भा० ॥**

'अथ' अपहारानन्तरं वसति, संज्ञी चासौ गर्भश्च संज्ञिगर्भः, क्व ?–देव्यास्त्रिशलायाः, स च कुक्षौ, आह–सर्वोऽपि गर्भस्थः संज्ञ्येव भवति, ततो विशेषणमिदमनर्थकं, न, दृष्टिवादोपदेशेन संज्ञित्वविशेषणात्, स च ज्ञानद्वयवानपि भवति तत आह–त्रिभिर्ज्ञानैः–मतिश्रुतावधिरूपैः समग्रः, कियन्तं कालं यावद्वसतीत्यत आह–षण्मासान् अर्द्धमासं च । अथ गर्भादारभ्य सप्तमे मासे तयोर्मातापित्रोर्गर्भप्रयत्नकरणेनात्यन्तं स्नेहमवबुध्य अहो ममोपर्यतीवानयोः स्नेहो, यद्यहमनयोर्जीवतोः प्रव्रज्यां गृह्णामि नूनं न भवत एवैतावित्यतो गर्भस्थ एवाभिग्रहं गृह्णाति, ज्ञानत्रयोपेतत्वात्, किंविशिष्टमित्याह–

उपोद्घात-निर्युक्तौ श्रीवीर-चरिते

॥२५६॥

नाहं श्रमणो भविष्यामि मातापित्रोर्जीवतोरिति ॥ गतमभिग्रहद्वारं, साम्प्रतं जन्मद्वारम्—तेणं कालेणं तेणं समएणं नवण्हं मासाणं अद्धट्ठमाणं राइंदियाणं वइक्कंताणं चेत्तसुद्धतेरसीदिवसे निप्फण्णसस्साए मेइणीए पमुइयपक्कीलिएसु जणवएसु सोमासु विसुद्धासु दिसासु अणुकूलंसि मारुयंसि पवायंसि अड्ढरत्तकालसमए हत्थुत्तराहिं नक्खत्तेण आरोगा अरोगं दारयं पसूया, तंरयणिं च णं बहूहिं देवेहिं देवीहिं ओवयमाणेहिं उप्पयमाणेहिं एगालोए देवुज्जोए जाए, बहवे य वेसमणवयण-चोइया तिरियजंभगा देवा सिद्धत्थरायभवणंसि हिरण्णवासं सुवण्णवासं रयणवासं आभरणवासं पत्तवासं पुप्फवासं गंधवासं चुण्णवासं वासंति ॥ अमुमेवार्थमाह—

दोण्हं वरमहिलाणं गब्भे वसिऊण गब्भसुकुमालो । नवमासे पडिपुन्ने सत्त य दिवसे समइरेगे ॥६०॥ भा० ॥

द्वयोर्वरमहिलयोर्गर्भे उषित्वा गर्भे सुकुमारो गब्भसुकुमारः, प्रायोऽप्राप्तदुःख इत्यर्थः, कियन्तं कालं यावदित्याह—नव मासान् परिपूर्णान् सप्त दिवसान् सातिरेकान्—समधिकान् ॥

अह चेत्तसुद्धपक्खस्स तेरसी पुव्वरत्तकालम्मि । हत्थुत्तराहिं जातो कुंडग्गामे महावीरो ॥ ६१ ॥ भा० ॥

अथानन्तरं चैत्रस्य शुद्धपक्षस्तस्य त्रयोदश्यां पूर्वरात्रकाले, प्रथमप्रहरद्वयान्ते इत्यर्थः, हस्तोत्तरासु जातः, हस्त उत्तरा यासां ता हस्तोत्तराः, उत्तरफाल्गुन्य इत्यर्थः, कुण्डग्रामे महावीरः जातः, जातकर्मादि दिक्कुमार्यादिनिर्वर्त्तितं पूर्ववदव-सेयम् ॥ तथापि किञ्चित्प्रतिपादयन्नाह—

आभरणरयणवासं वुट्ठं तित्थंकरंमि जायंमि । सक्कोऽवि देवराया उवागतो आगया निहओ ॥ ६२ ॥ भा० ॥

गृहस्थाव-स्थानाभि-ग्रहः

॥२५६॥

आभरणानि—कटककेयूरादीनि रत्नानि—इन्द्रनीलादीनि तद्वर्षं वृष्टं तीर्थकरे जाते, शक्रश्च देवराजस्तत्रैवोपागतः, तथा आगता महापद्मादयो निधयः ॥

तुट्ठातो देवीतो देवा आणंदिया सपरिसागा। भयवंमि वद्धमाणे तेलुक्कसुहावहे जाए ॥ ६३ ॥ भा० ॥

तुष्टा देव्यो देवा आनन्दिताः, सह पर्षदो येर्येषां वा ते सपर्षत्काः, भगवति वर्द्धमाने त्रैलोक्यसुखावहे जाते सति ॥ गतं जन्मद्वारम्, अधुनाऽभिषेकद्वारं, तच्च ऋषभस्वामिवद्भावनीयं, तथापि किञ्चित्प्रतिपादयति,

भवणवइवाणमंतरजोइसवासी विमाणवासी य। सव्विड्ढीए सपरिसा चउव्विहा आगया देवा ॥ ६४ ॥ भा० ॥

भवनपतयश्च व्यन्तराश्च ज्योतिर्वासिनश्चेति द्वन्द्वः, तथा विमानवासिनश्च च सर्वर्द्ध्या सपर्षदश्चागताश्चतुर्विधा देवाः।

देवेहिं संपरिवुडो देविंदो गिण्हिऊण तित्थयरं। नेऊण मंदरगिरिं अभिसेअं तत्थ से कासी ॥ ६५ ॥ भा० ॥

देवैः संपरिवृतो देवेन्द्रो गृहीत्वा तीर्थकरं नीत्वा मन्दरगिरिं तत्राभिषेकं 'से' तस्य भगवतोऽकार्षीत् ॥

काऊण य अभिसेयं देविंदो देवदाणवेहिं समं। जणणीऍ अप्पइत्ता जम्मणमहिमं च कासीय ॥६६॥ भा० ॥

देवेन्द्रो देवदानवैः सार्द्धं, देवग्रहणाज्ज्योतिष्कवैमानिकपरिग्रहः, दानवग्रहणाद् भवनपतिव्यन्तरग्रहणम्, अभिषेकं कृत्वा ततो जनन्याः समर्प्य जन्ममहिमां नन्दीश्वरे स्वर्गे च कृतवान् ॥ साम्प्रतं यदिन्द्रादयो भुवननाथेभ्यो भक्त्या प्रयच्छन्ति तत्प्रदर्शयन्नाह—

खोमं कुंडलजुयलं सिरिदामं चेव देइ सक्को से। मणिकणगरयणवासं उवच्छुभे जंभगा देवा ॥ ६७ ॥ भा० ॥

क्षौमं–देववस्त्रं कुण्डलयुगलं–कर्णाभरणं श्रीदाम अनेकरत्नखचितं दर्शनसुभगं ददाति शक्रः 'से' तस्मै भगवते, मणयः–चन्द्रकान्ताद्याः कनकं प्रतीतं रत्नानि–कर्केतनादीनि तद्वर्षमुपक्षिपन्ति जृम्भकाः व्यन्तरविशेषा देवाः ॥ एतदेवाह–
वेसमणवयणसंचोइया उ ते तिरियजंभगा देवा। कोडिग्गसो हिरण्णं रयणाणि य तत्थ उवणेंति ॥६८॥ भा०॥
वैश्रमणवचनसञ्चोदितास्ते तिर्यग्लोके जृम्भकाः तिर्यग्जृम्भका देवाः कोव्यग्रशः–कोटीपरिमाणेन हिरण्यमघटितं (स्वर्णं) रत्नानि–इन्द्रनीलादीनि तत्रोपनयन्ति ॥ सिद्धत्थोऽवि राया भयवंमि तिहुयणनाहे जाते कोडुंबियपुरिसे सद्दाविता दसदेवसियं उस्सुक्कं उक्करं अदेज्जं अमेज्जं अभडप्पवेसं सवत्थ सियपडागातिपडागं नाडगसहस्ससंकुलं महइमहोरसवं निवत्तावेइ, तते णं अम्मापियरो दारगस्स तइयदिवसे चंदसूरदंसणं करेंति, छट्ठदिवसे जागरियं करेंति, एक्कारसमे दिवसे अइक्कंते निवत्ते असुइजायकम्मकरणे संपत्ते बारसमे दिवसे विउलं असणं पाणं खाइमं साइमं उवक्खडाविता मित्तनाइसयणपरिजणं नायए य खत्तिए य भोयणवेलाए आमंतित्ता भोयणमंडवंसि तेहिं सद्धिं सुहासणवरगया विउलं असणं जाव साइमं परिभुंजेमाणा विहरंति, तए णं भुत्तुत्तरकालं ते विउलेण वत्थगंधमल्लालंकारेणं सक्कारेंति संमाणेंति सक्कारित्ता सम्माणित्ता एवं वयासी–पुव्विंपिय णं देवाणुप्पिया! अम्हं एयारूवे संकप्पे समुप्पन्ने–जप्पभिइं च णं अम्हं एस दारए कुच्छिंसि समुप्पन्ने तप्पभिइं च णं अम्हे हिरण्णेणं वड्ढामो जाव एयस्स एयाणुरूवं गोण्णं नामधेज्जं करेस्सामो वद्धमाण इति, तं होउ णं अज्ज मणोहरसंपत्ती कुमारे नामेणं वद्धमाण इति नामधेज्जं करेंति। गतमभिषेकद्वारम्, अधुना वृद्धिद्वारं प्रतिपादयति—

अह वड्ढइ सो भयवं दिवभोगचुओ अणुवमसिरीओ । दासीदासपरिवुडो परिकिण्णो पीढमद्देहिं ॥६९॥

अथ वर्द्धते भगवान् देवलोकाच्च्युतः अनुपमश्रीको दासीदासपरिवृतः, तथा परिकीर्णो व्याप्तः, पीठं मर्दयित्वा ये प्रत्यासन्ना उपविशन्ति ते पीठमर्दा–महानृपतिसुतास्तैः ॥

असियसिरओ सुनयणो बिंबोट्ठो धवलदंतपंतीओ । वरपउमगब्भगोरो फुल्लुप्पलगंधनीसासो ॥ ७० ॥ भा० ॥

इयं गाथा ऋषभदेवाधिकार इव व्याख्येया ॥ गतं वृद्धिद्वारम्, सम्प्रति जातिस्मरणद्वारमाह—

जाईसरो उ भयवं अप्परिवडिएहिं तिहि उ नाणेहिं । कंतीए बुद्धीए य अब्भहिओ तेहिं मणुएहिं ॥७१॥ भा०

इयमपि गाथा पूर्ववत् । उक्तं जातिस्मरणद्वारम्, अधुना भीषणद्वारम्–तए णं एवं वड्ढमाणे भयवं अट्ठवासे जाते, सया भद्दए विणीए सूरे धीरे महापरक्कमे, तेणं कालेणं तेणं समएणं सक्के देविंदे देवराया ओहिणा भयवंतमालोइय पणमिय भयवतो सत्तगुणुक्कित्तणं करेइ–अहो भयवं बाले अबालभावे अबालपरक्कमे अबुहे बुहसीले महावीरे, न सक्को देवेण वा दाणवेण वा भेसेतुं परक्कमेण वा पराजिणित्तुं छलेण वा छलितुं, तत्थ एगो देवो सक्कस्स एयमट्ठम-सद्दहंतो जेणेव भयवं महावीरे तेणेव उवागतो, भयवं च पमयवणे चेडरूवेहिं समं सुंकलिखेड्डएण अभिरमइ, तत्थ तेसु रुक्खेसु मज्झे जो विवक्खियं रुक्खं पढमं विलग्गइ छिवइ वा सो चेडरूवाणि वहेइ, सो य देवो आगंतूण हेट्ठ-तो रुक्खस्स सामिभेसणट्ठं एगं महं उग्गविसं महाकायं अंजणपुंजनियरप्पगासं वियडफडाडोवकरणदच्छं चंडतिव्वरोसं दिव्वं दिट्ठीविससप्परूवं विउव्वित्ता अच्छइ, सामिणा अमूढेण वामहत्थेण सत्ततले उड्ढमुच्छूढो, ताहे देवो चिंतेइ एत्थ ताव न

छलितो, अह पुणरवि सामी तेंदूसगेण अभिरमइ, सो य देवो चेडरूवं विउव्विऊण सामिणा समं अभिरमइ, तत्थ सामिणा सो जितो, तस्स उवरिं सामी विलग्गो, तते णं से देवे सामिभेसणट्ठं एगं महं तालपिसायरूवं विउवित्ता पवड्ढिउं पयत्तो, सोऽवि सामिणा दट्ठूण अभीएण (तहा) तलप्पहारेण आहतो जहा तत्थेव निबुड्डो, ताहे भीतो देवो चिंतेइ-एत्थवि न तिण्णो छलिउंति, पच्छा सामिं वंदित्ता गतो ॥ अमुमेवार्थमाह—

अह ऊणअट्ठवासस्स भयवतो सुरवराण मज्झंमि । संतगुणुक्कित्तणयं करेइ सक्को सुहम्माए ॥ ७२ ॥ भा० ॥

बालो अवालभावो अबालपरक्कमो महावीरो । नहु सक्को भेसेउं देवेहिं सइंदएहिंपि ॥ ७३ ॥ भा० ॥

अथानन्तरमूनाष्टवर्षस्य भगवतः सुरवराणां मध्ये सन्तश्च ते गुणाश्च सद्गुणास्तेषामुत्कीर्त्तनं-संशब्दनं करोति शक्रो-देवराजः सभायां व्यवस्थितः, किम्भूतमित्याह- बालः अबालभावः-अबालस्वरूपः, भावशब्दः स्वरूपवाची, तथा न बालपराक्रमोऽबालपराक्रमः, पराक्रमः-चेष्टा, वीरः-कषायादिशत्रुजयं प्रति विक्रान्तो, महांश्चासौ वीरश्च महावीरः, 'नहु' नैव शक्यते भीषयितुं देवैः सेन्द्रैरपि ॥

तं वयणं सोऊणं अह एगो सुरो असद्दहंतो य । एइ जिणसंनिगासं तुरियं सो भेसणट्ठाए ॥ ७४ ॥ भा० ॥

तत् सद्गुणोत्कीर्त्तनरूपं शक्रवचनं श्रुत्वाऽथानन्तरमेकः सुरो-देवोऽश्रद्दधान 'एति' आगच्छति 'जिनसकाशं' जिनसमीपं 'तुरियं सो भेसणट्ठाए' त्वरितं-शीघ्रं 'स' विवक्षितो 'भीषणार्थं' भीषणनिमित्तं ॥ स चागत्येदं चक्रे—

सप्पं च तरुवरम्मी १ काउं तिंदूसणएण डिंभं च २। पट्ठीए मुट्ठीए हतो वंदिय वीरं पडिनियत्तो ॥७५॥ भा० ॥

सर्प्प-सर्प्परूपं च 'तरुवरे' तरुवरंस्याधः कृत्वा, तथा तिंदूसकेन-क्रीडाविशेषरूपेण हेतुना तिंदूसकरूपया क्रीडया भगवता सह रमिष्ये इत्येवमर्थं 'डिम्भं' डिम्भरूपं च, कृत्वेत्यनुवर्त्तते, पिशाचरूपेण प्रवर्द्धितुं लग्न इति शेषः, ततः पृष्ठे मुष्ट्या हतो वन्दित्वा वीरं प्रतिनिवृत्तः एषोऽक्षरार्थो, भावार्थः प्रागेवोक्तः ॥ अन्यदा भगवन्तमधिकाष्टवर्षं कलाग्रहणयोग्यं विज्ञाय मातापितरौ लेखाचार्यायोपनीतवन्तौ, तथा चाह—

अह तं अम्मापियरो जाणित्ता अहियअट्ठवासं तु । कयकोउअलंकारं लेहायरियस्स उवणेंति ॥ ७६ ॥ भा० ॥

'अथ' भीषणानन्तरं कियत्कालातिक्रमे भगवन्तमधिकाष्टवर्षं मातापितरौ ज्ञात्वा कृतानि रक्षादीनि कौतुकादीनि अलङ्काराश्च-केयूरादयो यस्य स तथा तं प्रवरहस्तिस्कन्धवरगतमुपरि समुक्ताजालशाल्यदाम्ना छत्रेण ध्रियमाणेन चामराभ्यां वीज्यमानं मित्रज्ञातिपरिजनसमेतं लेखाचार्याय-उपाध्यायाय उपनयतः, पाठान्तरं वा 'उवणिंसु' उपनीतवन्तौ । उपाध्यायस्य महत् सिंहासनं रचितम्, अत्रान्तरे देवराजस्य खल्वासनकम्पो बभूव, अवधिना च प्रयोजनविधिं विज्ञाय अहो खल्वपत्यस्नेहविलसितं भुवनगुरुं प्रति मातापित्रोः येन भगवन्तमपि लेखाचार्यायोपनेतुमभ्युद्यताविति सम्प्रधार्यागत्य च उपाध्यायपरिकल्पिते बृहदासने भगवन्तं निवेश्य शब्दलक्षणं पृष्टवान् ॥ अमुमेवार्थं प्रतिपादयति—

सक्को य तस्समक्खं भयवंतं आसणे निवेसित्ता । सद्दस्स लक्खणं पुच्छे वागरणं अवयवा इंदं ॥७७॥ भा० ॥

शक्रो-देवराजः तत्समक्षं-लेखाचार्यसमक्षं भगवन्तं-तीर्थंकरमासने निवेश्य शब्दस्य लक्षणं पृच्छति, भगवता च व्याकरणमभ्यधायि, व्याक्रियन्ते लौकिकाः सामयिकाश्च शब्दा अनेनेति व्याकरणं-शब्दशास्त्रं, तदवयवाः केचन

उपाध्यायेन गृहीतास्ते च सन्दर्भिताः, तत ऐन्द्रं व्याकरणं सञ्जातं, लोकश्च सर्वोऽपि विस्मयमुपागतः, शक्रेण च कथितं यथा भगवान् सर्वं जानाति, त्रिज्ञानोपेतत्वात् ॥ सम्प्रति विवाहद्वारमाह—

उम्मुक्कबालभावो कमेण अह जुव्वणं समणुपत्तो। भोगसमत्थं नाउं अम्मापियरो उ वीरस्स ॥ ७८ ॥ भा० ॥

क्रमेण उक्तप्रकारेण उन्मुक्तो बालभावो येन स उन्मुक्तबालभावः, 'अथ' अनन्तरं यौवनं वयोविशेषलक्षणं सम्यक् बालादिभावात्पश्चात् प्राप्तः समनुप्राप्तः, अत्रान्तरे भुज्यन्ते इति भोगाः—शब्दादयस्तेषु समर्थो भोगसमर्थस्तं भगवन्तं ज्ञात्वा, कौ ज्ञात्वेत्यत आह—मातापितरौ, भगवतो वीरस्य,

तिहिरिक्खंमि पसत्थे महंतसामंतकुलपसूयाए। कारेंति पाणिगहणं जसोयवररायकण्णाए ॥ ७९ ॥ भा० ॥

तिथिश्च ऋक्षं च तिथिऋक्षं, ऋक्षं—नक्षत्रं, तस्मिन् तिथिऋक्षे, प्रशस्ते—शोभने, महच्च तत् सामन्तकुलं तस्मिन् प्रसूतेति समासः, तस्याः कस्या इत्याह—यशोदा चासौ वरराजकन्या च यशोदवरराजकन्या तस्याः, पाणिग्रहणं मातापितरौ भगवन्तं कारयतः, अत्र महासामन्तकुलप्रसूताया इत्यनेनान्वयमहत्त्वमाह, वरराजकन्याया इत्यनेन तत्कालराजसंपद्युक्तत्वमाह ॥ गतं विवाहद्वारम्, अधुना अपत्यद्वारमाह—

पंचविहे माणुस्से भोगे भोत्तूण सह जसोदाए। तेयसिरिं व सुरूवं जणइ य पियदंसणं धूयं ॥ ८० ॥ भा० ॥

पञ्चविधान्—पञ्चप्रकारान् मनुष्याणामेते मानुषास्तान् भोगान्—शब्दादीन् भुक्त्वा सह यशोदया भार्यया तेजसः श्रीः तेजःश्रीस्तामिव—तेजःश्रियमिव सुरूपं जनयति प्रियदर्शनां—प्रियदर्शनाभिधां धूतां—दुहितरम् । पाठान्तरं—'जणिंसु

पियदंसणं धूयं' तत्र जनितवानित्यर्थः, गतमपत्यद्वारम् ॥ एवं भगवान् वर्धमानोऽष्टाविंशतिवर्षो जातः, अत्रान्तरे भगवतो मातापितरौ कालगतौ, भगवानपि तीर्णप्रतिज्ञः प्रव्रज्याग्रहणाहितमतिर्नन्दिवर्द्धनपुरस्सरं स्वजनमापृच्छति स्म, स पुनराह—भगवन्! मा क्षारं क्षते निक्षिप, कियन्तमपि कालं प्रतीक्षस्व, भगवानाह—कियन्तं ?, स्वजन आह—वर्षद्वयं, भगवानाह—यद्येवं तर्हि भोजनादौ मम व्यापारो न वोढव्यः, एवं प्रतिपन्ने समधिकं वर्षद्वयं प्रासुकैषणीयाहारः शीतोदकमप्यपिबन् तस्थौ, न च प्रासुकेनापि जलेन सर्वस्नानं कृतवान्, केवलं लोकस्थित्या हस्तपादमुखमात्रप्रक्षालनं प्राशुकेन जलेन चकार, निष्क्रमणमहोत्सवे तु सचित्तोदकेन स्नातवान्, ब्रह्मचर्यं च सुविशुद्धं ततः प्रभृति यावज्जीवं परिपालितवान्, इह यदा भगवान् जातस्तदैवं लोके प्रसिद्धिरभूत्, यथा—एष चतुर्दशस्वप्नसूचितो जात इति चक्रवर्त्ती भविष्यति, तत एनां प्रसिद्धिमाकर्ण्य स्वस्वमातापितरैः श्रेणिकचण्डप्रद्योतादयो भगवत्पर्युपासनाय कुमारभूपाः प्रेषिताः, सम्प्रति तु भगवति घोरानुष्ठानमनुष्ठातुं प्रवृत्ते न एष चक्रवर्त्ती भविष्यतीति स्वं स्वं स्थानं प्रति गताः, भगवानपि तथा तिष्ठन् संवत्सरातिक्रमे महादानं दत्तवान्, लोकान्तिकैश्च प्रतिबोधितः, ततः पूर्णावधिः प्रव्रजितः ॥ अमुमेवार्थं लेशतः प्रतिपादयति निर्युक्तिकृत्—

हत्थुत्तरजोगेणं कुंडग्गामंमि खत्तिओ जच्चो । वज्जरिसभसंघयणो भवियजणविबोहतो वीरो ॥ ४५९ ॥
सो देवपरिग्गहिओ तीसं वासाइं वसइ गिहवासे । अम्मापिईहिं भगवं देवत्तगएहिं पव्वइतो ॥ ४६० ॥

हस्तोत्तरायोगेन—उत्तराफाल्गुनीयोगेन कुंडनगरग्रामे जात्यः—उत्कृष्टः क्षत्रियो वज्रर्षभसंहननो भव्यजनविबोधको

वीरो भगवान् मातापितृभ्यां देवत्वगताभ्यां प्रव्रजितः, अथ स कियन्तं कालं सर्वसङ्कलनया गृहवासे वसति?, तत आह—स त्रिंशद्वर्षाणि वसति गृहवासे, किं सामान्येन स्वजनमात्रपरिवृत एव?, नेत्याह—देवपरिगृहीतः ॥ सम्प्रति भाष्यकारो दानद्वारं सम्बोधनद्वारं निष्क्रमणद्वारं च व्याख्यातुकामः प्रथमतो दानद्वारं व्याख्यानयति—

संवच्छरेण होहिइ अभिणिक्खमणं तु जिणवरिंदाणं । तो अत्थसंपयाणं पवत्तए पुव्वसूरम्मि ॥ ८१ ॥ भा० ॥
एगा हिरण्णकोडी अट्ठेव अणूणगा सयसहस्सा । सूरोदयमाईयं दिज्जइ जा पायरासो उ ॥ ८२ ॥ भा० ॥
संघाडगतियचउक्कचच्चरचउम्मुहमहापहपहेसु । दारेसु पुरवराणं रत्थामुहमज्झकारेसु ॥ ८३ ॥ भा० ॥
वरवरिया घोसिज्जइ किमिच्छियं दिज्जइ बहुविहीयं । सुरअसुरदेवदाणवनरिंदमहियाण निक्खमणे ॥८४॥भा०
तिन्नेव य कोडिसया अट्ठासीइं य होंति कोडीओ। असियं च सयसहस्सा एयं संवच्छरे दिन्नं ॥ ८५ ॥ भा० ॥

इदं च गाथापञ्चकमृषभदेवाधिकार एव व्याख्यातमिति न भूयो व्याख्यायते । गतं दानद्वारम् ॥ अधुना सम्बोधनद्वारम्, तत्र यदा भगवान् निष्क्रमिष्यामीति मनः सम्प्रधारयति तदा ये लोकान्तिका देवाः सारस्वतादयो ब्रह्मलोके कल्पे रिष्टे विमानप्रस्तटे स्वकीये स्वकीये विमाने स्वकीये स्वकीये प्रासादावतंसके प्रत्येकं चतुर्भिः सामानिकसहस्रैस्तिसृभिः पर्षद्भिः सप्तभिरनीकैः सप्तभिरनीकाधिपतिभिः षोडशभिरात्मरक्षकदेवसहस्रैरन्यैश्च स्वस्वविमानवास्तव्यैर्देवैर्देवीभिश्च सम्परिवृता दिव्यान् भोगान् भुञ्जमा(ञ्जा)ना आसते, तेषामासनानि प्रचलन्ति, ततोऽवधिं प्रयुञ्जते, प्रयुज्य चाभोगयन्ति, ततो जानन्ति यथा—स्वामी निष्क्रमिष्यामीति मनः सम्प्रधारितवान्, ततश्चिन्तयन्ति—कल्प एष लोकान्तिकानां देवानां—भगवता-

मर्हतां निष्क्रमणकाले सम्बोधनं कर्त्तव्यमिति, तत एवं चिन्तयित्वा उत्तरपूर्वां दिशमवक्रम्य द्विकृत्वो वैक्रियसमुद्घातेन समवहत्योत्तरवैक्रियाणि रूपाणि विकुर्वते, विकुर्वित्वा भगवतः समीपमागत्याकाशे स्थिता मधुराभिर्वाग्भिरेवमवादिषुः—'जय जय नंदा! जय जय भद्दा!, जय जय मुणिवरवसभा!, बुज्झाहि भगवं! लोगनाहा!, पवत्तेहि भयवं! धम्मतित्थं, हियसुहनिस्सेसकरं जीवाणमेयं भविस्सइ'त्ति, ततो वन्दन्ते नमस्यन्ति, वन्दित्वा नमस्यित्वा यत आगतास्तत्र गताः॥ एतदेवाह—

सारस्सयमाइच्चा वण्ही वरुणा य गद्दतोया य। तुसिया अव्वावाहा अग्गिच्चा चेव रिट्ठा य॥ ८६॥ भा०॥
एए देवनिकाया भयवं बोहिंति जिणवरिंदं तु। सव्वजगज्जीवहियं भयवं! तित्थं पवत्तेहि॥ ८७॥ भा०॥
एवं अभिथुव्वंतो बुद्धो बुद्धारविंदसरिसमुहो। लोगंतियदेवेहिं कुंडग्गामे महावीरो॥ ८८॥ भा०॥

इदमपि गाथात्रयं सुगमत्वात् प्राग्व्याख्यातत्वाच्च न प्रतन्यते, ननु पूर्वमृषभदेवाधिकारे पूर्वं सम्बोधनमुक्तं पश्चाद्दानं 'संबोहणपरिच्चाए' इति पाठक्रमात्, इह तु पूर्वं दानं पश्चात्सम्बोधनं 'दाणे संबोह निक्खमणे' इति वचनात्, ततः कथं परस्परं न विरोधः?, नैष दोषो, न सर्वतीर्थकराणामयं नियमो यदुत—सम्बोधनोत्तरकालभाविनी महादानप्रवृत्तिः, किन्तु केषांचिदेवमपि भवति—पूर्वं महादानं पश्चात्सम्बोधनमिति, 'दाणे संबोह निक्खमणे' इति वचनात्, अथवा भवतु नियमः, स च द्विधा घटते—पूर्वं सम्बोधनं पश्चान्महादानमथवा पूर्वं महादानं पश्चात्सम्बोधनं, तत्र पूर्वनियमेन सम्बोधनद्वारादिह दानद्वारस्य प्रागुपन्यासो बहुतरवक्तव्यत्वाददुष्टः, पश्चात्तने तु नियमे पूर्वमृषभ-

उपोद्घात-निर्युक्तौ श्रीवीर-चरिते ॥२६१॥

संबोधनं चतुर्विधदेवागमः ॥२६१॥

देवाधिकारे दानद्वारात्प्राक् सम्बोधनद्वारोपन्यासोऽल्पवक्तव्यत्वाद्, एवं तावत् सम्भविनः पक्षा उपन्यस्ताः, तत्त्वं तु विशिष्टश्रुतविदो जानन्तीति कृतं प्रसङ्गेन ॥ गतं सम्बोधनद्वारम्, अधुना निष्क्रमणद्वारमाह—

**मणपरिणामो उ कतो अभिनिक्खमणंमि जिणवरिंदेण । देवेहि य देवीहि य समंततो उत्थुयं गयणं ॥८८॥ भा०॥**

मनःपरिणामश्च कृतोऽभिनिष्क्रमणे—अभिनिष्क्रमणविषयो जिनवरेन्द्रेण, तावत् किं सञ्जातमित्याह—देवैर्देवीभिश्च समन्ततः—सर्वासु दिक्षु सर्वं अवस्तृतं—व्याप्तं गगनं ॥

**भवणवइवाणमंतरजोइसवासी विमाणवासी य । धरणियले गयणयले विज्जुज्जोओ कतो खिप्पं ॥९०॥ भा० ॥**

यैर्देवैर्गगनतलं व्याप्तं ते खल्वमी वर्त्तन्ते—भवनपतयश्च व्यन्तराश्च ज्योतिर्वासिनश्चेति द्वन्द्वः समासः, तथा विमानवासिनश्च, अमीभिरागच्छद्भिर्धरणितले गगनतले च विद्युद्वत् उद्योतो विद्युदुद्योतः कृतः क्षिप्रं—शीघ्रम् ॥

**जाव य कुंडग्गामो जाव य देवाण भवणआवासा । देवेहि य देवीहि य अविरहियं संचरंतेहिं ॥ ९१ ॥ भा० ॥**

यावत् कुण्डग्रामो यावच्च देवानां भवनावासा अत्रान्तरे गगनतलं धरणितलं च देवैर्देवीभिश्च अविरहितं—व्याप्तं सञ्चरद्भिः, एतत्सामान्येनोक्तम्, विशेषप्रक्रिया त्वेवम्—यदा भगवान् लोकान्तिकदेवैः सम्बोधितस्तदा स्वामी नन्दिवर्द्धनप्रमुखस्वजनवर्गसमीपमुपागतवान्, उपागत्य चैवमवादीत्—इच्छामि युष्मदनुज्ञातः प्रव्रज्यां ग्रहीतुमिति, ते चाकामा अप्येवमवादिषुः—यद्भगवतः प्रतिभासते तत्प्रमाणं, ततः स नन्दिवर्द्धनः कौटुम्बिकपुरुषान् शब्दापयित्वा निष्क-

मणाभिषेकसामग्रीं कारितवान्, तत्राष्टाधिकं सहस्रं सौवर्णिककलशानां १ अष्टसहस्रं रूप्यमयानां २ अष्टसहस्रं मणि-
मयानां ३ अष्टसहस्रं सुवर्णरूप्यमयानां ४ अष्टसहस्रं सुवर्णमणिमयानां ५ अष्टसहस्रं रूप्यमणिमयानां ६ अष्टसहस्रं
सुवर्णरूप्यमणिमयानां ७ अष्टसहस्रं भौमेयानां ८ निष्पन्नं । तदनन्तरमासनं शक्रस्य चलितं, ततो यथा प्राक् ऋषभदेव-
जन्माभिषेकद्वारे शक्रागमनमुपवर्णितं तथैवात्राप्यन्यूनातिरिक्तमुपवर्णयितव्यं, यावत्तेन दिव्येन यानविमानेन स्वामि-
भवनस्य त्रिकृत्वः प्रदक्षिणां कृत्वा भगवतो भवनस्य उत्तरपूर्वस्यां दिशि चतुरङ्गुलैर्धरणितलमसंप्राप्तं तत् दिव्यं यानवि-
मानं स्थापयति, ततो दिव्ययानविमानाद्विनिर्गत्य सर्वसामग्रीपरिकलितो भगवन्तं पर्युपासीन आस्ते, एवं पूर्वक्रमेण
ईशानेन्द्रादयोऽच्युतेन्द्रपर्यवसाना इन्द्राः सपरिवारा वक्तव्याः, तथा भवनपतिव्यन्तरज्योतिष्केन्द्रा अपि सपरिच्छदाः,
ततो यथा प्राग् ऋषभस्वामिनो जन्माभिषेकमच्युतेन्द्रादयः कृतवन्त उक्तास्तथाऽत्रापि वक्तव्या यावत् शक्रेण कृतोऽभि-
षेकः, ततो येऽच्युतेन्द्राद्याभियोग्यदेवकृताः सौवर्णादिकलशास्ते नन्दिवर्द्धनकौटुम्बिकपुरुषनिर्वर्त्तितसौवर्णादिकलशेषु
दिव्यानुभावतः प्रविष्टाः, ततस्ते अधिकतरं शोभितवन्तः, ततः स नन्दिवर्द्धनो राजा स्वामिनं सिंहासने पूर्वाभिमुखं निवेश्य
देवानीतक्षीरोदसमुद्रादिपानीयैः सर्वतीर्थमृत्तिकाभिः सर्वकषायैः सौवर्णादिकलशैरभिषेकं कर्त्तुमारब्धवान्, तस्मिंश्चाभिषेकं
कुर्वति सर्वे इन्द्राः सपरिवाराः केचित् कृताञ्जलिपुटाः केचित्कलशहस्तगताः केचित् भृङ्गारहस्तगताः केचिदादर्शहस्तगता
जयजयशब्दं प्रयुञ्जानाः स्वामिनः पुरतोऽवतिष्ठन्ते, शेषं सर्वं हिरण्यवर्षादि ऋषभनाथजन्माभिषेकवद्वाच्यं, ततो जन्मा-
भिषेकानन्तरमलङ्कारसभायां केशालङ्कारेण वस्त्रालङ्कारेण माल्यालङ्कारेण आभरणालङ्कारेण भगवन्तमलङ्कारितवान्,

अभिषेकः
शिबिका
च

यावच्च निष्क्रमणाभिषेकोऽलङ्कारश्च क्रियमाणो वर्त्तते तावद्धरणितलं गगनतलं चागच्छद्भिर्गच्छद्भिश्च देवैर्देवीभिश्च निरन्तरं व्याप्तमुद्योतितं चावतिष्ठते, तत उक्तम्—'धरणियले गयणतले विज्जुज्जोओ कतो खिप्पं ॥ जाव य कुंडग्गामो' इत्यादि, तत एवं निष्क्रमणाभिषेकेणाभिषिक्ते सर्वालङ्कारविभूषिते च भगवति नन्दिवर्द्धनराज्ञा उपदिष्टाः कौटुम्बिकपुरुषाः—अनेकस्तम्भशतसन्निविष्टां मणिकनकविचित्रां पञ्चाशद्धनुरायामां पञ्चविंशतिधनुर्विस्तीर्णां षट्त्रिंशद्धनुरुच्चां चन्द्रप्रभाभिधानां शिबिकामुपस्थापयतेति, तेऽपि तथैवोपस्थापयन्ति (एवं शक्रोऽपि शिबिकां कारयति) नवरं तस्याः प्रागुक्तविमानस्येव वर्णको वक्तव्यः, केवलं सा शिबिका तामेव नन्दिवर्द्धनकारितां शिबिकां दिव्यानुभावतः प्रविष्टा, ततः साऽतीव सुन्दरतरा जाता, ततस्तस्यां शिबिकायामुपस्थापितायां भगवान् सिंहासनादुत्थाय अलङ्कारसभातो विनिर्गच्छति, विनिर्गत्य यत्र चन्द्रप्रभा शिबिका तत्रागच्छति, ततस्तां प्रदक्षिणीकृत्य समारोहति, आरुह्य च सिंहासनवरगतः पूर्वाभिमुखः सन्निषण्णः । आह च—

**चंदप्पभा य सीया उवणीया जम्ममरणमुक्कस्स । आसन्नमल्लदामा जलथलयंदिव्वकुसुमेहिं ॥ ९२ ॥ भा० ॥**

चन्द्रप्रभाभिधाना शिबिका या उपनीता—आनीता, कस्येत्यत आह—जन्ममरणाभ्यां मुक्त इव मुक्तस्तस्य, वर्द्धमानस्येत्यर्थः ॥ किंभूता सेत्याह—आसक्तानि माल्यदामानि यस्यां सा तथा, तथा जलस्थलजैश्च दिव्यकुसुमैरर्चितेति वाक्यशेषः ॥ संप्रति शिबिकाप्रमाणदर्शनार्थमाह—

**पंचासइआयामा धणूणि विच्छिण्ण पण्णवीसं तु । छत्तीसं उव्विद्धा सीया चंदप्पभा भणिया ॥ ९३ ॥ भा० ॥**

पञ्चाशद्धनूंषि आयामो-दैर्घ्यं यस्याः सा पञ्चाशदायामा, धनूंषि पञ्चविंशतिर्विस्तीर्णा, तथा षट्त्रिंशद् धनूंषि उच्छ्रिद्धा—उच्चा शिविका चन्द्रप्रभाभिधाना गणधरैर्भणिता, अनेन शास्त्रस्य पारतन्त्र्यमाह ॥

सीयाएँ मज्झयारे दिव्वं मणिकणगरयणचिंचइयं । सिंहासणं महरिहं सपायपीढं जिणवरस्स ॥ ९४ ॥ भा० ॥

शिविकाया मध्य एव मध्यकारस्तस्मिन् दिव्यं सुरनिर्मितं मणयः—चन्द्रकान्तादयः कनकं-देवकाञ्चनं रत्नानि-मरकतेन्द्रनीलादीनि तैः 'चिंचइयं' देशीपदमेतत् भूषितमित्यर्थः, सिंहप्रधानमासनं सिंहासनं, महान्तं-भुवनगुरुमर्हतीति महार्हं, सह पादपीठं यस्य येन वा तत् 'सपादपीठं' जिनवरस्य कृतमिति वाक्यशेषः ॥

आलइयमालमउडो भासुरबोंदी पलंबवणमालो । सेययवत्थनियत्थो जस्स य मोल्लं सयसहस्सं ॥९५॥ भा० ॥

छट्ठेणं भत्तेणं अज्झवसाणेण सोहणेण जिणो । लेस्साहि विसुज्झंतो आरुहई उत्तमं सीयं ॥ ९६ ॥ भा० ॥

आलइयं—आविद्धमुच्यते, माला—अनेकसुरकुसुमग्रथिता मुकुटः प्रसिद्ध एव, माला च मुकुटश्च मालामुकुटौ आविद्धौ मालामुकुटौ यस्य स आविद्धमालामुकुटः, तथा भास्वरा—छायायुक्ता बोन्दिः—तनुर्यस्य स तथाविधः, प्रलम्बा वन-माला देवद्रुमप्रवालकिशलयादिमयी यस्य स प्रलम्बवनमालः, तथा नियत्थं—परिहितमुच्यते, निवसितं श्वेतम्—आकाश-स्फटिकसमप्रभं नासानिःश्वासवातवाह्यमपूर्वस्पर्शोपेतं कनकखचितान्तप्रदेशं वस्त्रं येन स निवसितश्वेतवस्त्रः, सुखादिदर्शनान्निवसितशब्दस्य पाक्षिकः परनिपातः, यस्य वस्त्रस्य मूल्यं शतसहस्रं दीनाराणामिति ॥ स एवंभूतो भगवान् मार्गशीर्षबहुलदशम्यां सुव्रते दिवसे हस्तोत्तरानक्षत्रयोगे षष्ठौ विजये मुहूर्त्ते षष्ठेन भक्तेन, दिनद्वयोपवासेनेत्यर्थः,

अध्यवसानम्—अन्तःकरणसव्यपेक्षं विज्ञानं तेन सुन्दरेण—शोभनेन जिनो—भगवान् वर्द्धमानस्वामी, तथा लेश्याभिर्विशुद्ध्यमानो, मनोवाक्कायपूर्विकाः कृष्णादिद्रव्यसम्बन्धजनिताः खल्वात्मपरिणामा लेश्याः, उक्तं च—"कृष्णादिद्रव्यसाचिव्यात्परिणामो य आत्मनः। स्फटिकस्येव तत्रायं, लेश्याशब्दः प्रवर्त्तते ॥ १ ॥" ताभिर्विशुद्ध्यमान आरोहत्युत्तमां शिबिकाम् ॥

सिंहासणे निसन्नो सक्कीसाणा य दोहिं पासेहिं। वीयंति चामरेहिं मणिकणगविचित्तदंडेहिं ॥ ९७ ॥ भा० ॥

तत्र भगवान् सिंहासने निषण्णः, स च पूर्वाभिमुखः, ततो भगवतो दक्षिणपार्श्वे कुलमहत्तरिका हंसलक्षणं पटसाटकमादाय भद्रासने निषण्णा, अम्बधात्री भगवतो वामपार्श्वे उपकरणमादाय भद्रासने उपविष्टा, भगवतः पृष्ठे एका वरतरुणी कृतशृङ्गारचारुवेषा धवलमातपत्रं धरन्ती समवतिष्ठते, उत्तरपूर्वस्यां दिशि पुनः एका वरतरुणी विमलजलप्रतिपूर्णं भृङ्गारं गृहीत्वा तिष्ठति, आग्नेयकोणे तु एका वरतरुणी कनकदण्डं मणिविचित्रं तालवृन्तं, अन्ये पुनरेवमाहुः—एताः सर्वा अपि देव्यः प्रतिपत्तव्याः, ततः स्वामिन उभयोः पार्श्वयोर्व्यवस्थितौ शक्रेशानौ देवनाथौ चामराभ्यां मणिरत्नविचित्रदण्डाभ्यां वीजयतः, एवं भगवति शिबिकान्तर्वर्त्तिनि सिंहासनारूढे सति नन्दिवर्द्धनो राजा निजाभियोग्यपुरुषानाज्ञापयति—परिवहत यूयं शिबिकामिति, ततस्ते एवमुक्ताः समाना हर्षापूरितमनसो यावत् शिबिकामुत्पाटयन्ति तावदत्रान्तरे शक्रो देवराजश्चन्द्रप्रभायाः शिबिकाया दाक्षिणात्यामुपरितनीं बाहां गृह्णाति, ईशानो देवेन्द्र औत्तराहामुपरितनीं बाहां, चमरोऽसुरराजोऽधस्तनीं दाक्षिणात्यां बाहां, बलिर्वैरोचनेन्द्रोऽधस्तनीमौत्तराहां बाहाम्, अवशेषा

भवनपतिव्यन्तरज्योतिष्कवैमानिका देवा यथाऽर्हं चन्द्रप्रभां शिविकामुत्पाटयन्ति, उत्पाट्य च शक्रेशानेन्द्रवर्जाः शेषा देवा यथायोगं परिवहन्ति, शक्रेशानेन्द्रौ तु चामराभ्यां वीजयतः ॥ एतदेवाह—

पुव्विं उक्खित्ता माणुसेहिं सा हट्टरोमकूवेहिं । पच्छा वहंति सीयं असुरिंदसुरिंदनागिंदा ॥ ९८ ॥ भा० ॥

पूर्वं—प्रथममुत्क्षिप्ता—उत्पाटिता मानुषैः सा शिविका, किंविशिष्टैरित्याह—हृष्टानि रोमकूपानि येषां ते तथा तैः, पश्चाद्वहन्ति शिविकामसुरेन्द्रसुरेन्द्रनागेन्द्राः, असुरेन्द्राः—चमरादयः सुरेन्द्रा—ज्योतिरिन्द्रादयः नागेन्द्रौ—धरणभूतानन्दौ ॥ असुरेन्द्रादिस्वरूपव्यावर्णनार्थमाह—

चलचवलभूसणधरा सच्छंदविउव्वियाभरणधारी । देविंददाणविंदा वहंति सीयं जिणिंदस्स ॥ ९९ ॥ भा० ॥

चलाश्च ते चपलभूषणधराश्चेति विशेषणसमासः, तत्र चला गमनक्रियायोगात्, चपलभूषणधरा हारादिचपलभूषणयोगात्, तथा स्वच्छन्देन—स्वाभिप्रायेण विकुर्वितानि—देवशक्त्या कृतानि आभरणानि—कुण्डलादीनि धारयन्तीत्येवंशीलाः स्वच्छंदविकुर्विताभरणधारिणः, अथवा चलचपलभूषणधरा इत्युक्तं, तानि च भूषणानि किं ते परनिर्मितानि धारयन्ति उत स्वनिर्मितानीति संशयसम्भवे व्यवच्छेदार्थमाह—स्वच्छंदविकुर्विताभरणधारिणः, क एते इत्याह—देवेन्द्रदानवेन्द्राः, किं?—वहन्ति शिविकां जिनेन्द्रस्य ॥ एवं भगवति शिविकारूढे गन्तुं प्रवृत्ते तत्प्रथमतया सर्वात्मना रत्नमयान्यमून्यष्टौ मङ्गलकानि पुरतः क्रमेण सम्प्रस्थितानि, तद्यथा—स्वस्तिकः श्रीवत्सः नन्दावर्त्तः वर्द्धमानकं भद्रासनं

कलशो मत्स्ययुगं दर्पणश्च, तदनन्तरमालोकदर्शनीयानि क्रमेण पूर्णकलशभृङ्गारचामराणि, ततो गगनतलमनुलिखन्ती वातोद्धूता महन्ती वैजयन्ती, तदनन्तरं विमलवैडूर्यमणिदण्डं प्रलम्बमानकोरण्टमाल्यदामोपशोभितं चन्द्रमण्डलनिभं विमलमातपत्रं, तदनन्तरं मणिकनकविचित्रं सपादपीठं सिंहासनं, तदनन्तरमष्टशतमारोहरहितानां वरतुरगाणां, तदनन्तरमष्टशतं वरकुञ्जराणां, ततोऽनन्तरमष्टशतं सघण्टानां सपताकानां सनन्दीघोपाणामनेकप्रहरणावरणसंभृतानां रथानां, ततोऽष्टशतं वरपुरुषाणां, तदनन्तरं हयानीकं, तदनन्तरं गजानीकं, ततोऽप्यनन्तरं रथानीकं, ततः पदात्यनीकं, तदनन्तरमाकाशतलमुल्लिखन् लघुपताकासहस्रपरिमण्डितो योजनसहस्रोच्छ्रायो रत्नमयोऽतिमहान् महेन्द्रध्वजः, तदनन्तरं वहवः खड्गग्राहाः कुन्तग्राहाः पीठफलकग्राहाः, तदनन्तरं हासकारका नर्म्मकारकाः कान्दर्पिका जयजयशब्दं प्रयुञ्जानाः, तदनन्तरं वहव उग्रा भोगा राजन्याः क्षत्रियास्तलवरा माडंविकाः कौटुम्विकाः श्रेष्ठिनः सार्थवाहा वहवो देवा देव्यश्च स्वामिनः पुरतः पृष्ठतः पार्श्वतो व्यवस्थिताः सम्प्रस्थिताः, ततो देवैरुह्यमाना भगवतः शिविका गच्छति, भगवतश्च पृष्ठतो हस्तिस्कन्धवरगतः सकोरण्टमाल्यदाम्ना ध्रियमाणेन छत्रेण श्वेतवरचामराभ्यां वीज्यमानश्चतुरङ्गिण्या सेनया परिकलितो नन्दिवर्द्धनोऽनुगच्छति ॥

कुसुमाणि पंचवण्णाणि मुंचंता दुंदुहीउ ताडंता । देवगणा य पहट्ठा समंततो उच्छुयं गयणं ॥१००॥ भा०॥

भगवति सिंहासनाधिरूढे शक्रेशानदेवराजाभ्यां वीज्यमाने दीक्षार्थं प्रचलति प्रहृष्टा भक्तिप्रमोदापूरितमनसो देव-

॥ २६४ ॥

गणा' देवसङ्घाताः, चशब्दस्य व्यवहितः सम्बन्धः, स च दर्शयिष्यते, कुसुमानि शुक्लादिपञ्चवर्णानि मुञ्चन्तः तथा दुन्दुभींश्च ताडयन्तो, गच्छन्ति इति क्रियाध्याहारः, तैरेवं गच्छद्भिर्देवैः समन्ततः—सर्वासु दिक्षु विदिक्षु च सर्वं गगनमवस्तृतं—व्याप्तम् ॥

वणसंडोव्व कुसुमितो पउमसरो वा जहा सरयकाले। सोहइ कुसुमभरेणं इय गयणतलं सुरगुणेहिं ॥१०१ भा.॥

वनखण्ड इव कुसुमितः, पद्मसरो वा यथा शरत्काले शोभते कुसुमभरेण-पुष्पसमूहेनेति, एवं गगनतलं शोभते सुरगणैः।

सिद्धत्थवणं व जहा असणवणं सणवणं असोगवणं। चूयवणं व कुसुमियं इय गयणयलं सुरगणेहिं ॥ १०२ भा.॥

सिद्धार्थकवनमिव यथा असनवनं, असना—बीजकाः, सणवनमशोकवनं चूतवनं वा कुसुमितमिति, एवं गगनतलं सुरगणैः शुशुभे ।

अयसिवणं व कुसुमियं कणियारवणं व चंपगवणं वा। तिलगवणं व कुसुमियं इय गयणयलं सुरगणेहिं ॥१०३ भा.॥

अतसीवनं वा यथा कुसुमितं, अतस्यो—मालवदेशप्रसिद्धाः, कर्णिकारवनं वा चम्पकवनं वा तिलकवनं वा यथा कुसुमितमिति, एवं गगनतलं सुरगणैः शोभितम् ।

वरपडहभेरिझल्लरिदुंदुहिसंखसहिएहिं तूरेहिं। धरणियले गयणयले तूरनिनाओ परमरम्मो ॥ १०४ भा.॥

वरपटहभेरीझल्लरीदुन्दुभिशङ्खसहितैस्तूर्यैः करणभूतैः, किं?—धरणितले गगनतले तूर्यनिनादः—तूर्यनिर्घोषः परमरम्योऽभवत् ।

एवं सदेवमणुयासुराए परिसाए परिवुडो भयवं। अभिथुव्वंतो गिराहिं संपत्तो णायसंडवणं ॥ १०५ भा. ॥

एवम्-उक्तेन विधिना सह देवमनुष्यासुरा यया सा सदेवमनुष्यासुरा तया, कयेत्याह-पर्षदा, परिवृतो भगवान् गीर्भिः—वाग्भिः अभिष्टूयमानः, क्षत्रियकुण्डपुरमध्येन नरनारीदेवदेवीसङ्घातानां नयनमालासहस्रैः प्रतीक्ष्यमाणः हृदयमालासहस्रैरभिनन्द्यमानो मनोरथमालासहस्रैः संस्पृश्यमानोऽङ्गुलिसहस्रैर्दर्श्यमानो भवनपङ्क्तिसहस्राणि समतिक्रामन् तावद् गतो यावत् सम्प्राप्तो ज्ञानखण्डवनमिति ॥

उज्जाणं संपत्तो ओरुहिउं उत्तमाउ सीयाओ। सयमेव कुणइ लोयं सक्को सि पडिच्छए केसे ॥ १०६ भा. ॥

उद्यानं सम्प्राप्तः सन् यत्रैवाशोकवरपादपस्तत्रैवागच्छति, आगत्य च तस्या उत्तमायाः शिविकाया अवतरति, अवतीर्य च स्वयमेवाभरणान् मुञ्चति, तानि कुलमहत्तरिका छिन्नमुक्तावलिप्रकाशान्यश्रूणि विनिर्मुञ्चन्ती हंसलक्षणेन पटशाटकेन प्रतीच्छति, प्रतीच्छ्य भगवन्तमेवमवादीत्-इक्खागुकुलसमुप्पणे सि णं तुमं जाया!, कासवगोत्ते सि णं तुमं जाया! उदितोदितनायकुलनहयलमियंकसिद्धत्थजच्चखत्तियसुते सि णं तुमं जाया! जच्चखत्तियाणीए तिसलाए अत्तए सि णं तुमं जाया! देवनरिंदपहियकित्ती सि णं तुमं जाया!, सुहोसिए णं तुमं जाया!, एत्थ निरवेक्खं चंकमियव्वं, गरुयं आलंबेयव्वं, असिधारं महव्वयं चरियव्वं, तं घडियव्वं जाया!, परक्कमियव्वं जाया!, अस्सिं च अट्ठे नो पमाइयव्वंति, अणंतरयपडंतंसुपवहनंदिवद्धणपमुहसयणवग्गसमेया अंसूणि विणिम्मुयंती वंदति नमंसति वंदित्ता नमंसित्ता एगंते

अवक्कमति, सामीवि संपइ एवमेयंति वयासी, ततः स्वयमेव भगवान् पञ्चमुष्टिकं लोचं करोति, शक्रश्च देवराजो हंस-लक्षणेन पटशाटकेन केशा[दी]न् प्रतीच्छति ॥

जिणवरमणुण्णवित्ता अंजणघणरुगयविमलसंकासा। केसा खणेण नीया खीरसरिसनामयं उदहिं ॥१०७ भा. ॥

शक्रेण जिनवरं—भगवन्तं वर्द्धमानस्वामिनमनुज्ञाप्य अञ्जनं प्रसिद्धं घनो—मेघः रुचकः—कृष्णमणिविशेषः तेषामिव विमला छाया येषां ते अञ्जनघनरुचकविमलसङ्काशाः, के ते इत्याह—केशाः, किं ?—क्षणेन नीताः क्षीरसदृशनामानमुदधिं, क्षीरोदधिमित्यर्थः ॥ अत्रान्तरे चारित्रप्रतिपत्तुकामे भगवति सुरासुरमनुजवृन्दसमुद्गतो ध्वनिस्तूर्यनिनादश्च शक्रादेशा-द्विरराम, तथा चाह—

दिव्वो मणुस्सघोसो तुरियनिनादो उ (य) सक्कवयणेणं। खिप्पामेव निलुक्को जाहे पडिवज्जइ चरित्तं ॥ १०८ भा. ॥

दिव्यो—देवसमुत्थो, घोष इति गम्यते, मनुष्यघोषः, चशब्दस्य व्यवहितः सम्बन्धः, तथा तूर्यनिनादश्च शक्रवचनेन क्षिप्रमेव—शीघ्रमेव 'निलुक्को' इति देशीवचनमेतत्, विरत इत्यर्थः, यदा—यस्मिन् काले प्रतिपद्यते चारित्रम् ॥ स यथा चारित्रं प्रतिपद्यते तथा प्रतिपादयति—

काऊण नमोक्कारं सिद्धाणमभिग्गहं तु सो गिण्हे। सव्वं मे ऽकरणिज्जं पावंति चरित्तमारूढो ॥ १०९ भा. ॥

कृत्वा नमस्कारं सिद्धेभ्यो, यथा 'नमोत्थु णं सिद्धाण'मिति, अभिग्रहमसौ गृह्णाति, किंविशिष्टमित्याह—सर्वं मे—मम अकरणीयं पापमित्येवं चारित्रमारूढः, किमुक्तं भवति ?—भदन्तशब्दरहितं सामायिकमुच्चारयति, तद्यथा—'करेमि सामाइयं

सवं सावज्जं जोगं पच्चक्खामि जावज्जीवाए जाव वोसिरामि,' भदन्तेति न भणति, तथाकल्पत्वात्, आह चूर्णिकृत्—"भदंतत्ति न भणइ, जीयमिति" चारित्रप्रतिपत्तिकाले च स्वभावतो भुवनभूषणस्य भगवतो निर्भूषणस्य सत इन्द्रो देवदूष्यं वस्त्रमुपनीतवान्, अत्रान्तरे कथानकम्—एगेण देवदूसेणं पव्वइए, तं जाहे अंसे करेइ एत्थंतरा पिउवयंसो धिज्जाइतो उवट्ठितो, सो य दाणकाले कहिंपि य गतेल्लतो, पच्छा आगतो भज्जाए अंबाडितो—सामिणा एवं दाणं दत्तं, तुमं पुण कहिंचि हिंडसि, जइ पुण एत्थंतरेवि लभेज्जासि, ततो सो आगतो भणइ—जहा मम सामि! न किंचि तुब्भेहिं दिन्नं, इयाणिंपि देहित्ति, ताहे सामिणा तस्स देवदूसस्स अद्धं दिन्नं, अन्नं सव्वं परिच्चत्तंति नत्थि, तेण तुन्नागस्स उवणीयं, जहा एयस्स दसिया बंधाहि, तेण पुच्छितो—इमं कतो लद्धं?, सो भणइ—भगवता दिन्नं, तुन्नागो भणइ—तंपि से अद्धं आणेहि जया पडिहिइ भयवतो अंसातो, तो णं अहं तुन्नामि ताहे लक्खं मोल्लं भविस्सइत्ति, ता तुज्झवि अद्धं मज्झवि अद्धं, पडिवन्नं, ताहे पओलग्गितो, सेसमुवरि भणीहामि ॥ तस्य भगवतश्चारित्रप्रतिपत्तिसमनन्तरमेव मनःपर्यायज्ञानमुदपादि, सर्वतीर्थकृतां चायं क्रमः, यत आह—

**तिहिं नाणेहिं समग्गा तित्थयरा जाव होंति गिहवासे। पडिवन्नंमि चरित्ते चउनाणी जाव छउमत्था ॥११०भा.॥**

त्रिभिर्ज्ञानैः—मतिश्रुतावधिभिः समग्राः—सम्पूर्णास्तीर्थकरा यावद् गृहवासे भवन्ति, वसन्तीत्यर्थः, प्रतिपन्ने पुनश्चारित्रे चतुर्ज्ञानिनो भवन्ति, कियन्तं कालं यावदित्याह—यावच्छद्मस्थास्तावच्चतुर्ज्ञानिनः, एवमसौ भगवान् प्रतिपन्नचारित्रः समासादितमनःपर्यायज्ञानो ज्ञातखण्डादापृच्छय स्वजनान् कर्मारग्राममगमत्। तथा चाह—

दिवसे मुहुत्तसेसे कमारगामं समणुपत्तो ॥ १११ ॥ भा० ॥
बहिया य नायसंडे आपुच्छित्ताण णायए सवे । दिवसे मुहुत्तसेसे कमारगामं समणुपत्तो ॥ १११ ॥ भा० ॥

बहिः कुण्डपुरात् ज्ञातखण्डे उद्याने आपृच्छ्य ज्ञातकान् सर्वान् यथासन्निहितान् तस्मान्निर्गतः, कर्मारग्रामगमनायेति वाक्यशेषः, तत्र च पथद्वयम्—एको जलेनापरः पाल्या, तत्र च भगवान् पाल्या गतवान्, गच्छंश्च दिवसे मुहूर्त्तशेषे कर्मारग्राममनुप्राप्तः, तत्र च प्रतिमायां स्थितः ॥

सो भगवं दिवेहिं गोसीसाइएहिं चंदणेहिं चुन्नेहि य वासेहि य पुप्फेहि य वासियदेहो निक्खमणाभिसेएण य अभिसित्तो, विसेसेण इंदेहिं चंदणाइगंधेण वासितो, तस्स पवइयस्सवि सतो चत्तारि साधिए मासे गंधो न फिडितो, अतो से सुरभिगंधेण भमरा वहवे दूरातो पुप्फितेऽवि कुंदाइवणसंडे चइत्ता दिवेहिं गंधेहिं आगरिसिया भगवतो देहमागम्म विंधंति, केइ पुण मग्गतो गुमगुमायंता समल्लियंति, जया पुण न किंचिवि पावंति तया आरुसिया तुंडेहिं तयं भिंदिऊण खायंति, जेऽवि केई अजिइंदिया तरुणपुरिसा तेऽवि गंधे अग्घाइऊण गंधमुच्छिया भयवंतं भिक्खायरियाए हिंडंतं गामाणुगामं दूइज्जंतं अणुगच्छंता अणुलोमं जायंति, देहि अम्हवि एयं गंधजुत्तिंति, ततो भयवंते तुसिणीए अच्छमाणे पडिलोमे उवसग्गे करेंति, तहा इत्थियातोवि भयवतो देहं सेयमलरहियं निस्सासमुगंधमुहं अच्छीणि य निसग्गेण चेव नीलुप्पलपलासोवमाणि दट्ठुं वहुविहमणुलोमुवसग्गं करेंति, एयं सामन्नेण भणियं, विसेसो भण्णइ—तत्थ जया भगवं कम्मारगामवाहिं पडिमं ठितो तया एगो गोवो दिवसं वइल्ले वाहित्ता गामसमीवं पत्तो; ताहे चिंतइ—एए गामसमीवे चरंतु, अहंपि ता गावीतो दुहामि, ततोऽसौ जाव गामस्स मज्झे पविसित्ता गावीतो दुहइ ताव

ते वइल्ला चरंता अडविं पविट्ठा, सो गोवो गामातो निग्गतो वइल्ले न पेच्छइ, ततो सामिं पुच्छइ—कहिं वइल्ला ?, सामी तुण्हिक्को अच्छइ, सो चिंतइ—एस न याणइ, ताहे मग्गिउं पयत्तो, सव्वरत्तिंपि ते वइल्ला सुचिरं भमित्ता गामसमीवमागया माणुसं दट्ठूण रोमंथंतः अच्छंति, ताहे सो आगतो, ते वइल्ले तत्थेव निविट्ठे पेच्छइ, ताहे आसुरुत्तो, एएण दामएण आहणामि, एएण मम वइल्ला हरिया, पभाए घेत्तूण वच्चीहामित्ति, ताहे सक्को देवराया चिंतेइ—किं अज्ज सामी पढमदिवसे करेइ ?, जाव पेच्छइ तं गोवं धावंतं, ताहे सो तेण थंभिओ, पच्छा आगतो तं तज्जेइ—दुरप्पा ! न याणसि सिद्धत्थरायपुत्तो एस पव्वइतो, एयंमि अंतरे सिद्धत्थो सामिस्स माउस्सियापुत्तो बालतवोकम्मेण वाणमंतरो जातो, ताहे सक्को भणइ—भयवं ! तुज्झ उवसग्गबहुलं, अहं बारस वरिसाणि तुज्झं वेयावच्चं करेमि, ताहे सामिणा भणियं—नो खलु देविंदा ! एवं भूयं वा भवइ वा भविस्सइ वा जं णं अरहंता देविंदाण वा असुरिंदाण वा णीसाए केवलनाणमुप्पाइंसु उप्पायंति उप्पाइस्संति वा, तवं वा करिंसु वा करेंति वा करिस्संति वा, अरहंता सएण उट्ठाणबलवीरियपुरिसक्कारपरक्कमेणं केवलनाणमुप्पाइंसु उप्पायंति उप्पाइस्संति वा, ताहे सक्केण सिद्धत्थो भण्णइ—एस तव नियल्लतो, पुणोऽवि मम वयणं, सामिस्स जो मारणांतियउवसग्गं करेइ तं वारेहि, तेण पडिस्सुयं—एवं होउ, सक्को पडिगतो, सिद्धत्थो ठितो, तद्दिवसं सामिस्स छट्ठभत्ते पारणगं, ततो भयवं कोल्लागे संनिवेसे भिक्खापविट्ठो घयमहुसंजुत्तेणं परमण्णेण बहुलेण माहणेण पडिलाभितो, तत्थ पंच दिव्वाइं पाउब्भूयाइं । एतदेवाह—

गोवनिमित्तं सक्कस्स आगमो वागरेइ देविंदो । कुल्लाग बहुल छट्ठस्स पारणे पयस वसुहारा ॥ ४६१ ॥

कर्मारे कायोत्सर्गः गोपोपद्रवः पारणं च

ताडनायोद्यतगोपनिमित्तं प्रयुक्तावधेः शक्रस्य-देवराजस्य आगमनमागमोऽभवत्, विनिवार्य च गोपं देवेन्द्रो भगवन्तमभिवन्द्य व्याकरोति-अभिधत्ते-भगवन्! तवाहं द्वादश वर्षाणि वैयावृत्त्यं करोमीत्यादि, पाठान्तरं 'वागरिंसु देविंदो' व्याकृतवानित्यर्थः, सिद्धार्थं वा तत्कालप्राप्तं व्याकृतवान् देवेन्द्रः-भगवान् त्वया न मोक्तव्य इति। गते देवराजे भगवतोऽपि कोल्लाके सन्निवेशे बहुलो नाम ब्राह्मणः षष्ठस्य-तपोविशेषस्य पारणके पायसमुपनीतवान् 'वसुहारे'ति तद्गृहे वसुधारा पतिता, एष गाथाक्षरार्थः॥ कथानकम्—ततो सामी विहरमाणो गतो मोरागसंनिवेसं, तत्थ मोराए दूइज्जंता नाम पासंडत्था, तेसिं तत्थ आवासो, तेसिं च कुलवती भयवतो पिउमित्तो, ताहे सो सामिस्स सागएण उवट्ठितो, सामिणा पुव्वपयोगेण बाहा पसारिया, सो भणइ—अत्थि कुमारवर! एत्थ घरा, अच्छाहि तत्थ, सामी एगराइं च वसित्ता पच्छा गतो विहरइ, गच्छंतस्स य तेण भणियं-विवित्ता वसहीतो जइ वासारत्तो कीरइ तो आगच्छेज्ज, अणुग्गहीया होज्जामो, ताहे सामी अट्ठ उउबद्धिए मासे विहरित्ता वासावासे संपत्ते तं देवं दूइज्जंतगगामं एइ, तत्थेगंमि उडए वासावासं ठितो, पढमपाउसे य गोरूवाणि चारिं अलभंताणि जुन्नाणि तणाणि खायंति, ताणि य घराणि उव्वेलेंति, पच्छा ते तावसा वारेंति, सामी न निवारेइ, पच्छा दूइज्जंतगा तस्स कुलवइस्स साहिंति-जहा एस एयाणि न वारेइ, ताहे सो कुलवई अणुसासइ, जहा-कुमारवर! सउणीवि ताव नेड्डुं रक्खइ, तुमंपि वारिज्जासित्ति सप्पिवासं भणइ, ताहे सामी अचियत्तोग्गहोत्ति काउं निग्गतो, इमेण तेण पंच अभिग्गहा गहिया, तंजहा—अचियत्तोग्गहे न वसियव्वं १ निच्चं वोसट्ठे काए २ मोणं च ३ पाणीसु भोत्तव्वं ४, गिहत्थो न वंदियव्वो-न अब्भुट्ठेयव्वो ५, एए पंच

अभिग्गहा गहिया, इह सपात्रो धर्म्मो मया प्रज्ञापनीय इति प्रथमपारणकं गृहस्थपात्रे बभूव, ततः पाणिपात्रभोजिना मया भवितव्यमित्यभिग्रहो गृहीतः, तथा च गोशालकेन तन्तुवायशालायां किलेदमुक्तम्—भगवन्नहं तव भोजनमानयामि गृहस्थपात्रे कृत्वा, भगवता न प्रतिपन्नम्, उत्पन्नकेवलज्ञानस्य तु लोहार्य आनीतवान्, तथा चोक्तं—"धन्नो सो लोहज्जो खंतिखमो पवरलोहसरिवन्नो। जस्स जिणो पत्ताओ इच्छइ पाणीहिँ भोत्तुं जे ॥ १ ॥" अथोत्पन्नेऽपि केवलज्ञाने कस्मान्न भिक्षार्थं भगवानटति?, उच्यते, तस्यामवस्थायां भिक्षाटने प्रवचनलाघवसम्भवात्, उक्तं च—"देविंदचक्कवट्टी मंडलिया ईसरा तलवरा य। अभिगच्छंति जिणिंदं गोयरचरियं न सो अडइ ॥ १ ॥" एतत्प्रसङ्गत उक्तम्, एवं तत्र भगवान् अर्द्धमासं स्थित्वा ततो पच्छा अट्ठियगामं गतो, तस्स पुण अट्ठियगामस्स पढमं वद्धमाणयमिति नाम होत्था। सो य किह अट्ठियगामो जातो?, भण्णइ—

धणदेवो नाम वाणियओ, पंचहिँ सगडसएहिँ गणिमधरिममेज्जभरिएहिँ तस्संतेणागतो, तस्स समीवे वेगवई नाम नदी, तं सगडाणि उत्तरंति, तस्स एगो वइल्लो सो मूलधुरे जुप्पइ, तस्स बलेण ताणि सगडाणि उत्तिन्नाणि, पच्छा सो तुट्टो पडिओ, सो वाणियतो तस्स तणपाणियं पुरतो छड्डेऊण तं अवहाय गतो, सोऽवि तत्थ वालुगाए जेट्ठामूलमासे अईव उण्हाए तण्हाए छुहाए य परिताविज्जइ, वद्धमाणवत्थव्वगो य लोगो तेणंतेणं पाणियं तणं च वहइ, न य तस्स कोइवि देइ, ततोऽसौ गोणो तस्स पदोसमावन्नो, अकामतण्हाए छुहाए य मरिऊणं तत्थेव गामे अग्गुज्जाणे सूलपाणी जक्खो उप्पण्णो, उवउत्तो पासइ तं बलद्दसरीरं, ताहे रुसितो मारिं विउव्वइ, सो गामो मरिउमारद्धो, ततो अद्दन्ना कोउगसया णि

करेंति, तहवि न ठाइ, ताहे भिन्नो गामो, अन्नगामेसु संकंतो, तत्थवि न मुंचइ, ताहे तेसिं चिंता जाया—अम्हेहिं तत्थ न नज्जइ कोऽवि देवो वा दाणवो वा विराहितो, तम्हा तहिं चेव ठामो, आगया समाणा नगरदेवयाए विउलं असणं पाणं खाइमं साइमं उवक्खडावेंति, बलिं दाऊण समन्ततो उम्मुहा सरणं सरणं सरणंति भणंति, जं अम्हेहिं संमं न चेट्ठियं तस्स खमह, ताहे अंतलिक्खपडिवन्नो सो देवो भणइ—तुब्भे दुरप्पा निरणुकंपा तेणंतेण एहह जायह, तस्स तणं वा पाणियं वा न दिन्नं, अतो नत्थि भे मोक्खो, ततो ते ण्हाया पुप्फबलिहत्थगया भणंति—दिट्ठो कोवो, पसायमिच्छामो, ताहे भणइ—एयाणि माणुसट्ठियाणि पुंजं काऊण उवरि देवलं कारेह, सूलपाणिं च तत्थ जक्खं बलिवद्दं च एगपासे, अन्ने भणंति—तं वइल्लरूवं करेह, तस्स य हेट्ठा ताणि से अट्ठिगाणि निहणह, ताहे अचिरेण कयं, तत्थ इंदसम्मो नाम पडियरगो कओ, ताहे लोओ पंथिगाई पेच्छति पंडरट्ठियं गामं देवकुलं च, ताहे अन्ने पुच्छंति—कयरातो गामातो आगया?, भणंति—जत्थ ताणि अट्ठियाणि, एवं सो अट्ठियग्गामो जातो, तथ पुण वाणमंतरघरे जो रत्तिं परिवसइ सो तेण सूलपाणिणा वाहित्ता पच्छा रत्तिं मारिज्जइ, ताहे तत्थ दिवसं लोगो अच्छइ, पच्छा अन्नत्थ गच्छइ, इंदसम्मोऽवि धूवं दीवगं च दाउं दिवसतो जाति, इतो य तत्थ सामी आगतो दूइज्जंतगाण पासातो, तत्थ य सव्वो लोगो पिंडितो अच्छइ, सामिणा देवकुलितो अणुण्णवितो, सो भणइ—गामो जाणइ, सामिणा गामो मिलितो चेव अणुन्नवितो, गामो भणइ—एत्थ न सक्का वसिउं, सामी भणइ—तुज्झे ताव अणुजाणह, ते भणंति—ठाह, तत्थेक्केक्को वसहिं देइ, सामी नेच्छइ, जाणइ सो संबुज्झिहिइ, ततो गंता एगे कूणे पडिमं ठितो, ताहे सो इंदसम्मो चिट्ठंते चेव

मगहा गोब्बरगामे गोसंखी वेसियाण पाणामा । कुम्मागामायावण गोसाले कोवण पउट्टे ॥ ४९३ ॥

मगधजनपदे चम्पाराजगृहयोरपान्तराले गोब्बरग्रामे गोशङ्खी कौटुम्बिकः, तस्योक्तप्रकारेण वैश्यायनो नाम पुत्रः, तस्य प्राग्व्यावर्णितकारणवशतः प्राणामानाम प्रव्रज्या, ततो यथासुखं विहरतस्तस्य तत्कालं कूर्म्मग्रामे आतापनावतो गोशालः कोपनं—कोपोत्पादनमकार्षीत्, भगवता च गोशालस्यानुकम्पया रक्षा कृता, ततस्तेन भगवता सह कूर्म्मग्रामात् सिद्धार्थपुरं गच्छता अपान्तराले पूर्वोत्पाटितं तिलस्तम्बं भगवन्तमापृच्छय भगवता च सोऽयं तिलस्तम्बो निष्पन्न इति कथिते प्रवृत्तः—प्रवृत्तपरिहारः प्रागुक्तस्वरूप उपकल्पितः ॥

ततो भगवं वेसालिं नगरिं पत्तो, तत्थ संखो नाम गणराया, सिद्धत्थस्स रण्णो मित्तो, सो तं पूएइ, पच्छा वाणियगामं पहावितो, तत्थ अंतरा गंडइया नदी, तं सामी नावाए उत्तिन्नो, ते नाविया सामिं भणंति—देह मोल्लं, एवं वाहेंति, तत्थ संखरण्णो भाइणिज्जो चित्तो नाम दूइत्ताए गएल्लतो नावाकडएण एइ, ताहे तेण मोइतो पूइतो य । एनमेवार्थं सङ्क्षेपेणाह—

वेसालीए पडिमं संखो गणराय पिउवयंसो य । गण्डइआसरि तिन्नो चित्तो नावाए भगिणिसुओ ॥ ४९४ ॥

वैशाल्यां नगर्यां शङ्खो नाम गणराजः पितृवयस्यः—सिद्धार्थराजमित्रं भगवतः पूजामकरोत्, तथा भगवन्तं वणिग्ग्रामं प्रति प्रचलितमन्तरा गण्डकिकां सरितं—नदीं तीर्णं नाविकैर्धृतं चित्रः शङ्खराजस्य भगिनीसुतो नावा समागच्छन् मोचितवान् पूजितवांश्च ॥

ततो भयवं वाणियगामं गतो, तस्स बाहिं पडिमं ठितो, तत्थ आणंदो नाम समणोवासतो छट्ठंछट्ठेण आयावेइ, तस्स ओहिन्नाणं समुप्पन्नं जाव पेच्छइ तित्थयरं, वंदइ, भणति य–अहो सामिणा परीसहा अहियासिज्जंति ?, एच्चिरेण कालेण तुब्भं केवलनाणमुप्पजिहिइ, तहा पूएइ य, ततो सामी सावत्थिं गतो, तत्थ दसमं वासारत्तं विचित्तं तवोकम्मं ठाणाईहिं, ततो साणुलट्ठियं नाम गामं गतो ॥ अमुमेवार्थं सञ्जिघृक्षुराह–

वाणियगामायावण आणंदोही परीसहसहित्ति । सावत्थीए वासं चित्ततवो साणुलट्ठि बहिं ॥ ४९९ ॥

वणिग्ग्रामे आतापनमानन्दस्य, ततोऽवधिज्ञानं, तेन च स्वामिनं प्रेक्ष्योक्तवान्–अहो भगवान् परीषहसह इति, तदनन्तरं भगवान् श्रावस्त्यां वर्ष–दशमं वर्षारात्रं कृतवान्, तत्र च विचित्रं तपः, तदनन्तरं सानुलष्टिग्रामं गतः । तत्थ बाहिं भद्दपडिमं ठितो, केरिसिया भद्दा पडिमा ?, भन्नइ, पुव्वाभिमुहो दिवसं अच्छइ, पच्छा रत्तिं दाहिणहुत्तो, ततो बीए अहोरत्ते अवरेणं दिवसं उत्तरेणं रत्तिं, एवं छट्ठेणं भत्तेणं निट्ठिया, तहवि न चेव पारेइ, ततो अपारितो चेव महाभद्दं पडिमं ठाइ, सा पुण एवं–पुव्वाए दिसाए अहोरत्तं, एवं चउसुवि दिसासु चत्तारि अहोरत्ता, एवमेसा दसमेण निट्ठिआ, तहावि न पारेइ, ताहे अपारितो चेव सव्वतोभद्दं पडिमं ठाइ, सा पुण सव्वतोभद्दा एवं–इंदाए अहोरत्तं, एवम्–अग्गेईए जम्माए नेरईए वारुणीए वायव्वाए सोमाए ईसाणीए विमलाए [तमाए] तत्थ जाइं उड्ढलोइयाइं दव्वाइं ताइं निज्झायइ, तमाए हेट्ठिल्लाइं, एयमेसा दसहिं दिसाहिं बावीसइमेण समप्पइ, एवं च प्रथमायां प्रतिमायां चत्तारि यामचतुष्काणि, तद्यथा–एकं पूर्वस्यामेकमपरस्यामेकं दक्षिणस्यामेकमुत्तरस्यां, द्वितीयस्यामष्टौ यामचतुष्काणि, तद्यथा–द्वे यामचतुष्के

पूर्वस्यामेवं यावत् द्वे यामचतुष्कें उत्तरस्यां, तृतीयस्यां विंशतिर्यामचतुष्कानि, तद्यथा–द्वे यामचतुष्के पूर्वस्यामेवं यावत् द्वे यामचतुष्कें तमायामिति, पच्छा तासु समत्तासु आणंदस्स गाहावइस्स घरे बहुलियाए दासीए महाणसिणीए भायणाणि खणं करेंतीए दोसीणं छड्डेउकामाए सामी पविट्ठो, ताए भण्णइ–किं भयवं! एएण अट्ठो ?, सामिणा पाणी पसारितो, ताए परमाए सद्धाए दिन्नं, पंच दिव्वाणि पाउब्भूयाणि, ततो पच्छा तीसे सिरं पक्खालियं, अदासीकया ॥

एनमेवार्थं सङ्क्षेपेणाह—

पडिमा भद्द महाभद्द सव्वओभद्द पढमिया चउरो। अट्ठ य वीसाऽऽणंदे बहुलिय तह उज्झिया दिव्वा ॥४९६॥

प्रतिमा पूर्वं भगवता भद्रा कृता, तदनन्तरमकृतपारणकेनैव महाभद्रा, तथैव सर्वतोभद्रा, तत्र 'पढमिया चउरो' इति प्रथमायां चत्वारि यामचतुष्कानि, द्वितीयस्यामष्टौ, तृतीयस्यां विंशतिः, तदनन्तरमानन्दे–आनन्दस्य गृहे बहुलिकया दास्या 'तथेति' समुच्चये उज्झिता भिक्षा दत्ता, दिव्यानि पञ्च प्रादुरभवन् ॥

ततो भयवं बहुमेच्छं दढभूमिं गतो, तस्स वाहिं पोलासं नाम चेइयं, तत्थ अट्ठमेण भत्तेण अपाणएण ईसीपब्भारगएण काएणं, इसीपब्भारगतो नाम ईसिं ओणतो कातो, एगपोग्गलनिरुद्धदिट्ठी अणिमिसनयणे, तत्थवि जे अचित्ता पोग्गला तेसु दिट्ठिं निवेसेइ, सचित्तेहिं दिट्ठी अप्पाइज्जइ, जहा दुच्चाए, अहापणिहिएहिं गत्तेहिं सव्विंदिएहिं गुत्तेहिं दोवि पाए साहट्टु वग्घारियपाणी एगराइयं महापडिमं ठितो। एतदेवाह—

दढभूमी बहुमिच्छा पेढालग्गाममागओ भयवं। पोलासचेइयम्मि ट्ठिएगराइं महापडिमं ॥ ४९७ ॥

दृढभूमिर्नाम बहुम्लेच्छा, तत्र पेढालग्राममागतो भगवान्, तस्य बहिः पोलाशे चैत्ये–व्यन्तरायतने एकरात्रिकीं महाप्रतिमां स्थितः ॥ इतो य–सक्को देवराया भगवंतं ओहिणा आभोएत्ता सभाए सुहम्माए अत्थाणगतो हरिसितो सामिस्स नमोकारं काऊण भणति—अहो भयवं ! तेलोक्कमभिभूय ठितो, नहु सक्का केणइ देवेण वा दाणवेण वा चालेउं, तथा चाह—

सक्को य देवराया सहागओ भणइ हरिसिओ वयणं। तिन्निवि लोगऽसमत्था जिणवीरमिणं चलेउं जे ॥ ४९८ ॥

शक्रो देवराजः सभागतो हर्षितो वचनमिदं भणति–त्रयोऽपि लोका अमुं जिनं वीरं चालयितुमसमर्थाः, जे इति पादपूरणे ॥

इतो य–संगमतो नाम सोहम्मकप्पवासी देवो सक्कस्स सामाणितो अभवसिद्धितो,सो भणइ–देवराया अहो रागेण उल्लवेइ, को माणुसो देवेण न चालिज्जइ ?, अहं चालेमि, ताहे सक्को तं न वारेइ, मा जाणिहिई परनिस्साए भयवं तवोकम्मं करेइत्ति, एवं सो आगतो, तथा चाह—

सोहम्मकप्पवासी देवो सक्कस्स सो अमरिसेणं । सामाणिय संगमओ बेइ सुरिंदं पडिनिविट्ठो ॥ ४९९ ॥

तेलोक्कं असमत्थंति बेह एयस्स चालणं काउं । अज्जेव पासह इमं मम वसगं भट्ठजोगतवं ॥ ५०० ॥

अह आगओ तुरंतो देवो सक्कस्स सो अमरिसेणं । कासी य हुवसग्गं मिच्छादिट्ठी पडिनिविट्ठो ॥ ५०१ ॥

सौधर्मकल्पवासी देवः शक्रस्य सामानिकः सङ्गमको नाम, सोऽमर्षेण सुरेन्द्रं प्रति प्रतिनिविष्टः सन् ब्रवीति, यत्—

वेह इति ब्रूपे एतस्य चालनं कर्त्तुं त्रिलोकमसमर्थमिति, तन्न, अद्यैव प्रेक्षस्व इमं महावीरं मम वशंगम्—आयत्तं अकार्षीच्च स मिथ्याभ्रष्टयोगतपसमिति, एवमुक्त्वाऽथानन्तरं शक्रस्योपरि अमर्षेण सङ्गमकनामा देवस्त्वरित आगतः, अकार्षीच्च स मिथ्यादृष्टिः प्रतिनिविष्ट उपसर्गं, तद्यथा—सो अभवितो सामिस्स उवरिं वज्जधूलीवरिसं वरिसइ, जाव अच्छीणि कन्ना य सवसोयाणि पूरियाणि, निरुस्सासो जातो, तेण सामी तिलतुसभागमेत्तंपि झाणाओ न चालिओ १ ताहे संतो तं साहरित्ता कीडियाओ वज्जतुंडाओ विउव्वइ, तातो समंततो लग्गिऊण खायंति, अन्नेण सोएण सरीरगमणुपविसित्ता अन्नेण सोएण निग्गच्छंति, एवं चालिणीसरिसो कतो, तहवि भयवं न चलितो २ ताहे उद्दंसे वज्जतुंडे विउव्वइ, जे लोहियमेगेण पहारेणं णीणेंति, तेवि सुवहुं खायंति, तहवि न सक्को चालेउं ३ ताहे उण्हेला विउव्वेइ, उण्हेला णाम तेल्लपाइयाओ, तातो तिक्खेहिं तुंडेहिं अतीव दंसंति, जहा जहा सो अभवितो उवसग्गं करेइ तहा तहा सामी अतीव झाणेण अप्पाणं भावेइ, जहा 'तुमए चेव कयमिणं, न सुद्धचारिस्स दिस्सए दंडो' इच्चादि ४ जाहे न सक्कइ खोभेउं ताहे विच्छुए विउव्वइ, तहवि न सक्कइ ५, ताहे नउले विउव्वइ, ते तिक्खाहिं दाढाहिं डसंति खंडखंडाइं अवणेंति ६ पच्छा सप्पे रोसपुन्ने उग्गविसे डाहजरकारगे विउव्वइ, तेहिवि न सक्किओ चालेउं ७ ततो मूसए विउव्वइ, ते तिक्खाहिं दाढाहिं डसंति, खंडाणि य अवणेत्ता तत्थेव मुत्तपुरीसाणि वोसिरंति, तो अतुला वेयणा पाउब्भवति ८, जाहे न सक्कइ ताहे हत्थिरूवं विउव्वइ, तेण हत्थिरूवेण सुंडाए गहाय सत्तट्ठतले आगासे उक्खिवित्ता पच्छा दंतमुसलेहिं पडिच्छइ, पुणोऽवि भूमीए विंधइ चलणतलेहि य मलेइ ९ जाहे एवमवि न सक्कइ चालेउं ताहे हत्थिणियारूवं विउव्वइ, सा हत्थि-

णिया सुंडएहिं दंतेहिं विंधइ फालेइ य, पच्छा काइएण सिंचइ, चलणेहिं मलइ १० जाहे न सक्कइ ताहे पिसायरूवं विउव्वइ, तेण उवसग्गं करेइ ११ जाहे न सक्कइ ताहे वग्घरूवं करेइ, सो दाढाहिं नक्खेहिं फालेइ, खारकाइयाए सिंचेइ १२ जाहे एवमवि न सक्कइ ताहे सिद्धत्थरायरूवं विउव्वइ, सो कलुणाणि विलवइ, एहि पुत्तगा! उज्झाहि एमाइविभासा १३ ततो तिसलारूवं विउव्वइ, तत्थवि सा चेव विभासा १४ ततो जाहे एवमवि न सक्कइ ताहे सूयं विउव्वइ, किह?, सो ततो खंधवारं विउव्वइ, सो परिपेरंतेसु आवासितो, तत्थ सूयो पत्थरे अलभंतो दोण्हवि पायाण मज्झे अग्गिं जालित्ता पायाणं उवरिं उक्खलियं काउं पइउमारद्धो १५ जाहे एएणवि न सक्कइ ताहे पक्कणं विउव्वइ, सो पक्कणो ताणि पंजरगाणि बाहासु गले कण्णेसु य ओलयइ, ते सउणगा भयवंतं तुंडेहिं खायंति विंधंति सन्नं काइयं च वोसिरंति १६ ततो खरवायं विउव्वति, जेण सक्को मंदरोऽवि चालेउं, न पुण सामी चलइ, तेण आगासे उक्खिवित्ता उक्खिवित्ता पाडेइ १७ पच्छा कलंकलियावायं विउव्वइ, तेण जहा चक्काइद्धतो नंदिआवत्ते वा तहा भमाडिज्जइ १८ जाहे एवमवि न सक्कइ ताहे कालचक्कं विउव्वइ, तं विउव्विऊण उड्ढं गगणतलं गंतूण एत्ताहे मारेमित्ति मुयए वज्जसंनिभं, मंदरंपि चूरेज्जा, तेण पहारेण भयवं ताव निबुड्डो जाव अग्गनहा हत्थाणं १९ जाहे तेणवि न सक्कइ ताहे चिंतइ—न सक्को एस मारिउंति अणुलोमे उवसग्गे करेमि, ताहे पभायं विउव्वइ, लोगो सव्वो चंकमिउं पयत्तो, भणइ य—देवज्जगा! अज्जवि अच्छसि?, भयवं नाणेण जाणाइ जहा न ताव पभाइ, ततो दिव्वं देविड्ढिं दंसेइ, भणइ य विमाणगतो—तुट्ठोमि तुज्झ भयवं! किं देमि सग्गं वा ते सरीरं नेमि? तिन्निवि लोए तुज्झ पाएसु पाडेमि?। अन्ने भणंति—दिव्वं देविड्ढिं दंसित्ता मणोरमसद्दरू-

वरसगंधफासोववेते छप्पि मणोणुकूले उऊ दंसेइ, अच्छरातो सुरूवातो पेसेइ, ताहे दिव्वं बत्तीसइविहिं नट्टमुपदंसति, सामी तहेव समदरिसी, जाहे न सक्कंति ताहे पइरिक्कं काऊण विविहप्पगारमालिंगणचुंबणाइयं मोहुप्पायगमित्थीभावमुपदंसंति, हा दइय! हा निक्किव! इच्चेवमाइ जंपंति, ततो परिसंता जामेव दिसं पाउब्भूता तामेव दिसं पडिगया, एस सव्वो वीसइमो उवसग्गो ॥ एतानेव गाथाचतुष्टयेनाह—

धूली पिवीलिआओ उद्दंसा चेव तह य उण्होला। विच्छुअ नउला सप्पा य मूसगा चेव अट्ठमया ॥ ५०२ ॥
हत्थी हत्थिणियाओ पिसाअए घोररूव वग्घो य। थेरो थेरी सूओ आगच्छइ पक्कणो अ तहा ॥ ५०३ ॥
खरवाय कलंकलिया, कालचक्कं तहेव य। पाभाइयमुवसग्गे, वीसइमे होंति अणुलोमे ॥ ५०४ ॥
सामाणियदेविड्ढिं देवो दाएइ सो विमाणगओ। भणइ वरेह महरिसि! निप्फत्ती सग्गमोक्खाणं ॥ ५०५ ॥

प्रथमतो धूली विकुर्विता १ ततः पिपीलिकाः २ तदनन्तरमुद्दंशाः ३ तत उण्होलाः ४ ततो वृश्चिकाः ५ तदनन्तरं नकुलाः ६ ततः सर्पाः ७ ततो मूषकाश्चैवाष्टमाः ८ ॥ तदनन्तरं हस्ती ९ ततो हस्तिनिका १० तदनन्तरं पिशाचः ११ तदनन्तरं घोररूपो व्याघ्रः १२ ततः स्थविरः—सिद्धार्थः १३ स्थविरा—त्रिशला १४ तदनन्तरं सूतो—रसवतीकारः १५ तत आगच्छति पक्कणः—शबरः १६ ॥ तथा खरवातः १७ तदनन्तरं कलंकलिका १८ तथा चैवं कालचक्रं १९ विंशतितमः पुनरुपसर्गो भवत्यनुलोमः, स च प्रभातविकुर्वणारूपश्च, स दुर्गृहीतनामधेयो देवो विमानगतो भगवच्चित्तक्षोभनाय सामानिकदेवर्द्धिं दर्शयति, भणति च—वृणीष्व महर्षे! येन तव स्वर्गमोक्षयोर्निष्पत्तिर्भवति ॥ ५०२-५ ॥

जाहे एवमपि न तीरइ चालेउं ताहे सुट्ठुयरं पडिनिवेसं गतो, कल्ले काहित्ति पुणोवि अणुकड्ढइ, ताहे सामी वालुया नाम गामो तं पहावितो, तत्थंतरा पंच चोरसए विउवइ वालुगं च, जत्थ वहुतरं खुप्पइ, पच्छा तेहिं पव्वयगुरुतरेहिं माउलोत्ति वाहितो, सागयं च वज्जसरीरा देंति जेहिं पव्वयावि फुट्टेज्जा, ताहे वालुयागामं गतो, तत्थ भिक्खं हिंडितो, तत्थ भयवतो रूवमावरित्ता तरुणियाणं अविरइयाणं काणच्छि देइ, ततो हम्मइ, ताहे निग्गतो, भयवं सुभोमं वच्चइ, तत्थवि गतो भिक्खायरियाए, तत्थवि सामिणो रूवमावरित्ता महिलाणं अंजलिं करेइ, पच्छा तेहिंपि सामी पिट्टिज्जइ, ततो भयवं निग्गंतूण सुच्छेत्ता नाम गामो तहिं वच्चइ, तत्थ जाहे अभिगतो सामी भिक्खाए ताहे भयवतो रूवमावरित्ता विडरूवं विउवइ, तत्थ हसइ गायति य, अट्टट्टहासे मुंचति, काणेच्छियाओ य जहा विडो तहा करेइ, असिट्ठाणि य भासइ, तह विहम्मइ ॥ अमुमेवार्थं सङ्क्षिपन्नाह—

वालुयपंथे तेणा माउल पारणग तत्थ काणच्छि । तत्तो सुभूम अंजलि सुच्छित्ताए य विडरूवं ॥ ५०६ ॥

स भगवान् वालुकाग्रामं प्रति प्रधावितः, तत्रापान्तराले पथि पञ्चशतसङ्ख्याः स्तेनास्तैर्मातुल इति-पिशाच इतिकृत्वा वाहितः, ततस्तत्र-वालुकाग्रामे पारणके-पारणकनिमित्तं स्वामी भिक्षायां प्रविष्टः, ततो भगवतो रूपमावृत्य तरुणीनां काणाक्षि दर्शयति, ततस्तत्पुरुषैर्भगवान् हन्यते, ततः सुभौमग्रामे गतः, तत्र तरुणीनामुक्तप्रकारेण दर्शितवान्, सुक्षेत्रायां तु ग्रामे विटरूपं विकुर्वितवान्, सर्वत्र भगवान् कदर्थ्यते ॥ ततो सामी सुच्छेत्तातो विनिग्गंतूण मलयं नाम गामं गतो, तत्थ भयवतो उम्मत्तयं रूवं करित्ता अविरइयातो आलिंगेइ गेण्हइ य, ततो चेडरूवेहिं छारकयारेण भरि-

अम्मापियरेहिं हम्मइ, ततो
ज्जइ, लेट्ठुएहिं विहम्मइ, ताणि य वीहावेइ, ताणि य अक्खुडंतपडंताणि नासंति, ततो तेसिं
निग्गतो हत्थिसीसं नाम गामं गतो, तत्थवि भयवं भिक्खायरियाए अतिगतो, तत्थ भयवतो सिवारूवं दरिसेइ, किं
भणियं होइ ?–सागारियं से कसाइयं करेइ, ततो जाहे अविरइयं पेच्छइ ताहे उट्ठेइ पच्छा हम्मइ, ततो भयवं चिंतेइ–एस
गाढमुड्डाहं करेइ अणेसणं च, तम्हा गामं चेव न पविसामि, बाहिं अच्छामि, ततो बाहिं गामस्स निग्गतो, ततो जतो
महेलाजूहं ततोहुत्तो सागारिएण कसाइएण अच्छइ, तहाठितो सामी सक्केण पूइतो, ततो तप्पभिइं ढोंढसिवो पवत्तो,
ताहे सामी चिंतेइ–एस नितरामुड्डाहं करेइ, तम्हा गामं चेव न अतीमि, एगंते अच्छइ, ताहे संगमतो हसइ, न सक्केमि
तुमं ठाणातो चालेउं, पेच्छामि ता गामं अतीहि, ताहे सक्को आगतो पुच्छइ–जत्ता भे ? जवणिज्जं च भे ? अवाबाहं
च भे ? इति, वंदित्ता पडिगतो ॥

मलए पिसायरूवं सिवरूवं हत्थिसीसए कासी । ओहसणं पडिमाए मसाण सक्को जवणपुच्छा ॥ ५०७ ॥

भगवतः उन्मत्तकलक्षणमकार्षीत्, तदनन्तरं हस्तिशीर्षके शिवरूपं प्रागुक्तस्वरूपं, ततः
मलये ग्रामे पिशाचरूपं–
श्मशाने प्रतिमायां कायोत्सर्गस्थितस्य अपहसनं यथा न शक्यसे त्वं स्थानाच्चालयितुमिति पश्यामि यदि ग्राममागच्छ-
तीति, ततः शक्र आगतस्तस्य यापनपृच्छाऽभवत् ॥ ताहे सामी तोसलिं गतो, तत्थ बाहिं पडिमं ठितो, ततो सो अभ-
वितो चिंतेइ–एस गामं न पविसइ, ता एत्थवि से ठियस्स करेमि उवसग्गं, ततो खुड्डगरूवं विउव्वित्ता संधिं छिंदइ
उवगरणेहिं गहिएहिं वतीए, तत्थ गहितो सो भणइ–मा मं हणह, अहं न जाणामि, आयरिएण अहं पेसितो, कहिं सो ?,

एस वाहिं अमुगे उज्जाणे, तत्थ हम्मइ वज्झइ, मारिज्जउत्ति वज्झो नीणितो, तत्थ महाभूइलो नाम इंदजालितो, तेण सामी कुंडग्गामे दिट्ठपुवो, ताहे सो मोएइ, साहइ य जहा एस सिद्धत्थरायपुत्तो, मुक्को खामितो, खुड्डुतो मग्गितो, न दिट्ठो, नायं जहा देवो से उवसग्गं करेइ, तथा चाह—

तोसलि खुड्डुगरूवं संधिच्छेदो इमोत्ति वज्झो य । मोएइ इंदजालित तत्थ महाभूइलो नामं ॥ ५०८ ॥

ततो भगवान् तोसलिग्रामं गतः, तत्र सङ्गमकः क्षुल्लकरूपं विकुर्वितवान्, तेन च गृहीतैरुपकरणैः सन्धिच्छेदो कृतः, ततः स आरक्षकैर्गृहीतः प्राह—अयं मां कारितवान्, ततः स्वामी वध्य आज्ञप्तः, तत्र महाभूतिलो नाम इन्द्रजालिको मोचितवान् ॥ ततो सामी मोसलिं गतो, तत्थ वाहिं पडिमं ठितो, तत्थवि सो देवो खुड्डगरूवयं विउवित्ता संधिमग्गं पलोएइ पडिलेहेइ य, सामिस्स पासे सवाणि उवगरणाणि विउवइ, ताहे सो खुड्डगो गहितो, कीस एत्थ सोहसि ?, भणइ—मम धम्मायरितो रत्तिं खत्तं खणिहिइ, तो मा कंटए भंजिहीति मग्गं सोहेमि, सो कहिं ?, तेण कहियं—अमुगे उज्जाणे चिट्ठइ, ते गया, दिट्ठो सामी, ताणि य उवगरणाणि समीवे, ततो गहितो, आणीतो, तत्थ सुमागहो नाम रट्ठितो सामिस्स पिउवयंसो, सो मोएइ, ततो सामी तोसलिं गतो, तत्थवि तहेव गहितो, नवरं उक्कलंबिउमाढत्तो, तत्थ से रज्जू छिन्नो, एवं सत्तवारा छिन्नो, ताहे सिट्ठं तोसलियस्स, सो भणइ—एस अचोरो निद्दोसो, तं खुड्डुगं मग्गह, सो मग्गितो, न दीसइ, नायं जहा से देवो उवसग्गं करेइ ॥ अमुमेवार्थमाह—

मोसलि संधिसमागम मोएई रट्ठिओ पिउवयंसो । तोसलिय सत्त रज्जू वावत्ती तोसली मुक्खो ॥ ५०९ ॥

भगवान् मोसलिं गतः, तत्र सन्धिमार्गशोधनाय क्षुल्लकस्य समागमः, ततो भगवतो ग्रहणं, राष्ट्रिकश्च पितृवयस्यो भगवन्तं मोचयति, ततो भगवान् तोसलिकग्रामं गतः, तत्र पूर्वप्रकारेण गृहीतः, ऊर्ध्वमवलम्ब्यमाने च भगवति सप्त वारान् रज्ज्वा व्यापत्तिः, ततस्तोसलिकस्य क्षत्रियस्य कथनं, भगवतो मोक्षः॥

ततो सामी सिद्धत्थपुरं गतो, तत्थ तेण अभविएण तहा कयं जहा भगवं तेणोत्ति गहितो, तत्थ कोसितो नाम आसवाणियओ, तेण कुंडपुरे सामी दिट्ठेल्लओ, तेण मोयावितो, ततो सामी गोउलं गतो, तत्थ य तद्दिवसं छणो, सव्वत्थ परमन्नं उवक्खडियं, चिरं च तस्स देवस्स उवसग्गं काउं ठितस्स, सामी चिंतेइ–गया छम्मासा, सो गतो होज्जत्ति भिक्खायरियाए अतिगतो, सो अणेसणं करेइ, सामी उवउत्तो पासइ, ताहे अद्धहिंडितो नियत्तो, बाहिं पडिमं ठितो, सो य पावो सामिं ओहिणा आभोएइ—किं भग्गपरिणामो नवत्ति, ताहे सामी तहेव सुद्धपरिणामो छज्जीवहियं झायइ, तो तहारूवं दट्ठुं आउट्टो, न तीरए खोभेउं, जो एच्चिरेणवि कालेण छहिं मासेहिं न चलितो सो दीहेणवि कालेण न सक्को चालेउं, ताहे पाएसु पडितो भणइ–सच्चं जं सक्को भणइ, सव्वं खामेइ, भयवं! अहं भग्गपइण्णो, तुज्झे सम्मत्तपतिण्णा॥

अमुमेवार्थं सङ्क्षेपत आह—

सिद्धत्थपुरे तेणुत्ति कोसिओ आसवाणिओ मुक्खो। वयगाम हिंडऽणेसण बीयदिणे बेइ उवसंतो॥ ५१०॥

भगवान् सिद्धार्थपुरे गतः, तत्र पूर्वप्रकारेण स्तेन इति गृहीतः, तत्र च कोशिको नाम अश्ववणिक्, तेन मोक्षः कृतः,

ततो द्वितीयदिने व्रजग्रामे गोकुले भिक्षार्थं हिण्डते, तत्र अनेषणा, ततो भगवान् हिण्डनान्निवृत्तः, ततः स उपशान्तो ब्रवीति ॥ किं ब्रवीति इत्यत आह—

वच्चह हिंडह न करेमि किंचि इच्छा न किंचि वत्तव्वो । तत्थेव वच्छवाली थेरी परमन्न वसुहारा ॥ ५११ ॥

अत ऊर्ध्वं व्रज स्वेच्छया ग्रामनगरेषु, हिंडस्व भिक्षार्थं कुलेषु, न करोमि कमप्युपसर्गं, स्वामी वक्ति-भोः संगमक ! नाहं कस्यापि वक्तव्योऽस्मि, इच्छया यामि नवा, ततः स्वामी द्वितीयदिवसे तत्रैव भिक्षार्थं गोकुलेष्वटति, तत्र वत्सपाली स्थविरा, तया उत्सवदिवसे क्षीरं न लब्धं, ततो द्वितीयदिवसे क्षीरं याचित्वा पायसं राद्धं, तेन भगवान् प्रतिलाभितः, अन्ये वदन्ति-पर्युषितेन पायसेन प्रतिलाभितः, ततः पञ्च दिव्यानि प्रादुर्भूतानि ॥

छम्मासे अणुवद्धं देवो कासीय सो उ उवसग्गं । दट्ठूण वयग्गामे वंदिय वीरं पडिनियत्तो ॥ ५१२ ॥

एवं सोऽभविकः सङ्गमकनामा देवः षण्मासान् अनुबद्धं-सन्ततं उपसर्गमकार्षीत्, दृष्ट्वा च व्रजग्रामे गोकुले परिणाममभग्नं उपशान्तो वीरं-महावीरं वन्दित्वा प्रतिनिवृत्तः ॥

इतो य-सोहम्मे कप्पे सव्वे देवा तद्दिवसं उव्विग्गमणा अच्छंति, संगमतो य सोहम्मं गतो, तत्थ सक्को तं दट्ठूण परम्मुहो ठितो भणइ देवे-भो ! सुणह, एस दुरप्पा, न एएण ममवि चित्तरक्खा कया, नवि अन्नेसिं देवाणं, जतो तित्थगरो आसातितो, न एएण अम्हं कज्जं, असंभासो, निव्विसतो उ कीरउ, ततो निच्छूढो सह देवीहिं, सेसा देवा इंदेण वारिया,

संगमकस्य
निर्वासनं
हर्यादिकृ-
ता सुख-
पृच्छा

देवो चुतो महिड्ढी सो मंदरचूलियाए सिहरंमि । परिवारितो सुरवहूहिं तस्स य अयरोवमं सेसं ॥ ५१३ ॥
स सङ्गमकनामा महर्द्धिको देवः स्वर्गात् च्युतः—भ्रष्टः सन् परिवारितः सुरवधूभिर्गृहीताभिर्मन्दरचूलिकायाः
शिखरे–उपरितनविभागे यानकेन विमानेनागत्य स्थितः, तस्य एकमतरोपमं–सागरोपमं आयुषः शेषं ॥
ततो सामी आलंभियं गतो, तत्थ हरी विज्जुकुमारिंदो एइ, सो सामिं वंदित्ता पूइऊण य भणइ–भगवं! पियं पुच्छामो,
निच्छिन्ना उवसग्गा, बहुं गयं थेवं सेसं, अचिरेण भे केवलनाणं समुप्पज्जिहिइ, ततो सेयवियं गतो, तत्थ हरिस्सहो पिय-
पुच्छगो एइ, ततो सावत्थिं गतो, बाहिं पडिमं ठितो, तत्थ खंदपडिमाए लोगो महिमं करेइ, सक्को ओहिं पउंजइ,
जाव पेच्छइ खंदपडिमाए पूयं कीरमाणं, सामिं नाढायंति, सक्को उइन्नो, सावि खंदपडिमा रहं विलग्गिहिइ, ताहे
सक्को तं पडिमं अणुपवेसिऊण भयवंतेण पट्ठितो, लोगो तुट्ठो भणइ—देवो सयमेव विलग्गिहिइ, जाव सामिं गंतूण
वंदइ, ताहे लोगो आउट्टो, एसो देवदेवोत्ति महिमं करेइ जाव अच्छितो ॥ अमुमेवार्थं सङ्क्षिपन्नाह—
आलभियाए हरिविज्जू जिणस्स भत्तीइ वंदिउं एइ । भयवं पियपुच्छा जिय उवसग्गत्ति थेवमवसेसं ॥ ५१४ ॥
हरिसह सेयवियाए सावत्थी खंद ओयरिउं पडिमा । लोगो आउट्टिओ (त्थ) वंदे सक्को उ पडिमाए ॥ ५१५ ॥
आलभिकायां नगर्यां भगवतः प्रियपृच्छको हरिनामा विद्युत्कुमारेन्द्र आगच्छति, वदति च–जिता भगवन्! सर्वे
उपसर्गाः, स्तोकमवशेषं तिष्ठति, ततो भगवान् श्वेतम्व्यां नगर्यां गतः, तत्र हरिस्सहनामा विद्युत्कुमारराजः प्रियपृच्छक
आगतः, ततः श्रावस्तीं गतो भगवान्, तत्र स्कन्दप्रतिमां लोकेन पूज्यमानां शक्रोऽवलोक्य तां प्रतिमामनुप्रविश्य

भगवन्तं वन्दितवान् ॥ ततो सामी कोसंबिं गतः, तत्थ चंदसूरा सविमाणा महिमं करेंति पियं च पुच्छंति, वाणारसीए सक्को पियं पुच्छइ, रायगिहे ईसाणो, मिहिलाए जणगो राया पूयं करेइ, धरणो य पियपुच्छंतो एइ, तथा चाह—

कोसंबि चंदसूरोअरणं वाणारसीइ सक्को उ । रायगिहे ईसाणो मिहिला जणओ अ धरणो अ ॥ ५१६ ॥

कोशाम्ब्यां चन्द्रसूरावतरणं, वाराणस्यां शक्रः प्रियं पृच्छति, राजगृहे ईशानः—ईशानकल्पेन्द्रः, मिथिलायां जनको राजा धरणश्च—नागकुमारेन्द्रः पूजां कृतवान्,

वेसालिवास भूयाणंदो चमरुप्पातो य सूसुमारपुरे । भोगपुर सिंदिकंटक माहिंदो खत्तिओ कुणइ ॥ ५१७ ॥

ततो वैशालीनगरीमगमत्, तत्रैकदेशे वर्षारात्रः, तत्र भूतानन्दो—नागकुमारेन्द्रः प्रियं पृच्छति, ज्ञानं च व्यागृणोति, यथा भगवन् ! स्तोककालमध्ये केवलज्ञानमुत्पत्स्यते, तदनन्तरं च भगवान् सूसमारपुरं गतः, तत्र भगवन्निश्रया चमरोत्पातो यथा व्याख्याप्रज्ञप्तौ तथा वक्तव्यः, ततो भोगपुरं स्वामी गतवान्, तत्र माहेन्द्रो नाम क्षत्रियः, सिन्दीकन्देनाहन्मीति भगवन्तं प्रति धावितः, सिन्दी नाम खर्जूरी, स एवं उपसर्गं करोति, एत्थंतरे सणंकुमारो देविंदो एइ, तेण धाडितो तासितो य, पियं च पुच्छइ ॥ ततो सामी नंदिगामं गतो, तत्थ नन्दी नामं भगवतो पियमित्तो सो महिमं करेति, ततो मिंढियगामेति, तत्थ गोवो उवसग्गं काउमारद्धो, जहा कुमारगामे तहेव वालरज्जुएण आहणंतो सक्केण तासितो ॥ एतदेवाह—

वारण सणंकुमारे नंदियगामे पिउसहा वंदे । मेंढियगामे गोवो वित्तासणयं च देविंदो ॥ ५१८ ॥

वारण-निषधेन माहेन्द्रक्षात्रयस्य सनत्कुमारो देवेन्द्रोऽकोपीत्; नन्दिग्रामे पितृसखा-पितृवयस्यो भगवन्तं वन्दते, मिण्ढिकग्रामे गोपस्योपसर्गं कर्त्तुं प्रवृत्तस्य वित्रासनकं देवेन्द्रः—शक्रोऽकरोत्।

ततो सामी कोसंबिं गतो, तत्थ सयाणितो राया मियावई देवी तच्चावादी धम्मपाढगो सुगुत्तो अमच्चो नंदा से भारिया, सा य समणोवासिया, ततो सड्ढित्ति मियावतीए वयंसिया, तत्थेव नगरे धणावहो सेट्ठी, तस्स मूला भारिया, एवं ते सकम्मसंपउत्ता अच्छंति, सामी य पोसबहुलपाडिवए इमं एयारूवं अभिग्गहं अभिगेण्हइ चउविहं, तंजहा-दव्वतो खेत्ततो कालतो भावतो, दव्वतो कुम्मासे सुप्पकोणेणं, खेत्ततो एलुगं विक्खंभइत्ता कालतो नियत्तेसु भिक्खायरेसु भावतो जइ रायधूया दासत्तणं पत्ता नियलबद्धा मुंडियसिरा अट्ठमभत्तिया एवं कप्पइ, सेसं न कप्पइ, एवं अभिग्गहं घेत्तूण कोसंबीए अच्छइ, दिवसे २ भिक्खायरियं फुसइ, किंनिमित्तं ?, बावीसं परिसहा भिक्खायरियाए उदिज्जंति, एवं चत्तारि मासे कोसंबीए हिंडइ, ताहे नंदाए घरमणुपविट्ठो, तीए सामिणो परेण आयरेण भिक्खा नीणिया, सामी निग्गतो, सो अद्धितिं पकया, ताहे दासीतो भणंति-एस देवज्जगो दिवसे दिवसे एत्थ एइ, ताहे ताए नायं-नूणं भयवतो अभिग्गहो कोइ, ततो निरायं चेव अद्धिती जाया, सुगुत्तो अमच्चो आगओ, ताहे सो भणइ-किं अद्धितिं करेसि ?, तीए कहियं, भणइ य-किं अम्हं अमच्चत्तणेणं ? एच्चिरं कालं सामी भिक्खं न लहइ ? किं वा तेण विन्नाणेण जइ एयं अभिग्गहं न याणसि ?, तेण आसासिया, कल्ले दिवसे जहा भिक्खं लब्भइ तहा करेमि, एयाए कहाए वट्टमाणीए विजया नाम पडिहारी मियावतीए भणिया सा केणइ

कारणेण आगया, सा तं उल्लावं सोऊण मियावतीए साहेइ, मियावईवि तं सोऊण महया दुक्खेण अभिभूया, सा चेडगस्स धूया, अतीव अद्धितिं पकया, राया य आगतो पुच्छति, भणइ—किं तुज्झ रज्जेण मए वा?, अज्ज किर चउत्थो मासो सामिस्स हिंडंतस्स भिक्खाभिग्गहो न नज्जइ, न वा जाणसि एत्थ विहरंतं, तेण आसासिया, तह करेमि जहा कल्ले लभइ, ताहे सुगुत्तं अमच्चं सद्दावेइ अंबाडेइ य, जहा—तुमं आगयं सामिं न याणसि ?, अज्ज किर चउत्थो मासो हिंडंतस्स, ताहे तच्चावादी सद्दावितो, सो पुच्छितो सयाणिएणं—तुज्झं धम्मसत्थे सव्वपासंडाण आयारा आगया, ते तुमं साह, इमोवि अमच्चो भणितो—तुमंपि बुद्धिबलितो ता साह, ते भणंति—बहवे अभिग्गहा, न नज्जइ कोऽभिप्पाओ ?, दव्वजुत्तो खित्तजुत्तो कालजुत्तो भावजुत्तो सत्त पिंडेसणातो सत्त पाणेसणाओ, ताहे रण्णा सव्वत्थ संदिट्ठा पाणेसणा भत्तेसणाओ य, लोगेणवि परलोगकंखिणा कयातो, सामी आगतो, न य तेहिं पगारेहिं गेण्हइ, एवं ताव इयं ॥ इतो य सयाणितो चंपं पहावितो, दहिवाहणं गेण्हामि, नावाकडएणं गओ एगाए रत्तीए, अचिंतिया नगरी वेढिया, तत्थ दहिवाहणो पलातो, रण्णा य जग्गहो घोसितो, एवं जग्गहे घुट्ठे दहिवाहणस्स रण्णो धारिणी देवी तीसे धूया वसुमई, सा सह धूयाए एगेण उट्टिएण गहिया, राया नियत्तो, सो उट्टितो चिंतेइ भणइ य—एसा मे भज्जा, इमं च दारियं विक्केस्सं, सा देवी तेण माणसिएण दुक्खेण धूयादुक्खेण य एसा मे धूया न नज्जई किं पाविहिइत्ति अंतरा चेव कालगया, पच्छा तस्स उट्टियस्स चिंता जाया, दुट्ठु मए भणियं—महिला ममं होहितित्ति, एयं धूयं भणामि, मा एसावि मरिहिइ, तो मे मोल्लंपि न होहिइ, ताहे तेण अणुयत्तंतेण आणीया—वीहीए उड्डिया, धणावहेण दिट्ठा, अणलंकियलावन्ना अवस्सं

रण्णो ईसरस्स वा धूया एसा मा आवइं पावउत्ति जत्तियं सो भणइ तत्तिएण मोल्लेण गहिया, वरं तेण समं गमणागमणं मे होहिइत्ति, नीया नियघरं, कासि तुमंति पुच्छिया न साहइ, पच्छा तेण धूयत्ति गहिया, एवं सण्णाणिया, मूलावि तेण भणिया—एसा तुब्भं धूया, एवं सा तत्थ जहा नियघरे तहा सुहंसुहेणं अच्छइ, तीएवि सो सदासपरियणो लोगो सीलेण विणएण य सवो अप्पणिज्जो कतो, ताहे ताणि सवाणि भणंति—अहो इमा सीलचंदणत्ति, ताहे से बिइयंपि नामं कयं चंदणत्ति, एवं कालो वच्चइ, ततो ताए घरिणीए अवमाणो जातो मच्छरिज्जइ य, को जाणइ कयाइ एस एयं पडिवज्जेजा? ताहे अहं घरस्स असामिणी भविस्सामि, तीसे वाला अतीव दीहा रमणिज्जा किण्हा य, सो सेट्ठी मज्झण्हं जणविरहिए आगतो जाव नत्थि कोऽवि जो पाए पक्खालेइ, ताहे सा पाणियं गहाय निग्गया, तेण वारिया, सा मङ्गाए धोविउं पवत्ता, ताए धोवंतीए वाला वद्धेल्लगा छुट्टा, मा चिक्खल्ले पडिहिंतित्ति तस्स सेट्ठिस्स हत्थे लीलाकट्ठं तेण धरिया बद्धा य, मूला य ओलोयणगया पेच्छइ, तीए णायं—विणट्ठं कज्जं, जइ एयं कहवि परिणेइ तो ममं एस णत्थि, जाव तरुणतो वाही ताव तिगिच्छामि, सेट्ठिंमि विणिग्गए तीए ण्हावियं वाहरावित्ता सा चंदणा बोडाविता नियलेहि य बद्धा पिट्टिया य, वारियतो अणाए परियणो—जो साहइ वाणियस्स सो मे णत्थि, सा घरे छोढूण तस्स घरस्स दारं दिन्नं तालयं च, सो सेट्ठी आगतो पुच्छइ—कहिं चंदणा?, न कोइ साहइ भएण, सो जाणइ—नूणं रमइ उवरिं वा चिट्ठइ, एवं रत्तिंपि पुच्छिया, जाणइ—सा नूणं सुत्ता, विइयदिवसेवि न दिट्ठा, तइयदिवसे घणं पुच्छइ, साहेह मा भे मारेह, ततो थेरदासी एक्का चिंतेइ—किं मम जीविएण?, सा जीवउ वराई, ताए कहियं—अमुयघरे, तेण उग्घाडिया दारा, पेच्छइ छुहाहयं

संवृणं, ततो कुरं पगहितो, जाव सयाणतीए नत्थि, ताहे कुम्मासा दिट्ठा, ते सुप्पकोणे घेत्तूण तीसे दिण्णा, सेट्ठी लोहकारघरं गतो, णियलाणि छिंदावेमि, ताहे सा दुक्खिणीय कुलं संभारिउमारद्धा एलुगं विक्खंभइत्ता, तेहिं पुरतो करेहिं अब्भंतरतो रोयइ, सामी आगतो, ताए चिंतियं–सामिस्स देमि, मम एतं अहम्मफलं, भणइ–भगवं ! कप्पइ ?, सामिणा पाणी पसारितो, चउव्विहोऽवि पुण्णो अभिग्गहो, पंच दिव्वाणि पाउब्भूयाणि, ते वाला तदवत्था चेव जाया, णियलाणि फिट्टाणि, सोवण्णयाणि णेउराणि जायाणि, देवेहि य सव्वालंकारा कया, सक्को देवराया आगतो, वसुहाराए पडियाए अद्धतेरस हिरण्णकोडी, कोसंबीए य सव्वतो उग्घुटुं–केणइ पुण्णमंतेण अज्ज सामी पडिलाभितो, ताहे राया संतेउरपरियणो आगतो, तत्थ संपुलो नाम दहिवाहणस्स कंचुकी, सो तया बंधितो आणीतो, सोऽवि तत्थ आगतो, तेण सा चंदणा पच्चभिजाणिया, पच्छा पाएसु पडिऊण परुण्णो, राया पुच्छति–का एसा ?, तेण से कहियं, जहा–एसा दहिवाहणस्स रण्णो दुहिया, मियावती भणइ–मम भगिणीधूया, अमच्चोऽवि सपत्तीतो आगतो, सामी नीयइ, सामी निग्गतो, ताहे राया तं वसुहारं पगहितो, सक्केण वारितो, जस्स एसा देइ तस्स आभवइ, सा पुच्छिज्जा भणइ–मम पिउणो, ताहे सक्केण सयाणितो भणितो–एसा चरमसरीरा एवं संगोवाहि जाव सामिस्स नाणं उप्पज्जइ, एसा पढमसिस्सिणी, ताहे कण्णंतेउरे छूढा संवड्ढइ, छम्मासा तया पंचहिं दिवसेहिं ऊणगा अभिग्गहस्स गहियस्स जाया जद्दिवसं सामिणा भिक्खा लद्धा, सावि य मूला लोगेण अंबाडिया हीलिया य । अमुमेवार्थं संक्षिपन्नाह—

कोसंबीइ सयाणिअ अभिग्गहो पोसबहुलपाडिवए । चाउम्मासि मिगावइ विजय सुगुत्तो अ नंदा य ॥५१९॥

तच्चावाई चंपा दहिवाहण वसुमई अ बीअनामा। धणवह मूलाऽऽलोअण संपुल दाणे अ पव्वज्जा ॥ ५२० ॥



ततो भगवान् कौशम्बीं नगरीं गतः, तत्र शतानीको राजा मृगापतिर्देवी, भगवता च पौषमासबहुलपक्षे प्रतिपदि अभिग्रहो गृहीतः, प्रतिदिवसं च भिक्षामटतो भगवतश्चत्वारो मासा अतिक्रान्ताः, अन्यदा भगवान् नन्दाया गृहे गतः, तया आनीता भिक्षा न गृहीता, ततः सुगुप्तोऽमात्य आगतः, तयोश्च भगवद्भिक्षाविषये संलापे मृगापतिदेवीसत्का विजया प्रतीहारी समागता मृगापतिदेव्या अचकथत्, तया प्रोत्साहितेन राज्ञा तथ्यवादी धर्म्मपाठक आकारितः, सोऽभिग्रहान् विचित्रान् कथितवान्। ततश्च चम्पायां दधिवाहनो राजा, तस्य सुता चन्दना द्वितीयनाम्ना वसुमती, सा कोशाम्ब्यामौष्ट्रिकेणानीता, धनावहेन गृहीता, अन्यदा धनावहस्य पादौ प्रक्षालयन्तीं तां तस्याः केशपाशं च धनावहेन लीलाकम्बिकया संयम्यमानं मूला अवलोकनगता प्रलोकितवती, ततो मात्सर्यात् तया चन्दना निगडिता, ततो भगवतो दाने सम्पुलनामा कञ्चुकी चन्दनाया मिलितः, ततो भगवतः समीपेऽनया प्रव्रज्या गृहीष्यते इति शक्रवचनतो राज्ञा चन्दना सङ्गोपिता ॥

ततो सामी कोसंबीतो निग्गंतूण सुमंगलं नाम गामं गतो, तत्थ सणंकुमारो एइ वंदति पियं च पुच्छइ, तत्थ पढमं सिंदीकंदगनिवारणत्थमागतो संपयं पुण पियपुच्छतोत्ति। ततो सामी सुच्छेत्तं गतो, तत्थ माहिंदो पियपुच्छतो एइ, ततो सामी पालगं नाम गामं गतो, तत्थ वाइलो नाम वाणिओ जत्ताए पधावितो सामिं पेच्छइ, ततो सो अमंगलंतिकाऊण असिं गहाय पधावितो एयस्स फलउत्ति, तत्थ सहत्थेण सिद्धत्थेण सीसं छिन्नं। अमुमेवार्थमाह—

तत्तो अ सुमंगल सणंकुमार सुच्छित्त एइ माहिंदो । वालुय वाइल वणिए अमंगलं अप्पणो असिणा ॥ ५२१ ॥

ततो भगवान् सुमङ्गलं नाम ग्रामं गतः, तत्र सनत्कुमारो देवेन्द्रः प्रियपृच्छक आगतः, ततः सुक्षेत्रायां भगवान् जगाम, तत्र माहेन्द्रः प्रियपृच्छक आगमत्, तदनन्तरं पालकं नाम ग्रामं स्वामी गतः, तत्र वाइलो नाम वणिक् देशान्तरं गच्छन् अमङ्गलमितिकृत्वा भगवत उपरि खड्गमुद्गीर्य प्रधावितः, तत आत्मना स्वहस्तेन असिना विनाशितः ॥

ततो सामी चंपं नयरिं गतो, तत्थ सोमदत्तमाहणस्स अग्गिहोत्तसालाए वसहिं उवगतो, तत्थ चाउम्मासं खमइ, तत्थ दुवे जक्खा पुन्नभद्दमाणिभद्दा रत्तिं पज्जुवासंति, चत्तारि मासे रत्तिं रत्तिं पूयं करेंति, ताहे सो चिंतेइ-किंपि जाणइ एस तो देवा महेंति, ताहे विन्नासणनिमित्तं पुच्छइ-को ह्यात्मा?, भगवानाह-योऽहमित्यभिमन्यते, स कीदृशः?, सूक्ष्मोऽसौ, किं तत् सूक्ष्मं?, यदिन्द्रियैर्ग्रहीतुं न शक्यते इति, तथा किं तं ते पदेसणयं? किं पच्चक्खाणं?, भगवानाह-साइदत्ता! दुविहं पदेसणगं-धम्मियं अधम्मियं वा, पदेसणगं नाम उपदेशः, पच्चक्खाणे दुविहे-मूलपच्चखाणे उत्तरपचक्खाणे य, एएहिं पएहिं तस्स उवगयं । अमुमेवार्थमाह—

चंपा वासावासं जक्खिंदो साइदत्त पुच्छा य । वागरण दुह पएसण पच्चक्खाणे अ दुविहे अ ॥ ५२२ ॥

भगवान् चम्पायां वर्षावासं कृतवान्, तत्र द्वौ यक्षेन्द्रौ भगवतो महिमां कृतवन्तौ, ततः स्वातिदत्तस्य ब्राह्मणस्य पृच्छा, भगवतो व्याकरणं, द्विविधं प्रदेशनं द्विविधं च प्रत्याख्यानमिति ॥ ततो भयवं चंपातो निग्गतो जंभियगामं

गतो, तत्थ सक्को आगतो वंदित्ता पूइत्ता नट्टविहिं उवदंसित्ता वागरेइ-जहा एत्तिएहिं दिवसेहिं केवलनाणमुप्पज्जिहिइ, ततो सामी मिंढियगामं गतो, तत्थ चमरो वंदतो पियपुच्छओ य एइ, वंदित्ता पुच्छित्ता य पडिगतो। अमुमेवार्थमाह–

जंभियगामे नाणस्स उप्पया वागरेइ देविंदो। मिंढियगामे चमरो वंदण पियपुच्छणं कुणइ ॥ ५२३ ॥

जृम्भिकग्रामे देवेन्द्रः-शक्रो ज्ञानस्योत्पादं व्यागृणाति, तथा मिण्ढिकग्रामे चमरो वंदनं प्रियपृच्छनं करोति ॥

ततो भयवं छम्माणिं नाम गामं गतो, तस्स बाहिं पडिमं ठितो, तत्थ सामिसमीवे गोवो गोणे छड्डेऊण गामं पविट्ठो, दोहणाणि काऊण निग्गतो, ते य गोणा अडविं पविट्ठा चरियव्वगस्स निमित्तं, ताहे सो आगतो पुच्छइ-देवज्जग! कहिं ते वइल्ला?, भयवं मोणेण अच्छइ, ताहे सो परिकुवितो भयवतो कण्णेसु कडसलागातो छुभइ, एगा इमेण कन्नेण एगा इमेण कन्नेण जाव दोन्निवि मिलिया, ताहे मूले भग्गाओ, मा कोइ उक्खणिहिइ, केइ भणंति-एक्का चेव जाव इयरेण कण्णेण निग्गया तओ भग्गा। कण्णेसु तऊ तत्तं गोवस्स कयं तिविट्ठुणा रन्ना। कन्नेसु वद्धमाणस्स तेण छूढा कडसलागा ॥ १ ॥ भयवतो तद्दारवेयणिज्जं कम्मं उइन्नं, ततो सामी मज्झिमं पावं गतो, तत्थ सिद्धत्थो नाम वाणियतो, तस्स घरमागतो, तस्स य मित्तो खरतो नाम वेज्जो, ते दोऽवि सिद्धत्थघरे अच्छंति, सामी भिक्खस्स पविट्ठो, वाणियतो वंदइ थुणइ य, वेज्जो तित्थयरं पासिऊण भणइ-अहो भयवं सव्वलक्खणसंपुन्नो किंतु ससल्लो, ततो सो वाणियतो संभंतो भणइ, पलोएहि कहिं सल्लो?, तेण पलोयंतेण दिट्ठो कण्णेसु, तेण वाणिएण भन्नइ-नीणेहि एयं महातवसिस्स, पुन्नं होहिइ तववि मज्झवि, भणइ-निप्पडिकम्मो भयवं न इच्छइ, ताहे पडियरावितो जाव दिट्ठो उज्जाणे ताव पडिमं

ठितो, ते ओसहाणि गहाय गता, तत्थ भयवं तेल्लदोणीए निवण्णावितो मक्खितो य, पच्छा बहुएहिं पुरिसेहिं जंतितो अक्कंतो य, पच्छा संडासएण गहाय कड्ढियातो, तत्थ सरुहिरातो सलागातो अंछियातो, तासु य अच्छिज्जंतीसु भगवया आरसियं, ते य मणूसे उप्पाडित्ता उट्ठितो, महाभेरवं तत्थ उज्जाणं जायं, देउलं च, पच्छा संरोहणी ओसही दिण्णा, ततो ताहे चेव भयवं पउणो जातो, ततो वंदित्ता खामित्ता य गता। एतदेवाह—

छम्माणि गोवकडसल पवेसणं मज्झिमाइ पावाए। खरओ विज्जो सिद्धत्थ वाणिओ नीहरावेइ ॥ ५२४ ॥

भगवान् छम्माणियानाम ग्रामं गतः, तत्र गोपेन भगवतः कर्णयोः कटशलाकाप्रवेशनं कृतं, ततो भगवान् मध्यमपापायां गतः, तत्र खरको वैद्यस्तत्पार्श्वात् सिद्धार्थनामा वणिक् ते कटशलाके निर्हारयति।

इह सवेसु किर उवसग्गेसु कयरे दुविसहा ?, उच्यते—कडपूयणासीयं कालचक्कं एयं च सल्लं निकड्ढिज्जंतं, अहवा जहन्नगाण उवरिं कडपूयणासीयं, मज्झिमाण कालचक्कं, उक्कोसगाणमुवरिं सल्लुद्धरणं। गोवेण आरद्धा उवसग्गा गोवेण णिट्ठिया। एसो गोवो सत्तमिं गतो, खरतो सिद्धत्थो य एए दोऽवि तिव्वमवि वेयणमुदीरंता विसुद्धता देवलोगं गता। ततो सामी जंभियगामं गतो, तस्स बहिया वेयावत्तस्स चेइयस्स अदूरसामंते उज्जुवालियाए नदीए तीरे उत्तरिल्ले कूले सामागस्स गाहावइस्स कट्ठकरणे, कट्ठकरणं नाम छेत्तं, सालपायवस्स अहे उक्कुडुयनिसज्जाए गोदोहियाए आयावणाए आयावेमाणस्स छट्ठेण भत्तेणं अपाणएणं बारसहिं संवच्छरेहिं वइक्कंतेहिं तेरसमस्स संवच्छरस्स अंतरा वट्टमाणस्स वइसाहसुद्धदसमीए पाईणगामिणीए छायाए पमाणपत्ताए पोरिसीए सुवएणं दिवसेणं विजएणं मुहुत्तेणं हत्थुत्तरानक्खत्तेणं

जोगमुवागएणं झाणंतरियाए वट्टमाणस्स एगंतवियक्कं वोलीणस्स सुहुमकिरियं झाणमप्पत्तस्स अणुत्तरकेवलं नाणदंसणं च समुप्पन्नं । एतदेव सङ्क्षेपत आह—

जंभिय बहि उजुवालिय तीरवियावत्त सामसालअहे । छट्ठेणुक्कुडुयस्स उ उप्पन्नं केवलं नाणं ॥ ५२५ ॥

जृम्भकग्रामस्य बहिः, 'वियावत्त'त्ति वियावृत्तं नाम अव्यक्तं, पतितशटितमप्रकटमिति भावः, तस्य चैत्यस्यादूरे ऋजुपालिकानदीतीरे श्यामाकस्य गृहपतेः क्षेत्रे शालवृक्षस्याध उत्कुटुकस्य भगवतः षष्ठेन केवलज्ञानमुत्पन्नं ॥ तत्र तपसा केवलज्ञानं समुत्पन्नमिति यद्भगवता तपः सेवितं तदभिधित्सुराह—

जो अ तवो अणुचिन्नो वीरवरेणं महाणुभावेणं । छउमत्थकालियाए अहक्कमं कित्तइस्सामि ॥ ५२६ ॥

यच्च तप आचरितं वीरवरेण महानुभावेन छद्मस्थकाले, यत्तदोर्नित्याभिसम्बन्धात् तद् यथाक्रमं—येन क्रमेणानुचरितं भगवता तथा कीर्त्तयिष्यामि ॥ तच्चेदम्—

नव किर चाउम्मासे छ किर दोमासिए उवासीअ । बारस य मासियाइं बावत्तरि अद्धमासाइं ॥ ५२७ ॥

नव किल चातुर्मासिकानि, षट् किल द्विमासिकानि उपोषितवान्, किलशब्दः परोक्षाप्तागमवादसंसूचकः, द्वादश मासिकानि द्विसप्ततिमर्द्धमासिकानि उपोषितवानिति क्रियायोगः ॥

एगं किर छम्मासं दो किर तेमासिए उवासीय । अड्ढाइज्जा य दुवे दो चेव दिवड्ढमासाइं ॥ ५२८ ॥

एकं किल षण्मासं द्वे किल त्रैमासिके उपोषितवान्, तथा अर्द्धतृतीयमासनिष्पन्नं तपोऽर्द्धतृतीयं ते अर्धतृतीये द्वे, चशब्दः

क्रियानुकर्षणार्थः, द्वे एव च व्यर्द्धमासे, द्वितीयमर्द्धं ययोस्तौ व्यर्द्धौ २ मासौ यस्य तद् व्यर्द्धमासं ते व्यर्द्धमासे तपसी कृतवान्,

भद्दं च महाभद्दं पडिमं तत्तो अ सव्वओभद्दं । दो चत्तारि दसेव य दिवसे ठासीयमणुबद्धं ॥ ५२९ ॥

भद्रां महाभद्रां सर्वतोभद्रां च प्रतिमां यथाक्रमं द्वौ चतुरो दश च दिवसान् अनुबद्धं—सन्ततमपान्तराले पारणकमकृत्वेति भावः स्थितवान् ।

गोअरमभिग्गहजुअं खमणं छम्मासिअं च कासी अ । पंचदिवसेहिं ऊणं अव्वहिओ वच्छनयरीए ॥ ५३० ॥

गोचरे अभिग्रहः गोचराभिग्रहस्तेन युतं गोचराभिग्रहयुतं क्षपणकं षाण्मासिकं पञ्चभिर्दिवसैरूनमव्यथितः—अपीडितो वत्सनगर्या—कोशाम्ब्यामकार्षीत् ॥

दस दो अ किर महप्पा ठाइ मुणी एगराइयं पडिमं । अट्ठमभत्तेण जई इक्किक्कं चरमराई अ ॥ ५३१ ॥

दश द्वे च सर्वसङ्ख्यया द्वादश किल एकरात्रिकी प्रतिमा, सूत्रे चैकवचनं प्राकृतत्वात्, महात्मा—मुनिः 'ठाति'त्ति स्थितवान्, कथं स्थितवानित्याह—एकैकां च प्रतिमां अष्टमभक्तेन—त्रिरात्रोपवासेन चरमरात्रिकीं—चरमरजनीनिष्पन्नां प्रति'यति'त्ति अयतिष्ट प्रयत्नवान् ॥

दो चेव य छट्ठसए अउणातीसे उवासिओ भयवं । न कयाइ निच्चभत्तं चउत्थभत्तं च से आसि ॥ ५३२ ॥

द्वे एव षष्ठशते एकोनत्रिंशे एकोनत्रिंशदधिके भगवान् उपोषितवान्, एवं च न कदाचिन्नित्यभक्तं चतुर्थभक्तं च 'से' तस्यासीत् ॥

बारस वासे अहिए छट्ठं भत्तं जहन्नयं आसि । सव्वं च तवोकम्मं अपाणयं आसि वीरस्स ॥ ५३३ ॥

द्वादश वर्षाण्यधिकानि भगवतश्छद्मस्थस्य सतः षष्ठं भक्तं-व्यहोरात्रोपवासरूपं तपो जघन्यकमासीत्, सर्वं च तपःकर्म अपानकमासीत् वीरस्य, न तपःकर्म कुर्वन् पानीयमभ्यवहृतवान् भगवानिति भावः ॥ पारणककालमान-प्रतिपादनार्थमाह—

तिन्नि सए दिवसाणं अउणापन्ने य पारणाकालो । उक्कुडुअनिसिज्जाए ठियपडिमाणं सए बहुए ॥ ५३४ ॥

त्रीणि शतानि एकोनपञ्चाशानि-एकोनपञ्चाशदधिकानि दिवसानां पारणककालो भगवतः, तथा उत्कुटुकनिषद्यायां स्थितप्रतिमानां बहूनि शतानि ॥

पव्वज्जाए दिवसं पढमं एत्थं तु पक्खिवित्ताणं । संकलियम्मि उ संते जं लद्धं तं निसामेह ॥ ५३५ ॥

प्रव्रज्यायाः सम्बन्धिनं दिवसं प्रथमं अत्र—उक्तलक्षणदिवसगणने प्रक्षिप्य सङ्कलिते सति यल्लब्धं तन्निशामयत-आकर्णयत ॥

बारस चेव य वासा मासा छच्चेव अद्धमासो अ । वीरवरस्स भगवओ एसो छउमत्थपरियाओ ॥ ५३६ ॥

वीरवरस्य भगवत एषः-एतावत्प्रमाणः छद्मस्थपर्यायस्तद्यथा-द्वादश वर्षाणि षण्मासा अर्द्धमासश्च ॥

एवं तवोगुणरओ, अणुपुव्वेणं मुणी विहरमाणो । घोरं परिसहचमूं अहिआसित्ता महावीरो ॥ ५३७ ॥

एवम्-उक्तेन प्रकारेण तपोगुणेषु रतस्तपोगुणरतः आनुपूर्व्येण-क्रमेण मुनिर्विहरन् घोरां-रौद्रां परीषहचमूं-परिपहसेनामधिसह्य महावीरः ॥

उप्पन्नंमि अणंते नट्ठम्मि अ छाउमत्थिए नाणे । राईए संपत्तो महसेणवणम्मि उज्जाणे ॥ ५३८ ॥

उत्पन्ने-प्रादुर्भूते अनन्ते-अनन्तज्ञेयविषये, कस्मिन् ?-ज्ञाने-केवलज्ञाने, नष्टे च छाद्मस्थिके मत्यादिरूपे ज्ञाने, देशज्ञानव्यवच्छेदेन केवलज्ञानसद्भावाद्, भावितं चैतत् प्रथमपीठिकायां, रात्रौ सम्प्राप्तो महसेनवने उद्याने, किमिति चेत् ? उच्यते,भगवतो ज्ञानरत्नोत्पत्तिसमनन्तरमेव देवाश्चतुर्विधा अप्यागता आसन्, अत्यद्भुतां च प्रहर्षवन्तो ज्ञानोत्पादमहिमां चक्रुः, तत्र भगवान् अवबुध्यते-नात्र कश्चित्प्रव्रज्याप्रतिपत्ता विद्यते, तत एतद्विज्ञाय न विशिष्टधर्म्मकथनाय प्रवृत्तवान्, केवलं कल्प एषः-यत्र ज्ञानमुत्पद्यते तत्र जघन्यतोऽपि मुहूर्त्तमात्रमवस्थातव्यं देवकृता च पूजा प्रतीच्छनीया धर्म्मदेशना च कर्त्तव्येति सङ्क्षेपतो धर्म्मदेशनां कृत्वा द्वादशसु योजनेषु मध्यमा नाम नगरी, तत्र सोमिलाख्यो नाम ब्राह्मणः, स यज्ञं यष्टुमभ्युद्यतः, तत्र चैकादशोपाध्यायाः खल्वागताः, ते च चरमशरीरा भवान्तरोपार्जितगणधरलब्धयश्च, तान् विज्ञायासङ्ख्येयाभिर्देवकोटीभिः परिवृतो देवोद्योतेन दिवस इवाशेषं पन्थानमुद्योतयन् देवपरिकल्पितेषु सहस्रपत्रेषु नवनीतस्पर्शेषु पद्मेषु चरणन्यासं विदधानो मध्यमनगर्यां महसेनवनोद्यानं सम्प्राप्तः ॥

अमरनररायमहिओ पत्तो वरधम्मचक्कवट्टित्तं । बीअंपि समोसरणं पावाए मज्झिमाए उ ॥ ५३९ ॥

अमरा—देवाः नरा-मनुष्याः तेषां राजानस्तैर्महितः-पूजितः प्राप्तो धर्मवरचक्रवर्त्तित्वं-धर्मवरप्रभुत्वं, द्वितीयं पुनः

समवसरणं, अपिशब्दः पुनरर्थे, पापायां मध्यमायां, प्राप्त इत्यनुवर्त्तते। ज्ञानोत्पत्तिस्थानकृतपूजापेक्षया चास्य द्वितीयता ॥
तत्थ किर सोमलिज्जोत्ति माहणो तस्स दिक्खकालम्मि। पउरा जणजाणवया समागया जन्नवाडम्मि ॥५४०॥
तत्र—पापायां मध्यमायां किलशब्दः पूर्ववत्, सोमिलः आर्य इति—ब्राह्मणः तस्य दीक्षाकाले—यागकाले पौरा—विशिष्टनगरनिवासिलोका जनाः—सामान्यलोका जानपदा—नानाजनपदभवा लोकाः समागता यज्ञपाटे ॥ अत्रान्तरे—
एगंते अ विवित्ते उत्तरपासम्मि जन्नवाडस्स। तो देवदाणविंदा करिंति महिमं जिणिंदस्स ॥ ५४१ ॥
एकान्ते विविक्ते यज्ञपाटस्योत्तरपार्श्वे ततो देवदानवेन्द्रा जिनेन्द्रस्य महिमां कुर्वन्ति, पाठान्तरं च—'कासी महिमं जिणिंदस्स' कृतवन्त इत्यर्थः। अमुमेवार्थं सविशेषं भाष्यकार आह—
भवणवईवाणमंतर जोइसवासी विमाणवासी य। सविड्ढीइ सपरिसा कासी नाणुप्पयामहिमं ॥ ५४२ ॥
भवनपतिव्यन्तरज्योतिर्वासिनो विमानवासिनश्च सपर्षदः सर्वर्द्ध्या ज्ञानोत्पत्तिमहिमामकार्षुः—कृतवन्तः॥

इति श्रीमन्मलयगिर्याचार्यविहिताया आवश्यकवृत्तेः पूर्वभागः ॥

इति श्रीआगमोदयसमितिग्रन्थोद्धारे, ग्रन्थाङ्कः—५६.

इति श्रीमन्मलयगिर्याचार्यविहिताया
आवश्यकवृत्तेः पूर्वभागः समाप्तः ॥

इतिश्री–आगमोदयसमिति–ग्रन्थोद्धारे ग्रन्थाङ्कः ५६.